मुच्यते। अतस्तयोर्भेदो भात्येव तवापि, अन्यथा सहो-क्त्ययोगात्। न च भेदज्ञानस्याप्यभेद एवार्थः, सर्वत्रैव भेदाभावप्रसङ्गात्। ननु भिन्नयोर्घटपटयोरसहापि भानं दृष्टम्, अतस्तद्वैलक्षण्यात् दृग्दृश्ययोरभेद इति चेत्; तन्न, भेददृष्टिविरोधात्। न च घटादिवैलक्षण्यादभेद एव वैलक्षण्यं दृष्टविरोधि ग्राह्यम्, दृग्दृश्यत्ववैलक्षण्यस्य अविरोधिन इष्टस्य भावात्। न हि घटपटज्ञानवैलक्षण्यादश्वमहिषज्ञानस्य तयोरभेदः, दृष्टविरोधात्। एवमत्रापि द्रष्टव्यम्। न च घटादीनामपि भेदोऽसहभानं जन्मनाशादयो दृश्यता च स्याद्दृशोऽभेदे, दृशि तेषामसंभवस्योक्तत्वात्। दृशो वा दृश्यादभेदे भेदादयस्स्युः। अतश्च दृशोऽप्यदृष्टात् दृश्यमपि न सिध्येत्। न चैकस्या दृशो दृक्त्वं दृश्यत्वं च युगपत्क्रमेण वा अंशाभ्यां वा युज्यत इत्युक्तम्। तस्मात्सर्वव्यवहारलोपप्रसङ्गान्नाभेदो दृग्दृश्ययोः। ननु तयोर्भेदज्ञानासंभवस्त्वयैवोक्तः, अतोऽभेदः प्राप्तः। न प्राप्तः, अभेदज्ञानासंभवस्यापि मयैवोक्तत्वात्। तस्मान्नाभेदः। कश्चायं सहोपलम्भनियमो[1] नाम। न तावत् सहोपलभ्यत्वनियमः, दृशोऽनुपलभ्यत्वात्। नापि सहोपलब्धित्वम्, दृश्यस्यानुपलब्धित्वात्। दृग्दृश्ययोस्सहैव भानं न पृथगित्यर्थ इति चेत्, तन्न; दृशो नित्यत्वात् स्वयंप्रभत्वाच्च सदाभानोपपत्तेः, दृश्यस्य विद्युदादेरतथात्वात् न सहभानम्। यद्यपि दृशा विना न दृश्यं भाति, तथापि दृश्यं विना दृग्भातीति न सहैव भानं तयोः। नन्वन्यसंवित्काले

[1] CE (०यमः। न)।

विद्युद्वत्तत्संविदपि नास्ति। कथं ज्ञायते नास्तीति। विद्युत्संविदस्तदा अभानादिति चेत्; किं विद्युन्न भाति, उत संविदपि न भाति। न तावत्संविदपि न भाति, तस्यास्तदापि भानात्। न हि संविदो भेदे प्रमेत्युक्तम्। नन्वन्यसंवित्तदा भाति न विद्युद्विशेषितेति चेत्; किं विद्युद्विशेषितता नाम संविदस्स्वरूपम्, उत संवेद्यस्य। यदि संविदः—सापि भात्येव, संविद्भानात्। संवेद्यस्वरूपं चेत्, तदभानान्न संविदोऽभानम्। किंच विद्युद्विशेषितत्वं नाम संविदो यदि विद्युद्विषयत्वम्—तच्चेत् संवेद्यम्, न संविदस्स्वरूपम्, अनवस्था च; असंवेद्यं चेत्, न सिध्येत्; स्वयंप्रभं चेत्, न संविदो भिद्येत। अतस्संविदि भान्त्यां तदपि भात्येव। ननु घटसंवित्पटसंविदिति संविदां भेदप्रतीतेस्ता जायन्ते नश्यन्ति चेति चेत्, तन्न; संविदां स्वसंवेद्यत्वात् क्षणिकत्वाच्चान्योन्याविषयत्वात् भेदद्रष्ट्रयोगात्। न चैकस्मिन्नेव स्वात्मनि भेददृष्टिः, द्वितीयापेक्षत्वात्तस्याः। यद्येकस्यास्संविदोऽन्यास्संविदो विषयः—यासां भेद इष्यते तासां तस्याश्च भेदो न स्यात्, विषयविषयिभावात् घटतत्संविदोरिव। एकस्या अनेकरूपायोगाच्च। तच्च कुतस्संविद्भेदस्सिध्येत्। संविदामन्योन्याविषयत्वे च भेदासिद्धिरुक्ता। अथ तासां तस्या मिथश्च भेद इष्यते—घटतत्संविदोरपि भेद एष्टव्यः, विषयविषयिभावात् तद्वदेव। ततश्च घटनीलादिविशेषस्य विषयैकास्पदत्वान्न संविद्भेदः सिध्येत्। संविदामपि संविद्विषयत्वे, घटादिवदस्वसंवेद्यत्वमसंवित्त्वं च स्यात्। घटादयोऽपि संविद

एवेति चेत्, तन्न; तेषां तत्संविदोऽन्यत्वे सति संवित्त्वे प्रमाणाभावात्। यदि तेऽपि संविदस्स्युः, न विषया भवेयुः। न हि घटसंविद्घटस्यान्यस्य वा तदैव विषयो भाति। न चात्मनोऽपि सा विषयतया भाति। एकस्या युगपद्विषयविषयिभावायोगाच्च। विषयस्य चान्यत्वात् घटवत्। यदि संवित्संविदन्तरस्य विषयः—तदा सा विषयतयैव भासेत, न तु विषयितया घटवत्। विषयितयैव तु भाति, घटस्तु न तथा। अतो घटविषयवैलक्षण्यादविषयत्वमेव संविदः। तस्माद्घटादेर्विषयस्यासंवित्त्वमेव निश्चिनुमः, अविषयत्वव्याप्तत्वात् संविदः घटादेश्च तदभावात्। अतस्संविदामपि संविद्विषयत्वे, घटादिवदसंवित्त्वं स्यादिति युक्तमुक्तम्। घटसंविदोऽप्यन्यदा विषयता स्यादिति चेत्, न; विषयाकाररहितायास्संविदः कदाचिदपि विषयभावादृष्टेः। सकृद्विषयस्यान्यदा विषयितादृष्टेश्च घटस्य। न हि घटः कदाचिदपि विषयी दृष्टः। कालभेदेन च विषयविषयिभावाभ्युपगमे स्थायित्वप्रसङ्गः। कथमसंविन्ना संवित्सिध्येत् स्वयम्; कथं वा अन्यं साधयेत्। अतस्स्वसंवेद्येति चेत्—यद्यसिद्धा अन्यं न साधयेत् नात्मानमप्यसिद्धा साधयेत्, असिद्धत्वात्। नापि सिद्धा, सिद्धत्वादेव। न च सिद्धापि साध्या, साध्यतानिवृत्तेः। यद्यसिद्धा आत्मानं साधयेत्, तथैव अन्यमपि साधयेत्। नान्यं चेत्, नात्मानमपि। न चान्यस्यास्संविदः सिद्धा आत्मानमन्यं च साधयेत्, अन्यस्या अप्यन्यसाध्यत्वे अनवस्थाप्राप्तेः। अन्यसंवेद्यत्वे च नात्मसंवेद्यता संविदः। तस्माद-

संवेद्यैव संवित्; संवेद्यं चासंविदेव । अतस्संवेद्यस्य घटसुखादेस्संविदश्च अभेदगन्धोऽपि न प्रमाणवान् । अत एव न संविदोऽपि भेदः—सर्वस्यैव भेदस्य संवेद्याश्रयत्वात्; संवेद्यत्वाच्च, संवेद्यस्य चासंविद्धर्मत्वात् । न वस्तुनस्स्वरूपं भेद इति चोक्तम् । संविदन्तराभ्युपगमे च तेषां संविद्विषयत्वे घटादिवदसंवित्त्वात्, अविषयत्वे च तदसिद्धेः, स्वयंप्रकाशमात्रत्वे चावैलक्षण्यात् । भेदासंभवाच्च । नन्वेका जायते, अन्या नश्यतीति जन्मनाशव्यवस्थयैव वैलक्षण्यम्; अत एव च भेद इति चेत्, तन्न; भेदासिद्धौ व्यवस्थासिद्धेः, भेदव्यवस्थावैलक्षण्यानां च अन्योन्याश्रयत्वान्नैकस्यापि सिद्धिः । जन्मनाशावप्यभिन्नौ चेत् संविदः, तयोरपि भेदो न स्यात् । भेदेऽपि संवेद्यौ चेत्, न संविदस्तौ । असंवेद्यत्वे, भेदासिद्धिः । तस्माद्दृग्दृश्ययोस्सहोपलम्भोऽपि नाभेदः, नापि सहोपलम्भ इति स्थितम् । अत एकस्मिन् भाति योऽन्यो न भाति तयोर्नाभेदो युक्त इति द्वयोस्ततोरेकस्मिन्भाति अभेद[1]तज्ज्ञाने दृग्दृश्ययोरित्ययमपि तृतीयः कल्पो निरस्तः ॥ अन्त्येऽपि कल्प एकस्यैव भावान्न द्वयोरभेदतज्ज्ञाने । एकस्यैव भावेऽपि द्वयोर्भानादभेदज्ञानं स्यादिति चेत्, तदापि न भेदेन भातोरभेदतज्ज्ञाने । भेदाभेदज्ञानयोर्ह्येकविषयत्वे भेदोऽभेदो वा अर्थस्स्यात्; न भेदाभेदौ द्वयोः, एकस्य वा । नतरामन्यविषयत्वे । उक्तं चैतत् पुरस्तात् । कथं[2] चैकस्मिन्नेव सति द्वयं भाति । किं च एकमस्ति—यदि दृश्यमेव, तदा दृगभावान्न किंचित्

[1] DE (०दज्ञानम्) ।　　[2] BCDE (०थं वैक०) ।

भायात्। यदि दृगेव, तदापि न द्वयं भायात्, दृग्ज्ञात्वे भेदज्ञानायोगस्योक्तत्वात्। कथं च दृश्यप्रपञ्चो भान् नास्त्येवेत्युच्यते। तस्माद्दृग्दृश्ययोर्नाभेदोऽस्ति॥

अथोच्येत—यद्यपि दृग्दृश्यात्मना तयोर्नाभेदोस्ति, तथापि ब्रह्मात्मना अभेदोऽप्यस्त्येव; ब्रह्मण एकत्वात्, तस्माच्चानयोरनन्यत्वादिति। तच्चायुक्तम्, भेदाभावप्रसङ्गात्। न ह्येकस्माद्ब्रह्मणोऽनन्यत्वे तयोर्मिथो भेदो न्याय्यः, तस्यापि भेदप्राप्तेः। तस्याभेदेऽपि तयोर्भेदश्चेत्स्यात्, तस्मात्तयोर्नानन्यत्वम्, मिथो भिन्नयोर्घटपटयोरिवस्तम्भात्। येन रूपेणानयोर्भेदः अतो रूपान्तरेणाभेदो ब्रह्मणेति चेत्—ते रूपे तयोरभिन्ने चेत्, ब्रह्मणोऽपि पूर्ववद्भेदः, तयोर्वा भेदो न स्यात्। भिन्ने चेत्, तयो रूपयोर्नाभेदोऽस्तीति नाभेदो दृग्दृश्ययोः। न चानयो रूपद्वयं समस्ति। न हि दृशो दृश्यं रूपम्; नापि दृश्यस्य दृक्। न च तृतीयं रूपमस्ति। तस्मान्न दृशो रूपद्वयम्, नापि दृश्यस्येति तयोर्भेदोऽभेद एव वान्योन्यम्; न भेदाभेदौ, रूपद्वयाभावात्। न चैकरूप एव भेदाभेदज्ञाने, ऐकार्थ्यप्रसङ्गादित्युक्तम्। एकं द्विरूपमिति च विप्रतिषिद्धम्। एकस्माच्चेद्द्वे रूपे भिन्ने; न तस्य ते रूपे, भिन्नत्वात्—यथा नान्योन्यं रूपे, यथा च तदेकं न तयो रूपम्। अभेदे तदेकमेवेति नैकं द्विरूपं स्यात्। तस्मात् ब्रह्माप्येकं चेत्, दृगेव[1] वा स्यात् दृश्यमेव वा; न तूभयम्। नाप्यन्यद्द्विरूपम्। अतो ब्रह्मात्मना अनयोरभेद इत्ययुक्तम्॥

[1] BCD (०व स्यात्।)।

नन्विदं दृष्टविरुद्धमवोचः—एकमनेकरूपं न भवतीति। एकं ह्यनेकरूपं पश्यामः। न च दृष्टेऽर्थेऽनुपपन्नं नाम। एकरूपं चैकमिष्यते, दृष्टत्वात्; एवमेकमनेकरूपमप्येष्टव्यम्, दृष्टत्वादेव। अत एकं द्विरूपमिति विप्रतिषिद्धमित्ययुक्तमिति चेत्, दर्शनं परामृश्य वदन्तु भवन्तः। किं रूपिण एकस्मादभिन्नान्येव रूपाणि दृश्यन्ते, उत भिन्नान्येव, अथवा भिन्नाभिन्नानि। यद्येकस्मादभिन्नान्येव दृश्यन्ते—तदा नानेकरूपमेकं दृष्टं स्यात्, अनेकादृष्टेरेकस्यैव च दृष्टेः। अथोच्येत—अनेकान्येव रूपाणि दृश्यन्ते। तेभ्यश्चाभिन्नो रूपी दृश्यत इति। तदाप्येकस्माद्रूपादभेदेन दृष्टस्य रूपान्तरेभ्योऽभेदो न द्रष्टुं शक्यते, यथा तस्यैव रूपस्य; अन्यथा तस्यापि रूपस्य रूपान्तरेभ्योऽभेददृष्टेः सर्वरूपाणामभेददृष्टिप्रसङ्गात् नानेकरूपमेकं दृश्येत। अथ भिन्नान्येव रूपिणो रूपाणि, तदा नानेकरूपत्वं रूपिणः रूपाणामिव। कथं च अत्यन्तभिन्नानां रूपरूपिभावः, रूपाणामपि रूपरूपित्वप्रसङ्गात्। अथ भिन्नाभिन्नानि रूपिणो रूपाणि दृश्यन्ते, तदापि[1] किमेकेन रूपेण भिन्नानि अन्येनाभिन्नानि; उत एकेनैव भिन्नान्यभिन्नानि च। तत्र प्रथमे कल्पे एकैकस्य रूपस्य द्वे द्वे रूपे स्त इति द्विरूपत्वम्। तयोश्च रूपयोर्भेदाभेदे प्रत्येकं द्विरूपत्वमित्यनवस्था रूपरूपाणाम्। तथा रूपिणोऽपि रूपैर्भेदाभेदे प्रतिरूपं द्वे द्वे रूपे अन्ये एष्टव्ये। ताभ्यां च भेदाभेदे अपरे द्वे द्वे रूपे इति रूपिरूपाणामप्यन-

[1] BCD (०दा कि०)।

वस्था। ततश्च वर्षशतेनापि वालाग्रमात्रस्यापि तत्त्वं द्रष्टुं वक्तुं वा न शक्यं स्यात् केनचिदप्यमूढेन। तथाहि—रूपरूपिणोर्मिथो भेदाभेददृष्ट्यर्थं द्वे द्वे रूपे पश्यता रूपतद्रूपयोस्तद्रूपतद्रूपयोश्च द्वे द्वे रूपे द्रष्टव्ये। तथा रूपितद्रूपयोस्तद्रूपतद्रूपयोश्च भेदाभेददृष्ट्यर्थमेव द्वे द्वे रूपे द्रष्टव्ये। न हि रूपे अदृष्ट्वा ताभ्यां भेदाभेदौ तद्वतो द्रष्टुं शक्येते। तस्माद्रूपरूपिणोर्भेदाभेदौ द्रष्टुमिच्छता अनन्तानि रूपाणि प्रत्येकं तेषां च द्रष्टव्यानि प्रसज्यन्ते। न च तथा दृश्यन्ते॥ दृष्टेष्वप्यनन्तेषु रूपेषु साक्षाद्भेदाभेदौ न कयोश्चित्सिध्यतः। तथाहि—न रूपरूपिणोरपि साक्षान्मिथो भेदाभेदाविष्टौ, किं तु रूपाभ्याम्। रूपयोरपि यस्य भेदो न तस्याभेदः, यस्याभेदो न तस्य भेद इति भेदाभेदावेकस्य कस्यचिन्न धर्मौ स्तः। तद्वतो द्वावपि स्त इति चेत्; नैकोऽपि, अतद्धर्मत्वात्। रूपयोर्हि तौ धर्मौ, न तद्वतः। रूपधर्मावपि तौ तदभेदात्तद्धर्मावुपचर्येते इति चेत्, अभेदे किमित्युपचारः। न हि रूपयोस्तावुपचर्येते। भेदस्यापि भावादुपचार इति चेत्, नास्ति तर्हि मुख्यं भिन्नाभिन्नत्वं रूपरूपिणोः, उपचारेष्टेः। अथोच्येत—इदमेव तन्मुख्यं भिन्नाभिन्नत्वं यावेतौ रूपधर्मौ भेदाभेदौ तद्वत्युपचरितौ, तस्य तयोश्च भिन्नाभिन्नत्वात् अन्यस्य मुख्यस्याभावात्। अथवा—नोपचरितौ तौ। अन्यधर्मो ह्यन्यत्रोपचार्यस्स्यात्। न चान्यत्वमेव रूपयोस्तद्वतश्च, भिन्नाभिन्नत्वोक्तेः। इदमेव तर्हि भिन्नाभिन्नत्वं रूपयोस्तद्वतश्च कथं सिद्धम्, यत्प्रसादाद्रूपगौ भेदाभेदौ रूपा-

न्तराभ्यां रूपवत्युपचर्येते। न तावद्रूपयोस्तद्वतश्च भिन्नाभिन्नत्वं साक्षात्, अन्यत्रापि तथाप्रसङ्गादनिष्टत्वाच्च। न चान्यगौ भेदाभेदौ तत्रोपचार्यौ। कथम्। न तावत्पूर्वोक्तौ रूपगौ भेदाभेदौ तत्रोपचरणीयौ, तदुपचाराद्भेदाभेदसिद्धिः, तत्सिद्धौ तदुपचार इति इतरेतराश्रयत्वप्रसङ्गात्। रूपान्तराभ्यां च तौ रूपयोर्भेदाभेदौ। अतस्तदुपचारे तद्भावेऽपि न रूपयोस्तद्वतश्च भिन्नाभिन्नत्वं सिध्येत्। किं तु यदि सिध्येद्रूपान्तराभ्यामेव सिध्येत्, न स्वरूपिरूपाभ्याम्। तदपि न सिध्येत्, रूपत[1]द्वतोर्भिन्नाभिन्नत्वासिद्धेस्तदधीनत्वाच्च तस्य। यदि नाम सिध्येत्, तथापि रूपिणो ये रूपे ताभ्यामेव भेदाभेदौ रूपस्य स्वकीयरूपद्वारेण सिध्यतः; न तु रूपिणा, उक्तेन न्यायेन। अतो रूपरूपिणोरेकेन रूपेण भेदः, अन्येनाभेद इत्यस्मिन्पक्षे क्वचिदपि भेदाभेदासिद्धेरयं पक्षोऽनुपपन्नः। अथैकेनैव रूपेणाभेदो भेदश्च तयोः, तदा भेदाभेदबुद्ध्योरेक एवार्थः स्यात्। यद्येन रूपेण एकस्या बुद्धेर्विषयः तत्तेनैव चेदन्यस्या अपि, तदा कथं तयोरनेकार्थता। अतस्तयोर्भेदोऽभेदो वा एक एवार्थः। तयोश्च पक्षयोर्दोष उक्तः। तस्मान्नानेकरूपमेकं दृष्टं कदाचित्केनचित्प्रमाणेन, उपपन्नं वा। अतो ब्रह्माप्येकं चेत्, नानेकरूपमिति युक्तमेवोक्तम्। अतो ब्रह्मात्मना दृग्दृश्ययोरभेद इत्ययुक्तम्, दृग्दृश्यरूपाभ्यां ब्रह्मण एकस्य अनेकरूपत्वयोगात्। तथा

[1] BC (०तद्वद्भिन्ना०)।

दृग्दृश्ययोरप्येकैकस्यानेकरूपतायोगात् ब्रह्मरूपेण अभेदः, अन्यरूपेण भेद इत्यन्याय्यम् ॥

दृग्दृश्ययोश्चाब्रह्मरूपत्वे ताभ्यां भिन्नं ब्रह्म स्यात् । भिन्नत्वे जन्मनाशाब्रह्मत्वादयो दोषा घटादिवत्प्रसज्येरन् । अदृक्त्वे चास्वयंप्रकाशत्वान्न सिध्येत् । यदि सिध्येत्, दृश्यतयैव सिध्येत् । ततश्च दृश्यजाताद्भिन्नत्वमन्याय्यम् । दृश्यत्वे च इतरदृश्यवद्दृशो भेदोऽभेदश्च न सिध्येत् । अथैतद्दोषपरिजिहीर्षया अभिन्नमेव ब्रह्मेष्यते, तदापि न द्वाभ्यामभिन्नम्, द्विरूपत्वायोगात् । दृश्यादभेद उक्तो दोषः । दृशश्चेदभेदः, अस्तु; नात्र कश्चिद्दोषः, यदि सैव ब्रह्म; नान्यथा, अनेकरूपतानुपपत्तेरेकवस्तुनः । तस्माद्दृग्दृश्ययोर्नाभेदगन्धोऽप्यस्ति । अतो दृग्दृश्ययोर्भेदाभावेऽभेदप्राप्तेर्दृश्यप्रपञ्चगतं त्रिविधमप्यन्तवत्त्वं दृश्यपि प्रसज्यत इति यदुक्तं तत्परिहृतम् ॥ कथं चाभेदे दृशि उक्तदोषप्राप्तिः। न ह्यभेदेऽप्येकस्य द्वे रूपे संस्तः । अतो दृश्यमेव वा स्यात्; दृगेव वा । दृश्यमेव चेत्, तदपि न भासेत । दृगेव चेत्, तदा न दृश्यं भासेतापि; कथं तद्गतदोषप्राप्तिर्दृशि । तस्माद्दृग्दृश्ययोरभेदे—दृश्यमात्रत्वे तस्यापि प्रमाणाभावाद्दृगभावाच्च दृशि दृश्यदोषाप्राप्तेः, दृङ्मात्रत्वे च दृश्याभावाद्दृशि तद्दोषाप्राप्तेः, दृश्याद्भेदेऽपि दृशस्तद्दोषाप्राप्तेः स्वगतदोषाभावाच्च निर्दोषैव दृगभ्युपेया सर्वैः । दोषोऽपि भवन् दृगेव चेत्स्यात्, न दोषस्स्यात् । न हि सैव तस्या दोषः ।

अन्यत्वे नास्यास्संबन्धः । अन्यानन्यत्वं चेत्, वैरूप्यायोगा-न्निरस्तम् । अतो भेदाद्यभावात् जन्मादिदोषगन्धोऽपि दृशं न ढौकत इति स्थितम् ॥

किंच—दृश्येऽप्येते दोषाः प्रमाणतो निरूप्यमाणा न संभावयितुं शक्यन्ते; कुतस्तत्संबन्धाद्दृशि स्युः । तथाहि—अन्यत्वेऽनन्यत्वे च न धर्मधर्मिभावः । अन्यानन्यत्वं च निरस्तम् । अतोऽधर्मकत्वात् गुणानप्यसंस्पृशद्वस्तु कथं दोषान् संस्पृशेत् । किंच—भेदस्य वस्तुनो भेदे भेदाभेदे च तस्य तस्य भेदाद्वस्तुनश्चान्योऽन्यो भेद इत्यनवस्थानान्न कश्चिद्भेदो वस्तु संस्पृशेत् । अभेदे त्वेकमेव । तच्च वस्त्वेव; न तु भेद एव, वस्त्वभावे तस्याप्यभावात् । तदेव त्वस्त्विति चेत्, अस्तु; तथाप्येकमेव वस्तु । तच्च न दृश्यम्, तस्य सापेक्षत्वाददद्वितीयतासिद्धेः । अतो दृगेव, तस्यास्स्वत-स्सिद्धेरेकत्वोपपत्तेः । न चास्या एकत्वं धर्मः, उक्तदोषप्रस-ङ्गात् । अतो निर्भेदमधर्मकं वस्तु एकशब्देन विवक्ष्यते । भेदधर्माभाव इतरे धर्माः प्रत्युक्ताः, तदधीनत्वात्तेषाम् । भिन्नयोर्हि इतरेतराभावः । अतो भेदाभावे स न स्यात् । अतश्च वस्त्वसंकरासिद्धेरेकं वस्तु स्यात् । भावाभावाना-मितरेतराभावाभ्युपगमे अनवस्था; अनभ्युपगमे वस्त्व-संकरासिद्धिः । न चाभावं विना जन्मादिसिद्धिः । न ह्यज्ञाते प्रागभावे कस्यचिज्जन्मनिश्चयस्स्यात् । न ह्यदृष्टस्य दृष्टिमात्रं जन्म साधयेत् । न चादर्शने असिद्धे अदृष्टदृष्टिः सिध्येत् । अतः प्रागभावाभावे दृश्यस्य दर्शनस्य च जन्मा-भावः । जन्माभावे नान्येऽपि भावविकारास्स्युः, जन्मपूर्व-

त्वात्तेषाम्। अतः कूटस्थं सदैकरूपं वस्तु[1] स्वतस्सिद्धम्, असिद्धमेव वा। द्वैरूप्यायोगाच्च। असिद्धमेव चेत्, असत्कल्पम्। सिद्धमेव चेत्, दृगेव वस्तु; नान्यत्। सत्यपि प्रागभावे नासतो जन्म नृशृङ्गवत्। न चाकर्तृका जनिः, क्रियात्वात् गमिवत्। न चासिद्धाश्रया सा द्रष्टुं शक्या, आश्रयादृष्टेः। अनुमेया चेत्, सकर्तृकैव क्रियान्तरवत्। सिद्धाश्रया चेत्, निष्फला; अनवस्था च। प्रागसतो जन्म चेत्; जनेरपि जन्म, प्राक् अभावात्। प्राक् भावे तद्वतोऽपि प्राग्भावः; अन्यथा जनेस्स्वातन्त्र्यं स्यात्। जनेश्च जन्मन्यनवस्था। अतो जन्म नाम न किंचित् कस्यचिदुपपन्नं पश्यामः। एवं नाशादयोऽपि निरूप्यमाणा नावतिष्ठन्ते। तस्मात्सुष्टूक्तं दृश्येऽपि नैते दोषा निरूप्यमाणास्संभवन्ति कुतस्तत्संबन्धात् दृशि स्युरिति॥

तस्मादनन्तैवानुभूतिरिति स्थितम्। यदि न भिन्नः, नाप्यभिन्नः, नापि भिन्नाभिन्नः अनुभूतेः प्रपञ्चः, का तर्हि तस्य गतिः। तां वक्ष्यामः॥

नन्वनुभवित्रात्मना विना नास्त्यनुभूतिः, तत्कथं सा अनन्ता। नैष दोषः, यतस्सैव सः। कथम्। उच्यते—सोऽप्यनुभूतिस्वभावश्चेत्, नास्या भेदः; अन्यथा सोऽनात्मेति नानुभविता। अतस्सैवात्मा। अनन्तत्वाच्च॥ अथवा—अनन्तत्वात्सैव परमात्मा, तल्लक्षणस्य तस्यां परिपूर्णत्वात्। अन्यत्वे तदयोगाच्च। अतोऽनन्तत्वात्सैव

[1] BC (वस्तु अतस्सि०)।

परमात्मा। अत एवानन्दविग्रहः। आनन्दोऽस्यास्स्वरूपमेव, नानयोर्भेदगन्धोऽपीत्यर्थः॥

नन्वपर्यायशब्दानां भिन्नार्थतादृष्टेः भेदोऽनयोर्न्याय्यः अमुख्यार्थता वा आनन्दशब्दस्येति चेत्, न; भेदभेदिशब्दाभ्यां व्यभिचारात्। न हि भिन्नो घट इति पर्यायौ भिन्नः पट इत्यपि दर्शनात्। न च भिन्नार्थौ, भेदस्य भेदे अनवस्थानात्। अत एव भेदाभेदयोरपि अभेदात् तच्छब्दावप्यभिन्नार्थौ भिन्नोऽभिन्नश्च घट इत्यत्र। न चात्राभेदशब्दो भेदनिवृत्तिमात्रपरः, धर्मद्वयपरतया प्रयुक्तेः; अन्यथा घटशब्द एव वाच्यो न भेदाभेदशब्दौ, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्। तथा[1] तत्रैवाभिन्नघटशब्दौ अभिन्नार्थौ। अभेदश्चेत् घटाद्भिन्नः, अतद्धर्मस्स्यात् पटवत्। भिन्नाभिन्नश्चेत्—सोऽप्यभेदोऽन्यश्चेत्, अतद्धर्मः; अनवस्था च। तस्माद्भेदाभेदघटशब्दा अप्यपर्याया अभिन्नार्थाश्च। एवमन्यत्रापि द्रष्टव्यम्। भेदाभेदतद्वच्छब्देभ्योऽन्यत्र अपर्यायाणामभिन्नार्थता नास्तीति चेत्, तन्न; अस्ति हि सा प्रकृष्टप्रकाशस्सवितेत्यादिष्वपि। न हि प्रकर्षप्रकाशौ सवितरि भिन्नौ। तथापि नाप्रकृष्टप्रकाशस्सविता। भिन्नौ चेत्, प्रकर्षोऽप्रकाशस्स्यात्। प्रकाशश्चेन्न ततो भिन्नः; अप्रकाशश्चेन्न सवितू रूपम्, प्रकाशैकरूपत्वात् सवितुः। नन्वौष्ण्यमपि सवितू रूपम्। सत्यम्; तथापि न तत् प्रकर्षशब्दार्थः, प्रकृष्टप्रकाशश्चन्द्र इत्यपि दर्शनात्। तस्मान्न प्रकर्षप्रकाशौ

[1] DG (॰त्र अत्रै॰)।

सवितरि भिन्नौ । तथापि न पर्यायत्वम्, प्रकृष्टं तम इत्यपि दर्शनात् । नन्वनेकार्थैः सह प्रयुज्यमानस्य प्रकृष्टशब्दस्य न तत्तदभिन्नार्थत्वं नीलादिशब्दवदिति चेत्, तन्न; भेदशब्दादिवत् तत्तदभिन्नार्थत्वोपपत्तेः, भेदभेदिनोरिव प्रकर्षप्रकाशयोरपि सवितरि भेदानुपपत्तेरुक्तत्वात् । नन्वेवमन्यान्यपि बह्वन्युदाहरणानि संभवन्ति । संभवन्तु; तान्यपि तवैव मुखमपिदधति, न नः किंचिच्छिद्यते । सर्वथा नाप्रकाशः प्रकाशविशेषणम् । तस्माज्ज्ञानानन्दशब्दयोः नाचार्थभेदोऽनुमेयः ॥

आगमविरोधाच्च । नन्वागमार्थे निश्चिते तद्विरोध उद्भाव्येत । नाद्याप्यभिन्नं वस्तु आगमार्थ इति निश्चितमिति चेत्, तन्न; निश्चितत्वादनन्तादिशब्दैरेव । न हि ते भेदं सहन्ते । न्यायतोऽपि भेदो निरस्तः । तर्हि अभेदाविरोधादानन्दशब्दस्य अदुःखत्वमर्थ इति चेत्, तन्न; अमुख्यार्थत्वात् । न हि मुख्येऽर्थे संभवत्यमुख्योऽर्थो ग्राह्यः । अदुःखत्वं च तच्छब्दैरेव सिद्धमनन्तादिशब्दैश्च नानन्दशब्दमपेक्षते । यद्यपर्यायाणां भिन्नार्थतैव, तदा ब्रह्मवाक्यगतानां सर्वशब्दानामपर्यायत्वात् बहुभेदं ब्रह्म उक्तं स्यात् । आनन्दशब्दश्चामुख्यार्थोऽपि अपर्यायत्वात् भिन्नार्थस्स्यात् । अथोच्येत—अन्यनिवृत्त्यर्थानां निवृत्तेरवस्तुत्वान्नाभेदविरोधित्वम्, आनन्दशब्दस्यापि दुःखनिवृत्त्यर्थत्वान्न विरोधिता; अनिवृत्त्यर्थास्तु भिन्नार्था इति । तर्ह्यानन्दशब्दस्य मुख्यार्थत्वेऽपि अन्यनिवृत्त्यर्थत्वोपपत्तेर्नाभेदविरोधित्वम्, सत्यज्ञानादिशब्दवत् । तथाहि आत्मै-

वानन्दः, 'आनन्दो ब्रह्मेति व्यजानात्', 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिश्रुतेः ब्रह्मात्मानन्दशब्दानामेकार्थतावगमात्। तथाहि—'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' इति तच्छब्देन 'ब्रह्मविदाप्नोति परम्' इति सूचितं ब्रह्म परामृश्य, तदेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षितं 'यो वेद निहितं गुहायाम्' इति प्रत्यक्तया वेद्यत्वेनोक्तमेतच्छब्देन परामृश्य, तत्रैव चात्मशब्दं प्रयुज्य, तस्य ब्रह्मात्मनो जगत्प्रकृतितां प्रदर्श्य, अन्ते 'आनन्दो ब्रह्मेति व्यजानात्' इति ब्रह्मानन्दयोरेकतां स्वमुखेनैवोक्त्वा, तस्य ब्रह्मानन्दस्य 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति जगत्प्रकृतितादर्शनात् पूर्वोक्तस्य ब्रह्मात्मन आनन्दस्य चैकताप्रतीतेः ब्रह्मात्मानन्दानामेकतैव सुदृढं निश्चीयते। तत्र यथा ब्रह्म अन्यत्, अहं चान्य इति भ्रान्त्या भेदं मन्वानस्य ब्रह्मास्मीति प्रत्यग्ब्रह्मणोरब्रह्मानात्मतानिरासेन एकतैव श्रुत्या बोध्यते—एवं ब्रह्मात्मानन्दभेदे भ्रान्तिगृहीते जनैस्तद्व्युदासेन अभेद एव बोध्यते, न भेदगन्धोऽपि स्पृश्यते। यथा च घटाकाशमहाकाशयोः सूर्यजलसूर्ययोश्च भेदनिरासेन अभेद एव बोध्यते घटाकाशो महाकाश इत्यादिवाक्यैः, न त्वन्योन्यविशेषणविशेष्यतया भेदः—एवमत्रापि द्रष्टव्यम्। तस्मादानन्दादिशब्दानां मुख्यार्थत्वेऽपि अभेदाविरोधान्नामुख्यार्थो ग्राह्यः॥

ननु विषयेन्द्रियसंयोगजं सुखमानन्दशब्दस्य मुख्योऽर्थः; स कथं यथोक्त आत्मैव स्यात्। न स तद्गुणोऽपि ते,

संवेद्यत्वात् । सार्वभौमोपक्रमं च उत्तरोत्तरशतगुणोत्कर्ष-शुश्रूयमाण आनन्दः कथमात्मा स्यात् । न हि स एव तस्मा-च्छतगुणस्स्यात् । जन्यश्चेदानन्दः, साधनोत्कर्षादुत्कृष्येत । तस्मान्नात्र मुख्योऽर्थो ग्राह्य इति चेत्, नैष दोषः; कूटस्था-त्मस्वरूपत्वेऽप्यानन्दस्याप्यनुभवस्येव भ्रान्त्यैव जन्यत्वादि-प्रसिद्ध्युपपत्तेः । यथा ह्युपाधिजन्मनाशभेदाल्पत्वमहत्त्व-शुद्ध्यशुद्धिवेद्यत्वादयो बोधे तद्धीनेऽविवेकात् कल्प्यन्ते, यथा चाकाशे—एवमानन्देऽपीति न कश्चिद्विरोधः । तथाहि—शुभकर्मणा उपस्थापिते विषयविशेषे तदिन्द्रियसंयोगा-ज्जातेऽन्तःकरणवृत्तिविशेषे प्रसन्ने सति, निर्मल इवादर्शे मुखम्, आत्मैवानन्दः प्रकटीभवति । तद्विषयसुखमिति प्रसिद्धं लोके । तस्य स्वाभिव्यञ्जकवैश्वरूप्यादेव वैश्वरूप्यम्, तदविवेकात्; न स्वतः, ऐकरूप्यात् । नन्वेकरूपस्य स्वयंज्योतिषोऽनभिव्यक्त्ययोगात् नान्यदभिव्यञ्जकं समस्ति । सत्यम्; तथाप्यविद्यया अनभिव्यक्तमिव । अतो यद्भावे-ऽभिव्यक्तमिव तत्तस्याभिव्यञ्जकं ब्रूमः । अतस्तस्मिन् शुद्धे सुखात्मा प्रतिभाति; अशुद्धे न भाति, असुखवच्च भाति यथा आदर्शे शुद्धे मुखरूपं शुद्धं भाति, अशुद्धे न भाति, अशुद्धवच्च भाति। रूपे भात्यपि तच्छुद्धिर्न भात्य-भिन्नापि; भेदिनि भात्यपि भेदो न भात्यभिन्नोऽपि—एवमात्मनि भात्यप्यानन्दोऽभिन्नोऽपि न भाति; अना-त्मापि दुःखं भाति, अशुद्धिरिव रूपस्य । अतोऽन्तःकरण-शुद्ध्युत्कर्षादेवानन्दोत्कर्षः । एकत्वेऽप्युत्तरोत्तरोत्कर्षो घटा-काशमठाकाशमहाकाशवद्योज्यम् । एवं च सति 'श्रोत्रि-

यस्य चाकामहतस्य' इति अकामहतत्वोत्कर्षादुत्तरोत्तर-शतगुणमानन्दोत्कर्षश्रूयमाणा उपपन्नो भवति ; नान्यथा। तस्मादात्मैवानन्दः ; अन्यथा मोक्षोऽपुरुषार्थस्स्यात्, सुखाभावात् । दुःखाभावात्पुमर्थ इति चेत्, सुखाभावाद-पुमर्थोऽपि स्यात् । निरवद्य उत्तमः पुमर्थो मोक्ष इष्टः ; स चैवं सति न स्यात् । यद्यात्मैव सुखं तस्य नित्यप्राप्तत्वात् न सुखप्राप्तिस्तवापीति चेत्, तर्हि दुःखप्राप्त्यभावात्त-न्निवृत्तिरपि न स्यात् । भ्रान्त्या दुःखं प्राप्तमिव, अतस्त-न्निवृत्तिः पुमर्थ इति चेत्, सुखमप्यप्राप्तमिवेति तत्प्राप्तिः पुमर्थः, हस्तगतविस्मृतसुवर्णप्राप्तिवत् । यद्यप्राप्तप्राप्तिरेव पुमर्थः, मोक्षोऽपुमर्थस्स्यात् । न हि मोक्षोऽप्राप्तः प्राप्यते, अनित्यत्वप्रसङ्गात् । तस्मादात्मैव सुखम् ॥ प्रियत्वाच्चात्मैव सुखम् । प्रसिद्धो ह्यात्मैव प्रियो लोके । श्रुतिश्चात्मैव प्रियो नान्य इत्याह 'तदेतत्प्रेयः पुत्रात्' इत्याद्या । अन्यस्य सर्वस्यात्मार्थत्वेन प्रियत्वम्, न तु स्वतः । 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति च श्रुतिः । सर्वस्यात्मार्थ-त्वेन प्रियत्वाच्चात्मैव प्रियः । न हि तस्मिन्नप्रिये तदर्थः प्रियो भवेत् । न चात्मा अन्यार्थत्वेन प्रियः, अनन्यार्थ-त्वात् । अन्यस्य चात्मार्थत्वादर्थित्वानुपपत्तेः । यो ह्यन्यार्थो घटः, सोऽर्थी न दृष्टः । घटार्था मृदित्याद्यपि पुमर्थस्यैव द्वारदर्शनम् । स्त्रीपुंसयोरपि शरीरमेवान्यार्थम्, न त्वात्मा । न च सुखं तदर्थं च मुक्त्वा, अन्यत्प्रियं प्रसिद्धम् । अतोऽ-नन्यार्थत्वात् प्रियत्वाच्च आत्मैव सुखम्, नान्यत् । तस्य अन्यार्थत्वेन प्रियत्वोपपत्तेः । तस्मादात्मैव सुखम् । यदर्थं

सर्वम्, यच्च नान्यार्थं तत्सुखं प्रसिद्धम् । सा च प्रसिद्धिर्नात्मनोऽन्यच्च समस्तीत्यात्मैव सुखम् । दुःखमपि नान्यार्थम्, तथापि न तदर्थं किंचिदुपादित्स्यते विधीयते वा । शस्त्रश्येनाद्यप्यात्मनस्सुखार्थं दुःखपरिहारार्थं वा, नान्यदुःखमात्रपर्यवसायि । दुःखपरिहारोऽपि नान्यार्थ इति चेत्, न; सुखार्थत्वात्तस्य, भाराद्यार्तानां तन्निवृत्तौ विषयविशेषानुपरक्तात्मसुखाभिव्यक्तिदृष्टेः । अत एवात्र दुःखनिवृत्तिव्यतिरेकेण अन्यद्विषयरूपमपश्यन्तः, आत्मनश्च सुखतामजानन्तः, सुखं चानुभवन्तो दुःखनिवृत्तिरेव सुखमिति मन्यमानाः सर्वत्र सैव सुखमिति भ्रान्ताः केचित् ॥

नन्वात्मार्थं सुखमिष्टम्, न तदर्थमेव । तर्हि आत्मैवेष्टतरः । न हि तस्मिन्ननिष्टे तदर्थमिष्टं स्यात् । अत आत्मैव मुख्यं सुखम्, इतरत्तदर्थत्वात् सुखम्; अतोऽमुख्यम् । किं द्वे सुखे स्तः—मुख्यममुख्यं च । बाढम्, स्तः । ननूक्तं किं न स्मरसि । अन्तःकरणवृत्तिविशेष आत्मसुखाभिव्यञ्जकेऽविवेकात् सुखत्व[1]भ्रमो लोकस्य, बुद्धिवृत्ताविव बोधभ्रमः । वृत्त्यविवेकाच्च तद्धर्मान् सुखबोधयोरारोप्य सुखं वेद्यमात्मार्थं जायते बोधश्चेत्यादिव्यवहार इति ह्युक्तम् । अतोऽस्ति मुख्यममुख्यं च सुखम्, बोध इव । अमुख्यं च सुखमभिप्रेत्य 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति,' 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्या[2]द्याश्रु[श्रु ?]तिस्मृतयः पण्डिताश्च केचिन्मोक्षे सुखस्याप्यभावमाहुः । न पुनर्मुख्यमपि, तस्य कूटस्थबोधात्म-

[1] BC (०खभ्र०) ।　　[2] D (०त्याद्या श्रुतिः स्मृ०)

स्वरूपत्वात् भावाभावानुपपत्तेः—यथा 'न प्रेत्य संज्ञास्ति' इत्याद्या श्रुतिरमुख्यबोधाभावाभिप्रायैव; 'अविनाशी वा अरे अयमात्मा,' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादिश्रुतिभ्यो युक्तितश्च बोधात्मनः कूटस्थत्वावगमात्। तस्मात्सुखमात्मार्थमिति प्रसिद्धेः अमुख्यसुखाश्रयत्वात्, आत्मनोऽन्यार्थताप्रसिद्धेश्च अमुख्यात्माश्रयत्वादात्मनोऽन्यार्थतायाः निरस्तत्वात्—आत्मा नान्यार्थः, सर्वं चात्मार्थम्; सुखं च नान्यार्थम्, सुखार्थं च सर्वमिति सुखात्मनोर्लक्षणाभेदादभेद एवेति सिद्धम्। यदि त्वात्मनोऽन्यत् आत्मार्थं सुखं तद्वेद्यमिष्येत, गृहक्षेत्रादिवत् तदात्माश्रयं न भासेत। भासते तु। अथोच्येत—अमुख्यसुखदुःखादिवत् अनात्मापि सुखमात्माश्रयं भातीति, तर्हि वेद्यसुखाभ्युपगमेऽपि आत्मार्थं सुखमिति प्रसिद्धेः भ्रान्तिमूलत्वात्त्यागात् आत्मनस्सुखरूपत्वं श्रुतियुक्त्यनुभवसिद्धं नापलपनीयम्। तस्मादात्मैवानन्द इति स्थितम्। अत इदमुक्तम्-आत्मत्वादानन्दविग्रहा अनुभूतिरिति॥

एवं च सति नैषां पदानामन्योन्यविरुद्धार्थत्वेन असंगतिराशङ्कनीया, अविरोधेन एकस्मिन्नेकरसे ब्रह्मणि संगतेर्दर्शितत्वात्। एवं सर्वत्र ब्रह्मवाक्येषु पदानामविरोधेन संगतिर्द्रष्टव्या—मुख्येष्वानन्दादिषु व्युत्पन्ना आनन्दादिशब्दाः समानाधिकरणतया यदा प्रयुज्यन्ते तदा तेषामर्थानामन्योन्यनियम्यनियामकभावेन अविरोधेन व्यवस्थितानां सर्वप्रमाणागोचरादेकरसात् ब्रह्मणोऽन्यत्र पर्यवसानासंभवात् तदेव लक्षयन्ति न त्वभिदधति शब्दा

इति, अपदार्थत्वमभेदसंसर्गात्मकवाक्यार्थत्वं शब्दप्रमाणकत्वं च तस्येति । 'यतो वाचो निवर्तन्ते,' 'औपनिषदं पुरुषम्' इत्यादिशास्त्रं चैवमुपपन्नार्थं भवति । तस्माच्छ्रुतिस्मृतिन्यायानुभवबलावष्टम्भात् यथोक्तं ब्रह्मैव वस्तु, नान्यत् किंचिदिति निश्चिनुमः ॥

ननु यद्येवं का तर्हि गतिर्द्वैतप्रपञ्चस्य प्रत्यक्षादिविषयस्य कर्मज्ञानकाण्डाश्रयस्य । अथायं प्रपञ्चो नास्त्येव—तदा प्रत्यक्षादेर्निर्विषयत्वात् अप्रामाण्यात्, कर्मज्ञानकाण्डयोराश्रयासिद्धेः; स्वरूपासिद्धेश्चाप्रामाण्यात्, प्रत्यक्षादेश्च प्रपञ्चान्तःपातित्वात् तदभावेऽभावात्; श्रुतिस्मृतिन्यायानां च स्वतोऽसिद्धेः; न तद्बलात् यथोक्तब्रह्मवस्तुसिद्धिः। अथैतद्दोषपरिजिहीर्षया प्रपञ्चोऽभ्युपेयते, तदा स ब्रह्मणो भिन्नोऽभिन्नो भिन्नाभिन्नो वा अभ्युपेयः; नान्यथा। न हि वस्तुनः प्रकारत्रयं मुक्त्वा अन्यथा सिद्धिरस्ति। अवस्तुत्वे चोक्तो दोषः प्रसज्येत । न हि नृशृङ्गखपुष्पादिना अवस्तुना यथोक्तो व्यवहारस्सिध्येत् । वस्तुत्वेऽपि प्रकारत्रयेऽपि यथोक्तं ब्रह्म न सिध्येत् । अतः प्रपञ्चस्य भावेऽभावेऽपि वेदान्तवाक्येभ्यो यथोक्तब्रह्मासिद्धेः तद्दर्शनादिष्टानिष्टप्राप्तिपरिहारावात्यन्तिकौ पुंसस्सिध्यत इत्ययुक्तम् । अतो मोक्षस्यान्यः प्रकार आश्रयणीयः, न वा मोक्ष इति ॥

अत्रोच्यते—नैकोऽपि दोषोऽस्मत्पक्षे, प्रपञ्चस्य मायानिर्मितत्वाभ्युपगमात् । मायायास्सकार्याया अपि वस्तुत्वावस्तुत्वाभ्यामनिर्वचनीयत्वात् वस्त्ववस्तुपक्षद्वयाश्रया दोषा नास्मत्पक्षं कटाक्षेणापि वीक्षन्ते । तथाहि—

प्रपञ्चस्य वस्तुत्वाभावात् नाद्वैतहानिः। अवस्तुत्वाभावाच्च प्रत्यक्षाद्यप्रामाण्याद्युक्तदोषाभावात् न यथोक्तब्रह्मासिद्धिः। तद्दर्शनाच्च मायातत्कार्यनिवृत्तेः न मोक्षासिद्धिः। नन्वनिर्वचनीयां मायां नाम न जानीमः। ज्ञापयिष्यामस्ताम्। ननु वस्तुत्वाभावे प्रपञ्चस्य प्रत्यक्षादेरप्रामाण्यं स्यात्, ततश्च पूर्वोक्तास्सर्व एव दोषाः प्रादुष्ष्युरिति चेत्; क्वेदं दृष्टम्—वस्तुत्वाभावे अक्षजादेरप्रामाण्यमिति। नृशृङ्गादाविति चेत्, तन्न; अवस्तुत्वाभावात् प्रपञ्चस्य। अवस्तुत्वाभावेऽपि वस्तुत्वाभावान्नृशृङ्गसाम्यं चेत्, अवस्तुत्वाभावात्किं न वस्तुसाम्यं स्यात्। वस्तुत्वाभावेऽप्रामाण्यं स्वप्नादौ दृष्टमिति चेत्—त्वमेव तर्ह्यनिर्वचनीयं जानीषे, यतो नृशृङ्गादि त्यक्त्वा वस्तुत्वावस्तुत्वहीनं स्वप्नादि उदाहरसि। तदपि वस्त्वेवेति चेत्—न तर्ह्यवस्तुत्वमप्रामाण्यकारणम्, तदभावेऽप्यप्रामाण्यदृष्टेः। तन्मिथ्यावस्त्विति चेत्, तदपि वस्तु अवस्तु वा। उभयथाप्युक्तो[1] दोषः। स्यान्मतम्—वस्तुनी अविविक्ते, वस्तु वा वस्त्वन्तरात्मना भासमानं मिथ्यावस्तु; तद्विषयं ज्ञानमप्रमाणमिति चेत्, न तर्हि प्रत्यक्षाद्यप्रामाण्यमतद्विषयत्वात्। अथोच्येत—अनिर्वचनीयार्थत्वात् स्वप्नज्ञानमप्रमाणम्, तथा जाग्रज्ज्ञानमपीति; तन्न, बाधाभावात्। किमिति वा न प्रमाणं स्वप्नज्ञानमनिर्वचनीयार्थत्वाज्जाग्रज्ज्ञानवत्। बाधादिति चेत्, तर्हि बाधादप्रामाण्यं नानिर्वचनीयार्थत्वात्। किंच—तदप्रामाण्यं यत्स्वप्नवज्जाग्रज्ज्ञानानामपि साध्यते

[1] C E (०प्युक्तदो०)।

तद्यदि बाधोत्तरकालं स्वरूपतत्कार्ययोरभावः, स इष्ट एव । अथ प्रागप्यभावः, स स्वप्नेऽपि नास्ति । वस्तुयाथात्म्यबोधात् बाध्यत्वं चेत्, तदपीष्टमेव । अथ सर्वदा बाधकबोधभावः, बोधात्प्रागपि बाध्यत्वं वा तदुभयं स्वप्नेऽपि नास्ति । तस्माद्यथा स्वप्नप्रपञ्चस्य अनिर्वचनीयत्वेऽपि आ बोधात् तदाश्रयस्सर्वो लौकिकवैदिकक्रियाकारकप्रमाणप्रमेयादिव्यवहारोऽप्रतिहतो वर्तते, स्वाप्नैरेव निमित्तैस्तत्प्रपञ्चनुत्सत्यार्थबोधो जायते—एवं जाग्रत्यपि सर्वमविरुद्धं द्रष्टव्यम् । ननु जाग्रत्प्रपञ्चस्य बोधात्प्रागपि मिथ्यात्वज्ञानान्न तद्व्यवहारो न्याय्यः, स्वाप्नस्य तु मिथ्यात्वाज्ञानात् प्राक्प्रबोधात् युक्तस्तद्व्यवहार इति चेत्—नायं दोषः, मायामरीच्युदकगन्धर्वनगरद्विचन्द्रदिङ्मोहादिप्रतिभासानां मिथ्यात्वेऽवगतेऽपि प्राक्सम्यग्बोधादनिवृत्तिदर्शनात् । ननु प्रतिभासानुवृत्तावपि तत्र तन्निमित्ता प्रवृत्तिर्न स्यात्, एवमत्रापि तया न भाव्यम् । सत्यम्; नास्त्येवात्र सा तत्प्रतिभासं मुक्त्वा, स्वप्न इव । प्रतिभासानुवृत्तिस्तु प्राग्बोधान्मायादिष्वपीच्छसि । तस्मात्स्वप्नवज्जाग्रत्यपि प्राग्बोधान्न विरोधः प्रपञ्चतद्व्यवहारप्रतिभासस्य । किंतु द्वैतसत्यत्वाभिनिवेशनिमित्ताः प्रवृत्तयः तन्मिथ्यात्वावगमे न भवन्त्येव । तन्मिथ्यात्वज्ञाननिमित्तास्तु प्रवृत्तयो निवृत्तयश्च भवन्त्येव । यास्तु प्रतिभासमात्रनिमित्तास्ताः पूर्ववत्स्युरेव । लोकेऽपि हि मधुरादिषु तिक्तादिप्रतिभासहेतवस्तन्मिथ्यात्वबोधेऽपि प्रवृत्तिनिवृत्तिविशेषा दृश्यन्ते । तस्मात्प्रपञ्चस्यानिर्वचनीयत्वे ज्ञातेऽपि आ बोधात् सर्वो व्यवहार

उपपन्नः। तस्माद्यथोक्तलक्षणत्वेऽप्यनुभूतेः स्वाविद्यामायाव्यपाश्रयेण समस्तजगदुत्पत्त्यादिहेतुत्वेन महदाद्यशेषकार्यविचित्रविग्रहत्वात् प्रत्यक्षादीनां कर्मोपासनादिवाक्यानां च विषयत्वोपपत्तेर्न विरोधगन्धोऽप्याशङ्कनीयः॥

तदेतदाह—'महदादिजगन्मायाचित्रभित्तिं नमामि ताम्' इति। अव्याकृताद्यत्प्रथमं कार्यं जायते स महान्। स आदिर्यस्य तन्महदादि। महदादि च तज्जगच्चेति महदादिजगत्। तच्च मायाचित्रं महदादिजगन्मायाचित्रम्। मायेति सदसत्त्वाभ्यामनिर्वचनीया अविद्या उच्यते। ननु उच्यते अनिर्वचनीयेति च विप्रतिषिद्धम्। नायं दोषः, सदसत्त्वाभ्यामिति विशेषणात्। सा हि युक्त्या निरूप्यमाणा न अस्तीति निश्चित्य वक्तुं शक्या, नापि नास्तीति; सदसद्विलक्षणत्वेन तद्वचनानर्हत्वात्। तेन अनिर्वचनीया, न पुनरवाच्येति। सदसत्त्वाभ्यामिति विशेषणं श्रुतवतोऽपीदृक् चोद्यं तवैव शोभते। तया मायया निर्मितं चित्रं मायाचित्रम्। चित्रमिव चित्रम्। तस्य भित्तिरिव भित्तिराश्रयो या अनुभूतिः, सा महदादिजगन्मायाचित्रभित्तिः। चित्रं चायनीयं दर्शनीयं दृश्यमित्यर्थः। दृश्यमनुभूत्याश्रयमिति तस्य दौःस्थ्यं प्रकटयति, सहस्रकिरणाश्रयं तमोऽग्न्याश्रयं शैत्य[1]मितिवत्। अथवा—चित्रं विचित्रं नानारूपमित्यर्थः। तस्य एकरूपा अनुभूतिराश्रय इत्युक्त्या तदेव दौःस्थ्यं द्रढयति। आकाशाश्रय[याः ?]स्पर्शरूपरसगन्धाः, रज्ज्वाश्रयाश्च सर्पधारा-

[1] CDE (॰त्यमिव।)

भूच्छिद्रदण्डबलीवर्दमूचितत्वादय इतिवत्। यथा चित्र-मत्यन्तसमायामपि भित्तावविद्यमाननिम्नोन्नतादिभ्रमान् जनयति, एवमेकरूपायामप्यनुभूतौ विक्रियाविषयत्व-भेदानात्मत्वासुखित्वपूर्वापरान्तर्बहिर्भावदिग्विभागात्युच्चा-तिनीचादिभ्रमान् जनयतीति। जगत् चित्रमिव चित्रम्। यथा च चित्रं भित्तिं मुक्त्वा पृथगात्मानं न लभते, तत्रैव चोत्पत्तिस्थितिनाशाननुभवति—एवं जगदपीति तत् चित्रम्। चित्रस्यापृथक्त्वेऽपि चित्रोपादानद्रव्यं भित्तेः पृथक् आत्मवत्, नैवं जगच्चित्रोपादानमित्याह—माया-चित्रमिति। माया ह्यनुभूतेः पृथक्त्वापृथक्त्वाभ्यामनि-र्वचनीया। मायानिर्मितत्वं जगतः 'मायां तु प्रकृतिं विद्यात्', 'इन्द्रो मायाभिः पुरुरूप ईयते', 'माया ह्येषा मया सृष्टा' इत्यादिशास्त्रेभ्योऽवगम्यते। यथा 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'अत्रायं पुरुषस्स्वयंज्योतिः', 'तं देवा ज्योतिषां ज्योतिः', 'न तत्र सूर्यः', 'य आत्माजरोऽमरोऽमृतोऽभयः', 'न जायते म्रियते वा', 'अन्यदेव तद्विदितात्', 'एतदप्रमेयं ध्रुवम्', 'अनन्तमपारं विज्ञानघन एव', 'तत्त्वमसि', 'अहं ब्रह्मास्मि', 'अयमात्मा ब्रह्म', 'एष त आत्मा', 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादिशास्त्रेभ्यो यथोक्त-लक्षणं ब्रह्म अवगतम्। एवं तस्य मायाव्यपाश्रयमेव जगत्स्रष्टृत्वं बहुरूपत्वं चावगन्तव्यम्, शास्त्रबलात्; अन्यथा अद्वैतविरोधाच्च। तस्मान्मायानिर्मितं जगदिति सिद्धम्। ननु सिद्धेऽर्थे कथं शास्त्रस्य प्रामाण्यम्। शृणु—

प्रमित्युत्पत्तेः संशयाद्यभावाच्च । प्रपञ्चितं चैतत् प्रमाणवृत्तनिर्णये । भित्तिरिव भित्तिरनुभूतिः । यथा चित्रस्य भित्तिस्साक्षान्नोपादानम्, नापि सहजं चित्रं तस्याः, नाप्यवस्थान्तरं मृद इव घटादिः, नापि गुणान्तरागम आम्रस्येव रक्ततादिः; न चास्याश्चित्रजन्मादौ जन्मादिः, चित्रात्प्रागूर्ध्वं च भावात्; यद्यपि भित्तिं विना चित्रं न भाति, तथापि न सा चित्रं विना न भातीत्येवमादि अनुभूतिभित्तिजगच्चित्रयोर्योज्यम् । चित्रभित्तिमिति द्वितीयाप्रयोगः कल्पितप्रपञ्चैव देवता नमस्कारादेर्विषय इति दर्शयितुम् । देवतानमस्कारश्च शिष्टाचारपरिपालनार्थम् । मङ्गलाचरणं विघ्नोपशान्त्यै । देवतागुरुभक्त्योर्वा ज्ञानप्राप्तावन्तरङ्गत्वं दर्शयितुम्—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥' इति मन्त्रवर्णात् । गुरोश्च देवतैक्यात् पृथङ्नमस्कारोऽत्र न कृतः। प्रदर्शनार्थत्वाद्वा । अत्र 'यथा देवे तथा गुरौ' इति वचनाद्वा वाचनिको नमस्कारस्तुल्य एव कृतः, विरोधाभावात् । बहिरेव वा गुरुनमस्कारः कृतः ग्रन्थात् । देवतानमस्कारस्तु समस्तवेदान्तार्थसारसंग्रहस्यास्य प्रकरणस्यार्थं परां देवतामौपनिषदं पुरुषं संक्षेपतो दर्शयितुं सुखावबोधार्थं ग्रन्थादावेव कृतः तत्रैव स शोभत इति ॥

ब्रह्माविद्यानिमित्तत्वात् संसारस्य वेदान्तोत्थब्रह्मविद्यया निवृत्त्युपपत्तेर्मोक्षः प्रयोजनम् । वेदान्तानां विषयो ब्रह्म, अनन्यसाधारणत्वात् तत्प्रतिपाद्यत्वाच्च। ब्रह्मणो वेदान्तानां

च प्रतिपाद्यप्रतिपादकलक्षणस्संबन्धः। तान्येव प्रयोजनादीनि प्रकरणस्यापि, तदर्थनिर्णयार्थत्वात्। तदर्थनिर्णयार्थत्वं च न्यायैरर्थाभासज्ञाननिरासेन सम्यगर्थज्ञानदृढीकरणाच्छारीरकवत्, न पुनरनिर्णयहेतुत्वाद्वेदान्तानाम्। न च शारीरकेणास्य गतार्थत्वं चोद्यम्, तत्प्रकरणत्वात्। तदेवं प्रयोजनादिमत्प्रकरणम्। नन्विदमादौ वक्तव्यम्, श्रोतृप्रवृत्त्यङ्गत्वात्। सत्यम्; उक्तमेव, किं तु न स्पष्टम्। तदेवात्र स्पष्टीक्रियते, मुक्तिबन्धयोर्विद्याविद्यानिमित्तत्वे प्रतिपादित एव तत्स्पष्टीकरणस्य सुकरत्वात्॥ १॥

ननु सदसत्त्वाभ्यामनिर्वचनीयाविद्याकार्यमनिर्वचनीयं नाम किंचित्प्रसिद्धं नैव लोकेऽस्ति। यदि स्यात्, तद्वज्जगदपि अनिर्वचनीयमिति प्रतिज्ञायेत। न त्वस्ति। अथोच्येत—शुक्तिरजतमायादि तत् प्रसिद्धमिति, तच्च न; तस्याप्यस्ति नास्तीति वा ख्यातेर्नानिर्वचनीयता प्रसिद्धा। अत एव तत्सदेवेति केचित्, असदेवेत्यन्ये। ततस्सत् असदेव वा तस्यापि कारणम्, नानिर्वचनीयम्। न चाविद्या कारणम्। न हि सदसतोस्तत्कारणयोरविद्यात्वम्। अविद्या च भ्रान्तिज्ञानं न त्वन्या, प्रसिद्ध्यभावात्। भ्रान्तिश्च न रूप्यकारणम्, अप्रसिद्धेः। तद्विषय[1]त्वाच्च। कारणत्वे तद्विषयत्वायोगात्। यद्धि यद्विषयं ज्ञानं न तत् तत्कारणम्, यथा शुक्तिज्ञानम्। भ्रान्तेश्च नानिर्वचनीयत्वम्, बाधस्याप्यभावात्। भ्रान्तेश्च कार्यत्वात् तत्कारणमविद्येति चेत्, तन्न; [2]करणदोषकार्यत्वाद्भ्रान्तेः।

[1] C (०यत्वात्।) [2] C (कारण०)।

न च दोषोऽविद्या अनिर्वचनीयो वा। अतो नाविद्या अनिर्वचनीया प्रसिद्धा। नापि तत्कार्यम्। तस्मादनिर्वचनीयाविद्याकार्यमनिर्वचनीयं जगदित्ययुक्तमिति। 'मायां तु प्रकृतिं विद्यात्' इत्यादावपि मायाशब्दस्य नानिर्वचनीयोऽर्थः, व्युत्पत्त्यभावात्॥ नैष दोषः, उक्तलक्षणस्य शुक्तिरजतादेः प्रसिद्धत्वात्। तत्कथमिति चेत्, शृणु—तत्सविचारं श्रावयिष्यामः—

रजतं भाति यद्भ्रान्तौ तत्सदेके परे त्वसत्।
अन्येऽनिर्वचनीयं तदाहुस्तेन विचार्यते॥ २॥

पक्षत्रयेऽपि युक्तीराह सुखप्रतिपत्त्यर्थम्—

असतः ख्यात्ययोगात्सद्बाधायोगादसत्सतः।
अतोऽनिर्वचनीयं तदिति पक्षेषु युक्तयः॥ ३॥

असतो नृशृङ्गादेः प्रतिभासासंभवात् प्रतिभासमानत्वाच्च, इदं रजतं सदित्याद्ये पक्षे युक्तिः। यदि कश्चिद्ब्रूयात्—नृशृङ्गमपि तच्छब्दाद्भातीति, तस्यापि न तत् रूप्यवद्भाति। न हि नरि शृङ्गं भाति गवीव। न च भात्यपि, विकल्पमात्रत्वात् तत्प्रत्ययस्य। तदुक्तम्—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति। कथं चासतो भाति भास्यत इति वा कर्तृत्वं कर्मत्वं वा। अतोऽसतः ख्यात्यसंभवात् ख्यातेश्च, इदं नासत् रूप्यम्; सदेव तु सत्यरूप्यवत्, ख्यातेरेव॥ सतो बाधायोगात् सत्यरूप्यादिवत्, बाधाच्च इदं रूप्यं न [1]सत्। अतोऽसदेवेति द्वितीये पक्षे युक्तिः।

[1] CDE (सदसतोऽ०)।

असतः ख्यात्ययोगात्, सतो बाधायोगादित्याभ्यां युक्तिभ्यामनिर्वचनीयम्; ख्यातेर्नासत्, बाधात् न सदिति ॥ ३ ॥

तत्र सत्पक्षस्त्रिधा भिन्नः—आत्मख्यातिरख्यातिरन्यथाख्यातिरिति। तत्राद्यं संक्षेपतो दर्शयति—

अदृष्टत्वादसत्ख्यातेस्सत्ख्यातेश्चैव दर्शनात्।
इदं च रूप्यं सत्ख्यातेर्बाह्यत्वस्यैव बाधतः ॥ ४ ॥
रूप्याबाधाच्च युक्तेश्च तावता भ्रान्तिबाधयोः।
रूप्यमेतद्वदन्त्येके धीरूपं वासनामयम् ॥ ५ ॥

सदिदं रूप्यम्, ख्यातेः सत्यरूप्यवदित्यनुमानम्। अथवा—इदं नासत् रूप्यम्, अख्यानाभावात्। अख्यानव्याप्तं ह्यसत्त्वं नृशृङ्गादौ; अतो व्यापकाख्यानाभावाद्व्याप्यासत्त्वाभावः। अख्यानाभावश्च तद्विरुद्धख्यातिदृष्टेरिति व्यापकाख्यानविरुद्धख्यातिलिङ्गकमनुमानं रूप्यस्यासत्त्वाभावे। अतः ख्यातेरेव नासत्, सदिति वा सिद्धम्। ननु नेदं रजतमिति बाधात् न रूप्यस्य सत्त्वं युक्तम्। नायं दोषः, बाह्यत्वस्यैव बाधतो रूप्याबाधाच्च। नेदमिति हि बहिरिव भातो रूप्यस्य बाह्यतामात्रं बाध्यते, न तु रूप्यमपि। न हि नेदम्, न रजतमिति च बाधः। अतो रूप्यस्य सत्त्वं न विरुध्यते। इतश्च—'युक्तेश्च तावता भ्रान्तिबाधयोः'। तावतैव रूप्यस्य बाह्यत्वमात्रबाधेन भ्रान्तिबाधयो रूप्यबाधं विना युक्तेः उपपत्तेर्घटमानत्वात्, रूप्यस्यापि बाधं परिकल्प्य तस्यासत्त्वकल्पनानुपपत्तेः। न ह्येकस्यैव बाधेन इष्टे सिद्धे द्वयोर्बाध-

कल्पना न्याय्या, कल्पनागौरवात्। रूप्यस्यैव बाधोऽस्त्विति चेत्, तन्न; धर्मिबाधे बाह्यत्वधर्मस्यापि बाधात् द्वयोर्बाधप्रसङ्गात्। अतो बाह्यतैव बाध्यते, न रूप्यम्। अतोऽस्त्येव तत्। तच्च धिय एव रूपं वासनाकृतमित्येके वदन्ति ॥ ४ ॥ ५ ॥

अन्येऽसतः ख्यात्ययोगात्सत्संवित्तिविरोधतः ।
नासत्ख्यातिरनाश्वासान्नान्यथाख्यातिरप्यसौ ॥ ६ ॥

इदंधीरक्षजा रूप्यधी[1]स्स्मृतिस्तत्प्रमोषतः ।
दोषादिदं रूप्यमिति भ्रान्तिस्तदविवेकतः ॥ ७ ॥

अन्ये त्वेवं वदन्तीत्यनुषङ्गः। कथम्। नेयं रूप्यख्यातिरसत्ख्यातिः, असतः ख्यात्य[2]संभवात्। सद्रूप्यमिदमिति संवित्त्या विरोधाच्च। असद्रूप्यमिति वदतः—यथा रूप्ये ख्याति हस्ती ख्यातीतिवदतः—रूप्यसंविद्विरोधः। असतोऽपि सत्त्वेन ख्यातिसंभवे अन्यत्राप्यनाश्वासात्, सत् सत्त्वेन ख्यातीत्यपि निश्चयो न स्यात्। अतो नासत्ख्यातिः। 'नान्यथाख्यातिरप्यसौ'—अत एव संविद्विरोधादेः। तथाहि—शुक्ती रूप्यात्मना ख्यातीति वदतो रूप्यसंविद्विरोधः, अन्यत्रापि रूप्यादिख्यातावन्यथाख्यातिसंभवादनाश्वासोऽर्थानिश्चयः, शुक्ते रूप्यात्मत्वस्य असतः ख्यातिप्रस[3]ङ्गः; तस्मान्नान्यथाख्यातिः। नात्मख्यातिरप्यत एव—बाह्यसंविद्विरोधात्, अबाह्ये बाह्यख्यातिवदबुद्धौ बुद्धिख्यातिसंभवा-

[1] DE (॰धीस्मृ॰)।　　[2] BCDE (॰त्यसद्भावात्।)
[3] E (॰सङ्गात्।)

दनाश्वासात्, बाह्यत्वस्य असतः ख्यातिप्रसङ्गाच्च। अनिर्वचनीयं रूप्यं सत्त्वेन ख्यातीति वदतः सत्संवित्तिविरोधात्, अन्यथाख्यातीष्टेश्चानाश्वासात्, असतः सत्त्वस्य ख्यातिप्रसङ्गाच्च अनिर्वचनीयस्य ख्यातिरपि नेयम्। एवं सर्वत्र पक्षान्तरनिरासो योज्यः॥ का तर्ह्यस्या गतिः। उच्यते—द्वे एते धियौ, नैकैव। तत्रेदमित्यक्षजा पुरोऽवस्थितशुक्तीदमंशविषया। रूप्यधी[1]स्स्मृतिः, सादृश्याद्युद्बोधितसंस्कारमात्रजत्वात् कारणान्तराग्रहणात्। तस्याश्च का[क?]रणदोषबलात्प्रमुषितस्मरणाभिमानत्वात् स्मृतित्वानभिव्यक्तेः, शुक्तेश्च विशेषाग्रहणात्, तयोः इदंरूप्यग्रहणस्मरणयोर्निरन्तरोत्पन्नयोरविवेकात्, इदं रूप्यमित्येकत्वज्ञाने सामानाधिकरण्येनानुत्पन्ने[2]ऽप्युत्पन्न इव व्यवहरति लोकः। तेन इदंरूप्यज्ञाने यथार्थे अप्ययथार्थव्यवहारमविविक्ते प्रवर्तयत इति ते एवाविविक्ते भ्रान्तिरित्याहुः। अख्यातिरपीदृश्येव भ्रान्तिः; न ज्ञानहीना, सुषुप्तस्याभ्रान्तित्वात्। यथा चान्येषामयथार्थज्ञानं भ्रान्तौ युक्तम्, एवमयथार्थव्यवहारोऽस्माकम्। अयथार्थज्ञानाभ्युपगमे चोक्तो दोषः। नास्मत्पक्षे कश्चिद्दोषः। नेदं रजतमिति बाधः कथमिति चेत्, सोऽप्यख्यातिमेव नुदन् शुक्तिरूप्यविवेकेन अन्यथाव्यवहारं निवर्तयति; न त्वयथार्थख्यातिं प्राप्ताम्, तत्प्राप्तेर्निरस्तत्वात्। तस्माद्यद्यथाख्याति, तत्तथास्त्येवेति स्थितम्॥ ६॥७॥

[1] D (०धीस्मृ०)।   [2] D (०न्ने व्युत्प०)।

एकान्तसत्त्वेऽभ्रान्तत्वादसत्त्वे ख्यात्यसंभवात्।
शुक्तिस्वाभावरूप्यात्मा भातीत्यन्ये त्वतिष्ठिपन् ॥ ८ ॥

यद्यथा ख्याति तत्तथैवास्ति चेत्, न तत्ख्याति [तिः?] भ्रान्तिः, अन्यथा अतिप्रसङ्गात्। ननु यथार्थख्यात्योरपि अयथार्थव्यवहारहेतुत्वात् भ्रान्तित्वमुक्तम्। तदुरुक्तम्। न ह्ययथार्थव्यवहारहेतुत्वं यथार्थत्वे ख्यात्योस्साक्षात्संभवति, अन्यासामिवानयोरपि। पारम्पर्येण चेत्, अनयोरिव अन्यासामपि तत्संभवात् भ्रान्तित्वप्रसङ्गः। अन्यासां यथार्थव्यवहारहेतुत्वादभ्रान्तत्वम्, नानयोस्तदभावादिति चेत्—तर्हि अयथार्थता अनयोरभ्युपेया। यथार्थत्वेऽस्या व्यवस्थायाः को हेतुः। स्मृतिग्रहणाविवेक इति चेत्, स्मृतेस्तस्याः कोऽविवेको ग्रहणात्। ननूक्तं स्मरणाभिमानप्रमोषादविवेक इति। किं सोऽभिमा[1]नः स्मृतेस्स्वरूपमेव, उत अन्यः। स्वरूपं चेत्, तदभावे स्मृतेरेवाभावः। अन्यश्चेत्—तदभावे स्मृतेर्नाविवेकः, अतिप्रसङ्गात्। अथोच्येत—न ज्ञानयोरविवेकः, किंतु तदर्थयोरविवेको व्यवस्थाहेतुरिति; कोऽर्थयोरविवेकः। यदि कार्त्स्न्येनाज्ञानम्, तर्हि सर्वज्ञानानां भ्रा[2]न्तित्वम्। न हि केनचिदपि ज्ञानेन कार्त्स्न्येनार्थो ज्ञायते। अतो यथार्थत्वे ख्यात्योः, नायथार्थव्यवहारहेतुत्वं न्याय्यम्। अथोच्येत—इदं रजतमिति सामानाधिकरण्यज्ञाने अनुत्पन्ने[3]ऽपि उत्पन्नाभि-

[1] CD (॰मानस्मृ॰)। [2] CDE (भ्रान्तत्वम्।)
[3] DE (॰न्ने व्युत्प॰)।

मानात् प्रवृत्तिः; तृतीयं वा सामानाधिकरण्यज्ञानं[1] मानसमस्ति, अतो वा प्रवृत्तिरिति। तर्हि अयथार्थज्ञानाभ्युपगमात् त्वयोक्ता दोषास्तवैव प्रसज्यन्ते। तृतीयं च ज्ञानमयथार्थमिच्छन् किमिति नाद्यं[द्वे?] तथेच्छसि। अक्षस्य यथार्थत्वार्थम्, मानसस्य अयथार्थत्वेऽपि अविरोधात्। यद्यक्षादीनां यथार्थत्वनियमो न स्यात् तदा लोकव्यवहारे दृष्टार्थे संभवत्यपि वेदे यथार्थत्वनिश्चयाभावात् अदृष्टार्था प्रवृत्तिर्न स्यात्, अतोऽक्षजादीनां यस्य या असाधारणा सामग्री तस्या यथार्थज्ञानजनकत्वमेव; अतो वेदस्यापि यथार्थज्ञानजनकतैव स्वभावेन, अप्रमाणज्ञानं[2] त्वन्यनिमित्तमिति व्यवस्थापयितुमाद्ययोर्नायथार्थत्वमिच्छामि। चक्षुरादीनां हि प्रमाणाप्रमाणज्ञानसाधारणत्वे नायं नियमस्सिध्येत्, मनसस्तु साधारणत्वेऽप्यात्मवदविरोध इति चेत्—एवमपि स्मृतेर्नायथार्थत्वे कश्चिद्विरोधः, अप्रमाणसामग्रीजन्यत्वात्। तथा भ्रान्तेः। न हि प्रमाणाप्रमाणधियोस्सामग्री तुल्या। चक्षुरादीनां तदन्तःपातित्वेऽपि दोषोपेतं हीन्द्रियं भ्रान्तेर्हेतुः; शुद्धं त्वभ्रान्तेः, मनोवत्। वेदस्य त्वदोषत्वात् स्वशक्त्या सम्यग्धीजनकतैव। भ्रान्तिस्तु शब्दशक्त्यपरिज्ञानात् प्रत्यक्षादिविरोधाशङ्कया वा पुरुषस्य जायते; न तु शब्दात्। अतोऽन्यपक्षेऽपि अदृष्टार्थप्रवृत्तेरविरोधात् प्रतीतिन्यायविरुद्धं बाधकाननुरूपमख्यातिपक्षं मा चीकॢपः॥

[1] CDE (॰रण्यं ज्ञा॰)। [2] CDE (॰प्रमाज्ञा॰)।

भ्रान्तौ दृष्टस्य अन्यत्र[1] योजनादनाश्वास अनालम्बनता च अख्यातिपक्षेऽपि समानः। दो[2]षसदसत्त्वाभ्यां भ्रान्त्यभ्रान्तिविवेकश्चेत्, सोऽन्यपक्षेऽपि तुल्यः। दोषो हि इष्टं कार्यं निरुन्धन्, विपरीतं च कुर्वन् दृश्यते। न च दोषाभावेऽपि अग्रहाशङ्कानिवृत्तिः। न हि कारणाभावे कार्यं भवत्येव। दोषाभावलिङ्गेन प्रत्यक्षा संविदनुमेया स्यात् तव। विपर्ययाभावस्तु दोषाभावेन युक्तोऽनुमातुम्, हेत्वभावे फलाभावात्। न चानाश्वासोऽर्थे ज्ञायमाने, तज्ज्ञानविरोधात्। अन्यतोऽपि ज्ञानादेव चेदर्थाश्वासः, तदस्त्येव। न चान्यस्य विशेषः। न च द्वाभ्यां ज्ञानाभ्यामर्थाश्वासः, नापि बहुभ्यः। नाप्यर्थक्रियाज्ञानादर्थाश्वासः, व्यभिचारस्य समानत्वात्। न च व्यभिचारादप्रामाण्यम्, ज्ञानस्य प्रमाणफलस्य परिच्छित्तेर्भावात्। तद्भावादेव प्रामाण्यं नाव्यभिचारात्, सितासितादिव्यभिचारिणामप्यक्षाणां तद्भावे प्रामाण्यात् तदभावे धूमस्याव्यभिचारस्याप्यप्रामाण्यात्। न च फलभावेऽपि व्यभिचारादप्रामाण्यं क्वचिद्दृष्टम्। प्रमेयत्वादेश्चाप्रामाण्यं फलाभावादेव, न व्यभिचारात्। फलाभावश्च हेत्वभावात्। अव्यभिचाराद्धि लिङ्गात्फलम्। अतो व्यभिचारोऽलिङ्गत्वहेतुः प्रमेयत्वादेः, न तु बाधकवत्प्रामाण्योपघाती, व्यभिचारिणामप्यक्षाणां प्रामाण्यात्। ज्ञानं चाक्षवदेव प्रमाणम्, न लिङ्गवत्। न च निश्चितेऽर्थे व्यभिचारात् संशयः, निश्चित इव स्थाणावूर्ध्वत्वेन। उत्पत्त्यैव च ज्ञानस्य

[1] BCDE (०त्र प्रयो०)। [2] E (०षः स०)।

निश्चयात्मकत्वान्नानिश्चयो युक्तः। अनिश्चयात्मकत्वं तु नेहाधिकृतम्। अव्यभिचारादर्थाश्वासमिच्छतस्तु अनाश्वास एव, अव्यभिचारज्ञानेऽप्यनाश्वासात्। तद्धसिद्धा[1]व्यभिचारं नात्मन्यन्यत्र वा आश्वासहेतुः। ज्ञानान्तरात्सिद्धौ अनवस्था। किंच—ज्ञानाच्चेन्नार्थाश्वासः, तदसिद्धौ केन सहाव्यभिचारो ज्ञानस्य गृह्येत। व्यभिचारोऽपि कथं सिध्येत्, ज्ञानस्यासाधकत्वे। साधकत्वे तदेवार्थस्यापि साधकमस्तु, व्यर्थोऽव्यभिचारः। तस्मात्ख्यातेः यथार्थत्वनियमाभावेऽपि अनाश्वासादिदोषाभावात् यथार्थत्वाग्रहो व्यर्थः। अतो यथार्थत्वे ख्यातेः भ्रान्तित्वायोगात् यत्ख्याति तदस्त्येवेति नियन्तुं न शक्यम्॥

तर्हि स नास्त्येव। न च नास्त्येव, असत्त्वे ख्यात्यसंभवात्। तस्माच्छुक्तिस्सती सदन्तररूप्यात्मना ख्यातीत्यभ्युपेयम्। न चैवं सति अभ्रा[2]न्तित्वं ख्यातेः, यथा ख्याति तथा नास्ति यतः। नापि शून्यख्यातिप्रसङ्गः—प्रकारस्य अतुच्छत्वात्, रूप्यस्य सत्त्वात्। रूप्यप्रकारा च शुक्तिः ख्याति। ननु शुक्तेः प्रकारस्य च सत्त्वे शुक्तिर्यथा भाति तथा नास्तीति कथं ब्रूषे। शृणु—रूप्यस्य शुक्त्यभावत्वात्। रूप्यं हि शुक्तेरभावः, भावान्तरस्यैवाभावत्वात्। उक्तं हि—'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इति। तस्माच्छुक्तौ रूप्यात्मना नास्तीत्युच्यते। अतो द्वयोस्सत्त्वेऽपि शुक्तिः स्वात्मना सम्यक्ख्यातेर्विषयः, भ्रान्तेस्तु स्वाभावरूप्यात्मनेति व्यवस्था। अत आह—

[1] D (०द्धौ व्य०)। [2] CDE (०भ्रान्तत्वं)।

'शुक्तिः स्वाभावरूप्यात्मा भाति' इति । अतो न सदेव, नापि शून्यमेव भातीति भ्रान्तिर्युज्यते । अस्मत्पक्षे बाधोऽपि भ्रान्त्या प्राप्तां शुक्ते रूप्यात्मतां बाधमान एवोपपन्न इति अन्ये त्वतिष्ठिपन् स्थापितवन्त इत्यर्थः ॥ सर्वथा नासदिदं रूप्यम्, नानिर्वचनीयम्; अपि तु सदेवेति प्राप्तम् ॥ ८ ॥

अत्राभिदध्महे—

सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ ।
सदसद्भ्यामनिर्वाच्याविद्या वेद्यैस्सह भ्रमाः ॥ ९ ॥

सत्त्वे शुक्तिरूप्यस्य तद्धीर्न भ्रान्तिस्स्यात्, सत्यरूप्यधीरिव । तद्वदेव च नास्या बाधः । असत्त्वे तु नृशृङ्गवत्तस्य न ख्यातिः । अतो न भ्रान्तिबाधौ स्याताम् । न च तौ न स्त एव, सर्वजन्तुप्रसिद्धत्वात् सर्ववादिभिश्चेष्टत्वात् । यदि कश्चिद्ब्रूयात्तौ नेच्छामीति, तस्य प्रसिद्धिविरोधः । सा भ्रान्तिरिति चेत्, न; बाधाभावात् । तद्बाधिकां युक्तिमपि वच्मीति चेत्, तर्हि इच्छसि भ्रान्तिबाधौ । मा अतस्तद्बाधिकां युक्तिं वोचः, अनिष्टप्रसङ्गात् । का च ता नि[मि ?]च्छतस्तद्बाधिका युक्तिः । ननु रूप्यस्य सत्त्वेऽसत्त्वे च न भ्रान्तिबाधौ संस्त इत्यवोचः । न च सदसत्त्वे, विरोधात् । न च प्रकारान्तरमस्ति । अतस्तत्प्रसिद्धिर्निर्मूलेति चेत्, तन्न; सदसत्त्वाभ्यामनिर्वचनीयाविद्यात्मकत्वाभ्युपगमात् रूप्यतज्ज्ञानयोः । तथाहि—ख्यातेर्नासत्, बाधात् न सदित्यन्योन्यपक्षं निराकुर्वद्भिर्वादिभिरेव रूप्यस्यानिर्वचनीयत्वं स्थापितम् । अत एव

तज्ज्ञानस्यापि । न हि ज्ञेयस्य निर्वाच्यत्वे तज्ज्ञानस्य निर्वचनीयत्वं न्याय्यम्, तज्ज्ञानत्वहानात् ज्ञानान्तरवत् । ज्ञानस्य च निर्वाच्यत्वे ज्ञेयस्यापि तथात्वं स्यात्, अन्यज्ञानज्ञेयवत् । अतस्तयोरनिर्वचनीयत्वं सिद्धम् । कादाचित्कत्वाच्च तयोः कारणं मृग्यम् । न च निमित्तकारणमात्रात्कार्यसिद्धिः, अत उपादानं च मृग्यम् । न चासत्यस्य साक्षात्सत्यमुपादानं दृष्टम् । सत्योपादानत्वे च घटादिवत्सत्यत्वं मानगम्यत्वं च स्यात् । तच्च नेष्टम् । अतस्तदनुरूपमनिर्वचनीयमेवोपादानमेष्टव्यम् । तच्च नान्यदज्ञानात् अनादि समस्ति । न च सादेरुपादानता, अनन्वयादनवस्थानाच्च ॥

ननु भ्रान्तिरेवाज्ञानम्, तस्या अज्ञानत्वप्रसिद्धेः । न हि भ्रान्तिसंशयौ मुक्त्वा अन्यस्य सर्वमानातिगस्याज्ञानताप्रसिद्धिः, कारणता वा संभाव्या । अतो भ्रान्तिरेव भ्रान्त्यन्तरकारणम्, तस्या अप्यन्या, तस्या अप्यन्येत्यनादित्वाद्भ्रान्तीनामेव—भ्रान्तितत्संस्काराणां वा—बीजाङ्कुरवत्कार्यकारणतायोगात् नान्यत्कल्प्यमिति चेत्—तन्न; अनन्वयादिना उक्तोत्तरत्वात् । न हि कार्यस्य कार्यान्तरे अन्वयः पिण्डस्येव घटे । अनन्वितं च नोपादानं, पिण्ड इव घटस्य । या त्वन्विता मृत् सैवोपादानं पिण्डादीनाम्, न तु तेऽन्योन्यस्य । एवं भ्रान्तिसंशयतत्संस्काराणामपि कार्यत्वे नान्योन्योपादानता । यत्तु तेष्वागमापायिष्वन्वेति तदेव तेषामुपादानमज्ञानम्, तस्य भावे तेषां भावादभावे चाभावात् । कारणभावेऽप्यभावो मृत्-

कार्येऽपि तुल्यः संस्कारादिकार्येऽपि । तस्माद्भाव एव भवति नाभाव इति नियमः, न तु भावे भवत्येवेति; अन्यथा कारणे नित्ये कार्यमपि नित्यं स्यात्, तद्भावे भावनियमात् । कार्ये त्वनित्ये कारणमप्यनित्यं स्यात्, तद्भाव एव भावात् । उभयथाप्येककालत्वात् तयोर्न कार्यकारणभावः पुंसोः शृङ्गयोरिव च ॥

ननु कार्यक्षणात्पूर्वक्षणे कारणस्य भावान्नैककालता तयोरिति चेत्—किं तत् पूर्वक्षण एवास्ति, उत कार्यक्षणेऽपि । यदि कार्यक्षणेऽपि—तद्भावेऽपि न स्यात्कार्यम्, पूर्वक्षणेऽभावात् । पूर्वक्षण एव चेत्—न स्यात्कार्यं तद्भावे, अपि त्वभाव एव । अतो न तत् तत्कार्यम्, तदभावे भावात् तद्भावेऽभावाच्च । अथ तदभावः कारणम्—तत् अकारणं स्यात्, तत्कार्यभावेऽपि तदभावानिवृत्तेः । कार्यकारणे सहापि [1]स्ताम् । कार्याभावेऽपि तत्कारणाभावानिवृत्तेः कारणभावेऽपि कार्याभाव इष्टस्स्यात् । तस्मादभावस्य कारणत्वेऽपि कारणभावे कार्यं स्यादेवेति नियमो नास्ति । न चाभावस्य कारणतेति वक्ष्यामः । तथा सदपि कारणं कार्यकाले पूर्वं च यदि स्यात्, तदा सत्येव कारणे कार्यं भवतीति नियमः; न तु सति भवत्येवेति, पूर्वक्षणे कार्यस्याभावात् कारणभावेऽपि । अथ पूर्वक्षण एवास्ति कारणम्, न कार्यकाले—तदापि न कारणे सति कार्यं भवत्येवेति नियमः, कारणकाले कार्यस्याभावात् । असत्येव

[1] BC (स्तः)।

तु कारणे कार्यं स्यात्, कार्यकाले तस्याभावात्। अतद्भावभावित्वाच्च तयोर्न कार्यकारणभावस्स्यात् ॥

ननु पूर्वस्मिन्नुत्तरस्मिंश्च क्षणे तयोर्भाव एव कार्यकारणभावः। तद्भावभावित्वं च तदेव, न त्वेककालता। अतः क्षणिकस्यैव कारणता न्याय्या। नित्यस्य तु कारणत्वे पूर्वोत्तरक्षणयोस्तस्य विशेषाभावात् क्रमानुपपत्तेरेकस्मिन्नेव क्षणे सर्वकार्यजननात् उत्तरक्षणेऽर्थक्रियाभावादसल्लक्षणत्वप्रसङ्गादिति चेत्, तन्न; प्रसिद्धिविरोधात्। तथाहि—यस्मिन् सति यद्भवति, असति च न भवति ते कार्यकारणे इति प्रसिद्धिः तयोर्भिन्नकालतैवेति वदतो विरुध्यते। अतद्भावभावित्वमेव तद्भावभावित्वमिति च वदतश्शब्दार्थप्रसिद्धिविरोधश्च। क्षणिकत्वं च कारणादेर्वदतः अन्यथाप्रसिद्धिविरोधः। न हि त्वत्कुतर्कानुपहतमतीनां कस्यचित्क्षणिकता प्रसिद्धा, किं पुनः कारणस्यानेककार्यानुयायिनः। न च सर्वलोकप्रसिद्धिविरोधेन किंचित्क्वचिद्बोधयितुं शक्यम्। तस्मात्कार्यकारणादिभावमिच्छता स यथा प्रसिद्धः, तथाभ्युपेयः; नासौ शिष्यः। नित्यस्य कारणत्वायोगात् तत्प्रसिद्धिर्बाध्येति चेत्, न बाध्या; क्षणिकस्यैव तदयोगात्। तथाहि—क्षणिकं चेत्कारणम्—तस्य पूर्वोत्तरक्षणयोर्विशेषाभावात् कार्यं चेत्ततो भवेत्, सदा भवेत्; न चेत्, न कदाचित्। ननु पूर्वोत्तरक्षणयोस्तस्याभावात् तत्क्षणे च भावात् तदा विशेषोऽस्ति भावः; तर्हि तत्कार्यमपि तदैव भवेत्, तदैव विशेषभावात्। तदा तत्कार्यम्, तत्कार्यं च तदैवेति नोत्तरक्षणभावि

किंचित्कार्यं स्यात्। उत्तरक्षणोऽपि पूर्वक्षणकार्यं चेत्, तदैव भवेत्। न चेत्, पूर्वापरभावो भावयोः कार्यकारणभाव इत्ययुक्तम्। ननु न पूर्वापरभावमात्रात् कार्यकारणभावः, किं तु पूर्वापरकालयोर्भावात्। कालयोस्तु न पूर्वापरकालयोर्भावः, कालस्य कालान्तराभावात्। अतो नानयोः कार्यकारणभाव इति चेत्—तर्हि न कालस्य कालतः पौर्वापर्यम्, नापि देशत इत्यपूर्वापरत्वात् कालस्य तत्संबन्धिनोर्भावयोरपि न पौर्वापर्यमिति पूर्वापरक्षणयोर्भावः कार्यकारणभावो भावयोः, पूर्वोत्तरक्षणयोर्भावो नास्ति मध्ये चास्तीत्याद्युक्तेरयुक्तत्वाद्यद्भवति तद्भवत्येव, यन्न भवति तन्न भवत्येवेति न कदाचिद्वस्तुनोऽन्यथाभाव इति वाच्यं स्यात्। नन्वेतच्चोद्यमन्यस्यापि तुल्यम्। न तुल्यम्। भवत एव प्रसिद्धिं त्यक्त्वा सूक्ष्मेक्षिकां प्रकुर्वतस्तद्दूषणं स्यात्, न त्वन्यस्य यथाप्रसिद्धं कार्यकारणभावमभ्युपगच्छतः। नन्वेककालत्वे सति अयं कार्यकारणयोर्दोषस्स्यात्, तच्च नास्ति; कारणक्षणाद्युत्तरक्षणे कार्यं स्यात्, अतो नायं दोष इति चेत्—सत्यम्, किं त्वन्यो दोषस्स्यात्। तथाहि—कारणाभावे चेत्कार्यं स्यात्, कारणक्षणात्पूर्वोत्तरक्षणेषु सर्वेष्वेव स्यात्; विशेषाभावात्। न च प्रागभावप्रध्वंसाभावयोर्विशेषोऽभावत्वात्। विशेषवत्त्वे च भावत्वप्रसङ्गः। विशेषोऽप्यभावश्चेत्, को विशेषस्तयोः। भावश्चेत्, कथं भावोऽभावधर्मस्स्यात्। विशेषवत्त्वेऽप्यभावयोः, कारणस्य विशेषाभावात् पूर्वोत्तरकालयोस्तत्कार्यं सदैव स्यात्। अतश्च तदव्याप्तकालाभावान्न तस्य किंचि-

त्कार्यं स्यात्। तत्कारणकाले स्यादिति चेत्, तन्न; तस्य तदा अभावात्। भावे तत्कारणमपि तत्संबन्धि भवेत्। तदा न प्रथममपि कार्यं स्यात्, कुतो द्वितीयम्। अतस्त-त्कार्यं कार्यमेव, न कस्यचित्कारणम्। एवं तत्कारणमपि कार्यं चेत्, न कारणं तत्कारणम्, तत्कारणमप्येवमेवेति अकार्यमेव कारणम्, न कार्यमित्यत एकस्यैव नित्यस्य कारणस्य अनेकानि कार्याणि क्रमभावीनि, यावन्ति वा कार्याणि तावन्त्यकार्याणि नित्यानि कारणानि क्रमवत्-कार्यकर्तॄण्यभ्युपगन्तव्यानि स्युः। ततश्च कारणभावे कार्यं भवत्येवेति नियमो न स्यात्। कार्यस्य कार्यान्तराभावाद-सत्त्वात्तत्कारणस्याप्यसत्त्वप्रसङ्गात्, अर्थक्रियाकार्येव सत्—इत्येषापि परिभाषा त्याज्या स्यात्। तस्मात् क्षणिकतत्-कारणत्वयोरप्रसिद्धत्वादयुक्तत्वाच्च नित्यतत्कारणत्वयोस्सर्व-जनप्रसिद्धयोर्बाधायोगात् नित्यस्यैव कारणत्वमनपवादं स्थितम्॥

किंच—क्षणिकयोश्चेत् कार्यकारणभावः, कारणानन्व-यात् कार्यस्य प्रागुत्पत्तेरत्यन्तासत्त्वात् पूर्वोत्तरकालयो-र्विशेषे असति, तत्किं तदैव जायते न पुनरन्यदा कदा-चित् सदा वा। तदैव कारणभावादन्यदा चाभावादिति चेत्, तन्न; कारणभावेऽभावे च तस्य असतोऽविशेषात्। कथं च असतः कारणसंबन्धः, असंबन्धस्य च कथं कारणता। कार्यस्य च कारणसंबन्धो न प्रागभावस्य, तस्याकारणत्वात्। सिद्धस्य चेत्कारणसंबन्धः, प्राग्विशेषाभावाद्यदा कदाचित् सदा वा सिध्येत्। सिद्धस्य च किं कारणेन। यदि

प्रागपि कारणसंबन्धोऽस्ति, संबन्ध्यप्यस्ति। न हि तेन विना संबन्धः। असतश्चेत्कारणसंबन्धः, न सतः कार्यस्येत्यकारणमेव तत्स्यात्। कार्यसंबन्धाच्चेत्कारणम्, कार्यसिद्धेः प्राङ्न कारणमस्तीति न तेन संबन्धः। प्रागपि कार्यसंबन्धोऽस्ति चेत्, कार्यमप्यस्तीति न तत् क्षणिकं स्यात्। कारणं च। कार्यसंबन्धात्कार[1]णम्, कारणसंबन्धाच्च कार्यमिति इतरेतराश्रयता च तयोः। अथाकारणेनैव प्रागुत्पत्तेः संबन्धः, सोऽन्यदापि समस्तीति अन्यदापि कार्यं स्यात्। यत्संबद्धं सत् कारणीभवेत् तेन संबन्धे कार्यं स्यादिति चेत्—सर्वमेव तथा स्यात् न वा किंचित्, विशेषाभावात्। न ह्यत्यन्तानन्वितानां क्षणानामत्यन्तविलक्षणानां कस्यचित्केनचिदेव संबन्धे विशेषस्संभवेत्। पूर्वापरता विशेष इति चेत्, तथापि अयमेवास्मादपर इति विशेषाभावाद्यतःकुतश्चिदपरत्वसंभवादन्यदापि कार्यं स्यात्। पूर्वोत्तरक्षणभावित्वमात्रेण कार्यकारणनियमे—पूर्वक्षणभावि सर्वमुत्तरक्षणभाविनस्सर्वस्य, यत्किंचिद्वा यस्य कस्यचित्, एकैकस्य वा सर्वम्, सर्वस्य वा एकैकमनियमेन कारणं स्यादिति कार्यकारणनियमो न स्यात्। यस्य यत् कारणं प्रसिद्धं तदेव तस्य कारणं नान्यत्, अन्यस्य पूर्वोत्तरक्षणभावित्वेऽपीति चेत्—तर्हि प्रसिद्धिरेव त्वयाप्याश्रिता न्यायाभिमानं त्यक्त्वा। प्रसिद्धिरपि न्याय एवेति चेत्, तर्हि यथाप्रसिद्धं कार्यकारणादि तत्तथैवाभ्युपेयम्। न हि क्षणिकयोः कार्यकारणभावो

[1] E (०णं कार्यं का०)।

दृश्यते मूढेनापि। त्वत्कुतर्कोपहतबुद्धिरपि वदत्येव केवलम्, न तु पश्यति। कथं च पश्येत् स्वयं क्षणिको द्वयोः क्षणयोः कार्यकारणभावम्। अक्षणिकश्चेत्त्वयम्, दर्शनहानिः। किंच—क्षणिकं चेत्कारणम्, तत् स्वकारणाभावे न सिध्येत्; तत्कारणं तत्कारणमप्येवमित्यनवस्थानान्न किंचित्सिध्येत्, एकस्यापि स्वतस्सिद्ध्यभावात्। स्वतस्सिद्ध्यभावेऽप्यनादित्वात् अन्यतस्सिद्धेर्न दोषो बीजाङ्कुरवदिति चेत्, तन्न; न ह्येकैकस्य क्षणस्यानादित्वम्, क्षणिकत्वादेव; न चान्यद-क्षणिकं वस्त्विष्टम्; इष्टं चेत्, दर्शनहानिः। बीजाङ्कुरेष्वपि यदेकमन्वितं मृदिव घटादिषु, तदेव कारणं बीजाना-मङ्कुराणां च मृदिव पिण्डादीनाम्; न तु कार्याणां कारणतेति बीजाङ्कुरवदित्यदृष्टान्तः। तस्मात्क्षणिकस्य कारणत्वमप्रसिद्धम्। प्रसाधकाभावाच्च। अतः कार्य-कारणादिनियमार्थं प्रसिद्धिं चेदाश्रयसि—क्षणिकं कारणं कार्यं च, बाह्यार्थश्च नास्तीत्येवमादिलक्षणां कुतर्कैकमूलां बुद्धिं परित्यज्य सतां मार्गमाश्रय; अन्यथा मन्दबुद्धीन्मोहयन् स्वयं च [1]मोमुह्यमानो विनङ्क्ष्यसि। तथा प्रसिद्ध्य-नाश्रयणेऽपि। तस्मात्कार्यस्य कारणत्वानुपपत्तेर्नित्यमेव कारणमिति कारणभावे कार्यं भवत्येवेति नियमो नास्त्ये-वेति स्थितम्॥

नित्यं चेत्कारणम्, किमिति सदा कार्यं न भवेत्। सदा चेद्भवेत्, कारणवन्नित्यत्वात् तत् कार्यमेव न भवेत्। विच्छिद्य विच्छिद्य तथास्त्विति चेत्, भवत्येव तथा। क्षण-

[1] BD (मुह्यमानः)।

मात्रमेव विच्छेदोऽस्तु न दीर्घकालमिति चेत्—क्षणमात्रं चेद्विच्छेदमिच्छसि कार्यस्य कारणे सत्यपि, किमिति क्षणत्रयमहोरात्रं पक्षं मासं संवत्सरं कल्पं वा नेच्छसि। क्षणमात्रविच्छेदं विना कार्यस्यासंभवात् तमिच्छामि, नान्यमिति चेत्—तदयुक्तम्। कारणे नित्ये कार्यस्य विच्छेदं विना असंभवात् स इष्यते चेत्, तस्य तस्य कार्यस्य तं तं विच्छेदं विना असंभवात् स स एष्टव्यो यतः। अस्तु विच्छेदः, तथापि कारणस्य विशेषाभावात् यत्किंचित्कार्यं यदा कदाचिदस्तु तत्तदैवेत्ययं कालनियमः कुत इति चेत्—कालनियमादेवेति ब्रूमः। तथाहि—स्थायिनामपि वृक्षादीनां कालविशेषादेव पुष्पफलादिकार्यविशेषो दृश्यते। कालस्य तु कालान्तराभावान्न कालनियमचोद्यमस्ति। कालस्य कालान्तराभावे कथं तस्य पौर्वापर्यमिति चेत्—कालान्तरं चेदिच्छसि, अनवस्था। अथ कालस्य पौर्वापर्यम्, तं वा कालं नेच्छसि—कालनियमः कथं कार्यस्येति मा चूचुदः। कश्च कालो नास्तीति ब्रूयात्। ब्रवीमि यदेच्छामीति चेत्, तर्हीच्छसि कालं 'यदा' इति कालशब्दोक्तेः। कथं चेच्छंस्तद्दूषयसि। तस्य सत्यत्वं दूषयामीति चेत्—कालत्वमेव चेत्सत्यत्वम्, तत् इष्टत्वान्न दूष्यम्। अन्यच्चेत्तत्, दूष्यतां नाम; न नः किंचिच्छिद्यते, कालस्यादुष्टत्वात्। कालश्चेद्दूष्यते, तत्संबन्धि सर्वमेव जनिमद्वस्तु दूषितं स्यात्। अतस्तदिच्छता न कालो दूष्यः। तस्मात्कालयोगिनां कार्याणां कालेनैवोत्पत्त्यादिनियमाभ्युपगमेन कार्याणां कालनियमः कथमित्यस्य चोद्यस्य परि-

हृतत्वात्, अकालयोगिनि तु कार्ये अस्य चोद्यस्यैवानुत्पत्तेः नित्यकारणपक्षे न कश्चिद्दोष इति स्थितम्। अत अनादिकस्यैव शुक्त्यज्ञानस्य शुक्तिरूप्यतज्ज्ञानोपादानता न्याय्या, न त्वन्यस्य कस्यचित्॥

ननु शुक्तेरादिमत्या अज्ञानं कथमनादि स्यात्। नायं दोषः, अशुक्त्याश्रयत्वात्तस्य। ज्ञाश्रयं हि तत्; ज्ञश्चानादिः। कथमशुक्त्याश्रयत्वे शुक्त्यज्ञानमिति शुक्त्या व्यपदेश इति चेत्, शुक्तिज्ञानवत्। न हि शुक्तिज्ञानं शुक्त्याश्रयम्, तस्या जडत्वात्। अतश्शुक्तिविषयत्वाच्छुक्तिज्ञानं तत्। तथा शुक्त्यज्ञानमपि। ननु ज्ञाश्रयत्वेऽज्ञानस्य तज्जरूप्यस्य शुक्तिसामानाधिकरण्यं कथमिति चेत्, शुक्त्याश्रयत्वेऽपि तज्जरूप्यज्ञानस्य ज्ञातृधर्मत्वं कथम्। न चोभयाश्रयत्वमेकस्य, विरोधात्। द्वयकल्पनायां च कल्पनागौरवम्। शुक्त्याश्रयत्वे च सादित्वान्न रूप्यकारणता स्यात्। शुक्त्यनुगतं शुक्तिकारणमेव रूप्यकारणमिति चेत्, शुक्तिवद्रूप्यमपि सत्यं स्यात्। शुक्तिकारणमप्यज्ञानमेवेति चेत्, तन्नाद्यापि सिद्धम्। तस्माज्ज्ञाश्रयमेव शुक्त्यज्ञानम्। नन्वज्ञानं विषये नास्तीति ते स्थितिः। मन्द, मैवं वोचः। न ह्यहं विषये तज्ज्ञाने च सत्यपि तत्राज्ञानं नास्तीति ब्रवीमि। तयोरभावे त्वज्ञानाभावस्सर्वेषां समानः[1]। न हि शुक्तिरूप्ये कस्यचित् ज्ञानाज्ञाने स्तः, सत्यत्वप्रसङ्गात् सत्यरूप्यवत्। न च तत्सत्यम्, बाधात्। अतश्शुक्त्यज्ञानजमेव तत्। ज्ञाश्रयाज्ञानजस्यापि रूप्यस्य शुक्तिसामाना-

[1] C (०मानम्)।

धिकरण्यख्यातिः खस्थस्यैवार्कस्य कूपे ख्यातिवन्न विरुध्यते, भ्रान्तित्वात् । न हि यथास्थितख्यातिर्भ्रान्तिः[1] । असच्चेत् रूप्यं ख्याति, तस्य शुक्तिसामानाधिकरण्यमसत् किं न ख्यायात् । विषयाश्रयमज्ञानमिति चाप्रसिद्धेः, ममाज्ञानमिति च ज्ञस्य संवित्तेः । विषयाश्रयाज्ञानाभ्युपगमेऽपि ज्ञाश्रयस्याभ्युपेयत्वात्, तेन विना रूप्यज्ञानासिद्धेः, तेनैव च रूप्यस्यापि सिद्धेः, तदेव च रूप्यतज्ज्ञानाद्युपादानमिति सिद्धम् ॥

नन्ववोचो रूप्यस्य ज्ञानाज्ञाने न स्त इति, इदानीं कथं तद्विरुद्धं तस्य ज्ञानमिच्छसि । किं चाज्ञातं चेद्रूप्यम्— कथं तद्रूप्यम्, कथं वा तस्य बाधः, कादाचित्कतया वा कार्यता कथम् । न च तन्मानं विना सिध्यति, अस्वयंप्रकाशत्वात् । न चेत्तदपरोक्षं भाति, तदादित्सया प्रवृत्तिर्भ्रान्तानां न स्यात् । अज्ञानजं चेत्—तत्परोक्षमेव स्यात्, परोक्षत्वादज्ञानस्य । ज्ञानमपि ह्यनुमेयत्वात् परोक्षम्; किं पुनस्तदभावोऽज्ञानम् । अथ संविदभावोऽज्ञानम्— तस्यापि नेदृश्यपरोक्षता, ईदृग्वा कार्यं समस्ति ॥ अज्ञानं च ज्ञानस्य प्रागभावः प्रध्वंसो वा । स च ज्ञानान्तरमन्यद्वा, कार्यविशेष एव तत्कारणसमवेतो भावरूप एव । न हि कारणमेव प्रागभावः कार्यभावे तन्निवृत्तेः कारणाभावप्रसङ्गात् । नापि प्रध्वंसः कारणम्, कार्यात्प्राक्कारणाभावप्रसङ्गात्—प्रध्वंसस्य प्राक् अभावात् । अतो ज्ञानप्रागभावप्रध्वंसावपि कार्यौ भावौ च, घटस्येव पिण्डकपालाख्यौ ।

[1] E (०तिभ्रा०) ।

तस्मान्नानादि[1], नाप्यनिर्वचनीयमज्ञानम्। अतो न तत्त्व रूप्यादिकारणं स्यात्। स्याच्चेत्, कार्यस्यापि कारणत्वं रूप्यादेश्च सत्यत्वमिष्टं स्यात्॥ यदि कश्चिद्ब्रूयात्—न भावः प्रध्वंसः, कृतकस्यापि तस्य नित्यत्वात्; भावश्चेत्, घटपटवदनित्यस्स्यात्; प्रध्वंसोऽप्यनित्यश्चेत्, नष्टोऽनष्टस्स्यात्; तस्मान्नासौ भावः। प्रागभावस्य च कार्यत्वे—तस्यान्यः प्रागभावोऽपेक्ष्यः, तस्याप्यन्यः, तस्याप्यन्य इत्येवमनवस्थानान्न कश्चित्सिध्येत्। प्राग्भाव एव वा प्रागभावः स्यात्। सोऽपि सर्वः पूर्व उत्तरस्य प्रागभावस्स्यात्, विशेषाभावात्। यो यस्य प्रध्वंसः स तस्य प्रागभाव इति चेत्—तन्न, प्रध्वंसो न भाव इत्युक्तत्वात्। तर्हि प्रध्वंसमात्रव्यवधानो यः पूर्वो भावस्स प्रागभावः, नान्य इति चेत्—तथापि न स साक्षात्प्राक्, नाप्यभाव इति न स प्रागभावः। तर्हि प्रध्वंस एवास्तु प्रागभावः, प्राक्त्वादभावत्वाच्च; अतः कार्यत्वं प्रागभावस्यापि सिध्यतीति चेत्, तथापि भावत्वं न सिध्यति। द्वयोश्च भेदो न स्यात्। प्रध्वंस एव चेत्प्रागभावः, तस्यानिवृत्तेर्नोत्तरं कार्यं सिध्येत्। न ह्यनिवृत्ते प्रागभावे कार्यसिद्धिरिष्यते। अपिच—ज्ञानस्य प्रागभावः कार्यश्चेत्, तत्सिद्धेः प्राक् सदैव ज्ञानस्य भावान्न तस्य प्रागभावः सिध्येत्; न चोर्ध्वम्, प्रध्वंसव्याप्तत्वात्। न चानादेर्भावस्य प्रध्वंसः। अतोऽनाद्यनन्तो ज्ञानभावस्स्यात्। अतो न भावः प्रागभावः, न च कार्यः। प्रध्वंसः कार्योऽपि न भाव इति। असौ प्रष्टव्यः—कथं प्रध्वंसः कार्यः, न चेत्स भावः;

[1] DE (०दिः ना०)।

कार्यश्चेत्, कथं वा नानित्य इति। भाव एव कार्यत्वादनित्यो नाभाव इति चेत्—भाव एव कार्योऽपि दृष्टः, नाभावः। कार्यता चेत्तुल्या भावाभावयोः, अनित्यता च तुल्यैव न्याय्या। न ह्यभावः कश्चित्कार्यो नित्यो दृष्टः। अभावोऽपि प्रध्वंसः कार्यश्चेत्, किमिति न प्रागभावः कार्यः। अनादित्वादिति चेत्, तन्न; अन्तवत्त्वस्येष्टत्वात्, अन्तवतश्चादिमत्त्वात् घटवत्। न ह्यन्तवदनादि, अनादि वा अन्तवत् किंचिद्दृष्टम्। अत आद्यन्तवत्त्वाच्च भाव एवाभावोऽपि, इतरभाववत्। इतरेतराभाववच्च भावत्वमभावानां न्याय्यम्। ज्ञानप्रागभावनिवृत्तिश्च ज्ञानमेव, उत अन्यत्। यदि ज्ञानभाव एव, प्रध्वंसस्य भावत्वं त्वयैवेष्टं स्यात्। यद्यन्यत्किंचित्, स किं भावोऽभावो वा। यद्यभावः, प्रागभावस्य भावत्वप्रसङ्गः। न ह्यभावस्यैवाभावो निवृत्तिस्स्यात्। स्याच्चेत्, तदापि पूर्वस्याभावस्य ज्ञानप्रागभावत्वं न स्यात्, निवृत्तिव्यवधानात्। भावत्वेऽपि तथा। अथ निवृत्तिर्भावः, तस्यापि पूर्वमभावात् प्रागभावः तन्निवृत्तिश्चाभ्युपेया। तस्य तस्याप्येवमित्युक्तदोषप्रसङ्गः। तस्मान्न ज्ञानादन्या तत्प्रागभावनिवृत्तिः। ज्ञानमेव चेत्प्रागभावनिवृत्तिः, प्रध्वंसस्य भावत्वमिष्टं स्यादित्युक्तम्। ननु भावप्रध्वंसस्याभावत्वमुक्तम्, न त्वभावप्रध्वंसस्य; तस्य तु भावतैवेति चेत्—तथापि तस्य प्रध्वस्तेः, प्रध्वंसस्यापि प्रध्वंस इष्ट एव। अतश्च प्रागभावस्य अप्रध्व-

स्तत्वं पुनरुत्पत्तिर्वा अभ्युपेयेति अनादित्वं तस्य न सिध्येत्। पूर्वमना[1]दित्वमेवेति चेत्, तन्न; न ह्यनादेर्निर्हेतुत्वान्नष्टस्य पुनरुत्पत्तिस्संभवेत्। अत उत्पत्तिमत्त्वे पूर्वमपि नानादिस्सः। तस्य चाप्रध्वंसे न कार्यभावस्स्यात्। न ह्यनिवृत्ते प्रागभावे कार्यसिद्धिरिति ह्यवोचः। तस्मात् प्रध्वंसप्रागभावौ ज्ञानस्य, भावौ कार्यौ चाभ्युपेयौ॥ यदि नाम तावभावौ अकार्यौ च, तथापि नानिर्वचनीयौ॥ अथ ज्ञानादन्यदज्ञानम्—तथापि नानिर्वचनीयम्, अस्ति नास्तीति वा सर्वस्य ज्ञेयादेः प्रतीतेर्निरुच्यमानत्वात्। अतो नानिर्वचनीयमज्ञानं नाम किंचिदस्ति॥ अथास्ति नास्तीति वा यन्न केनचित् प्रमाणेन ज्ञायते, नापि तथानिर्वचनीयार्हम्, प्रतिभासते च सर्वप्राणिनाम्, तदज्ञानमनिर्वचनीयं जडरूपं तादृग्रूप्यादिकारणमिति चेत्—तदयुक्तम्, अप्रमाणं जडं प्रतिभासते चेति विप्रतिषेधात्॥ तस्मान्मदुक्तप्रकारं प्रागभावादिस्वरूपम्, यदि वा अन्यथा—सर्वथा अस्ति नास्तीति वा प्रमाणगम्यमेव जडं भाति अस्वयंप्रभत्वादित्यनिर्वचनीयाविद्या रूप्यतज्ज्ञानादिकारणमित्यनुपपन्नमिति॥

अत्रोच्यते—नायं दोषः, अविद्यातत्कार्ययोर्नित्यानुभवमात्रात् सिद्धेः। अनुभवस्य च नित्यत्वं वक्ष्यामः, अवोचाम च। तथापि तत्प्रसादादेव सर्वस्य जडस्य सिद्धिः; अन्यथा स्वतस्सिद्धिरसिद्धिर्वा स्यात्। रूपादीनां तु चक्षुराद्यपेक्षत्वादनुभवस्य नित्यत्वेऽपि कदाचिदसिद्धिः।

[1] C (०दिरेवेति)।

यथा नित्योऽपि सवितृमण्यादिप्रकाशस्तत्प्रसादात्प्रकाश्यस्य सिद्धावसिद्धौ च प्रकाशयति न प्रकाशयतीति चोच्यते, एवमनुभवोऽपि कूटस्थनित्योऽसङ्गोऽपि तदाभासतया जडस्य सिद्धावसिद्धौ च तथोच्यते। न तु तस्य कश्चिद्विशेषः कदाचित्। यदि तादृगनुभवोऽज्ञानादिसाधको नेष्यते—असिद्धिरेवाज्ञानादीनाम्, तेषां प्रमाणागम्यत्वात्। न हि प्रमाणमपि प्रमाणगम्यम्, किं पुनरज्ञानादि। प्रमाणतदभावौ च फलतदभावाभ्यां नानुमेयाविति वक्ष्यामः। स्मृतिभ्रान्तिसंशयानां तु फलस्याप्यभावान्नतरामनुमेयता। फलं चेत्स्यात्, तेषामपि प्रमाणतैव स्यात्। न च ज्ञानं ज्ञानान्तरप्रत्यक्षम्। ज्ञानं हि ज्ञातुर्विक्रिया गुणो वा स्यात्। यस्य च या विक्रिया सा न तं तद्विक्रियां च समानजातीयां विजातीयां वा विषयीकुर्यात्, यथा मृदादिविक्रिया। यस्य च यो गुणो न स तं तद्गुणं च समानजातीयं विजातीयं वा विषयीकुर्यात्, यथाग्न्यादिगुणः प्रकाशादिर्नाग्न्यादीन्। नाप्यात्मानं विषयीकुर्यात्। एवं ज्ञानमपि ज्ञानान्तरं तद्वन्तं तद्विक्रियाश्च[1] तद्गुणांश्चात्मानं च न विषयीकुर्यात्। मृदादिविक्रिया अग्न्यादिप्रकाशादिवद्विषयीक्रियन्ते चेत्, तद्वदेवान्यस्यैव स्वाविषयस्य विषया भवितुमर्हन्ति [?]। तस्मात्प्रमाणज्ञानस्मृतिभ्रान्तिसंशयादिवत् तत्समानाश्रयाणां सुखदुःखेच्छाद्वेषप्रभृतीनां प्रत्यक्षाणामपि न ज्ञानप्रत्यक्षता, नापि तदभावानामिति यथोक्तानुभवप्रत्यक्षतैवाभ्युपेया; अन्यथा तेषामसिद्धेः।

[1] C (॰यां च)।

अतो भावाभावप्रमाणागम्यत्वात् नाज्ञानस्य निर्वचनीयत्वप्रसङ्गः। नाप्यप्रसिद्धत्वम्, अनुभवात्सिद्धेः। अतोऽज्ञानमनिर्वाच्यं रूप्यादिकारणमिति सिद्धम्॥

ननु भावाभावप्रमाणागम्यत्वाच्चेदनिर्वचनीयता—सा आत्मनोऽपि स्यादिति चेत्, न; आगमप्रमाणत्वात् तस्य। सोऽजडत्वादागमस्याविषय इति चेत्—सत्यम्, अत एवागमप्रमाणस्सः; अन्यथा प्रत्यक्षादीनामेव विषयस्स्यात् न वा कस्यचित्, विषय्यन्तराभावात्, तस्य जडत्वात्। विषय्यन्तरभावे तु स एवात्मा आगमप्रमाणश्च स्यात्। तर्हि ज्ञानसुखादीनामपि भावाभावप्रमाणागम्यत्वादनिर्वचनीयता स्यादिति चेत्—यदि स्यात्, अस्तु; किं नश्छिन्नम्॥ नन्वनिर्वचनीयत्वे ब्रह्मज्ञानस्याप्यप्रामाण्यं स्यात्। न स्यात्, सत्यविषयत्वात्। यतस्सत्यविषयत्वं तदभावश्च प्रामाण्यमप्रामाण्यं च, न स्वरूपसत्यत्वमसत्यत्वं च; सत्यस्यापि घटादेरप्रामाण्यात्, तद्विषयज्ञानस्य च सत्यविषयत्वेन प्रामाण्यात्; असत्यस्यापि वर्णदैर्घ्यादेस्सत्यविषयस्य प्रामाण्यात्, जाग्रत्स्वप्नभ्रान्तीनामसत्यानामपि सत्यशुभाशुभसूचकानां सत्यविषयतया प्रामाण्यात्। न चैवं मन्तव्यम्—नासत्यस्य सत्यविषयता मिथ्याधूमस्येवेति, असत्यस्यापि वर्णदैर्घ्यादेस्सत्यविषयत्वस्य दर्शितत्वात्। मिथ्याधूमस्याव्याप्तत्वात् सत्याग्न्यलिङ्गत्वात्तदबोधकत्वम्। व्याप्तस्य त्वसत्यरूपस्यापि प्रतिबिम्बादेस्सत्यबिम्बादिबोधकता दृष्टैव। घटादेस्सत्यस्याप्यव्याप्तस्य अग्न्यबोधकता दृष्टा। तस्माज्ज्ञानादेरनिर्वाच्यत्वेऽपि प्रामाण्यम्, सत्यविषय-

त्वात् । सत्यविषयत्वं च तत्प्रमितेर्न नोपपद्यत इत्यतिप्रसङ्गाभावात् भावाभावप्रमाणागम्यतयैव अनिर्वाच्यत्वेऽप्यज्ञानस्येष्टे न कश्चिद्दोषः ॥ न च वयं भावाभावप्रमाणागम्यतया अज्ञानस्यानिर्वाच्यतां ब्रूमः, अपि तु ज्ञानमात्रापनोद्यत्वात् रूप्यवत् । न हि सद्वस्तु ज्ञानापनोद्यम्, अतिप्रसङ्गात् ; नापि शशविषाणम्, प्राप्त्यभावात् । अतोऽनिर्वाच्यं तत्, ज्ञानापनोद्यत्वात् । तदेकमनेकम्, वस्तु नो वा, भिन्नमभिन्नं वा, सावयवं निरवयवमित्यादिप्रकारैश्च निश्चित्य वक्तुमशक्यत्वाच्च । भावाभावप्रमाणागम्यत्वं तु सदसत्त्वाशङ्काव्यावृत्त्यर्थमुच्यते । न तु तेनैवानिर्वचनीयत्वं साध्यते ; तस्य निर्वचनीयेष्वपि भावात् ज्ञानसुखादिषु । न हि तेषामनिर्वचनीयता इदानीं सिद्धा साध्यते वा । अतोऽनिर्वाच्यं शुक्त्यज्ञानमेव तादृग्रूप्यादिकारणमिति न्याय्यम् ; तद्भावे भावात्, तदभावे चाभावात् ॥

ननु शुक्त्यज्ञाने नष्टेऽपि रूप्यादि पुनर्दृश्यते, अतोऽज्ञानाभावेऽपि भावान्न तत्कार्यता रूप्यादेरिति चेत्- तन्न ; पुनरपि हि सत्येव शुक्त्यज्ञाने रूप्यादि दृश्यते, न तु ज्ञायमानायामेव शुक्तौ । किमनन्तानि शुक्त्यज्ञानानि । बाढम् ; अनन्तान्येव, यद्यनन्तानि शुक्तिज्ञानानि । यदि ह्येकमेव [1]शुक्त्यज्ञानम्, तदा एकेनैव शुक्तिज्ञानेन निवृत्तमिति किमन्यैश्शुक्तिज्ञानैः । अथ तान्यज्ञानानिवर्तकानि, अनर्थकानि तर्हि । अथाज्ञानानिवर्तकान्यपि अर्थवन्ति

[1] BCDE (सुक्तिज्ञा०) ।

तानि, तर्हि पूर्वमपि ज्ञानं तथैवेति अज्ञातैव शुक्तिस्सदा स्यात्। अथ पूर्वं निवर्तकम्—तथैव उत्तराण्यपि, अविशेषात्। अथ तानि निवृत्ताज्ञानस्य भवन्तीति विशेषः, तर्हि जातस्य जन्तोराद्येन ज्ञानेनाज्ञाने निवृत्ते तस्योत्तराणि सर्वाण्येवानिवर्तकानि स्युः। अथ सर्वेष्वेव पदार्थेषु—तत्रापि भिन्नज्ञानज्ञेयेषु शब्दादिषु विषयेषु—सकृत्सकृदज्ञानं निवर्तनीयमस्ति, तर्ह्यनन्तान्यज्ञानान्येकस्य पुंसो निवर्त्यानि सन्तीति एकस्मिन्नपि विषयेऽनेकाज्ञानाभ्युपगमे न कश्चिद्दोष इत्यज्ञाननिवर्तकान्येव सर्वाणि ज्ञानान्येष्टव्यानि, अज्ञायमानार्थविषयत्वाविशेषात्। न हि पूर्वज्ञानेनैवोत्तरकालं सदा अर्थो भास्यते। अतो ज्ञानभेदश्चेदिष्यते, तन्निवर्त्याज्ञानभेदोऽप्येष्टव्य इति यस्याज्ञानस्य यद्रूप्यादि कार्यं न तत् तदभावे भवतीति न तत्कार्यत्वविरोधः। नन्वज्ञानभावाच्चेन्न भाति, शुक्तिज्ञान उदितेऽपि न भासेत, एकाज्ञानाभावेऽपि अज्ञानान्तराणां तत्र भावात्। अथ सत्स्वपि तेषु ज्ञानभावे शुक्तिर्भाति, अभावे च न भाति—[1]न तर्हि तान्यभानकारणं शुक्तेः, तद्भावेऽपि तस्या भानात्। अतस्सा स्वत एव न भाति, जडत्वात्। ज्ञानभावे तु भाति, अभावे स्वत एव न भाति; अतोऽस्या ज्ञानं प्रकाशकमेव, नाज्ञानं नाम तन्निवर्त्यं तत्र किंचिदस्तीति चेत्, तन्न; अज्ञानाभावेऽज्ञाताभावात् ज्ञानस्याप्यभावप्रसङ्गात्। यद्यपि शुक्तेस्स्वत एवाभानमिति प्रकाशकमेव तस्या ज्ञानम्, तथापि ज्ञानाभावे तस्या

[1] CD (न हि त०)।

अभानात् तवापि ज्ञानाभावो ज्ञानेन निवर्त्येत इति निवर्त्यं न नास्ति तवापि। अनिवृत्तेऽपि चेज्ज्ञानाभावे सा भाति, ज्ञानोदयात् प्रागपि भासेत। न चेत्, नोर्ध्व-मपि, ज्ञानाभावानिवृत्तेः। अथोच्येत—ज्ञानस्य भान-हेतुत्वात् तद्भावे सा भाति, अभानहेतुत्वाभावात् ज्ञाना-भावस्य तदनिवृत्तावपि नाभानं तस्या इति। तच्चायुक्तम्, ज्ञानस्याभावानिवृत्तौ [1]भावायोगात्। अभावेऽपि चेद्भावो ज्ञानस्य, सदा भावात् सदा भानं शुक्तेस्स्यात्। सदा भाने च शुक्तेः, तद्भानस्य ज्ञानहेतुत्वासिद्धेः तज्ज्ञानासिद्धिः। अथ मतम्—नानिवृत्तेऽपि तस्याभावे ज्ञानस्य भावः, किंतु निवृत्त एव; अतः कादाचित्कं शुक्तिभानं स्यात्, तद्धेतो-र्ज्ञानस्य कादाचित्कत्वात्; अन्येषु तु ज्ञानाभावेषु अनि-वृत्तेष्वपि शुक्तिभानं स्यात्, तेषां शुक्त्यभानाहेतुत्वादिति। तर्ह्यज्ञानेष्वप्येतत् समानम्, शुक्त्यभानाहेतुत्वात्तेषामपि॥

ज्ञानाभावव्यतिरेकेणाज्ञानं न जानामीति चेत्, मैवं वोचः; नाज्ञासिषं शुक्तिम्, इदानीं तु जानामि; अज्ञानं निवृत्तम्, पुनर्न जानामीति अज्ञानतन्निवृत्त्योः प्रसिद्ध-त्वात्। तदेवाज्ञानं ज्ञानाभाव इति चेत्, तन्न; अभाव-प्रमाणाप्रमेयत्वात्। प्रत्यक्षमभावो वा अभावस्य प्रमाणम्। न ताभ्यां ज्ञानाभ्यां ज्ञायतेऽज्ञानम्। अपरोक्षत्वाच्च नाभावज्ञेयम्। प्रत्यक्षविशेषणश्चाभावः प्रत्यक्षज्ञानगम्यः। न चात्मा प्रत्यक्षज्ञानप्रमेयः, घटादिवदनात्मत्वप्रसङ्गात्। प्रमेयत्वे एकस्य प्रमातृत्वप्रमेयत्वानुपपत्तेः। प्रमाचन्तरा-

[1] CDE (भानायो॰)।

भावाच्च। भावेऽपि तस्यैवात्मत्वात्। अत एवात्मनोऽप्रमेयत्वात् तस्याज्ञानं नाभावप्रमाणेनापि प्रमेयम्। न ह्यभावाश्रयमप्रतीत्य अभावं प्रतियन्त्यभाववादिनोऽपि। कथमप्रमाणं भातीति चेत्, रूप्यवत्। न हि शुक्तिरूप्यं केनचित्प्रमाणेन भाति, अमिथ्यात्वप्रसङ्गात्। तथापि भाति। एवमज्ञानमपि भाति अनुभवादेव। उक्तं चैतत्पुरस्तात्। यदि नाज्ञानं प्रमाणाभावः, कस्तर्ह्यसौ विमृश्यतां स यदि कोऽप्यन्यः प्रामाणिकस्समस्ति। नान्योऽपि समस्ति; आत्मनि ज्ञानाभावस्याप्रमेयत्वा[1]त्, अन्यच्च तस्याभावात्। इतरेतराभावोऽन्यच्चाप्यस्तीति चेत्, सोऽपि ज्ञानस्यात्मसंबन्धिनोऽप्रमेयत्वान्न प्रमेयः। तस्मान्न कश्चिज्ज्ञानाभावः प्रामाणिकोऽस्ति। अतोऽज्ञानमेव ज्ञानाभाव इति चेत्, अस्तु; एवमपि नाज्ञानस्यानिर्वचनीयत्वहानिः; ज्ञाना[2]भावस्य अभावप्रमाणागम्यत्वादसत्त्वाप्राप्तेः। न चाज्ञानमेव सर्वो ज्ञानाभाव इति नियन्तुं शक्यम्; इतरेतराभावस्य विषयाश्रयत्वात्, अज्ञानस्य चात्मैकाश्रयत्वात्; प्रध्वंसस्य चोत्पत्तेरिष्टत्वात्, अज्ञानमुत्पन्नं ममेति च प्रतीत्य[3]भावात्; अज्ञानस्य निवृत्तिप्रतीतेः, प्रध्वंसस्य च निवृत्त्यनिष्टेः। अथोच्येत—उत्पत्तिमत्त्वात्प्रध्वंसोऽपि विनाशी; न हि भावादन्यस्योत्पत्तिः, भावस्य चोत्पन्नस्य घटवन्नाशो न्याय्यः; तस्मादुत्तरोत्तरो भावः पूर्वस्य पूर्वस्य प्रध्वंसः, पूर्वः पूर्व उत्तरोत्तरस्य प्रागभाव इति। तदापि

[1] BCDE (०त्वात्...न्तस्याभा०)। [2] CDE (०भा...भा०)।
[3] BCD (०भावेऽज्ञा०)।

द्वयोरप्यभावयोर्जनिमत्त्वादज्ञानस्य च तदप्रतीतेः न तयोरज्ञानता। ननु नष्टं ज्ञानमिति नाशजन्म भाति। भातु; तथापि नाज्ञानस्य जन्म भाति, तस्य प्रागभावाप्रतीतेः। ज्ञानस्यैव हि प्रागभावो भाति, न पुनरज्ञानस्यापि। ज्ञानस्य ज्ञानान्तरमेवाभावो वस्त्वन्तरं वेत्यस्य पक्षस्य दूषणं वक्ष्यामः। तस्मान्नाज्ञानं ज्ञानाभावः। प्रध्वंसस्याभावत्वेऽपि जनिमत्त्वान्निवृत्त्यभावाच्च, तद्वैपरीत्याच्चाज्ञानस्य, प्रध्वंसो नाज्ञानमित्युक्तम्। तद्वदेव प्रागभावोऽपि ज्ञानाभावत्वे सति तत्त्वप्रतीत्यभावान्नाज्ञानं भवितुमर्हति। अतो न कश्चिदभावोऽज्ञानम्। ननु न प्रागभावोऽन्यो दृश्यते। अतोऽज्ञानमेव स इति चेत्, किं[1] प्रध्वंसमन्यं पश्यसि, उत न। न चेत्, तस्य या गतिस्सैवास्यापि भविष्यति। नन्वासीज्ज्ञानम्, नष्टं ज्ञानमिति प्रध्वंसो ज्ञायते। तर्हि नासीज्ज्ञानम्, भविष्यति ज्ञानमिति प्रागभावोऽपि ज्ञायत एव। स्पष्टं न ज्ञायत इति चेत्—प्रध्वंसोऽपि तथा, यस्य ज्ञानं तदभावश्च परोक्षः। यस्य तु प्रत्यक्षं द्वयम्, तस्य स्पष्टमेव तत्। परोक्षज्ञा[2]नवादिनश्च न ज्ञानाभावोऽज्ञानम्, अपरोक्षत्वादित्युक्तम्। ज्ञानप्रागभाव एवाज्ञानं ज्ञानभावे तन्निवृत्तेरिति चेत्, तन्न; अतत्प्रागभावस्यापि ज्ञानभावे निवृत्त्युपपत्तेः प्रदीपभावेनेव तमसः। न हि प्रदीपस्य प्रागभावस्तमः; तथापि भवन्नेव स तन्निवर्तयति। ननु पूर्वं प्रदीप-

[1] CDEG (किमन्यं प्रध्वंसं प०)। [2] CDG (०ज्ञानादिवा०)।

स्याभावात् तत्प्रागभाव एव तमः तेन निवर्त्यत इति चेत्, तन्न; जातेन गच्छतापि प्रदेशान्तरं तत्र तत्र तमसो निवर्त्यमानत्वात्। क्षणिकत्वात् प्रदीपस्तत्र तत्र स्वप्राग-भावतमोनिवर्तनेन जायत इति चेत्, तर्ह्येकत्रैव तिष्ठत उत्तरक्षणेषु तत्र स्वप्रागभावतमोऽभावात् नृशृङ्गस्येव प्रदीपस्य तैलवर्त्यादिभावेऽप्यनुत्पत्तेस्तत्प्रवाहोच्छेदः। अनु-च्छेदे वा तैलाद्यभावेऽपि स्थितिः प्रसज्येत। अतो न प्रागभावः प्रदीपस्य तमः। नापि प्रध्वंसः, तमोऽभावेऽपि क्षणानां प्रध्वंसात्। कथं च मण्यादित्यादिप्रकाशानां प्रागभावः प्रध्वंसो वा तमस्स्यात्। नापि प्रकाशाना-मितरेतराभावस्तमः, प्रकाशानामन्योन्यमितरेतराभाव-स्यातमोरूपत्वात्। अप्रकाशाश्रय एव सोऽभावस्तम इति चेत्—सर्वप्रकाशानां चेत्सोऽभावः, सर्वाभावे न निवर्तेत; सर्वास्मरणे च न भासेत; आश्रयाग्रहणे च। न च तमो-दृष्टिकाले तदाश्रयो गृह्यते स्मर्यते वा अदृष्टपूर्वः। न च प्रतियोगिस्मरणादिपूर्वकता तमोदृष्टेर्भाति कस्यचित्। अथैकस्यैव प्रकाशस्य तमोऽभावः, इतरेषां भावेऽप्य-निवृत्तिः। अथैकैकस्य प्रकाशस्य एकैकं तमोऽभावः, तदे-कस्य प्रकाशस्य भावे तदभावस्यैव निवृत्तेरनन्तानि तमांसि तत्रैव स्युः, अनन्तत्वात्प्रदीपादिप्रकाशानां तद्वताम्। अतश्च न किंचित्प्रकाशेत, आवरणभूयस्त्वात्। एकप्रकाशभावे प्रकाशान्तराभावास्सन्तोऽपि तत्र, एकज्ञानभावे ज्ञाना-न्तराभावा इव, अर्थप्रकाशनं न विघ्नन्ति—प्रकाशत एवार्थ इति चेत्; न, तथाप्रतीतेः। यथेह ज्ञायमानेऽर्थे ज्ञाना-

न्तराभा[1]वा जिघृक्षादि[2]भावेऽभावे वा भान्ति न तथा प्रकाशमानेऽर्थे तमांसि भान्ति प्रकाशान्तरस्मरणजिघृक्षादिभावेऽपि । अभावास्तु भान्ति तेषाम् । अतो न प्रकाशाभावस्तमः । तथापि तत्तेन निवर्त्यते । तथैव ज्ञानमप्यज्ञानमस्वाभावमपि भावमात्रेणैव निवर्तयितुमलमित्यज्ञानं न ज्ञानाभाव इति सिद्धम् ॥

तत्राज्ञानमिति ज्ञानविरोधात् ज्ञानपर्युदासेन वा उच्यते । तदेवानिर्वचनीयं जडात्मकं मायादिशब्दैरपर्युदासेनाप्युच्यते । तत्र ज्ञानमित्यजडो बोधस्तदाभासा वा चित्तवृत्तिः सत्यार्था यथायोगमाश्रयणीया । उभयत्र ज्ञानशब्दप्रयोगादेको मुख्योऽर्थः, अपरो वाच्य इति । तत्र शुक्तिज्ञानं जायमानं तदज्ञानं निवर्तयतीत्यत्र बुद्धिवृत्तिर्ज्ञानम्, अज्ञानं च रूप्यादिकारणं तन्निवर्त्यम् । ब्रह्मज्ञानमित्यत्रापि बुद्धिवृत्तिरेव ब्रह्माभासा सती ज्ञानमुच्यते । ब्रह्माज्ञानमिति सर्वजडोपादानभूता जडात्मिका अविद्याशक्तिरुच्यते । अज्ञानशरीरत्वेऽपि ब्रह्मज्ञानस्य सत्यार्थत्वात् ब्रह्मैकाभासत्वाच्च ज्ञानत्वं तदज्ञाननिवर्तकत्वं चेष्यते । सत्यार्थत्वात् प्रामाण्यं न स्वरूपसत्यत्वात् ज्ञानस्येति ह्युक्तम् । यथा वेणुजोऽप्यग्निस्तं समूलं दहति स्वयं च शाम्यति—एवमज्ञानजमपि ब्रह्मज्ञानमज्ञानं दन्दहीति, तदात्मकत्वात् स्वयं च शाम्यति । ब्रह्मैव वा अजडबोधरूपं तन्मात्राभासबुद्धिवृत्त्युपेतं स्वाज्ञानं दहत् तत्कार्यमन्यत् तां च वृत्तिं दग्ध्वा एकमवशिष्यते । यथा राजा एकं

[1] D (०वाज्जि०) ।　　[2] C (०भावे वो भान्ति) ।

चोरं लब्ध्वा असाध्यानप्यन्यान् सर्वांश्चोरान्निघ्नन् तं च चोरं हत्वा स्वस्थो भवति, यथा वर्त्यादियोगात्केवलमदाह्यमपि तैलघृतादि दहन् वह्निर्वर्त्याद्यपि दहति—एवं केवलमदाह्यमप्यज्ञानं विशिष्टबुद्धिवृत्तियुक्तं ब्रह्म दहेत्। एवमन्यत्रापि बुद्धियुक्तो बोध एवाज्ञानतत्कार्यं दहति। बुद्ध्यादेस्तु तत्र सत्यत्वेनादाह्यत्वान्न तु तं दहति। यथा वायुयुतोऽग्निस्तृणादि दहति न वायुम्, अदाह्यत्वात्तस्य। अतो बुद्धिर्वा बोधदीप्ता, बोधो वा बुद्धीद्धः अज्ञानं दहतीत्यज्ञानतत्कार्यदाहस्सिद्धो ज्ञानविभावसोः॥

ननु ब्रह्माज्ञानस्यापि शुक्त्यज्ञानस्येव दग्धस्यापि पुनः पुनर्भावादनिर्मोक्षप्रसङ्ग इति चेत्, तन्न; दग्धस्याज्ञानस्य पुनर्भावासंभवात्। अज्ञानं ह्यनादि। अतो नास्य कारणमस्ति। अतो नास्य जन्म। न ह्यकारणकं जायते। अतोऽनादिनोऽज्ञानस्य दाहात्, अन्यस्य चानुत्पत्तेर्ज्ञानान्मोक्ष उपपन्नः। न हि शुक्त्यज्ञानमपि दग्धं पुनर्भवति, अदग्धत्वप्रसङ्गात् प्रतीतिविरोधाच्च। न चान्यदपूर्वं जायते; किंतु पूर्वमेवानाद्यज्ञानं साकल्येनादग्धम्, शुक्तेस्साकल्येनाप्रकाशितत्वात्। न हि शुक्तिस्तज्ज्ञानक्षण एवास्ति, उत्तरकालेऽपि भावात्तस्याः। न च सर्वकालसंबन्धिरूपग्राहि प्रत्यक्षम्। अतोऽनेकज्ञानप्रकाश्यानेकरूपत्वाच्छुक्तेरेकैकेन ज्ञानेन कार्त्स्न्येनाप्रकाशितत्वात् तदज्ञानस्यापि कार्त्स्न्येनानिवृत्तिर्युज्यते। नन्वज्ञानं चेत्सांशम्, घटवत्कार्यं स्यात्; न चेत्, कार्त्स्न्येन निवृत्तिरनिवृत्तिर्वा स्यात्। सत्यम्; अत एव सांशत्वानंशत्वादिभिरनिर्वाच्यं तदित्य-

वादिष्म। तथाहि—अज्ञानं चेत्कार्यम्, प्राङ्मुक्तेर्बन्धाभावो मुक्तानां बन्धेऽनिर्मोक्षप्रसङ्गात् [ङ्गः?]। कृत्स्ननिवृत्त्यनिवृत्त्योः सदा मुक्तत्वमान्ध्यं वा जगतस्स्यात्। अतोऽनिर्वाच्यमेव। तस्माद्यावज्जडं वस्त्वस्ति, तावन्नास्याज्ञानमशेषं निवर्तते। ब्रह्मणस्त्वनेकरूपत्वाभावात् तज्ज्ञानं दहत्येवाशेषमज्ञानम्। न हि ब्रह्मणश्शुक्तेरिव स्वतोऽनेकरूपत्वं नापि कालादिकृतम्, श्रुतेर्युक्तेश्च। अतो न रूपान्तरप्रकाशनाय पुनर्ज्ञानमेष्टव्यं शुक्ताविव ब्रह्मणि। स्वयंप्रकाशत्वाच्च। अतो नाज्ञानशेषः कल्प्यः। पुनर्ज्ञानकारणाभावाच्च, प्रमात्रादीनां तत्कारणाज्ञानाभावेऽभावात्। अतश्शुक्ताविव पुनर्ज्ञानाभावाच्च नाज्ञानशेषः कल्प्यः। पुनरपि ज्ञानमस्ति चेत्, तदनुरूपोऽज्ञानशेषः कल्प्यः॥

प्रकाशकमेवार्थस्य प्रमाणम्, अर्थान्निवृत्तिरन्यस्य; अतोऽप्रकाशमानमेवार्थं ढौकते तदिति चेत्, अस्तु तथा; ब्रह्मापि हि न प्रकाशते। अतस्तदपि ढौकत एव प्रमाणम्। तर्हि शुक्तिवज्जडत्वात्तस्य सर्वाज्ञानानिवृत्तिः; तन्न, स्वयंप्रकाशत्वात्। तर्हि विप्रतिषेधः, स्वयंप्रकाशं न प्रकाशते चेति। न विप्रतिषेधः। स्वयंप्रकाशापि सती संवित्तिर्नास्ति न प्रकाशते च केषांचित्। तथैव ते वदन्ति श्रेयोऽर्थिनोऽपि। न च सा नास्ति; न च न प्रकाशते। तथैव ब्रह्मापि स्वयंप्रकाशं सच्च नास्ति न प्रकाशते चाज्ञानाम्। अतः प्रमाणं तत्रार्थवत्, यथा संवित्तेस्सत्त्वात्मप्रकाशकत्वप्रतिपादनमर्थवत्। संवित्तेरसत्त्वादिवचनं भ्रान्तिमूलमिति चेत्, भ्रान्तिरप्यज्ञानमूलै-

वेति सा तेषां न प्रकाशत एव। अतस्तद्वचोऽर्थवत्। तस्माज्जडस्य स्वयंप्रकाशस्य च न कश्चिद्विशेषोऽज्ञान्प्रति। अत एव धर्मो नास्ति, आत्मा नास्तीत्यविशेषो बार्हस्पत्यानाम्। तस्मात्स्वयंप्रकाशमपि प्रमाणप्रकाश्यमेव। तस्य चाप्रकाशनमज्ञानमेवेति तन्निवर्तनमेव तत्प्रकाशकत्वं प्रमाणस्य। यथा मूर्तद्रव्यापनयनमेव कूपाकाशादिकरणम्, तस्याकार्यत्वादन्तकल्पत्वाच्च पूर्वम्— तथा स्वयंप्रकाशस्यापि, अप्रकाश्यत्वादप्रकाशकल्पत्वाच्च पूर्वम्। अत एव न तद्विषयीकरोति जडमिव प्रमाणं बोधयदपि—यथा गुरुं बोधयन्नपि शिष्यः स्वशिष्यमिव गुरुं न बोधयति, यथा च नृपं वदन्भृत्यः स्वभृत्यमिव न वदति। तस्मात् प्रकाशकमेव प्रमाणमित्यस्मिन्नपि पक्षे अज्ञाननिवर्तकत्वं सिद्धं तस्य प्रकाशकत्वायैव। यदा तु निवर्तकमेव, अर्थात् प्रकाशनमिति स्थितिः—तदा सुतरां निवर्तकत्वं सिध्येत्। 'सिद्धं तु निवर्तकत्वात्' इति चोक्तं वाक्यकारैः। तस्मात् ब्रह्मणोऽनेकरूपत्वाभावात् स्वयंप्रकाशत्वाच्च तज्ज्ञाने परिपूर्णे उदिते निश्शेषजन्मादिसंसारबीजाज्ञानोच्छित्त्युपपत्तेः पुनरपि जन्मान्तरादिसंसारबीजमज्ञानमवशिष्यते रूप्यादिबीजशुक्त्यज्ञानमिवेति न शक्यं कल्पयितुम्, प्रमाणाभावात्॥

नन्वेकरूपत्वं स्वयंप्रकाशत्वं च ब्रह्मणो नाज्ञानशेषासंभवे हेतुः, ज्ञानोदयात् पूर्वमपि तद्ब्रह्म तथैव; तथापि तत्र परिपूर्णमज्ञानमासीत्। किमित्युत्तरकालं शेषोऽपि न स्यात्। ज्ञानविरोधादिति चेत्, न; ज्ञानमपि सावशेष-

मेवाज्ञानं निवर्तयति यथा शुक्तिज्ञानम्। न तथा स्वयंप्रकाशज्ञानमिति चेत्, न; स्वयंप्रकाशेऽपि फले—अस्ति स्वयंप्रकाशं च तदिति ज्ञातेऽपि तज्जायते, नश्यति, भिद्यत इति च भ्रमदर्शनात्। न च तस्याप्यप्रकाशमानं रूपान्तरं समस्ति, स्वयंप्रकाशताहानात्। अतो ब्रह्मज्ञानमपि सावशेषमेवाज्ञानं निवर्तयतीति तच्छेषनिमि[1]त्तः पुनरपि जन्मान्तरादिसंसारस्स्यादिति चेत्, तन्न; प्रमाणाभावात्। यद्यपि स्वयंप्रकाशवस्तुज्ञानमपि सावशेषाज्ञाननिवर्तकं संभवति, तथापि यावदज्ञानशेषसद्भा[2]वकल्पनायां प्रमाणमस्ति तावदेव तं कल्पयामः; न पुनः प्रमाणं विनापि। अतो यथोक्तपरिपूर्णलक्षणब्रह्मात्मभावं साक्षादनुभवतोऽपि पूर्ववत् पुनरपि जन्मान्तरादिहेत्वज्ञानशेषसद्भावे प्रमाणाभावात् न पुनस्तस्य संसारस्संभवेत्। प्राक्तु यथोक्तब्रह्मात्मानुभवात् स्वयंप्रकाशे स्वात्मभूते ब्रह्मण्यज्ञाननिवृत्तिः क्रमेणैवेष्यते। अत एवास्तित्वोपक्रममात्मनोऽशनायाद्यतीताद्वितीयब्रह्मात्मत्वान्तं रूपं श्रावयित्वा, तदसंभावनाविपरीतभावनानिवृत्त्यर्थं युक्तीश्चाह वेदस्तत्र तत्र। तथा 'तत्त्वमसि', 'तत्त्वमसि' इति तं तं भ्रमं नुदन् नवकृत्व ऊचिवान्। सर्वाज्ञाननिवृत्तौ 'तद्धास्य विजज्ञौ' इति च। श्रवणमनननिदिध्यासनानि दर्शनसाधनानि जगौ। शमदमादीनि च सर्वकर्मसंन्यासान्तानि विधत्ते। यज्ञादीनि च सत्त्वशुद्धिद्वारेण दर्शनार्थानि विदधौ। यद्येतैस्साधनैर्विना सकृच्छ्रवणमात्रेणैव ब्रह्मात्मानुभवो भवेत्,

[1] BC (०मित्तं पु०)।  [2] BCDE (०द्भावे क०)।

एतान्यनर्थकानि स्युः। न च परोक्षं वस्तु परोक्षज्ञानै-रेवाभ्यस्यमानैरपरोक्षीभवेत्, अनुमेयादिष्वदर्शनात्। तस्माच्छ्रवणादीन्यभ्यस्यमानानि अपरोक्ष एवात्मन्यनेक-प्रकारान् भ्रमान्निवर्तयन्ति सन्ति साक्षाद्दर्शनार्थानि भवन्ति। श्रवणादिभिर्निश्चितेऽप्यात्मतत्त्वेऽनुमानादिनिश्चित इव चन्द्रादौ भेदप्रतिभासानिवृत्तेः, द[1]र्शननिवर्त्यमप्यज्ञान-मस्ति। अतो दर्शनात्प्राक् सावशेषाज्ञाननिवृत्तिर्युक्ति-मती। सर्वभ्रमाणां सकारणानां युगपदनिवृत्तेरेकैकस्य निवृत्तस्य पुन[2]रनुत्पत्तेरात्मनोऽस्तित्वस्वयंप्रकाशत्वनित्यत्व-विभुत्वादीनां यद्यत्प्रतिपन्नं तस्य तस्य पुनर्बाधाभावात्, सर्वबीजस्य चाज्ञानस्य दर्शनान्निवृत्तेः[?]। अतो दृष्ट-ब्रह्मात्मतत्त्वस्य उत्तरकालं जन्मान्तरादिहेत्वज्ञानशेषो न संभवतीत्यात्मदर्शनादेव मोक्ष इति स्थितम्॥

ननु यद्यपि जन्मान्तरादिहेतुरज्ञानशेषो विदुषो न संभवति तथाप्यज्ञानलेशोऽस्त्येव—विदुषोऽपि कंचित्कालं शरीरस्थितेरिष्टत्वात्, तस्याश्चाज्ञानमूलभेददर्शनादि-सापेक्षाशनपानाद्यपेक्षत्वात्। यदि हि विद्यासमकालमेव विदुषश्शरीरं पतेत् 'तस्य तावदेव चिरम्' इति संसारा-भासानुवृत्तेः शरीरपातावधिश्रवणं न स्यात्। न चावि-दुषस्तत्—तस्योत्तरकालमपि संसारभावात्, 'आचार्य-वान्पुरुषो वेद, तस्य तावदेव चिरम्' इति विदुष एव तच्छब्देन परामृश्यमानत्वात्। न चादृष्टतत्त्वस्यावधि-श्रवणमर्थवत्। न च दर्शनस्यावधिश्रुतिः, शरीरपाते

[1] BCD (०र्शनं नि०)। [2] CD (०नरुत्पत्तेः)।

दर्शनासंभवात्। शरीरिणो हि तत्संभवः। तस्मान्न विद्याकाल एव विदुषो देहपातः। इतश्च—आचार्याद्विद्याप्राप्तिः, स च विद्वान् जीवंश्च। विद्वानप्यदृष्टतत्त्वस्स इति चेत्, तन्न; 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः।' इति तत्त्वदर्शिभिरेवोपदिष्टं ज्ञानं पुमर्थसाधनमिति यत ईश्वरोऽनुशशास। दृष्टतत्त्वस्य चेत्तदैव शरीरं पतेत्, तदा आचार्याभावाद्विद्यालाभान्मोक्षाभावः। तस्माद्विदुषोऽपि शरीरं कंचित्कालं तिष्ठेत्। अपिच— प्रारब्धकर्मान्तरफलाविरोधेनैव कर्माणि स्वफलं प्रयच्छन्ति। यतोऽश्वमेधादीनि बलवत्तराण्यपि कर्माणि प्रारब्धभोगक्षयं प्रतीक्षन्ते स्वफलदानाय, अतः कर्मान्तरारब्धभोगायतनशरीर एव स्वफलं दातुं समर्थानि विद्योदयफलानि कर्माणि तदविरोधेनैव स्वफलं दातुमर्हन्तीति न्याय्यं विद्याप्रारब्धभोगयोरविरोधित्वम्। अत आ प्रारब्धभोगक्षयात् विद्वच्छरीरमपि तिष्ठत्येव। तत्र यथा विद्या भोगं न बाधते, तथा भोगोऽपि न विद्यां बाधत इति शरीरभोगयोस्ततोरपि न विद्वदविदुषोरविशेषता। अथोच्येत—विद्याफलानि कर्माणि स्वयमेव शरीरमारभ्य तत्रैव विद्यां प्रयच्छन्तीति, तदयुक्तम्; अन्यारब्धेऽपि कार्यसिद्धेः कल्पनागौरवात्। अन्यारब्धेऽप्यन्तकाले[1] विद्यास्त्विति चेत्, तन्न; तदा चित्तस्यास्वास्थ्यात्। तथा स्वयमारब्धेऽपि। तत्र मध्यमकाले चेद्विद्या स्यात्, उत्तरकालं विद्याभोगयोस्सहभावप्रसङ्गः। विद्यार्थशरीरे विद्यया मोक्ष एव 'विद्यया-

[1] D (०लेऽपि वि०)।

मृतमश्नुते' इत्यादिवचनेभ्यः[1]। अतो मरणाभावान्नान्त्यकालेऽपि चित्तास्वास्थ्यमिति चेत्, एवमप्याचार्यं विना विद्याप्रदानाशक्तेर्विद्वच्छरीरं परिपालयन्त्येव विद्यार्थान्यपि कर्माणि कंचित्कालम्, यावता विद्यासंतत्युच्छेदो न भवेत्; अन्यथा तेषां नैष्फल्यात्तद्विधायिशास्त्रानर्थक्यप्रसङ्गात्। न हि केवलान्येव कर्माणि विद्यां दातुं शक्नुवन्ति भोगमिव। 'आचार्यवान् पुरुषो वेद' इति हि श्रुतिः। तस्माद्विदुषोऽपि कंचित्कालं शरीरस्थितेरभ्युपेयत्वात् तावन्मात्रहेतुरविद्याशेषगन्धोऽभ्युपेयः। संस्कारादेवाविद्यां विनापि देहादिस्थितिर्विदुषस्संभवति, सर्पभ्रान्तिनिमित्तभयकम्पपलायनादय इव तत्संस्काराद्रज्जुज्ञानेऽपीति चेत्, तन्न; अविद्याभावे संस्काराभावात्, अविद्याशरीरत्वात् संस्कारतद्वतोः। भयकम्पादयस्तु न रज्ज्वज्ञानशरीरा इति न दृष्टान्तः। यस्तु रज्ज्वज्ञानशरीरस्सर्पभ्रमः सोऽज्ञानाभावे पुनर्न भवत्येव। भवेच्चेत्पुनरप्यज्ञानादेव भवेन्न संस्कारात्, तदाप्यज्ञानस्य भावात्संस्कारजत्वकल्पनानुपपत्तेः। भवतु वा संस्कारादेव भ्रमोऽपि कम्पादिरिव लोके तत्र संस्कारतद्वतोर्भावात्, इह तु तदभावान्न संस्कारात्किंचित्संभवेत्। अतोऽज्ञानलेशादेव तद्विदश्शरीराद्याभास एष्टव्यः। सावशेषोऽप्यज्ञानदाह आत्मन्यपि संभवतीति ह्युक्तम्। न चैतावता जन्मान्तरारम्भकमप्यज्ञानमात्मविदोऽस्तीति शक्यं कल्पयितुम्—प्रमाणाभावात्, अशेषसंसारबीजस्याज्ञानस्य आत्मज्ञानाग्निना दग्धत्वात्। न

[1] CDE (॰भ्यः। म॰)।

चारब्धशरीरभोग इव, अनारब्धशरीरभोगोऽपि कश्चि-
दात्मविदो भवितुमर्हतीति प्रमाणमस्ति। आरब्धभोगे तु
कारणमुक्तम्। अतो ज्ञानोदयकाल एव विद्वान्विमुक्तः। अ-
शेषसंसारबीजस्याज्ञानस्यात्मज्ञानाग्निनाशेषतो दग्धत्वात्,
प्रारब्धशरीरभोगशेषाभासस्यापि शरीरपाते निवृत्तेः,
ज्ञानान्मोक्षो निरवद्य उपपद्यते। अतो विदुषोऽपि प्रार-
ब्धभोगशेषाभासमात्रसंपादनपटीयोऽज्ञानशेषाभ्युपगमे न
कश्चिद्दोष इति मम प्रतिभासत इति चेत्—साधीयानयं
प्रतिभासः; अहमपीच्छाम्येवेत्थम्। देहान्तरादिसंसार-
बीजमेव त्वज्ञानशेषं विदुषो नेच्छामि। स तु त्वयापि
निरस्तः। एवं च सति 'विमुक्तश्च विमुच्यते', 'ब्रह्मैव सन्
ब्रह्माप्येति', 'विद्वानमृत इह भवति', 'तद्यथा अहि-
निर्ल्वयनी,[1]' 'सचक्षुरचक्षुरिव, सकर्णोऽकर्ण इव' इत्यादीनि
जीवन्मुक्तिवचनानि स्थितप्रज्ञगुणातीतलक्षणवचनानि
चोपपन्नार्थानि भवन्ति। तदुक्तं सूत्रकारेणापि—'तदधि-
गम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्', 'अना-
रब्धकार्ये एव तु पूर्वे तदवधेः', 'भोगेन त्वितरे क्षपयित्वा
संपद्यते' इति च। जीवन्मुक्तिपक्षेऽर्चिरादिगतिश्रुतिविरोध
इति चेत्, तन्न; कार्यब्रह्मविषयत्वात् गतेः। तदुक्तम्—
'कार्यं बादरिरस्य गत्युपपत्तेः' इति। मुख्यस्य तु ब्रह्मणस्सर्व-
गतत्वात्, देशान्तरेऽपि विशेषाभावात्, नित्यप्राप्तत्वात्,
प्राप्तुश्चानन्यत्वात्, अप्राप्तप्राप्तेश्च अनित्यत्वात्, ऐक्यप्राप्ते-
श्चायुक्तिमत्त्वात् सत्यत्वानुपपत्तेः, गतिसाधनानां च प्राण-

[1] D (०र्ल्वयिनी)।

दीनां विदुषो विद्ययापास्तत्वात्, तस्य च गतिनिषेधात् 'न तस्य प्राणा उत्क्रामन्ति' इत्यादिश्रुत्या प्राणानुत्क्रमवचनेन[?]। न ह्यनुत्क्रान्तप्राणस्य देहाद्गतिस्संभवति। अतोऽन्यविषयत्वात् गतेर्विदुषो जीवत एव मुक्तिस्सिद्धा॥ अतश्शुक्तिज्ञानस्य सावशेषाज्ञाननिवर्तकत्वेऽपि ब्रह्मज्ञानस्य अशेषाज्ञाननिवर्तकत्वोपपत्तेरनिर्मोक्षप्रसङ्गचोद्यं नास्तीति, शुक्तिज्ञानस्य सावशेषाविद्यानिवर्तकत्वात् पुनरपि भवतो रूप्यादेश्शुक्त्यज्ञानभाव एव भावात् तज्जत्वं सिद्धम्। अतो भ्रान्तिबाधौ नाम न संभवतस्सत्त्वेऽसत्त्वे च रूप्यादेः, तयोरसंभवादित्येतच्चोद्यं नास्ति; सत्त्वासत्त्वाद्यभावाद्रूप्यादेस्तत्कारणाज्ञानस्य च॥

कश्चाभिप्रायो भ्रान्तिबाधौ न स्त इति वदतः। यदि सर्वैव बुद्धिः सत्यार्थेति, तदा भ्रान्तिबाधौ स्त इत्यपि सर्वेषां बुद्धिस्सत्यार्थेति तौ स्त एव। अथ सा बुद्धिर्भ्रान्तिः, तर्हि तद्बाधोऽप्यस्तीति भ्रान्तिबाधौ स्त एव। अतस्तावनिच्छन्न तावपि दूषयितुं शक्नुयाः, किं पुनरन्यद्दूषयितुं साधयितुं वा। अतस्तावेष्टव्यौ सर्वैः। नन्वेवं तर्हि भेदप्रपञ्चोऽप्येष्टव्यः। न हि तेन विना किंचिद्दृष्टं जीवनादि, अदृष्टं वा स्वर्गादि कस्यचित्। नापि तस्य दूषणमन्यस्य वा साधनम्। तस्मात् स एष्टव्यस्सर्वैरेव। अथ [1]तमाश्रित्यापि तं दूषयसि, तथाहमपि भ्रान्तिबाधावाश्रित्य तौ दूषयामि। तौ चेदाश्रितौ त्वयासत्यवादिना तावेष्टव्यावेव, न दूष्याविति चेत्; तथा प्रपञ्चोऽपि। अथ भेदोत्पत्तिविनाशा-

[1] CDEG (तामा०)।

दीनामप्रामाणिकत्वात्तैश्च विना तस्यासिद्धेः, सोऽप्यप्रामाणिक एवेत्यसत्यः, तर्हि भ्रान्तिबाधावपि तथैव। तावपि भेदादिभिर्विना न सिध्यतः। तथापि तौ स्त एवेति चेत्, प्रपञ्चोऽप्यस्ति तथा। तयोरभावे तु सुतरां सोऽस्ति। प्रपञ्चं हि दूषयता तत्प्रतिभासस्य भ्रान्तित्वं गतिर्वाच्या। भ्रान्त्यभावे प्रतिभासस्य गत्यन्तराभावात् प्रपञ्चस्सन्नेव स्यात्। अतस्तयोर्भावेऽभावे च सोऽस्त्येव। भ्रान्तिबाधौ तु तं विना न सिध्यतः। तस्मात्ताविच्छता सुतरां प्रपञ्च एष्टव्यः। इष्यत एव सर्वमनिरूपितरूपमिति चेत्, भ्रान्तिबाधयोः स्वरूपस्य तयोर्निवर्त्यनिवर्तकभावस्य निवृत्तेश्च अनिरूपितरूपत्वात् तदसिद्धौ प्रपञ्चस्यानिरूपितरूपत्वासिद्धिः। अतः पूर्वसिद्धं सत्यत्वमेव स्यात्। अतः प्रपञ्चप्रतिभासस्याभ्रान्तत्वात् बाधाभावान्न भ्रान्तिबाधौ नाम संस्तः। भ्रान्तिबाधौ चेत्सत्यौ, प्रपञ्चोऽपि सत्य इति न तौ भ्रान्तिबाधौ स्याताम्। तस्मान्न प्रपञ्चभ्रमतद्बाधौ नाम संभवतः। तथा रूप्यादिभ्रमतद्बाधौ, तत्रापि तयोस्सत्त्वेऽसत्त्वे च रूप्यादेस्सत्यत्वात्। तस्माच्छुक्तिरूप्यवत् प्रपञ्चस्याप्यनिर्वचनीयाविद्याविजृम्भितत्वाद्विद्यया तन्निवृत्तेर्मोक्ष उपपद्यत इत्येषा आशा न कार्या, मद्वचनं चेद्युक्तिमच्छुश्रूषसे॥

किमर्थमित्थमुन्मत्तवन्निष्प्रयोजनं प्रलपसि। ननु नाहमुन्मत्तवन्निष्प्रयोजनं प्रलपामि, अस्ति हि त्वद्भ्रमनिवृत्तिः प्रयोजनं मद्वचसः; किमिति मामाक्षिपसीति चेत्—अत एवोन्मत्तवदित्याक्षिपम्। मद्भ्रमं हि निविवर्त-

यिषसि यथार्थबोधेन; न भ्रान्तिसम्यग्बोधौ, न च तयोर्निवर्त्यनिवर्तकभाव इत्यत्र युक्तीर्मां[1] जिग्राहयिषसि। अतस्त्वत्तः प्रशस्त उन्मत्तः। न हि तस्ये[2]दृशी सुप्रतिष्ठिता भ्रान्तिरस्ति। न चेदुन्मत्तस्त्वम्, विप्रलम्भकस्स्याः; यतो मद्भ्रान्तेर्बोधान्निवृत्तिं जानन्नेव सा नास्तीति युक्त्याभासैर्मुमोहयिषसि। तस्मान्नैवं वोचः, यद्युन्मत्तत्वं विप्रलम्भकत्वं वा आत्मनो नेच्छसि। तस्मात् भ्रान्तिबाधावप्रत्याख्येयौ सर्वैरेव वादिभिः प्राकृतैश्च। विप्रतिपत्तिरपि तावनपह्नुत्यैव तयोस्स्वरूपविशेषे अन्यत्र वा कार्या। न तु तयोर्भावेऽपि। तयोरभावे विप्रतिपत्तेस्तन्निरासस्य चानुपपत्तेः। तस्माद्रूप्यादिख्यातिशुक्त्यादिबोधयोर्बाध्यबाधकतया भ्रान्तिबाधत्वेन अतितरां प्रसिद्धत्वात् तौ कस्मिन्पक्षे युज्येते कस्मिन्वा नेति— एतदेव निरूप्यं निरूपकैः; न पुनस्तौ स्तो न वा, तयोर्बाध्यबाधकत्वं वा अस्ति न वेति। एवं च सति-यद्यपि रूप्यादेस्सत्त्वेऽसत्त्वे च तौ न युक्तौ सत्यरूप्यखपुष्पादिवत् त[3]थाप्यनिर्वचनीयत्वे युक्तावेव, अनिर्वचनीयस्याबाधाख्याननियमासिद्धेः सत्यरूप्यखपुष्पादिवत्, ख्यातिबाधाभ्यामेव चानिर्वचनीयत्वस्यावगमात्, सदसतोस्तयोरसंभवात्। अतोऽनिर्वाच्यमबाध्यमिति वदता बाध्यं न बाध्यमित्येवोक्तं स्यात्, ज्ञानबाध्यस्यैवानिर्वचनीयत्वात्। प्रपञ्चस्याप्यनिर्वचनीयत्वं श्रुत्या युक्त्या वा तद्बाधं जानतामेव; अजानतां तु सत्यतैव रूप्यादिवत्।

[1] C (मा)।     [2] CDE (०दृशी सु०)।
[3] CDE (तथा नि०)।

जानतां तु तत्प्रतिभासो बाधितद्विचन्द्रादिवत्। भ्रान्ति-बाधयोश्च बाध्यबाधकतावगमादेवानिर्वचनीयतावगम इति नानिर्वचनीयता तयोर्बाध्यबाधकभावं विहन्ति। न च शुक्त्यादिबोधस्य अनिर्वचनीयताच। भ्रान्तेरेव तु सा। यदि तस्यापि स्यात्, तथाप्युक्त एव परिहारो बाधकस्य बाधकत्वसिद्धावेवानिर्वचनीयता सिध्यन्ती न तस्य बाधकतां विहन्तीति। ननु सत्यस्य बाध्यत्वमिव, अनिर्वचनीयस्य बाधकत्वमपि न दृष्टं क्वचित्। सत्यम्, तथापि सत्य-स्याबाध्यत्ववदसत्यस्याबाधकत्वनियमादृष्टेरिहैव बाधकता दृश्यतां बाध्यत्वमिव। नन्वनिर्वचनीयत्वाद्रूप्यज्ञानवद-बोधक[1]त्वाबाधकत्वे शुक्तिज्ञानस्यापि युक्ते इति चेत्, तन्न; शुक्तिज्ञानस्य बोधकत्वादिसिद्ध्यधीनत्वाद्रूप्यज्ञानस्यानिर्वच-नीय[2]ताबोधकत्वादिसिद्धेः शुक्तिज्ञानस्य अनिर्वचनीयता-सिद्धेश्च—रूप्यज्ञानवच्छुक्तिज्ञानस्याप्यबोधकत्वमबाधकत्वं चानिर्वचनीयत्वादित्यनुमानानुपपत्तेः, हेतुदृष्टान्ताभावात् शुक्तिज्ञानस्याबोधकत्वे सति। न चैवं सत्यत्वं बाधा-धीनम्, अबाध्यस्यापि सत्यत्वात् सत्यस्य चाबाध्यत्वात्। तथा तुच्छस्यापि। अतस्सत्तुच्छयोरबाध्यत्वादनिर्वचनीय-मेव बाध्यमिति तदेवासत्यम्, न सत्तुच्छे। तस्माच्छुक्ति-रूप्यादि बाध्यत्वादसत्यमेवेति सिद्धम्॥

ननु यद्यपि बाध्यमसत्यम्; तथापि बाधकं सत्यमेव, बोधकत्वात्। न ह्यबोधकं बाधकमिष्यते। अतो बो[3]धक-

[1] CDE (०कत्वबा०)। [2] DE (०यतयाबो०)।

[3] BCD (बाध०)।

त्वात् सत्यमेव घटादिज्ञानवत् । घटादिज्ञानस्यापि सत्यत्वं ममासिद्धम्, तस्य सविषयस्य बाधितत्वाच्छ्रुत्येऽति चेत्—तन्न, श्रौतमपि हि ज्ञानं सत्यमेव बोधकत्वात् । तदर्थपद-पदार्थादिविषय[1]प्रत्यक्षादिज्ञानमपि सत्यमेव, अर्थसाधक-त्वात् । यद्यपि ज्ञानकारणमसत्यमपि दृष्टम्, तथापि नासत्यं ज्ञानमर्थसाधकं किंचिद्दृष्टम् । अतो ज्ञानानां सत्यत्वात् तदर्था अपि सत्या इति तेषां शुक्तिरूप्यादिवत् बाध्यत्वायोगाच्छ्रुतेरन्योऽर्थो ग्राह्यः । तस्माद्रूप्याद्येव ज्ञाना-पनोद्यं न प्रपञ्च इति चेत्—तन्न, श्रुत्यर्थपरित्यागप्रसङ्गात् । तथाहि—'एकमेवाद्वितीयम्', 'अपूर्वमनपरम्', 'नेति नेति', 'अस्थूलमनणु', 'प्रज्ञानघन एव', 'नेह नानास्ति', 'मृत्योस्समृत्युम्', 'इन्द्रो मायाभिः' इत्यादीनि श्रुति-वचांसि प्रपञ्चसत्यत्वेऽर्थवन्ति व्यर्थानि स्युः । अतस्तद्वि-रुद्धं प्रपञ्चस्य सत्यत्ववचनम् । अनुमानतोऽप्यस्यासत्यत्वं जडत्वाद्यन्तवत्त्वादिहेतुभिः शुक्तिरूप्यादिवदवगम्यते । ततो घटादिज्ञानस्यापि सत्यत्वासिद्धेस्तद्वच्छुत्यादिज्ञानं ब्रह्मज्ञानं च सत्यमित्याद्यनुपपन्नम् । सर्वमेव च ज्ञानं बोधकमसत्यमिति असत्यं ज्ञानं किंचिद्बोधकमदृष्टमिति चासिद्धम् । असत्यत्वे तु सर्वज्ञानानामर्थाबोधकत्वमसत्य-त्वाद्रूप्यादिज्ञानवदिति चेत्, न; प्रतीतिविरोधात्, ज्ञानाद्यार्थासिद्धौ व्याप्तिग्रहणाद्यसंभवात् पक्षहेतुदृष्टान्ता-भावादनुमानस्य चासंभवात् । तत्संभवे तु ज्ञानस्याबोधक-त्वासिद्धेः बोधकत्वमेवानपवादं सुस्थितं भवेत् । अतस्सर्व-

[1] C (॰यं प्र॰) ।

स्यानात्मजातस्यासत्त्वेऽपि बाधकज्ञानसंभवात्, रूप्यादिभ्रम इव शुक्त्यादिज्ञानात्, संसारभ्रमोऽपि ब्रह्मज्ञानान्निवर्तत एवेति स्थितम् ॥

का तर्हि तन्निवृत्तिः । अज्ञाननिवृत्तिरेव भ्रमनिवृत्तिः, तच्छरीरत्वात्तस्येति चेत्—कासावज्ञाननिवृत्तिः । किं तां पृच्छसि । सा त्वयापि ह्येष्टव्यैव, न हि तामनिच्छन् जीवितुमपि शक्नुयाः किं पुनर्विवदितुमिति चेत्—सत्यमेष्टव्यैव, तथापि कस्य पक्षे सा युज्यत इति निरूपयितुं पृच्छामि । अतस्तां ब्रूहि । सा चेत्सती—सद्वितीयत्वमात्मनः, अतश्चाज्ञानभावः; तं विनापि सद्वितीयता वा आपतेत् । सा आत्मैव चेत्, सदा भावात् सदा अज्ञानाभावो निर्हेतुत्वं च । तस्यास्सहेतुत्वेऽप्यात्मनोऽपि सादित्वादज्ञानाश्रयाभावः, सादित्वं वा अज्ञानस्य । अनित्याश्रयमज्ञानमिति च विप्रतिषिद्धम् । अथाभावोऽज्ञाननिवृत्तिः—अभावोऽप्यात्मैव चेत्, उक्तो दोषः । तद्धर्मश्चेत्, धर्मस्य भेदेऽभेदे चोक्तो दोषः । तथा सदसत्त्वे च । न च तत्समस्ति । अनिर्वचनीयत्वे तदेवाज्ञानमन्यद्वा अस्तीत्यनिर्मोक्षः । न चास्ति प्रकारान्तरम् । नापि तुच्छता दृष्टा, असंभवात् । किंच—भावस्यैव निवृत्तिरभावः प्रसिद्धः, अभावस्यैव च भावः । अतोऽज्ञानस्य निवृत्तिर्नाभावो भावो वा भावाभावो वा, अनिर्वाच्यत्वात् । न चान्यो निवृत्तिप्रकारः प्रसिद्धोऽस्ति । न च तदेव तस्य निवृत्तिः, प्रसिद्धिविरोधात् । न चानिर्वचनीयान्तरं तन्निवृत्तिः, विशेषाभावात् ज्ञानहेतुत्वायोगाच्च । अनिर्वचनीयं ह्यज्ञानं

तत्कार्यं वा; न चोभयं तत् ज्ञानाद्भवतीतीच्छसि। अनादि चाज्ञानम्। न चाज्ञानान्तरमिच्छसि। तन्निवृत्ते-श्चानिर्वचनीयत्वे चैतन्यस्येव अनिवृत्तिप्रसङ्गः। अज्ञान-हेतुत्वं च स्यात्। अतोऽनिर्वचनीयस्य निवृत्त्यसंभवा-दज्ञाननिवृत्तेश्च प्रसिद्धत्वान्नानिर्वचनीयमज्ञानम्। अतो भावोऽभावो वा स्यात्, तयोरेव निवृत्तेरुपपत्तेः प्रसिद्धेश्च। अभावश्च भावान्तरं भावान्तरधर्मो वा; न तु तुच्छः, अप्र-मेयत्वात्। अभावस्तु प्रमेयः; अन्यथा तद्व्यवहारायोगात्। अतो ज्ञानाभावोऽज्ञानम्। तस्य च ज्ञानभावो निवृत्तिः। भावो ह्यभावस्य निवृत्तिः। ज्ञानाज्ञानयोश्च भावाभावत्वं भावाभावप्रमाणगम्यत्वं च सर्वैरेष्टव्यम्, अन्यथा त्वज्ञान-निवृत्तेः प्रसिद्धाया अनुपपत्तेः। न हि तामनिच्छतो जीवनमपीत्युक्तम्। यदा त्वज्ञानं भाव एव—तदापि ज्ञानं तस्याभावः, भावान्तरत्वात्। अतस्तदेव तन्निवृत्तिः, ज्ञान-भावेऽज्ञाननिवृत्तिप्रसिद्धेः। न च रूप्यादि अज्ञानकार्यम्। अज्ञानं हि नाम आत्मनोऽपरिणामः, अन्यवस्तुनि वा विज्ञानम्; उभयथाप्यात्मसमवायि तत्। रूप्यादि तु न तथा भाति। अतो नाज्ञानकार्यं तत्। किंतु शुक्तिरेव सम्यगगृह्यमाणा भावान्तररूप्याकारा भाति। तस्यां तु सम्यग्गृहीतायां नेदं रजतमिति शुक्तिरूप्ययोरितरेतरा-भावग्राहि ज्ञानमुत्पद्यते। अतो नाचानिर्वचनीयं किंचि-ज्जाति दह्यते निवर्त्यते वा ज्ञानेन। न हि ज्ञानं कस्यचिद्दाहकं प्रसिद्धम्। नापि निवर्तकं स्वाभावव्यति-

रेकेण । स्वा[1]भावस्यापि निवृत्तिरेव, न निवर्तकं ज्ञानम् । बोधकमेव त्वर्थस्य । अतो यदि नामाच असत्किंचिज्ञासेत, तस्य बोधयेदेवाभावं तत्, न तु कुर्यात् । यदि कुर्यात्, तथाप्यभाववतो नानिर्वचनीयता । अत आद्यन्तवतो जडस्यानिर्वाच्यस्य कस्यचिदभावात् नान्यस्यापि जडत्वादिना अनिर्वाच्यता अनुमेयेति सर्वस्य सत्त्वात्, ज्ञानानिवर्त्यत्वाच्च बन्धस्य, कर्मणैव तन्निवृत्तिः । ज्ञानस्य तु अनिवर्तकत्वान्नाच समुच्चयोऽपि कर्मणा । [2]उपासनाज्ज्ञानं निवर्तकमिति चेत्, तदपि कर्मैव मानसम् । अतो न समुच्चयः प्रमाणज्ञानस्य । अतो ब्रह्मज्ञानमपि कर्तृसंस्कारद्वारेण कर्मण्येवोपयुज्यते, तज्ज्ञानस्य परार्थत्वात् । फलश्रुतिरर्थवादः । कर्महेतुत्वेऽपि मुक्तेर्नित्यत्वमनावृत्तिश्रुतेः, नित्यत्वाद्वा बन्धप्रध्वंसस्य; अन्यथा त्वात्मनोऽमुक्तिरेव, अज्ञानजत्वाभावात् बन्धस्य ज्ञानानिवर्त्यत्वात् । न हि ज्ञानं स्वा[3]भावादन्यद्वस्तु निवर्तयतीत्युक्तम् । अज्ञानजत्वेऽपि तस्यानिर्वाच्यत्वे निवृत्त्यसंभव उक्तः । तस्मान्न ज्ञानान्मोक्षः, कर्मणैव मोक्षो न वा मोक्ष इति चेत्—

नायं दोषः, अज्ञाननिवृत्तेः प्रकारान्तरसंभवात् । तदसंभवैकनिमित्तो ह्ययं दोषराशिर्यस्त्वया प्रपञ्चितः । सदसत्सदसदनिर्वचनीयप्रकारेभ्यो ह्यन्यप्रकारैवाज्ञानस्य निवृत्तिर्युक्ता ; अनिर्वचनीयत्वात्तस्य, उक्तप्रकाराणां त्वयैव निरस्तत्वात् । निर्वाच्यानामेव हि ते निवृत्तिप्रकारा

[1] CDE (स्वभा०) । [2] BCDE (उवास०) ।
[3] BCD (स्वभा०) ।

अनिर्वचनीयान्ताः। अनिर्वचनीयापि निवृत्तिः सत एवात्माकाशादेः। अतोऽन्यप्रकारैवाज्ञानस्यानिर्वाच्यस्य निवृत्तिरनुरूपा। यक्षानुरूपो हि बलिः। तर्हि तदेव तस्य निवृत्तिः—न, प्रसिद्धिविरोधात् ज्ञानहेतुत्वायोगाच्च। अत एव नान्यदनिर्वाच्यम्। नापि शून्यम्। शून्यात्को विशेष इति चेत्, अज्ञाननिवृत्तित्वमेव। न हि शून्यस्येदं लक्षणम्। स्याच्चेत्, अस्त्वैक्यम्। अज्ञाननिवृत्तौ किं प्रमाणमिति चेत्, निवृत्तिप्रसिद्धिरेव। यस्य स्वरूपेऽपि नास्ति प्रमाणं तस्य निवृत्तौ कः प्रमाणं मृगयते। तस्माद्यथा अनिर्वचनीयम[1]प्रसिद्धमप्यनात्मविदा न्यायबलादभ्युपेतम्—एवं तन्निवृत्तिप्रकारोऽपि न्यायबलादेवाप्रसिद्धोऽप्यभ्युपेयः, इतोऽन्यथा अज्ञानतन्निवृत्त्योरसंभवात्॥

न ह्यात्मनोऽपरिणामोऽन्यवस्तुनि विज्ञानं वा अज्ञानम्, ज्ञानपरिणामश्च तन्निवृत्तिरिति युक्तम्—आत्मनः परिणामानुपपत्तेः, निरवयवत्वात्। सावयवस्यैव हि मृत्क्षीरादेः परिणामो दृश्यते, न तु निरवयवस्याकाशस्य। अतो नात्मा परिणामी। सावयवश्चेद्घटादिवदनित्यस्स्यात्। निरवयवस्यापि चेत् परिणामस्स्यात्, स कृत्स्नस्यैवेत्यपरिणतं रूपान्तरं नास्यावशिष्येत। अतस्तदाश्रितानि अपरिणामान्तराण्यपि तदैव[2] न स्युरिति सर्वे ज्ञानपरिणामास्तदैव स्युः, सर्वप्रागभावानां निवृत्तेः। नैकदैव सर्वे स्युर्विरोधादिति चेत्—नैकोऽपि, अविशेषात्। अथैकस्स्यात्—तथापि इतरे नान्यदापि स्युः, तदा स्वप्रागभावा-

[1] DE (०प्रमाणसि०)। [2] CDE (०व स्यु०)।

भावात्। अथ तैर्विनापि ते स्युः—अज्ञानस्य ज्ञानं निवृत्तिरिति न सिध्येत्, ज्ञानानामुत्पत्तिं विनापि तत्प्रागभावानां निवृत्तेस्तेषु च निवृत्तेष्वपि ज्ञानानामनुत्पत्तेः पश्चाच्चोत्पत्तेः। एवं नैकमपि ज्ञानमज्ञानस्य निवृत्तिः। अथैतद्दोषपरिजिहीर्षया स्वाभावनिवृत्तिर्ज्ञानमेवेति ब्रूषे—तदा एकस्यात्मन एकमेव ज्ञानम्, ज्ञानाभावोऽप्येक एव तदाश्रय इति वाच्यम्; अन्यथा सर्वज्ञानानां युगपद्भावप्रसङ्गात् सर्वाभावनिवृत्तेः। न चैकस्य निरंशस्यानेके परिणामा युगपत्संभवन्ति नापि क्रमेण, क्रमपक्षे ज्ञानस्य स्वाभावनिवृत्तित्वानुपपत्तेर्दोषस्योक्तत्वात्। स्यान्मतम्—ज्ञानान्तरस्य स्वाभावत्वात् ज्ञानस्य तन्निवृत्तित्वं युज्यत इति। तच्चायुक्तम्—निरंशस्य क्रमेणाप्यनेकपरिणामासंभवात्; पूर्वपरिणामानुपयुक्तस्य तस्यापरिणतस्य रूपान्तरस्याभावात्, तद्भावे च सांशत्वप्राप्तेः; पूर्वपरिणामोपयुक्तस्य च तदभावेऽभावात् तद्भावे च परिणामान्तराभावात्। भावे च सर्वपरिणामानां युगपद्भावः। स च नेष्टः, विरोधात्। यथा चैकस्य निरंशस्यानेकपरिणामा एकरूपत्वादेकस्मिन्क्षणे विरुध्यन्ते तथा क्रमेणापि, एकरूपत्वाविशेषात्। न हि तस्य पूर्वोत्तरकालयोरुपचयोऽपचयो वा स्वरूपभेदोऽस्ति। मृदादीनां तु वाय्वादिभूतावयवानुप्रवेशेनोपचयापचयादिसंभवात्क्रमेणापि परिणामा भवन्ति। आत्मनस्तु एकरूपत्वादेकपरिणामाभ्युपगमेऽपि तत्रैव समाप्तत्वात्तदभावेऽभावान्न परिणामान्तरसंभवः। तदभावेऽप्यात्मा भवतीति चेत्, न; भेदाभावात्तयोर्भावो-

ऽभावो वा सदैव स्यात्; अन्यथा एकस्यैव युगपद्भावाभावाविति विरुद्धमुक्तं स्यात्। तथाहि—कृत्स्नोऽप्यात्मा पूर्वपरिणामात्मनैव जातः, नास्य किंचित्पूर्वरूपं स्थितमस्ति। अतः परिणामनिवृत्तौ कथमात्मा न निवर्तेत, तत्स्थितौ वा कथं परिणामो न तिष्ठेत्। यद्यप्यात्मा पूर्वपरिणामे समाप्तस्तथापि न स परिणामस्सर्वात्मना निवर्तते किं तु तस्यैकोऽंशस्तिष्ठतीति चेत्—तन्न, निरंशत्वादात्मनस्तत्परिणामस्यापि निरंशत्वात्। अंशस्थितावपि परिणाम एव तिष्ठेत्, न त्वात्मा। अभिन्नत्वेऽपि तयोरात्मैव परिणामादभिन्नः, न तु परिणाम आत्मनः। यद्यात्मनः परिणामोऽभिन्नः—अनादित्वादात्मनस्सोऽप्यनादिरिति न तस्य जन्मादयस्स्युः, अन्यथा आत्मन एव तत्प्रसङ्गात्। अतश्च निर्विकार आत्मा सिद्धः, सर्वविकाराणां तदभिन्नत्वात्। अतोऽस्य ज्ञानपरिणामः अपरिणामस्य ज्ञानान्तरपरिणामस्य वा अज्ञानस्य निवृत्तिरित्युक्तमयुक्तं स्यात्। ज्ञानादात्मनोऽभिन्नत्वे एकमेव ज्ञानम्, युगपद्वा सर्वज्ञानानि स्युः। ततश्च तदभाव आत्मनोऽप्यभाव इत्यादिदूषणमुक्तम्। अत आत्मतज्ज्ञाने नाभिन्ने। एवमज्ञानाख्योऽप्यपरिणाम आत्मनोऽभिन्नश्चेत्, न निवर्तेत। आत्मा चेत्ततोऽभिन्नः, तन्निवृत्तौ सोऽपि निवर्तेत। तदा नैकमपि ज्ञानं स्यात्, ज्ञात्रभावात्। अतो नात्माज्ञानेऽप्यभिन्ने। आत्मा अज्ञानादिश्च भिन्नाभिन्नाविति चेत्—तदाप्येकेनांशेनाभेदोऽन्येन भेद इति न युज्यते, अनंशत्वात्। अतोऽभिन्नयोरेव भेद इत्युक्तं स्यात्। ततश्च तयोस्स्वतोऽपि

भेदस्स्यात् । न च स्वत एव स्वस्य भेदो न्याय्यः, एकस्यैव निरंशस्यावध्यवधिमङ्गावायोगात् । येन रूपेणाभेदस्तेनैव चेत् भेदोऽपि, भेदाभेदबुद्ध्योश्चैकार्थतैव स्यात् । तस्मान्नानयोर्भेदाभेदौ संस्तः । न भिन्नो नाप्यभिन्नोऽज्ञानादिरात्मन इति चेत्—अवस्तु तर्हि, अनिर्वाच्यत्वाद्रूप्यादिवत् । वस्त्वेवेति चेत्—तर्हि न भिन्नश्चेदज्ञानादिरात्मनः, अभिन्न एव आत्मस्वरूपवत्, वस्तुत्वे सति भेदहीनत्वात् । नाभिन्नश्चेत्, भिन्न एव [1]घटादिवत् । स्वरूपमप्यात्मनो न भिन्नं नाप्यभिन्नं घटादिश्चेति चेत्—तर्हि ज्ञानादिरप्यात्मनस्स्वरूपमेव, अभिन्नाभिन्नत्वादितरस्वरूपवत् । तथा घटादिश्च । आत्मस्वरूपत्वे च न तस्य जन्मादयस्स्युरितरस्वरूपवत् । स्युश्चेत्, इतरस्यापि स्युः । उभयथाप्युक्ता दोषाः ॥

ननु ज्ञानाज्ञानभावाभावेष्वप्यात्मनः प्रत्यभिज्ञायमानत्वात् घटादितदभावभावाभावेष्विव मृदः सविकारत्वं नित्यत्वं चात्मनो मृद इवेति चेत्—न ; प्रत्यभिज्ञानस्याविषयत्वात् आत्मनः, तद्विषयत्वे मृद इवानात्मत्वप्रसङ्गात् । प्रत्यभिज्ञानं विना कथं नित्यत्वमात्मनस्तवापीति चेत्, कौटस्थ्यादनुदितानस्तमितप्रकाशत्वादनित्यत्वकारणाभावाच्च तस्य । न ह्यविषयस्यात्मनोऽनित्यत्वं कश्चित्कुर्यात् जानीयाद्वा । विषयत्वे चानात्मत्वं मृद्वदुक्तम् । तस्मान्नित्य एव ममात्मा । प्रत्यभिजानन्नप्यात्मानं ज्ञानाज्ञानयोरप्रत्यक्षत्वात् न तत्संबन्धं प्रत्यभिजानीषे । न च तयोरनुमेयतेति वक्ष्यामः ॥

[1] CDE (पटा॰) ।

यस्यापि ज्ञानाज्ञाने प्रत्यक्षे, ज्ञानादयश्चात्मनो गुणा न तु विकाराः, ते चात्ममनस्संयोगजाः, आत्मसमवायिनः, आत्मनैव स्वगुणेन ज्ञानेन ज्ञायन्ते, स्वयं चात्मा इति दर्शनम्—तस्याप्यात्ममनसोर्निरंशयोर्न संयोगो न्याय्यः, आत्मनोरिव तस्य। न हि तस्यात्मनोस्संयोगजं किंचित्कार्यमस्ति। सांशयोरेव हि संयोगो लोके दृष्टः, न तु निरंशयोस्सांशानंशयोर्वा। नापि निर्विकारयोः। सविकारत्वे सांशत्वे चात्मन उक्तो दोषः। सविकाराणामेव चाभ्रादीनां गुणा दृष्टाः। नाकाशस्यापि निर्विकारता, जन्मश्रुतेः। [1]जातानामेव च गुणा दृष्टाः, नत्वजातानाम्। यदि परमाणवोऽपि सन्ति, परिच्छिन्नत्वाद्रूपादिमत्त्वाच्च जनिमन्त एव। अत आत्मनोऽपि जन्मादि अगुणत्वं वाभ्युपेयम्। आत्मनश्चेत् भिन्ना गुणाः, तदाश्रयनियमाभावादन्यत्रापि स्युर्घटादिवत्। तथान्येषामपि गुणाः। पृथक्त्वेन च दृश्यन्ताम्, घटादिवदेव भिन्नत्वात्। नैतौ दोषौ समवायसंबन्धादिति चेत्—सोऽप्यन्यश्चेत्, पृथग्दृश्यताम्। न चास्ति तस्य समवायान्तरम्, अनवस्थानात्। संबन्धत्वात् संबन्धान्तरं नापेक्षते स इति चेत्—संयोगोऽपि तं नापेक्षेत, संबन्धत्वात्। गुणत्वात् सोऽपेक्षत इति चेत्—अयं चागुणोऽप्यपेक्षतां संबन्धत्वे सत्यप्यन्यत्वाविशेषात्[?] द्रव्यादिवत्। संयोगवच्च। न हि दृष्टान्तदार्ष्टान्तिकयोस्सर्वात्मना साम्यम्, तदभावप्रसङ्गात्। तस्मान्न समवायादभेदप्रतिभानम्। अतो न भिन्ना गुणाः,

[1] CDE (ज्ञाता०)।

घटादिवत्पृथगनुपलब्धेः अन्यथाभावाच्च। परिणामानां च भेदपक्षोऽनेनैव प्रत्युक्तः। न भिन्नाश्चेदात्मनो गुणाः, तदा परिणामवादिनः पक्षत्रयेऽप्युक्ता दोषा इह द्रष्टव्याः। आत्ममनसोश्च सदा भावात्सदा संयोगप्राप्तेस्सदा कार्यभावोऽभावो वा स्यात्, अविशेषात्। विशेषभावे च आत्मन उक्तो दोषः। आत्मनो विशेषाभावेऽपि मनःकर्मणैव संयोगनियम इति चेत्—सर्वात्मभिस्संयोगस्स्यात्, विशेषाभावात्। यददृष्टनिमित्तं तत्कर्म तेनैव संयोग इति चेत्, अदृष्टमपि मनःकर्महेतुसंयोगजत्वात् सर्वपुंसां समानं न्याय्यम्, तेषामविशेषात्। ततश्चात्मनां विशेषाभावे तस्य तस्यादृष्टस्य संयोगस्य तद्धेतुकर्मणश्च सर्वात्मनां समानत्वान्मनसस्सर्वैस्सदा च संयोगस्स्यान्न वा केनचित्कदाचित्, विशेषाभावादेव। विशेषभावे चोक्ता दोषाः। आत्मनश्चाज्ञेयत्वात्[त्वे ?] ज्ञानादीनां च तद्गुणत्वे तद्विशेषणत्वे च, ज्ञानाद्यभावानामज्ञेयत्वं स्यात्। न हि केनचिदपि प्रमाणेनाज्ञेयस्य गुणा विशेषणानि वा ज्ञातुं शक्यन्ते। आत्मनस्तेषां च ज्ञेयत्वे, अनात्मत्वमनात्मगुणत्वमनात्मविशेषणत्वं च घटादिवत्तद्गुणवत् तद्विशेषणवच्च स्यात्। तस्मादात्मगुणत्व आत्मविशेषणत्वे च ज्ञानस्याज्ञानस्य चाप्रमेयतैवेति ज्ञानमज्ञानस्य निवृत्तिः, ज्ञानाद्वा अज्ञाननिवृत्तिः, तयोर्वा स्वरूपमीदृगिति न शक्यं ज्ञातुं वक्तुं वा, प्रमाणाभावात्। न च प्रमाणं विना किंचित्सिध्यति तार्किका[1]णाम्। अत आत्माप्यस्त्येवंरूपश्चेत्यादि न

[1] BCDE (०णां मते। आत्मा०)।

शक्यं ज्ञातुं वक्तुं वा तार्किकैः—तस्य ज्ञेयत्वेऽनात्मत्वादज्ञेयत्वे तत्सत्त्वतल्लक्षणाद्यसिद्धेः । अतोऽज्ञाननिवृत्तिप्रकारो मदुक्त एव संभवति, नान्यः—यतोऽप्रमेयत्वादात्मनः तदाश्रयत्वेऽज्ञानस्य चाप्रमेयत्वे निर्वाच्यत्वायोगादनिर्वाच्यतैवेति तन्निवृत्तेरपि मदुक्तप्रकारतैवेति न्याय्यम्, प्रकारान्तराणां निरस्तत्वात् ॥

यस्य त्वनात्मसंबन्ध्येवाज्ञानं ज्ञानं च साङ्ख्यस्य, तस्याप्यज्ञाननिवृत्त्यसंभवादिदूषणं सर्वं समानमेव । तस्य हि न सतो नाशः, नाप्यसतो जन्म । अतोऽज्ञानस्यापि सत्त्वे, न निवृत्तिस्संभवेत् । असत्त्वे, न तन्निमित्तस्संसारस्स्यात् । निवृत्तेश्चासत्त्वे, न जन्म स्यात् । सत्त्वे, सदा अज्ञाननिवृत्तेर्भावात् संसारानुपपत्तिः । अज्ञानाभावेऽपि चेत्स्यात् संसारः—न कदाचिन्निवर्तेत, नाज्ञाननिमित्तश्च स्यात् । संसारनिवृत्तेश्चासत्त्वे, न जन्म । सत्त्वे तु, नित्यनिवृत्तेस्संसारस्य न शास्त्रादि अर्थवत् । सर्वस्य सत्त्वेऽप्यभिव्यक्त्यनभिव्यक्ती भावाभावव्यवहारनियामिके इति चेत्—ते अपि सत्यौ चेत्, सदैव स्ताम् ; न चेत्, न कदाचित् । न च तयोरप्यन्ये अभिव्यक्त्यनभिव्यक्ती संभवतः, अनवस्थानात्, बन्धमोक्षयोश्च पुनः पुनस्तयोर्भावादनिर्मोक्षप्रसङ्गात् । अतोऽज्ञानतन्निवृत्ती मदुक्तप्रकारे एवाभ्युपेये । किंच—अज्ञानं चेत्कार्यम्, तस्य कारणाद्भेदे असत्कार्यवादप्राप्तिः । अभेदे तु कारणे तिष्ठति नाज्ञानं निवर्तेत । निवर्तते चेत्—कारणमपि सहान्यैस्सर्वैः कार्यैर्निवर्तेत, अभेदादेव । न च पुनरुत्पत्तिः, कारणस्य

कारणान्तराभावात् । अस्ति चेत्, तदपि मूलकारणं स्वकार्येणैवं सहाभेदान्निवर्तेत । तथा न कारणोत्पत्तिं विना कार्यस्योत्पत्तिः । अतः कार्यनाशे कारणस्यापि नाशो न्याय्य एव । न च कारणस्योत्पत्तिः, कारणान्तराभावात् । भावे तदपि कार्यैस्सहोत्पद्येत । तदनुत्पत्तौ न किंचिदुत्पद्येत, तदभेदात् । कारणात्कार्याणामभेदे मिथोऽपि भेदो न स्यात् कारणवत् । न हि तत् कारणं स्वतो भिन्नम् । तथा कार्याणामपि तदभेदात् अभेदो न्याय्यः, अन्यथा कारणस्यापि कार्यादभेदात् प्रतिकार्यं भेदप्रसङ्गात् । न चैकस्य निरंशस्य कारणस्यानन्तो भेदो युक्तिमान् । सांशस्य तु कार्यत्वान्न कारणता । कार्यस्यापि कारणता स्यादिति चेत्—तथापि न मूलकारणस्य कार्यता, अनवस्थानात् । तस्याप्यंशास्त्रयो गुणास्सन्तीति चेत्—तस्यापि न मूलकारणता, सांशत्वात् घटादिवत् ॥

त्वयाप्येते दोषाः परिहर्तव्या एवेति चेत्—न, मायावादित्वात् । वस्तुन्येव हीष्टे कार्ये कारणे च एते दोषाः परिहर्तव्याः ; न तु मायायाम्, मायात्वेनैव परिहृतत्वात्—यथानग्नित्वादयो दोषाः गृहस्थादिभिरेव परिहार्या न तु भिक्षुणा, भिक्षुत्वादेव । अत उक्तेन न्यायेन कस्यचिदपि पक्षेऽज्ञानस्य वस्तुत्वे निवृत्त्यसंभवात्तन्निवृत्तेश्च प्रसिद्धत्वान्मदुक्तलक्षणमेवाज्ञानं तन्निवृत्तिश्चेति स्थितम् ॥

रूप्या[1]देश्च ज्ञानबाध्यत्वप्रसिद्धेरज्ञानात्मतैवेति अज्ञान-

[1] CDE (०देर्ज्ञा०) ।

निवृत्तिरेव तन्निवृत्तिरपि ज्ञाननिमित्ता । ज्ञानं ह्यज्ञानमेव निवर्तयितुं क्षमते न तु वस्त्वण्वपि, तथा दृष्टत्वात्; अन्यथा [1]अतिप्रसङ्गाच्च । न च निवर्तनादन्यद्बाधकत्वं ज्ञानस्य प्रसिद्धं संभवति वा, अर्थबोधनमात्रात्मकत्वात् । न च बोधनमेव बाधनम्, सर्वज्ञानानां स्वार्थबाधकत्वप्रसिद्ध्यभावात् । निवर्तकत्वं तु स्वोत्पत्त्यैव ज्ञानस्य । तच्च प्रसिद्धम्, संभावितं च तत् । रूप्याद्यपि ज्ञानबाध्यम् । ज्ञाननिवर्त्यं चेदज्ञानात्मकमेव, अन्यथा तु ज्ञाननिवर्त्यत्वायोगात् । बोधनमेव चेद्बाधनम्, रूप्यमपि तज्ज्ञानबाधितं तव स्यात् । अन्यार्थज्ञानमेव बाधकं तस्य न स्वज्ञानमिति चेत्, तथापि रूप्यादिज्ञानमन्यार्थज्ञानानि च अन्यार्थबाधकानि स्युः । तुल्यमेतत्तवापि अज्ञाननिवर्तकत्वात्सर्वज्ञानानां बाधकत्वप्रसङ्गादिति चेत्, तन्न; न हीच्छामि रूप्यादिज्ञानं बोधकम्, तस्यापि सत्त्वप्राप्तेः । रूप्यादिवत् तज्ज्ञानमप्यज्ञानविलसितमित्युक्तम् । तदुभयं यदज्ञानविलसितं तज्ज्ञानमेव तदज्ञाननिवर्तकं बाधकमुच्यते, नान्यदज्ञाननिवर्तकमपि । यथान्नमेवादन्नन्नाद उच्यते, न तु मृ[2]दमपि—एवं सविलासमेवाज्ञानं निवर्तयज्ज्ञानं बाधकम्, न त्वज्ञानमात्रम् । बाधकादेव [3]सविलासाज्ञाननिवृत्तौ नेदं रजतमित्यादि परामर्शज्ञानम्, न तु रजताद्यभावबोधकम् । परामर्शकाभावे तु तदपि नास्त्येव ॥

नन्वेवं तर्हि ममापि नियमोऽस्त्येव— यद्वि शुक्तेरन्यथा

[1] BCDE (अपि प्र०) । [2] CD (०दपि) । [3] BCD (सुवि...त्तौ) ।

रूप्यात्मना ख्यात्याः सम्यग्ज्ञानं तदेव बाधकज्ञानं तत्पूर्वकं वा शुक्तिरूप्ययोरित[1]रेतराभावग्राहि ज्ञानम्, नान्यत्किंचित् भावज्ञानमभावज्ञानं वा; एवमन्यान्यपि धीबाधकज्ञानानि द्रष्टव्यानीति चेत्, कस्य तर्हि बाध्यत्वम्। रूप्यस्येति चेत्—नास्ति तर्हि, सतोऽबाध्यत्वाच्छुक्तिवत्। सत्यं नास्त्येव शुक्त्यात्मनात्र, स्वात्मनात्वन्यत्र अ[2]स्त्येव इह निषिद्धघटादिवदिति चेत्—तर्हि स्वात्मनान्यत्र सदेव तथैव स्मर्यमाणं रूप्यं प्रतियोगि, अत्र शुक्त्यात्मना रूप्यं नास्तीति नि[3]षेधे; न त्वत्र शुक्त्यात्मना भातम्। अतस्तन्न निषिद्धं स्यात्। यथान्यत्र सतो घटस्येह निषेधे सोऽन्यत्रैव [4]सन् स्मर्यमाणः प्रतियोगी निषेध्यश्च, न पुनरिहैव भातस्सन्—एवमत्रापि। अत्रैव शुक्त्यात्मना ख्यातस्य रूप्यस्य प्रतियोगित्वमिति चेत्—तस्य निषेधेऽपि नान्यत्र सत्त्वं सिध्येत्, शुक्त्यात्मनो रूप्यस्य शुक्तेरन्यत्राहष्टत्वादसंभवाच्च। शुक्त्या[5]त्मना चेत्ख्यातस्य रूप्यस्य प्रतियोगित्वम्, तस्य शुक्तौ निषेधायोगादन्यत्रैव च निषेधादन्यत्रैव तस्यासत्त्वम्। शुक्तौ तु सत्त्वमेव, ख्यातेरबाधाच्च। निषेधो हि बाधस्त्वयेष्टः। निषेधश्चास्य नास्ति। यद्धि यद्रूपं प्रतियोगि [6]न तत्तेनैव रूपेण निषेध्यम्, किंतु रूपान्तरेण। यथा यद्देशादिस्थो घटः प्रतियोगी सोऽन्यत्रैव निषेध्यो दृष्टः, न तु तस्मिन्नेव देशादौ—एवमत्रापि न्याय्यम्।

[1] BD (०रे...नं)।
[2] B (०स्त्ये...दि)।
[3] CD (०षेधेत्)।
[4] BC (सन्...गीर्नि०)।
[5] B (०त्मन...रू०)।
[6] BDE (न...न्ननिषे०)।

यस्मिन्देशे काले च [1]यत् यद्रूपं दृष्टं तत् तत्रैव चेत्तथैव निषे[2]ध्यम्, प्रतियोग्यभावान्निषेधाभावः । न ह्येकरूपस्यैव निषेध्यत्वं प्रतियोगित्वं च युगपत्, विरोधात् । यद्यपि प्रतियोग्येव निषेध्यस्तथापि सता रूपेण प्रतियोगी, असतात्वभावज्ञानविषयः । सतैव चेद्रूपेण निषेध्योऽपि स्यात्, य[3]द्यथास्ति तत्तथा नास्तीति विरोधः प्रसज्येत । न चासता रूपेण प्रतियोगित्वम्, अभावज्ञानात्प्राक् तस्यासत्त्वासिद्धेः । सिद्धौ च पुनरभावज्ञानं व्यर्थमिति न तस्य प्रतियोगित्वम् । अतो न प्रतियोगिरूपस्य निषेध्यत्वम् । अतो यथाप्रतीतं चेद्रूप्यं प्रतियोगिरूपम्, [4]न तत् तथा निषेध्यम्; अन्यथा घटादेरपि तथा निषेधात् प्रत्यक्षादिविरोधः। अविरोधे तु द्वे रूपे वस्तुनो भेदाभेदवत्स्याताम् । अतो रूप्यमपि भावाभावरूपं स्यात्, न पूर्वदृष्टस्य भावरूपस्य निवृत्तिः । रूप्यज्ञानस्याप्रत्यक्षत्वादविरोध इति चेत्—मैवं वोचः, त्वया[5]भीष्टं तज्ज्ञानं स्वार्थबोधकम्। अतोऽपरोक्षार्थं च सत् कथं तत्तवाप्रत्यक्षं स्यात् । भ्रान्तित्वादिति चेत्—न सा भ्रान्तिः, स्वार्थबोधकत्वेन प्रमाणत्वात् घटादिज्ञानवत् । बाध्यत्वादप्रामाण्यमिति चेत्—न बोधकस्य बाध्यत्वं घटज्ञानवदेव। बोधकत्वेऽप्यप्रमाणत्वात् बाध्यत्वमि[6]ति चेत्—तर्हि अप्रामाण्याद्बाधः, बाधाच्चाप्रामाण्यमिति इतरेतराश्रयत्वात् तयोर्नैकमपि सिध्येत् ॥

[1] BC (यद्यद्यद्रू॰) ।
[2] BCDE (निषे...न्निषेधा॰) ।
[3] B (॰द्य...विरो॰) ।
[4] BD (न...था घटा॰) ।
[5] B (॰या...बाधकं) ।
[6] B (॰ति...बाधः) ।

कथं च रूप्यज्ञानस्याप्यन्यज्ञानवत् बोधकत्वे सति अप्रामाण्यं बाध्यत्वं वा। अन्यथाबोधकत्वादिति चेत्, तच्च न; यतो बोधकं चेत्—नान्यथाबोधकं तत्स्यात् प्रमा[1]णज्ञानवत्। रूप्यज्ञानस्यान्यथाबोधकत्वं बाधकज्ञा[2]नाज्ज्ञायत इति चेत्—किं तदेव बाधकस्य ज्ञेयम्, उतान्यत्। तदेव चेत्, अविरुद्धार्थत्वात् न तयोर्बाध्यबाधकभावः। अन्यच्चेत्—अन्यदेव बाधकात् ज्ञेयम्, न तु पूर्वोक्तम्। बाध्यत्वादेवान्यथाबोधक[3]त्वं रूप्यज्ञानस्येति चेत्—न, अस्या व्याप्तेरसिद्धत्वात्। न ह्यन्यथाबोधकमेव बाध्यमिति क्वचित्सिद्धम्। न तावत्स्वार्थापेक्षया अन्यथाबोधकत्वं रूप्यज्ञानस्यापि। अन्यार्थापेक्षया तु तत् सर्वज्ञानानां भिन्नार्थानामस्तीति तेषामपि बाध्य[4]ता स्यात्। न चेत्, नास्यापि सा स्यात्। बाधकापेक्षया अन्यथाबोधकं बाध्यं न सर्वमिति चेत्—तन्न, बाधकासिद्धेर्बाध्यासिद्धेः। सर्वस्य स्वार्थबोधकत्वे ज्ञानस्य, किं कस्य बाधकं स्यात्। ननु प्रसिद्धं बाधकम्—नेदं रजतमिति ज्ञानम्; बाध्यं च—इदं रजत[5]मिति। अतस्तयोर्बाध्यबाधकभाव एव किंकृत इति निरूप्यः, न प्रसिद्धिरपलपनीयेति चेत्—तथापि नान्यथाबोधनात् बाध्यत्वम्, घटादिज्ञानानामपि तत्प्रसङ्गात्। विरुद्धार्थत्वात् बाध्यत्वं नान्यथाबोधनमात्रादिति चेत्—बाधकस्यैव त[6]र्हि बाध्यत्वम्, पूर्वार्थविरुद्धत्वेनोत्पत्तेः; न पूर्वस्योत्तर-

[1] BCDE (॰णा...न्यथा॰)।
[2] BCD (॰नाज्ज्ञाय॰)।
[3] BCDE (॰त्वं...ज्ञानस्याः)।
[4] BDE (॰ता...स्याद्बाधका॰)।
[5] BCDE (॰मित्य...बाधक॰)।
[6] BC (॰र्हिं...विरु॰)।

विरुद्धार्थत्वम्, अविरोधेनैवोत्पत्तेः। तथाप्यर्थविरोधोऽस्तीति चेत्—अस्तु द्वयोरपि बाध्यत्वम्, विरुद्धार्थत्वात्। न चेत्—नैकस्यापि, अविशेषात्। बाध्यस्य बाधकत्वायोगात् एक[1]स्यैव बाध्यत्वं न द्वयोरिति चेत्—अस्तु तर्हि द्वयोरप्यबाध्यत्वं नैकस्यैव, अविशेषात्। विरुद्धार्थयोरेकस्याप्यबाध्यत्वमयुक्तमिति चेत्, एकस्यैव बाध्यत्वमप्ययुक्तमेव विशेषाभावे। पूर्वं बाध्यं तद्विरुद्धमुत्तरं बाधकम्, पूर्वाबाधेनोत्तरस्यानु[2]त्पत्तेरिति चेत्—तर्हि पश्चाद्भावि रूप्यज्ञानं बाधकं स्यात्। तदप्युत्तरेण बाध्यत इति चेत्—तथापि बाधकं च, पूर्वेषां विरुद्धार्थानां सर्वज्ञानानां बाधकत्वात्। एवमुत्तरेषामपि बाध्यत्वम्, यदि तेभ्यः परं रूप्यज्ञानं भवेत्। एवं च सति यतः परं ज्ञानं नास्ति तदेवाबाध्यम्, अ[3]न्यत्सर्वं बाध्यमेव स्यात्। रूप्यज्ञानस्यानिषेधात्मकत्वात् पूर्वाबाधकतेति चेत्—तन्न, विरुद्धार्थत्वात् तद्बाधकत्वोपपत्तेः। निषेधात्मकमपि हि विरोधादेव बाधते, अन्यथा त्वविरुद्धार्थान्यपि बाधेत। नायं पुरुषो न जीवतीति वा भ्रमः सर्वानेव पुरुषजीवतिप्रत्ययान् पूर्वान् निषेधात्मकत्वात् बाधेतैव। अभ्रमस्तु न जीवतीति प्रत्ययो जीवतिप्रत्ययान् सुतरां बाधेत, अबाध्यत्वात् तस्य चान्त्यत्वात्पुनर्जीवतिप्रत्ययाभावात्। अतश्च कदाचिदपि जीवनं न स्यात्। तच्च तवानिष्टम्। अतो विरुद्धार्थत्वादिर्न बाध्यबाधकभावे हेतुः। ननु पुंसो

[1] BCD (०स्यै...योरि०)। [2] BCD (०त्प...र्हि)।
[3] BCD (०न्य...व स्या०)।

जीवने निवृत्ते तत्प्रत्ययेषु च, उपलब्धिलक्षणप्राप्तस्यानुपलब्धौ जीवनाभावज्ञानं तत्रेत्यविरोधस्तत्रेति चेत्—एवमत्रापि रूप्येऽसति तज्ज्ञाने च, प्राप्तानुपलब्धौ रूप्याभावज्ञानं न्याय्यम्। अतोऽत्राप्यविरोध एव युक्तः, अन्यथा तत्राप्येवं विरोधादुक्तदोषप्रसङ्गादन्तवतां प्रागप्यभाव एवेत्युक्तं स्यात्॥

क[1]श्च विरोधो नाम स्वार्थनिष्ठयोर्ज्ञानयोः। न ह्येकस्मिन्नपि रूपरसादिज्ञानानां विरोधस्त्वयेष्टः। नन्वेकस्याप्यनेकानि रूपादीनि भावरूपाणि संभवन्ति, तथा दृष्टत्वात्; न त्वेकस्यैकरूपस्य एकस्मिन्नेव देशे काले च भावाभावौ संभवतः, अन्यत्रादृष्टत्वात्तथा; अतस्तज्ज्ञानयोर्विरोध इति चेत्—तन्न, दृष्ट्यदृष्ट्योस्तज्ज्ञानयोरविरोधात्। तौ चेद्भावाभावौ दृष्टौ, दृष्टत्वादेव एकस्यापि तौ संभवतः [2]रूपादिवत्। अतस्तज्ज्ञानयोर्न विरोधः [3]रूपादिज्ञानवत्। अदृष्टौ चेत्, तज्ज्ञानयोरभावात् न तद्विरोधः। नन्वनेकान्यपि भावरूपाणि संभवन्त्येकस्य; न तु भावाभावौ, अन्यत्रादृष्टत्वात्। नायं दोषः, अन्यत्रादृष्टत्वेऽप्यत्र दृष्टत्वात् संभवत एव। यथान्यत्र सहादृष्टमपि रूपद्वयं नपुंसके दृष्टत्वात् संभवति—एवं रूप्यस्यापि भावाभावाख्यं रूपद्वयं दृष्टं चेत्, संभवत्येव। भावरूपैरप्यनेकरूपता एकस्य दृष्टत्वादेव संभवति चेत्, संभवतु; न पुनर्न्यायतः, एकमनेकरूपं चेति विप्रतिषेधात्पुरस्ता-

[1] BCDE (०श्चतद्विरो०)। [2] E (रूप्यादि०)।
[3] CE (रूप्यादि०)।

न्निरस्तत्वाच्चानेकरूपताया एकस्य। अत एकस्यापि भावस्य भावरूपैरप्यनेकत्वं भावात्मनैकरूपैरपि दृष्टत्वात् संभवति चेत्, किमिति न संभवति भावाभावाभ्यां द्विरूपत्वमेकस्य दृष्टम्। संभवतितराम्, दृष्टत्वात् द्वैरूप्यसंभवाच्च॥

किंच—भिन्नाभिन्नं वस्त्वितीच्छन् भिन्नं भवति न भवति चेति भावाभावरूपं वस्त्विच्छत्येव[1]। येन रूपेण भिन्नं न तेनैव रूपेणाभिन्नं किंत्वन्येनेति चेत्—तथापि एकं रूपि भिन्नं भवति न भवति च, रूपान्तरकल्पनायामनवस्थानात्। नन्वभिन्नमिति भिन्नस्याभावो नोच्यते किंतु तदेवाभेदधर्मकम्, अतो भेदाभेदधर्मकं वस्त्विति भिन्नाभिन्नशब्दार्थः; अतो न भावाभावात्मतेति चेत्—तौ भेदाभेदौ भिन्नौ चेद्वस्तुनः, न तद्धर्मौ वस्त्वन्तरवत्। अभिन्नौ चेत्, धर्मिवन्नतद्धर्मौ। भिन्नाभिन्नौ चेत्—मयोक्तं सिद्धम्, धर्मान्तरकल्पनायामनवस्थाप्राप्तेः। न भिन्नौ, नाप्यभिन्नौ, नापि भिन्नाभिन्नौ वस्तुनो भेदाभेदौ, न च मिथो नाप्यन्यत इति चेत्—अभेदशब्दे नञः कोऽर्थः। यदि भेदादन्यो भेदविरुद्धो वा, तदा भेदाभेदयोर्भेदस्सिद्धः। न हि भेदं विना अन्यत्वविरुद्धत्वे संस्तः। भेदाभावश्चेदभेदः, भेदतदभावावेकत्रैव प्राप्तौ; अतश्च यद्भिन्नं भवति तदेव भिन्नं न भवतीति भिन्नाभिन्नशब्दार्थस्संपन्नः। एवं च सति यत्स्वतोऽन्यदस्वयम्, तदपि स्वयम्; यच्च स्वयम्, तदपि स्वतोऽन्यदस्वयमिति स्वयमन्यच्च स्वयं भवति न भवति च; अन्यच्चान्यत् स्वयं च भवति न भवति चेति

[1] BCE (त्येवम्)।

सर्वस्य वस्तुनस्सर्वदा सर्वात्मना भावाभावाविच्छन् किमिति रूप्यमात्रे तौ नेच्छसि, न चेत्तज्ज्ञाने न स्तः । अथ रूप्यद्वेषादन्यत्रापि तौ नेच्छसि—तर्हि भेदाभेदवादाग्रहं त्यज, तावनिच्छतस्तस्यासिद्धेः । न त्यजामि तम्, तौ च नेच्छामि । न ह्यभेदो भेदस्याभावः; नापि तद्विरुद्धः, सहस्थितेः; किं त्वन्यस्सन्नेव । न चान्यानन्यः । तस्मान्नोक्तदोषप्राप्तिरिति चेत्—एवं तर्हि भेदाभेदयोरभेदहीनयोर्भेदस्येष्टत्वात् भेदवस्तुनोरप्यभेदहीनत्वात् भेद एष्टव्यः भेदाभेदयोरिव । तथा भेदादेव न धर्मधर्मिभावस्तयोः । एवमभेदस्यापि भेदो वस्तुनोऽतद्धर्मत्वं चेष्यताम् । अतो नास्ति भेदाभेदधर्मकं किंचित् । एवमतोऽन्येऽपि धर्मा अभेदहीनाश्चेत्, भिन्ना एवेति न वस्तुधर्मास्स्युः । अतोऽधर्मकमेव वस्तु स्यात् । अथ ते धर्मा भिन्नाभिन्ना इष्यन्ते धर्मत्वसिद्ध्यर्थम्—तर्हि भेदाभेदावपि तथैवेच्छ, नान्यथा तौ धर्मौ स्याताम् । अतश्च मदुक्तं सिद्धम् ॥ नन्वभेदशब्दो न नञ्समासः अक्षादिशब्दवत् । अतो नञर्थत्रयानाश्रयणात् मिथो भेदाभावात् भेदाभेदयोः, न कुतश्चिद्भेदाभेदौ तयोस्स्तः । नाप्यन्येषां धर्माणाम् । अतोऽनयोस्तेषां च धर्मत्वमपि न विरुध्यते । अतो धर्मिणामेवान्योन्यापेक्षया भेदाभेदौ धर्मौ दृष्टौ, न तु धर्माणां कुतश्चिदपीति धर्मिणामेव भिन्नाभिन्नता भावरूपधर्मद्वयवत्तया न पुनर्भावाभावरूपतया; अतो नोक्तदोषप्राप्तिरिति चेत्—तच्चायुक्तम्, भेदाभेदधर्मकवस्त्वभावप्रसङ्गात् । न हि मिथो भेदाभेदहीनानां धर्मधर्मिभावो न्याय्यः धर्माणामिव पर-

स्परम्, अन्यथा धर्माणामप्यन्योन्यं धर्मधर्मिभावस्स्यात् । अतश्च सर्वधर्माणां सर्वधर्मधर्मित्वं सर्ववस्तुधर्माणां च सर्ववस्तुधर्मत्वमित्यनियमो धर्मधर्मिणां स्यात् । ततोऽस्मिन्पक्षे अधर्मकत्वं वस्तुनोऽनियमो वा उक्तस्स्यात् । अतो नायं पक्षस्साधीयान् । अपिचेदं भवान्प्रष्टव्यः—किमेकैको धर्मो भेदोऽन्यो वा । स्वतोऽपि स्वयं न भिन्नो नाप्यभिन्नः ; उत अभिन्न एव, न भिन्नः । यद्यभिन्न एव तदा यस्य भेदो यतो नास्ति तस्याभेदस्ततस्तत्स्वरूपत्वं चैकस्मिन्दृष्टमिति अन्येऽपि भेदहीनास्ततः, तदभिन्नास्तत्स्वरूपाश्च भवितुमर्हन्तीति एक एव धर्मस्स्यान्न द्वितीयो धर्मो धर्मी वा—सर्वेषामेव धर्मधर्मिणां ततो भेदाभावस्येष्टत्वात् । तथा आद्येऽपि पक्षे तत्स्वरूपान्न किंचिदतिरिच्यते—ततो भेदाभेदहीनत्वात् तत्स्वरूपस्य, अन्यस्यापि तल्लक्षणत्वात् सर्वस्य तत्स्वरूपत्वसिद्धेः । अत उभयोरपि पक्षयोरेकमेव वस्तु एकरूपं सिद्धम् । तदपि यदि भिन्नाभिन्नमिष्येत, तदेव तथा अस्ति नास्ति चेति भावाभावरूपमिष्टं स्यात् । अतो भिन्नाभिन्नपक्षाणामयं पक्षः पापिष्ठः । ननु पक्षान्तरेऽप्यनुपपत्तिस्समाना, भेदाभेदयोर्भेदाभेदान्तराभ्युपगमेऽनवस्थाप्राप्तेः । अथोच्येत—अभेदो भेदहीनतैव वस्तुनः न तु [1]धर्मो भेदादिवदिति, तथापि भेदस्य भेदे भेदाभेदे वा अनवस्थानादभेदे च वस्तुमात्रमेवेत्यभिन्नमेकं वस्तु स्यात् ; तत्र कुतो भिन्नाभिन्नत्वेन धर्मधर्म्यादिभाव इति चेत्, सत्यम् ; अत

[1] CDE ( धर्मो भे० ) ।

एवायं पक्षः पापिष्ठ उक्तः—अभेदशब्दस्यानञ्समासत्वम्, अभेदस्य च धर्मत्वम्, तस्य च वस्त्वन्तरापेक्षत्वम्, स्वरूपापेक्षया चाभेदस्याभावो वस्तुनो धर्माणां च, वस्तुनो भेदेनाभेदेन चाभावः तथाप्यस्तित्वम्, स्वपरधर्माणां च भेदाभेदहीनतया अविशेष इत्यादि प्रतीतिविरुद्धं न्यायविरुद्धं चास्मिन्पक्षे बहु कल्पितमिति। अतोऽन्येऽपि पक्षाः पापा एव, अयं तु पक्षः पापिष्ठ इति॥

न चात्र भेदाभेददूषणं साधनं वा प्रस्तुतम्। किंतु भेदाभेदवादिना युगपद्भावाभावावेकस्य वस्तुन एष्टव्यौ, अतो रूप्यस्यापि तौ तस्य न विरुध्येते, तज्ज्ञाने चेत्स्त इत्येतत्सिद्ध्यर्थमेवान्यदुक्तम्। अतस्तत्सिद्धम्। तस्मान्न रूप्यस्य बाधो न्याय्यः तन्निषेधेन, अभेदज्ञानेनेव भेदस्य॥

अथोच्येत—रूप्यस्य मिथ्यात्वात्तज्ज्ञानस्याप्रमाणत्वात्, तद्विरोधित्वान्निषेधस्य प्रमाणतया च बलीयस्त्वात्तेन रूप्यस्य बाधो न्याय्य इति। कुतस्तर्हि तन्मिथ्यात्वं सिद्धम्। बाध्यत्वादिति चेत्—तर्हि बाध्यत्वान्मिथ्यात्वम्, ततस्तज्ज्ञानस्याप्रमाणता, ततो निषेधस्य बलीयस्त्वम्, ततो रूप्यस्य बाध्यतेति पूर्वपूर्वाश्रयत्वादुत्तरोत्तरस्य नैकमपि सिध्येत्। न ह्येषामेकमप्यन्यतस्सिद्धम्। नैवममिथ्यात्वप्रमाणत्वतुल्यबलताबाध्यत्वानामन्योन्याश्रयता, बोधकस्य ज्ञानस्य स्वत एव प्रमाणत्वान्निषेधवत्, तत्सिद्धौ चेतरेषां सिद्धेः; अन्यथा मिथ्यात्वं भेदस्यापि स्यात्, अभेदज्ञानेन बाधात्। भेदाभेदज्ञाने अपि हि इदमस्माद्भिन्नं नेदमस्माद्भिन्नमिति निषेध्यनिषेधात्मनैवेष्य[ष्ये ?]ते, अन्यथा

तयोरेकत्वासंभवात् । तथाहि—यदपेक्षया यत्र भेदज्ञानमभूत्तदपेक्षयैव तत्रैव चेदभेदज्ञानमपि भावप्रमेयं भवेत्, तदपि भेदप्रमेयमेव स्यात् । न भावान्तरप्रमेयम् भेदज्ञानान्तरवत् । न हि यदपेक्षया यत्र दीर्घज्ञानमभूत् तदपेक्षयैव तत्र ह्रस्वज्ञानं स्यात् । तदपेक्षयैव तु तत्र स्थूलज्ञानं स्यादिति चेत्—न, अण्वपेक्षत्वात्तस्य । ह्रस्वापेक्षं च दीर्घज्ञानम् । अतोऽपेक्ष्यं तयोर्भिन्नम्, विषयश्च भिन्नः । भेदाभेदज्ञानयोरप्यपे[1]क्ष्यौ विषयौ च भिन्नौ स्थूलदीर्घज्ञानयोरिवेति चेत्, तर्हि न भिन्नस्याभिन्नता नाप्यभिन्नस्य भिन्नता सिध्येत् । भिन्नं ह्यपेक्ष्य भेदज्ञानं भिन्ने भवतीति इष्टं त्वया । अतो नैवमभेदज्ञानमेष्टव्यम्, अपि त्वभिन्नमात्मानमेवापेक्ष्य तत्रैव भवतीति; अन्यथा तयोरपेक्ष्यविषयाभेदादभिन्नार्थत्वप्रसङ्गात् । एवं च सति भेदाभेदज्ञाने अन्योन्यविषयं नैव स्पृशत इति भिन्नयोरभेदज्ञानं न स्यात् । अत[2]स्तदिच्छता भेदज्ञानप्रतिभातरूपनिषेधात्मकमेव तदेष्टव्यमित्यभेदज्ञानमपि भेदबाधकं स्यात्, यदि रूप्यनिषेधो रूप्यबाधकस्स्यात् । न भेदो बाध्यः, तज्ज्ञानस्य प्रमाणत्वादर्थक्रियाकारितयेति चेत्—तथा रूप्यमपि । अरूप्यस्य रूप्यत्वासंभवात् तद्रूप्यं मिथ्येति चेत्—तन्न, तज्ज्ञानेन तस्य संभावितत्वात् भेदस्येवाभिन्नसंबन्धिनस्तज्ज्ञानेन । किं बहुनोक्तेन । सर्वथा या रूप्यस्य गतिस्सा प्रपञ्चस्यापि प्राप्नोति । अतस्तमिच्छता न रूप्यं बाध्यम् ॥

किंच—रूप्यस्य मिथ्यात्वं त्वयेष्टं न तावदसत्त्वम्,

[1] D (०पेच्यो वि० ) । [2] B (०स्त...भेद०) ।

सत्त्वस्येष्टत्वात् । नापि प्रमाणाभावः, तद्बोधकज्ञानस्येष्टत्वात् । ज्ञानं तस्यास्ति न तु प्रमाणमिति चेत्, ननु ज्ञानमेव प्रमाणम् । सत्यम्, तथापि न सर्वं ज्ञानं प्रमाणं किंतु यथार्थं प्रमाणमयथार्थमप्रमाणमिति चेत्, किमिदमयथार्थत्वं नाम ज्ञानस्य—किमर्थन्यूनत्वमुताधिक्यम् । यदि न्यूनता, तदा न किंचिदपि ज्ञानं सर्वात्मना अर्थं व्याप्नोतीति सर्वमेवायथार्थमप्रमाणं स्यात् । अथाधिक्यम्, तदाप्यर्थशून्यमपि ज्ञानरूपं प्राप्नोति । तच्चानिष्टम् । अयुक्तं च । ज्ञायतेऽर्थोऽनेनेति हि ज्ञानम् ; अतो ज्ञेयार्थाभावे तज्ज्ञानमपि न स्यात् । अतो यावद्यथा चेष्यते ज्ञानं तावांस्तथैवार्थो ज्ञेयोऽस्तीत्यभ्युपेयः, अन्यथा न तत् ज्ञानं स्यात् प्रत्यक्षमपि । अनुमेयं तु दूरोत्सारितं तत् ज्ञानम्, तादृगर्थसंविदभावे तदभावात् । संविदपि तथार्थाभावे न तत्संवित्स्यात् । अतो यद्यपि न कृत्स्नमर्थमेकैकं ज्ञानं बोधयति तथापि यावन्तं बोधयति तावांस्तथैवास्ति । ज्ञानं च नार्थशून्यमस्ति । तस्मादयथार्थज्ञानाभावात् सर्वमेव ज्ञानं यथार्थत्वात् प्रमाणम् । अतो ज्ञानमस्ति चेत्, प्रमाणमस्त्येव रूप्यस्य । नेदं रूप्यमस्तीति चेत्, तज्ज्ञानमपि नास्ति । अस्ति चेत्—रूप्यमप्यस्त्येव, सार्थत्वाज्ज्ञानस्य । नास्ति चेद्रूप्यम्, कथं तदस्तीत्यवोचः । अस्ति रूप्यं न तु शुक्त्यात्मना अस्तीति चेत्—तद्यथा नास्ति रूप्यं तथा तज्ज्ञानमपि नास्त्येव, सार्थत्वाज्ज्ञानस्य । अतोऽसत्त्वाद्रूप्यस्य तज्ज्ञानमप्रमाणमिति न शक्यं वक्तुम्—असतो ज्ञानाभावात्, ज्ञानवतश्च सत्त्वात्, अर्थशून्यज्ञाना-

योगात्। न ह्यभावज्ञानमपीच्छस्यर्थशून्यम्, किं पुनर्भावज्ञानम्। अतस्सत्त्वात् प्रमाणवत्त्वाच्च न रूप्यस्य मिथ्यात्वं सत्यरूप्यवत्। अन्यथा तस्यापि मिथ्यात्वं को निवारयेत्॥

ननु नेदं रजतमिति ज्ञानात् शुक्त्यात्मना रूप्यस्यासत्त्वं निश्चितं तथापि इदं रजतमिति तस्यैव शुक्त्यात्मनैव अस्तित्वमबूबुधज्ज्ञानम्, अतोऽस्याभावेऽपि भावज्ञानमस्तीति चेत्—अस्तु तर्हि पूर्वोक्तं द्वैरूप्यं रूप्यस्य, गत्यन्तराभावादुभयोरपि ज्ञानयोरर्थशून्यत्वानुपपत्तेः। यदि नाम शुक्तिरूप्ययोरैक्यं ज्ञातमपि सत् नास्त्येव तथापि तस्यैवासत्त्वमिथ्यात्वाप्रमाणकत्वानि स्युः; न तु रूप्यस्य, सत्त्वात्तस्य। अथ तस्यापि तानि स्युः, ऐक्याभावात् शुक्तिरूप्ययोः—तर्हि अत एव शुक्तेरपि तानि स्युः। ऐक्याभावाविशेषेऽपि यदि न शुक्तेस्स्युः, रूप्यस्यापि न स्युः। सत्त्वं चेष्टं द्वयोरपि। शुक्तेः प्रत्यक्षेणापि दृष्टत्वात्तानि विरुध्यन्त इति चेत्, रूप्यमपि क्वापि प्रत्यक्षं दृष्टमेव; अन्यथा तस्य सत्त्वायोगात्। शुक्त्यात्मकं तन्नान्यच्च दृष्टमिति चेत्, शुक्तिरपि रूप्यात्मिका न दृष्टैव; अन्यथा अबाध्यरूप्या स्यात्। शुद्धा शुक्तिर्दृष्टेति चेत्, रूप्यमपि तथा क्वापि। भ्रान्तौ दृष्टा शुक्तिः प्रत्यक्षेणापि प्रत्यभिज्ञायते, न तथा रूप्यमिति चेत्—किमतस्तव सिद्धम्। यदि रूप्यस्याप्यैक्यवत् पुनः प्रत्यभिज्ञाभावादसत्त्वम्, रूप्यं सदिति सत्प्रतिज्ञाविरोधः। अथ शुक्तिरूप्ययोर्वैलक्षण्यम्, तथापि तयोस्सत्त्वे—बाधोऽबाधो वा तुल्यो न्याय्यः। तुल्य एवेति चेत्—न; तथा प्रसिद्ध्यभावात्, भवतामपि तथा व्यव-

हाराभावात्। तस्माच्छुक्तिरूप्ययोर्द्वयोरपि सत्त्वे, तदैक्यस्यासत्त्वबाध्यत्वाप्रामाणिकत्वे[?]ऽपि शुक्तेरिव रूप्यस्यापि नासत्त्वादीनि स्युः; अन्यथा शुक्तेरपि तत्प्रसङ्गात्। तस्मान्न रूप्यं बाध्यं शुक्तिवत्॥

नापि तयोरैक्यं बाध्यम्, ऐक्यं नास्तीति ज्ञानाभावात्। नेदं रजतमिति तु ज्ञानम्; तच्च सत्त्वान्न बाध्यमित्युक्तम्। ऐक्यं च ज्ञायते चेत्—अस्त्येव शुक्त्यादिवत्, बाधाभावाच्च। तस्मात्सर्वज्ञानानां प्रमाणत्वात्तव न किंचिद्बाध्यं पश्यामः। नन्वैक्यं बाध्यम्। न चैक्यं नास्तीति ज्ञानाभावो दोषाय, भ्रमानुसारित्वाद्बाधस्य। न ह्यनयोरैक्यमस्तीति ज्ञातभेदयोर्व्यधिकरणतया भ्रमः किंत्विदं रजतमिति सामानाधिकरण्येनैवाज्ञातभेदयोः। अतो नेदं रजतमित्येव बाधो न्याय्यः, न पुनरैक्यं नास्तीति—तदनुरूपभ्रमाभावात्। यदि त्वनयोरैक्यं नास्तीति बाधस्स्यात्—सोऽप्राप्तबाधस्स्यात्, तथा अप्राप्तत्वात्। तस्मादिदं रजतमित्यैक्यभ्रमस्य नेदं रजतमित्येव बाधो युक्तः। अत ऐक्यं बाध्यमिति चेत्, तर्हीदं ब्रूहि—किं शुक्तिरूप्ययोर्ज्ञाते भेदे बाधकज्ञानं स्यात्, उताज्ञात एव। यद्यज्ञाते, तदा किं भेदज्ञानमेव बाधकम्, उतान्यत् अभावज्ञानम्। यद्यन्यत्, तदा भेदस्याज्ञातत्वात् यथाप्राप्तं सर्वमेव बाधेत—रूप्यम्, इदम्, तयोरैक्यं च। तच्चानिष्टम्। अथ भेदज्ञानमेव बाधकम्—तच्चायुक्तम्, अनिषेधरूपत्वात्तस्य। अनिषेधात्मकत्वेऽपि ऐक्यज्ञानविरोधात् भेदज्ञानं तद्बाधत इति चेत्—ऐक्य-

ज्ञानविरुद्धं चेत् भेदज्ञानम्, तदाक्रान्ते विषये न स्यात् भेदज्ञानम्, [1]विरोधादेव। स्याच्चेत्, न तद्विरोधि तद्बाधकं च स्यात्; अन्यथा भेदज्ञानाक्रान्ते विषये पुनरैक्यज्ञानं स्यात्, तद्बाधकं च स्यात्। ननु भेदज्ञानबाधितो रूप्यसर्पाद्यैक्यभ्रमः पुनर्न भवेत्, भवन्नपि दोषवशात् भेदनिश्चयवतो न तं [2]बाधेत—[3]तर्हि ऐक्यनिश्चयवतोऽपि[4] न भेदज्ञानं भवेत्, भवदपि न तं बाधेत। अतस्सोऽपि न भ्रमः। तस्मादैक्यभेदनिश्चययोर्द्वयोरपि ज्ञानत्वाद-संशयात्मकत्वात् स्वार्थाव्यभिचाराच्च प्रमाणत्वान्न बाध्य-बाधकभावो युक्तः, अन्यथा तयोरन्योन्यबाध्यत्वान्नानेक-रूपं किंचित्स्यात्। स्याच्चेत्, न किंचिद्बाध्यं स्यात्। तस्मान्न भेदज्ञानमात्रं बाधकमैक्यज्ञानस्य। अथ ज्ञाते भेदे तयोरितरेतराभावज्ञानमैक्यबाधकम्, तदापि इतरे-तराभावज्ञानानां सर्वेषामेव बाधकत्वप्रसङ्गः। इतरेतर-भावज्ञाने जाते तदभावज्ञानं बाधकम्, नान्यथेति नाति-प्रसङ्ग इति चेत्—कथं भावज्ञानरक्षितं विषयमभावज्ञानं तदगोचरवर्ति अपहरेत्। यदि भावज्ञानगोचर एवा-भावज्ञानमपि वर्तेत, तयोरेकार्थत्वाद्भावज्ञानं तेन दृढी-भवेन्न तु बाध्येत तदेकार्थभावज्ञानान्तरेणेव। भावार्थत्वे चाभावज्ञानस्यापि भावज्ञानतैव स्यात्। तस्मान्नैक-गोचरत्वं भावाभावज्ञानयोः। भिन्नगोचरं चाभावज्ञानं प्राप्तानुपलब्ध्यावभावज्ञानमिव भावज्ञानं न बाधेत।

[1] CD (अविरोधात्)। [2] BCDE (बाध्येत)।
[3] E (न तर्हि)। [4] E (॰पि भे॰)।

ननु प्राप्तानुपलब्धावभावज्ञानं देशकालान्तरेऽभावं बोधयति, इदं तु तत्रैवेति चेत्—तथापि भिन्नार्थं चेत्, तद्वदेव न बाधकम्; अभिन्नार्थत्वे चोक्तम्। तस्मात्—ज्ञानं सत्—न किंचिद्बाध्यमस्ति ॥

अपि चेदं भवान्प्रष्टव्यः—किं शुक्तिरूप्ययोरितरेतरभावो बाध्यः, किं वा इदमंशस्य रूप्यस्य च। न तावच्छुक्तिरूप्ययोः, तयोरितरेतरभावस्याप्रतीतत्वात्। नापीदंरूप्ययोः, तयोरपि भ्रान्तिकाले भेदप्रतीतेरनिष्टत्वादितरेतरभावप्रतीत्यभावात्— भेदापेक्षत्वादितरेतरभावस्य। अतो यदि इतरेतरभावो नाम भवेत्, स भिन्नयोरेव भवेन्न त्वेकस्मिन्नभिन्ने। न ह्येकमभिन्नमितरेतरभूतं वदन्ति। तस्मान्नेदंरूप्ययोरपीतरेतरभावो बाध्यः, अप्रतीतत्वादप्रतीतनिषेधस्य चाबाधकत्वात्। इदंरूप्यांशयोरपि मिथो भेदः प्रतीत इति चेत्, तर्हि इतरेतरभावस्तयोर्न प्रतीत इति नासौ बाध्यः। तथापि तयोरंशी एको भातीति चेत्—भातु, नासौ तयोरितरेतरभावः। अतो [1]न तन्निषेधेन निषेध्यः। न च तयोरंशी नास्तीति निषेधोऽस्ति। तस्मात्स भाति चेत्, सन्नेवेति न [2]निषेध्यं पश्यामः। यदि नामांशी निषेध्यः—तस्य सांशस्यैव निषेध्यत्वाच्छुक्तिरूप्ययोरपि तदंशत्वान्निषेधप्रसङ्गस्तन्निषेधेन, शुक्तिरूप्ययोरतदंशत्वस्य निषेधात् प्राक् असिद्धत्वात् सिद्धत्वे च निषेधानर्थक्यात्। तस्मादंशिबाधकल्पनमनर्थायैवेति न तत् कार्यम्। शुक्तिरूप्ययोरितरेतरभाव-

[1] BCDE (न निषि॰)।    [2] BDE (नैष्वध्यं)।

निषेधेनैव अंशिनोऽपि निषेधसिद्धेः तज्ज्ञानेऽपि नोक्तदोष इति चेत्—न, उक्तोत्तरत्वात्। शुक्तिरूप्ययोर्भेदे ज्ञातेऽज्ञाते च इतरेतरभावज्ञानासंभवात् तन्निषेधोऽप्राप्तनिषेध एवेति न तेन किंचिद्बाध्यमिति ह्युक्तम्। अपि च ज्ञाते भेदे अन्योन्याभावज्ञानमिष्टम्। न च ज्ञातभेदयोर[1]न्योन्यभावस्तदा भाति। नापि पूर्वम्, तदा भेदस्याज्ञातत्वात्। अतोऽप्यन्योन्याभावज्ञानमप्राप्तनिषेधः। भेदज्ञानं चैक्यज्ञानविरोधि चेत्, न भवेदित्युक्तम्। भवेच्चेत्, एकत्वज्ञानाविरोध्येव भवेद्भेदज्ञानम्। तदनुसार्यैव चान्योन्याभावज्ञानम्। अत इदं रजतमिति ज्ञानं सुस्थितमेव, नेदं रजतमिति ज्ञाने जातेऽपि। कथं चैकत्वेन ज्ञातयोर्भेदो ज्ञायेत। भेदज्ञानं हि प्रतियोग्यपेक्षम्। अन्यश्च प्रतियोगी, न हि स्वयमेव स्वस्य। न चाज्ञातभेदः प्रतियोगी यथा न स्वयं स्वस्य। भिन्नः अज्ञातभेदोऽपि ज्ञातः प्रतियोगीति चेत्, दशस्वर्थेषु युगपद्गृहीतेषु नवभ्यो भेद एकैकस्य तेषां युगपज्ज्ञायेत। न च तथा ज्ञायते। अतो नाज्ञातभेदः[2] ज्ञातः प्रतियोगी। यदा त्वज्ञातभेदोऽपि न प्रतियोगी, तदा नतरामज्ञातभेदः ज्ञातैक्यश्च। अतो नेदमंशस्य रूप्यम्, रूप्यस्य वा नेदमंशः प्रतियोगी स्यात्। तयोरन्यतरस्य ज्ञायमानभेदस्य प्रतियोगित्वेऽनवस्था। प्रतियोगिज्ञानं च तयोरेकत्वज्ञानमबाधमानं न जायेत। बाधते चेत्, तदेव तस्य बाधकमिति भेदज्ञानमभावज्ञानं च व्यर्थं स्यात्। तर्हि तदेवास्तु

[1] C (०न्योन्याभा०)। [2] BCD (०दः प्र०)।

बाधकज्ञानमिति चेत्—न स्यात्, अनवस्थानाद्युक्त-हेतुभ्यः। प्रत्यक्षेणैव भेदं पश्यामः, स कथं सर्वथा-पह्नूयेतेति यदि भवतामभिनिवेशः—तथापि नानयोर्भेदः प्रत्यक्षदृश्यः, रूप्यस्याप्रत्यक्षत्वात् असंनिधानस्य तस्येष्ट-त्वात्। तच्च यद्येको भेद उभयधर्मः, यदि वा प्रत्येक-मेकैकः—उभयथापि रूप्यधर्मतया न भेदः प्रत्यक्षदृश्यः, रूप्यस्याप्रत्यक्षत्वात्। यच्च रूप्यस्य बोधकं ज्ञानं तत्तस्या-भेदमेव बोधयति इदमंशात्, न तु भेदम्। अतो रूप्यस्य भेदासिद्धेरभेदस्यैव च सिद्धेरिदमंशात्, तस्य प्रत्यक्षत्वेऽपि इदमंशस्य न रूप्याद्भेदो द्रष्टुं शक्यः। न हीदं रूप्याद्भिन्नम्, रूप्यं त्वभिन्नमेवास्मादिति युक्तम्। अतो नानयोर्भेदः प्रत्यक्षदृश्यः। नाप्यनुमानादिगम्यः, तत्संबद्धलिङ्गाद्यभावात्। अतो भेदज्ञानाभावान्ना[1]न्योन्याभावज्ञानमपि। तस्मादैक्य-मपि न बाध्यम् ॥

कथं च भेदज्ञानमभावज्ञानं वा एकत्वभ्रमनिवृत्तावुप-योगि स्यात्। यदि भेदज्ञानादैक्यभ्रमो न निवर्तेत, अभावज्ञानं तं कथं निवर्तयेत्। तदपि ह्यन्योन्याभावं स्वप्रमेयं बोधयत्तदज्ञानमेव निवर्तयेन्नान्यद्वस्तु। न चाज्ञानमैक्यं तज्ज्ञानं वा। वस्तु च ज्ञानमिष्टम्। अतो नैक्यतज्ज्ञाने अभावज्ञानं निवर्तयति। ऐक्यस्याभावं तज्ज्ञानं बोधयतीति चेत्, अस्ति तर्ह्यैक्यं यतस्तस्याभावो बोध्यते। न ह्यसतोऽभावो बोध्यः। कश्च तस्याभावः। ऐक्यमेव नास्तीति चेत्, कोऽर्थः। तदेव तस्याभाव इत्यर्थः, उत

[1] BC (०न्योऽभा०)।

अभाव एवैक्यमिति। न तावत्तदेव तस्याभावस्स्यात्, भावान्तरमभाव इत्युक्तत्वात्। नाप्यैक्यमभाव एव, भावज्ञानेन भाववत् प्रतीतेरभाववच्चाभावज्ञानेनाप्रतीतेः। अभावश्चेत्स्यात्, अभावज्ञानेन बोध्यं स्यात्; न तु बाध्यं तेन। बाध्यं च तेन ऐक्यमिष्टम्, न तु बोध्यम्। अतो नाभावः। यद्यभावः, कस्यासौ। यदि शुक्तिरूप्ययोः—यदि तयोः प्रागभावः प्रध्वंसो वा, तज्ज्ञानकाले स न ज्ञायेत। अथान्योन्याभावः, तदा नेदं रजतमिति[1] स ज्ञायेत, न त्विदं रजतमिति। भ्रान्तिबाधयोश्च वैपरीत्यमापद्येत। तस्मान्न तयोरभाव ऐक्यम्। नाप्यन्यस्य कस्यचित्, तथा अप्रतीतेः। अभावश्चेत्, प्रतियोगिस्मरणाद्यपेक्षं प्राप्तानुपलब्ध्यावभावप्रमाणेन कस्यचिद्धर्मतया ज्ञायेतैक्यम्। न च तथा ज्ञायत इत्युक्तम्। अतो न प्रामाणिकोऽभावः ऐक्यम्। तुच्छं च नेष्यते अनिर्वचनीयं च। तस्माद्भाव एव। भावात्मना च ख्यातेः। अतस्तस्याभावश्चेत् बोध्यः, अन्यथैव स बोध्यः। न तु यथैक्यं भाति तथैव, तच्च भावख्यातेः। यदि चैक्यमेव तत् अभावः, यदि वाभाव एवैक्यम्—उभयथाप्यभावज्ञानमपि तदेव यथाज्ञातं ज्ञापयतीति तदैक्यज्ञानं सुदृढं स्यात्। तत् अन्यथा बोधयत्यभावज्ञानम्, न तु यथापूर्वमिति चेत्—किं तस्यैव रूपान्तरं बोधयति, उतान्यत्। उभयथापि पूर्वज्ञातस्य रूपस्य न काचित्क्षतिः। तस्य चाभावज्ञानाविषयत्वं सिद्धम्। तस्मात्सदेवैक्यम्। सत्त्वेऽपि तस्य शुक्तिरूप्य-

[1] CDE (०ति न तज्ज्ञाये०)।

संबन्धो नास्तीति चेत्—सोऽपि भावज्ञानेन ज्ञातश्चेत्, ऐक्यवत्सन्नेव । तस्मान्न किंचिदपि भावात्मना ज्ञातमभावज्ञानमपह्नोतुं शक्नोतीति भ्रान्तिनिवृत्तौ तन्नोपयोगि । तथा भेदज्ञानमपि, भेदमात्रनिष्ठत्वादनिषे[1]धात्मकत्वाच्च । अतो निवर्तकाभावादिदं रजतमिति ज्ञानं प्रमा[2]णं सुस्थितम् । तदुक्तम्—'भावाभावधियोरेकमेयत्वे भावधीर्दृढा । तथैव भिन्नमेयत्वे नातो बाध्यास्ति धीर्धिया' ॥ ज्ञानान्तरमुत्पद्यमानं ज्ञानान्तरं निवर्तयतीति चेत्—सर्वज्ञानानां बाध्यबाधकत्वात् भ्रान्त्यभ्रान्तित्वप्रसङ्गः ; भ्रान्तित्वमेव वा सर्वस्य बाध्यत्वात् । तस्मादन्यथाख्यातिवादिनो बाध्यज्ञानाभावान्न काचित् भ्रान्तिः ; सर्वमेव वा ज्ञानं भ्रान्तिस्स्यात् ॥

तथा आत्मख्यातिवादिनोऽपि स्यात्—एकार्थयोर्भिन्नार्थयोश्च बाध्यबाधकत्वायोगात् ; बुद्ध्याकारो रूप्यं बहिर्वद्भातीति तया बुद्ध्या ज्ञातुमशक्यत्वादेकस्या बुद्धेर्निरंशाया ग्राह्यग्राहकत्वासंभवात् ; बुद्धेश्च बुद्ध्यन्तराविषयत्वात्—समत्वात्क्षणिकत्वाच्च ; बुद्ध्यन्तरविषयत्वे च सर्वबुद्धीनामस्वयंप्रकाशत्वादेकस्या अप्यसिद्धेः, स्वयंप्रकाशत्वे च बुद्ध्यन्तरस्य आत्मनश्चाविषयत्वात् बुद्धेः । सैव चेद्बुद्धिर्मदाकारो बहिर्वद्भातीति तदैव जानीयात्, भ्रान्तिर्न स्यात् । न च सान्यदा जानीयात्, क्षणिकत्वात् । न च सा स्वात्मानं रूप्याकारं बाह्यमिव च जानीयात् । न चान्या ताम्, अन्याविषयत्वात् क्षणिकत्वाच्च । तत्र कथं

[1] D (० षेधकत्वा० ) ।   [2] BC (०णामस्तु स्थि० ) ।

भ्रमस्सिध्येत्। न चाविद्या आत्मवद्बुद्धेरप्यस्ति। अस्ति चेत्, तथाप्यनिर्वाच्या नेष्टा। अतस्सती चेत्, सा अन्या अनन्या वा बुद्धेः। अनन्या चेत्—सापि न विषयीभवेत् बुद्धेः, आत्मवत्। अन्यापि स्वसंवेद्या चेत्, तथा। अन्यसंवेद्या चेदविद्या इष्यते, अन्यसंवेद्या घटादयोऽप्येष्टव्याः; तदा आत्मख्यातिर्न सिध्येत्। अथ बुद्धे रूप्याकारता बाह्यता च स्वसंवेद्यैव—किं तदेव बुद्धे रूपम्, उतान्यदप्यस्ति। यदि तदेव—तच्चेन्मिथ्या, कृत्स्नैव बुद्धिर्मिथ्या स्यात्। अथान्यदप्यस्ति रूपममिथ्या—तर्हि तद्वदेव इतरदप्यमिथ्या, बुद्धिरूपत्वात्; अन्यथा तदपि इतरवन्मिथ्या स्यात्। तस्मात्सकलैव बुद्धिर्मिथ्या अमिथ्या वा स्यात्। न त्वस्याः किंचिद्रूपं[1] मिथ्या किंचिदमिथ्येति युक्तम्। मिथ्यारूपमपि स्वसंवेद्यं चेत्—अमिथ्या स्यात्, तथैव ख्यातेः। न हि यत्स्वयं ख्याति तदन्यथा ख्याति। यथा हि ख्याति तथैव तत्। यदि तदन्यथा ख्याति, कथं तज्ज्ञायेत। न हि तदन्येन वेद्यम्, स्वसंवेद्यत्वात्। नापि तदात्मानमन्यथा ख्यातीति विद्यात्, अवेद्यत्वात्। वेद्यत्वे चान्यवेद्यत्वात् स्वसंवेद्यताहानिः। अस्वसंवेद्यत्वे न तद्बुद्धे रूपं स्यात्, तस्या अप्यस्वसंवेद्यत्वप्रसङ्गात्। न ह्येकस्या बुद्धेस्स्वसंवेद्यमस्वसंवेद्यं च रूपद्वयमन्योन्यविरुद्धं संभवति। बुद्धेश्चेत् किंचिद्रूपमस्वयंप्रभम्—अन्यदपि तथैव युक्तम्, बुद्धिरूपत्वात्। स्वयंप्रभं चेत् किंचिद्बुद्धिरूपम्—अन्यदपि तथा, तद्रूपत्वात्। एकरूपैव चेद्बुद्धिः, स्वयंप्रभा अस्वयंप्रभा

[1] DE (०द्रूप्यं)।

वा स्यात् । अस्वयंप्रभैव चेद्बुद्धिः, सर्वबुद्धीनां तथात्वादन्यस्य च स्वयंप्रकाशस्यानिष्टत्वान्न किंचिद्भासेत । तस्माद्बुद्धेस्स्वयंप्रभत्वमिच्छता न जडं रूपमभ्युपेयम् । यस्याश्च तज्जडं रूपं न तया तद्ग्राह्यम्, एकस्या ग्राह्यग्राहकत्वायोगात् । कृत्स्नाया अंशो ग्राह्यश्चेत्, ग्राहकोऽप्यंश एव । तौ च व्यवस्थितौ । अंश्यपि ग्राह्यो ग्राहको वा स्यान्नोभयरूपः, एकस्य द्वैरूप्यायोगात्, अंशान्तरकल्पनायामनवस्थानात् । अतो ग्राह्यो न ग्राहकः, ग्राहकोऽपि न ग्राह्य इति ग्राहकादन्यो बाह्योऽर्थो नापलपनीयः । स्वयंप्रभत्वे च जन्मनाशभेदाशुद्ध्यादयो बुद्धीनां न स्युः, प्रमाणाभावात् । न हि बुद्धिरात्मनो जन्मादि स्वयमेव जानीयात् । नापि भेदं स्वत एव । अन्यतो हि भेदो ज्ञेयः । न चान्योन्यविषयता बुद्धीनाम् । अतस्स्वयंप्रभत्वे बुद्धीनामेका अभिन्ना कूटस्था बुद्धिरेष्टव्या । अथ जन्मादय इष्यन्ते बुद्धीनाम्, अस्वयंप्रभास्सर्वा बुद्धयस्स्युः । ततश्चैकोऽभिन्नोऽनन्तः कूटस्थनित्य आत्मा अभ्युपेयः, अन्यथा जगत आन्ध्यप्रसङ्गात् । तस्मादात्मख्यातिवादिनोऽपि न भ्रमबाधौ संभवत इति स्थितम् ॥

तथा अख्यातिवादिनोऽपि । अख्यातिमात्रं चेत् भ्रमः, सर्वस्सर्वदा भ्रमत्येव—यत्र क्वापि विषये अख्यातेस्सर्वदा विद्यमानत्वादसर्वज्ञस्य सर्वस्य । यान्यथा प्रवर्तयत्यख्यातिः सा भ्रान्तिः, अन्यथाप्रवृत्तिहेतोर्भ्रान्तित्वप्रसिद्धेरिति चेत्—तन्न; न ह्यख्यातिः प्रवर्तयति, सुषुप्तादिष्वप्रवृत्तेः । यद्यप्यन्यथाप्रवर्तमानस्याप्यख्यातिरस्ति तथापि न तस्या-

ख्यातिः प्रवृत्तिहेतुः, सुषुप्तस्याप्रवृत्तेरेव। ख्यातिरपि नान्यथाप्रवृत्तिहेतुः, व्यभिचारादिति चेत्—तर्हि ताभ्यामन्या तद्धेतुर्भ्रान्तिरिष्यताम्॥ का चेयमख्यातिः। किं ख्यातिरेव, उत ख्यात्यभावः। न तावत्ख्यात्यभावः, अभावस्यानिष्टत्वात्। नापि ख्यातिरेव, सर्वख्यातीनां भ्रान्तित्वप्रसङ्गात्। असम्यक्ख्यातिर्भ्रान्तिरिति चेत्—असम्यक्त्वमपि न सम्यक्त्वाभावः, अभावस्यानिष्टत्वात्। सम्यक्त्वमेव चेदसम्यक्त्वम्, सम्यक्ख्यातिरेवासम्यक्ख्यातिः। अतस्सम्यक्ख्यातिर्भ्रान्तिरिति विप्रतिषिद्धमुक्तम्[?]। ख्यातिश्चेद्भ्रान्तिः, सा केन बाध्येत। न हि ख्यातिः ख्यातिं बाधते, अतिप्रसङ्गात्। न चाख्यातिर्नास्ति। अख्यात्यभावे च सर्वो जनस्सर्वदा सर्वज्ञस्स्यात्। सर्वप्रमाणानां चानर्थक्यम्, अज्ञातार्थाभावात्। न च ज्ञातमेव ज्ञापयन्ति प्रमाणानि, अनवस्थाप्राप्तेः। तस्मान्नाख्यातिवादिनः काचिद्भ्रान्तिः, सर्वा वा ख्यातिर्भ्रान्तिस्स्यात्॥

तथा असत्ख्यातिवादिनोऽपि। असच्चेद्रूप्यं बुद्ध्या ज्ञायते, तदसदात्मनैव ज्ञायेत; सदात्मना तु ज्ञायते। अतो न तदसत् ख्याति, किंतु सदेव। तस्यासत्त्वं बाधकज्ञानं बोधयतीति चेत्—तस्यासत्त्वं नाम किं तदेव, किं वा तस्यैव रूपान्तरम्, उतान्यत्। त्रिधापि न तस्य क्षतिः। तथाहि—तदेव चेत्, बाधकमपि तदेव सद्रूपं दृढीकुर्यात्। रूपान्तरमपि हि तस्य तस्मिन् सत्येव भवेत्। तथा ततोऽन्यदपि। एकस्य द्वे रूपे विरुद्धे इति चेत्—मा भूत्तर्ह्यसद्रूपम्, [1]पूर्व-

[1] CDE (सर्वप्र०)।

प्रतिपन्नसद्रूपविरोधात्। सद्रूपं चाविरोधेनैव पूर्वं प्रतिपन्नत्वात् सुप्रतिष्ठितम्। अतो न तन्न भवेत्। यदि न भवेत्, असद्रूपमपि न तस्य स्यात्। नापि तत्संबन्धि तत् बोध्येत। अतस्तदसद्रूपं तस्य भावे चेन्न भवेत्—न भवत्येव, अभावे तस्याभावात्। कश्च विरोधः प्रमाणं चेद्द्वे रूपे एकस्य बोधयति। प्रमाणमपि विरुद्धं न बोधयतीति चेत्, असत्त्वबोधकमेव तत् न बोधयेत्। सत्त्वबोधकं त्वविरोधेन पूर्वमेवाबूबुधत्। अतस्सत्त्वमेव रूप्यस्य नासत्त्वम्। अतो न तस्य रूपान्तरमसत्त्वं बोध्यते। तच्च यदि तदेव बोधयेत् बाधकः, यदि वा ततोऽन्यत्—उभयथापि तत् स्थितमेवेत्युक्तम्। ननु तदेव बोध्यते किंतु तन्नास्तीति, अतस्तन्नास्तीति चेत्—नास्तीत्यपि तत्स्वरूपमेव चेत् बोध्यते, तत्स्थितमेव। अथान्यो नास्त्यर्थः, तथापि स्थितमेव। अन्यस्मिन्नपि नास्त्यर्थे बोधिते रूप्यमसत्स्यादिति चेत्—न तावत्तज्ज्ञानं रूप्यमभावीकरोति, अकारकत्वात् ज्ञानस्य; अन्यथा अतिप्रसङ्गात्। अतो बोधकमेव ज्ञानम्। अज्ञानं तु निवर्तयेत्। न च नास्त्यर्थाज्ञानजं रूप्यमिष्टम्। अतो यद्यपि नास्त्यर्थं रूप्यसंबद्धमपि बोधयेत्, तथापि न रूप्यमसत्स्यात्, ज्ञानस्य ज्ञेयानाशकत्वात्। नास्त्यर्थ एव रूप्यबुद्ध्या गृह्यत इति चेत्—तन्न, नास्तीत्यप्रतीतेरस्तीति च प्रतीतेः। अतो नास्तिबुद्धिर्न रूप्यं स्पृशति। असदेवास्तीति भातीति चेत्—तन्न, तथात्वे प्रमाणाभावात्। भावेऽपि तत् सत्त्वं, बाधकवदेव न वारयेत्। किं तदसत् यत्सदात्मना ख्याति। सदन्तरं चेत्,

प्रत्युक्तम्। नाहमसत्सदन्तरं वच्मि किंतु तुच्छमिति चेत्, तुच्छशब्दोऽल्पादौ प्रयुज्यमानो दृश्यते। तदेव किं तुच्छम्, उतान्यत्ते मतम्। निस्स्वभावं तुच्छमिति चेत्, न तादृक्-समस्ति किंचित्। तदपि हि नास्तिज्ञानमेयं चेत्, तदेव तस्य स्वरूपं यन्नास्तिज्ञानमेयमस्तिज्ञानमेयाद्विलक्षणम्। मेयं चेत्, तदप्यतुच्छं घटादिवत्। तेऽपि तुच्छा इति चेत्—न, उक्तलक्षणाभावात् तेषाम्। घटादितुल्यलक्षणं चेत् तुच्छम्—तदप्यस्त्येव, तेषां सत्त्वात्। अतोऽसत्सदा-त्मना ख्यातीत्युक्तेस्सदेव सदात्मना ख्या[1]तीत्यर्थस्स्यात्। अतो न का[2]चिदसत्ख्यातिर्भ्रान्तिः, सत एव सदात्मना ख्यातेस्सदन्तरात्मना ख्यातेरनिष्टत्वात् प्रत्युक्तत्वाच्च। अतो यदि भ्रान्तिरिष्येत, असत्ख्यातिरेव सा इष्यताम्। अथवा—असत् ख्यातीति इयमेव भ्रान्तिस्त्व[3]यैष्टव्या, असतोऽख्यातेः। ख्यातौ चोक्तो दोषः। यद्यसदपि मेयं [4]स्यात्, असदपि मानं किं न स्यात्। स्याच्चेत्, सदैवासतः ख्यातिस्स्यात्। सा चेद्भ्रान्तिं नुदेत्, तस्यास्सदा भावान्न कदाचिदपि भ्रान्तिस्स्यात्। असदपि चेन्मानं स्यात्, सत्ख्यातिरपि सदैव स्यात्। सदसत्ख्यात्योश्च विरोधे नैकापि स्यात्, अविशेषात्। अविरोधे द्वयमपि सदैव स्यात्। मानाभावे किं ख्यापयेदिति चेत्, मेयाभावे किं ख्याति। असदपि ख्याति चेत्, असदपि ख्यापयतु। नन्वसत्त्वेन भाति, कथं तद्व्यवहारः। तद्व्यवहारश्चेदस्ति,

[1] BCDE (भाती०)। [2] CD (०चित्सत्ख्या०)।
[3] E (०येष्टव्या)। [4] CDE (स्यादपि मा०)

कथं[1] तन्नास्ति। तच्चेदस्ति, कथं तत्र नास्तीति बुद्धिः; न हि सति घटे सा अस्तीति चेत्—बुद्धिश्चेदस्ति, बोध्यं न तुच्छं घटादिवदित्युक्तम्॥ कस्तर्हि नास्तिबुद्धेर्विषयः। न हि तुच्छं विषयमिच्छसि। न च सन्नास्तिबुद्धेर्विषयः, अस्तिबुद्धिविषयत्वात्तस्य। न च निर्विषयां बुद्धिमिच्छसि। अतो वाच्यस्तद्विषयः। उच्यते—यो न सन्नापि तुच्छस्स तस्या विषयः। ईदृगर्थोऽप्रसिद्ध इति चेत्—मैवं वोचः, अनयैव बुद्ध्या प्रसिद्धत्वात्। न ह्यस्याः सत्तुच्छौ विषयौ। नापीयं निर्विषया। अतस्स प्रसिद्ध एव॥ भावान्तरं भावान्तरधर्मो वा नास्तिबुद्धेर्विषय इति चेत्, अस्तु यदि सोऽप्युक्तलक्षणः। स यदि प्रमाणवान्, वस्तु; अन्यथा अवस्तु स्यात्। सोऽप्यभावो न रूप्यात्मना ख्याति, असद्रूप्यमित्यसदधिष्ठानतया रूप्यस्याप्रतीतेरिदं रूप्यमितिवत्। नापीदमंशोऽभावात्मना ख्याति, इदं नास्तीत्यप्रतीतेः। तस्माद्ज्ञानं भ्रा[2]न्तिं तन्निवृत्तिं चेच्छद्भिर्मदुक्त एव मार्ग आश्रयणीयः, अन्यथा तदसिद्धेर्दर्शितत्वात्॥

'अस्तिनास्तिधियोरेकमेयत्वे सुदृढास्तिधीः। तथैव भिन्नमेयत्वेऽसच्चातुच्छं मितत्वतः॥ नात्मप्रभं विनाज्ञा[3]नभ्रान्तिबाधादि सिध्यति। तच्चानन्तमतो भ्रान्तौ शून्यविज्ञानवादिनौ॥' 'ख्यात्यख्याती पृथक् चेत्तेऽस्त्यभावोऽप्यपृथग्यदि। ख्यातिस्सर्वा भ्रमो नो वा भ्रमशास्त्रं वृथा तदा॥'

यदुक्तमख्यातिवादिना अनिर्वचनीयस्यापि सद्रूप्यरूपेण

[1] BCE (०थं ना०)। [2] E (भ्रान्तित०)।
[3] E (०ज्ञानं भ्रा०)।

ख्यात्यभ्युपगमे असत्ख्यातिप्रसङ्गः, अनिर्वचनीयस्य सद्रूप्यरूपाभावादिति—तदपि परिहृतम्, रूप्यस्य तेनैव रूपेणासत्त्वे प्रमाणाभावप्रदर्शनेन। किंच—सद्रूप्यात्मना ख्यातौ सत्ख्यातिप्रसङ्गो वाच्यः, न पुनरसत्ख्यातिप्रसङ्गः। रूप्यस्य सत्त्वेनानिर्वाच्यस्य सद्रूपं नास्तीति चेत्—तदेव चेत्तथा भाति, कथं तत्तस्य रूपं नास्तीति ज्ञायते। यस्य चाभावो नास्ति स कथमेवं जानीयात्। नाहमेवं जाने त्वन्मतमेवाश्रित्य वदामीति चेत्, ममापि नैवं मतम्—नानिर्वचनीयस्यैतद्रूपमस्तीति। अभावप्रमाणवाद्यपि नैवं जानीयात्, रूप्यस्यासत्त्वे तस्यानिर्वाच्याज्ञानसंबन्धाभावे वा प्रमाणाभावात्। न हि तद्रूप्यं यथा भाति तथा निषेद्धुं शक्यमित्युक्तम्। न चान्यथा निषेधोऽस्ति इष्यते वा। न चान्यथा तस्य सत्त्वे प्रमाणमस्ति। तथैव च सत्त्वं नेष्यते, बाधात्। अतो रूप्यमनिर्वाच्यम्। अतस्तस्याज्ञानस्य च स्वरूपे संबन्धे च प्रमाणाभावात्तदभावोऽपि न प्रमाणगम्यः। तस्मादज्ञानतत्कार्ययोर्भावाभावप्रमाणास्पृष्टत्वादतद्रूपत्वात्, अज्ञानकार्यं सज्जायते, उतासत्; अज्ञानमपि तथैव भवदन्यथा भवति, उतान्यथा भूत्वान्यथा भवति; किं भवदेव तन्न भवति, उताभूत्वा तन्न भवति; तन्निवृत्तिश्चाभावो भावो वा—इत्यादयो भावाभावसंस्पर्शिनो विकल्पा भावाभाववस्त्विव नाज्ञानतत्कार्ये ढौकन्ते। क्रियमाणा अपि ते न तयोः क्षतिमावहन्ति आकाशस्येव मुष्टि[1]घाताः। तस्मादनिर्वचनीयस्यैव

[1] CD (०घातात्)।

कार्यकारणभाव उपपन्नः, सर्वेषां वस्तुधर्माश्रयाणां दोषाणां तत्राप्राप्तेः—अवस्तुत्वात्। अनिर्वाच्यं चेद्रूप्यं कथमस्तीति भातीति चेत्, भ्रान्तित्वाददोषः। अनिर्वचनीयस्य च तद्रूपासत्त्वे प्रमाणाभावात् नासत्ख्यात्याशङ्केत्युक्तम्। अतो भ्रान्तौ यावत्किंचिद्भाति तस्य सर्वस्य भावेऽभावे च प्रमाणाभावादनिर्वचनीयतैवेति सिद्धम्। अन्येषां तु ज्ञातस्य रूप्यादेर्बाधासंभवस्योक्तत्वाद्भ्रान्त्यसिद्धेः भ्रान्त्याप्यन्यथाख्यानं न सिध्येत्। मत्पक्षे तु रूप्यादेरज्ञानजत्वादज्ञानमात्रशरीरत्वाच्च तज्ज्ञानानां च तथात्वाच्छुक्त्यादिज्ञानेभ्यस्तदज्ञानतत्कार्यनिवृत्त्युपपत्तेश्शुक्त्यादिज्ञानानां बाधकत्वम्, रूप्यादिप्रतिभासानां च भ्रान्तित्वं बाध्यत्वात्सिद्धम्। अतः प्रत्यक्षबाधस्य एवंप्रकारत्वादनुमानादिबाधा अप्येवंप्रकारा एव द्रष्टव्याः, अन्यथा तेषामप्युक्तेन न्यायेन बाधकत्वायोगात्। तत्र लिङ्गाभासाद्युत्थभ्रमस्सम्यग्लिङ्गाद्युत्थेन ज्ञानेन निवर्त्यः। अपरोक्षभ्रमस्त्वपरोक्षज्ञानेनैव निवर्त्यः, न तु परोक्षज्ञानेन लिङ्गाद्युत्थेन। अत एवानुमानादिना निर्ज्ञातचन्द्रादितत्त्वानामपि द्विचन्द्रदिग्भ्रमादयो न निवर्तन्ते, अपरोक्षज्ञानं विना। तेन तु निवर्तन्ते, विनाप्यनुमानादिभिः। अनुमानादयश्चापरोक्षेऽप्यर्थे प्रवर्तन्ते। अतस्तैश्चन्द्रादितत्त्वं प्रतिपद्य द्विचन्द्रादेस्तत्प्रतिभासस्य चानिर्वचनीयाज्ञानशरीरमात्रत्वं प्रतिपद्यते, प्रत्यक्षबाधे तथा व्युत्पत्तेः। न त्वभावं द्विचन्द्रादीनां वेत्ति, उक्तहेतुभ्यः। प्रत्यक्षबाधे चान्यथैव व्युत्पत्तेः। तत्र ह्ययथार्थप्रतिभासस्य तदर्थस्य चार्थयाथात्म्याज्ञानजत्वं तज्ज्ञानहेयत्वं

च प्रतिपन्नम्, न पुनरभावज्ञानहेयत्वं भ्रान्त्यर्थस्य। अत इहापि तथैव युक्तं प्रतिपत्तुं चन्द्रादीनामेकत्वादौ ज्ञाते। न चैकत्वादिज्ञानं विना द्विचन्द्रादिज्ञानानां भ्रान्तित्वं ज्ञातुं शक्यम्। न च द्वौ चन्द्रौ, नेयं प्राची दिक्—इत्येतावदेवाप्तवाक्यं यद्यपि भवेत्, तथापि पूर्वोक्तव्युत्पत्तिबलादनिर्वाच्यतैव चन्द्रद्वित्वादेः प्रतीयते न त्वभावः। 'नेह नानास्ति' इत्यागमवाक्यस्याप्येवमेवार्थो ग्राह्यः। तस्माद्द्विचन्द्रादिभ्रमस्यापरोक्षत्वादपरोक्षज्ञानेनैव निवृत्तिः। एवमात्मनोऽब्रह्मत्वभ्रमस्यापरोक्षत्वात् अपरोक्षज्ञानमेव श्रौतं तन्निवर्तयति। शाब्दमपि ज्ञानमपरोक्षार्थं भवति, अपरोक्षात्मविषयत्वात्—यथा आत्मनस्स्वयंप्रकाशताव्युत्पादकं पौरुषेयं वाक्यम्। प्रागप्यपरोक्षज्ञानात् ऐकात्म्यपरत्वे श्रुतेर्निश्चिते, भेददर्शनस्य प्रत्यक्षाभिमतस्यापि भ्रान्तित्वं ज्ञातुं शक्यम्—यथा अनुमानादिभिश्चन्द्रैकत्वे निश्चिते चन्द्रभेददर्शनस्य प्रत्यक्षाभिमतस्यापि भ्रान्तित्वं ज्ञायते प्रागप्यपरोक्षबोधात्। न च प्रत्यक्षविरोधाशङ्का। अत्राप्येवं द्रष्टव्यम्। 'नेह नानास्ति', 'इन्द्रो मायाभिः', 'मृत्योस्स मृत्युम्' इत्यादिवाक्यैः, अनिर्वचनीयत्वव्याप्तैराद्यन्तवत्त्वादिभिर्हेतुभिश्च जगतो मायामयत्वमवगम्यत इत्युक्तम्। अतोऽस्मत्पक्षे अज्ञानजत्वात् भ्रमस्य ज्ञाना[1]न्निवृत्तिर्युक्ता॥

अन्ये त्वज्ञानजं भ्रमं नेच्छन्ति। अतस्तेषां भ्रान्तिबाधौ न संस्तः। इष्टोऽप्यज्ञानजो भ्रमोऽसत्ख्यातिवादिनो न सिध्येत्, असति अज्ञानाभावात्। ज्ञानाभावाच्च न बाधः।

[1] BCDE (०नानिवृ०)।

तथात्मख्यातिवादिनोऽपि। न हि बुद्धिस्तया अन्य[1]यापि बुद्ध्या ज्ञायत इत्युक्तम्। अज्ञानं च निरस्तम्। इतरयोरपि वादिनोरज्ञानजं भ्रममिच्छतोस्स्वपक्षहानिरित्येषोऽर्थः 'सत्त्वेन भ्रान्तिबाधौ स्ताम्' इत्यादेश्श्लोकस्य। अयं च श्लोक उत्तरग्रन्थस्य सूचभूत इति वक्ष्यमाणोऽप्यर्थः कश्चित्संक्षेपतो दर्शितोऽत्र। अतो नानेन पौनरुक्त्यमुत्तरग्रन्थस्य चोदनीयम्। विवरणस्य तु पौनरुक्त्यं न दोषाय, अस्य तदर्थकथनपरत्वात्॥

तत्रैषा अक्षरयोजना—यथा भाति तथा रूप्यस्य सत्त्वे सत्यरूप्यस्येव न बाधः। अतो न भ्रान्तिसिद्धिः। तथा असत्त्वे न ख्यातिः, उक्तहेतुभ्यः। ततो न बाधस्स्यात्। न सर्वं रूपमसत् किंचित्त्वस्य रूपमसदिति चेत्, यद्रूपमसत्तन्न ख्याति; अतो न भ्रमः। अथोच्येत—नासत्तुच्छं वदामः किंतु सदन्तरं तद्धर्मो[र्मं?] वा अभावप्रमाणप्र[2]मेयम्; अतस्तत्ख्यातीति। तथापि नास्तीत्येव ख्यातेर्न भ्रान्तिख्यातिः। तदसत्सद्रूपेण भातीति चेत्, तस्य तत्सद्रूपमस्ति वा न वा। अस्ति चेत्, अबाधान्न भ्रमः। नास्ति चेत्—नास्तिख्यातिस्स्यात्; न वा, न तु भ्रमः। असतस्तत्सद्रूपं नास्ति तथाप्यस्तीति भातीति चेत्—किं तत्सद्रूपं स्वरूपेणापि नास्ति, उत तस्य असता संबन्ध एव नास्ति। उभयथाप्युक्तमेवोत्तरं द्रष्टव्यम्। अतोऽसत्त्वे न सत्ख्यातिरिति भ्रमो न स्यात्। यदि नाम सत्ख्यातिस्स्यादसत्यपि, तथापि न बाधस्स्यात् पूर्वोक्तेन न्यायेनेति 'नासत्त्वे ख्याति-

[1] CD (॰न्यया बु॰)। [2] CDE (॰मेयः तत्ख्या॰)।

बाधकौ' इत्युक्तम् ॥ अथवा आद्यः पादः सत्पक्षदूषकः—यथा भाति तथा सत्त्वे रूप्यस्य न भ्रान्तिस्स्यात्; स्याच्चेत् किंचिद्रूपमसदिति, तथापि न सत्त्वेन ख्यातस्य बाध इति। द्वितीयः पादोऽसत्पक्षदूषकः—असतः ख्यात्यसंभवान्न भ्रमस्स्यात्; रूप्यस्यातुच्छत्वाद्भ्रमस्स्यादिति चेत्, तथापि तुच्छस्याख्यातेर्न तद्बोधस्तद्बाधकस्स्यात्; अतस्तुच्छं रूप्यात्मना ख्यातमिति न ज्ञानं स्यादिति। अथवा—असत्त्वान्न ख्यातिरतो न बाधश्चेत्यर्थः ॥ अथवा—द्वावपि पादावसत्पक्षदूषकौ। तत्कथम्। यद्रूप्यं भाति तत्किं तुच्छं भाति, उत सद्रूपम्। तुच्छं चेत्, न भ्रान्तिख्यातिबाधकौ। सद्रूपं चेत्—तद्रूपं तुच्छस्यास्ति, उत न। सत्त्वे न भ्रान्तिबाधौ स्ताम्, सत्पक्षवदेव। असत्त्वेऽपि न तदात्मना तुच्छस्य ख्यातिः। नापि बाधकः। सद्रूप्यरूपं तुच्छस्य नास्ति तथापि तत्तदात्मकं भातीति चेत्—सा किं तदात्मता तुच्छस्य तुच्छैव, उत सती। यदि सती—सा किं तुच्छस्यास्ति, उत न। त्रिधापि पूर्ववदुत्तरं योज्यम्। तस्य सा नास्ति तथापि तत्संबन्धो भातीति चेत्—संबन्धोऽपि त्रिधा विकल्प्यः, पूर्ववदुत्तरं च योज्यम्। रूप्यमप्यसत् सद्रूपं भातीति चेत्, तत्राप्येष एव न्यायः ॥ सत्पक्षेऽपि बाध्यो योऽंशस्सोऽपि सत्त्वेन चेद्भाति—इतरांशवदबाध्यः संश्च, अन्यथा इतरस्यापि बाध्यत्वादसत्त्वप्रसङ्गात्। न च तयोर्बाधात्प्राग्भेदस्सिद्धः। ततो द्वयोर्बाधोऽबाधो वा स्यात्। ज्ञातेऽपि भेदे सत्त्वेन चेद्द्वयं भाति, बाधोऽबाधो वा द्वयोस्तुल्यस्स्यात्। शुक्तिरूप्ययोर्भेदज्ञानात् तदभेदो बाध्य इति

चेत्—ज्ञातेऽपि भेदे तयोरभेदस्सत्त्वेन भाति चेत्, न तस्यापि तयोरिव बाधो युक्तः; अन्यथा तयोरपि बाधोऽविशेषात्स्यात्। भेदज्ञाने चेदभेदो न स्यात्, सोऽज्ञानमेव स्यात्; अन्यथा तस्यापि तयोरिव ज्ञानादनिवृत्तेः। बाध्यांशस्यापि चेज्ज्ञानमस्ति, इतरांशज्ञानवत् सदर्थम्; अन्यथा तदप्यसदर्थं स्यात्, अविशेषात्। सर्वज्ञानानां च ज्ञेयशून्यत्वे न बाध्यबाधकभावः। ज्ञेयवत्त्वे च तथा। असत्त्वेन चेद्भाति बाध्यांशः, तस्य वा ज्ञानं नास्ति, तद्वा ज्ञेयशून्यम्—तदा भ्रान्तिः का, को वा बाधस्तस्य। ज्ञानं ज्ञेयशून्यं चेति विप्रतिषिद्धम्॥ अख्यातिपक्षेऽपि यथाज्ञानं ज्ञेयसत्त्वे न भ्रान्तिबाधौ स्ताम्, असत्त्वे नतराम्। यथाज्ञानं ज्ञेयसत्त्वेऽप्यविवेको भ्रम इति चेत्, अविवेकोऽपि ज्ञानं ज्ञेयो वा। ज्ञानं चेत्, तद्यथार्थमेवेति न भ्रमः। ज्ञेयोऽपि ज्ञातोऽज्ञातो वा। उभयथापि न स भ्रमः ज्ञेयान्तरवत्। ज्ञानज्ञेयाभ्यामन्यश्चेत्—सोऽपि नानिर्वाच्यः, अनिष्टत्वात्। अतस्स्वयंप्रभ आत्मा फलं वा स्यात्। उभयमपि न भ्रमः। तस्मात्पक्षान्तरेषु भ्रान्तिबाधयोरसंभवात्तयोश्च प्रसिद्धत्वात् सदसत्त्वाभ्यामनिर्वचनीयाविद्यैव इदं रजतमित्यादिभ्रान्तिज्ञानं तज्ज्ञेयं चेति सिद्धम्। एषाक्षरयोजनादिक्॥ अथवा—सत्त्वे रूप्यादेर्न भ्रान्तिबाधौ। तदंशस्य सर्वस्य वा असत्त्वे ख्यात्यभावान्न भ्रान्तिबाधौ। अतोऽनिर्वाच्याविद्यैव भ्रमास्तदर्थाश्चेत्येतावानेवास्य श्लोकस्यार्थः। अन्यस्त्वस्यैव समर्थनार्थमुत्तरग्रन्थार्थ एवाचोक्तः प्रतिपत्तिसौकर्यार्थम्॥ ९॥

यावत्तु बाध्यते तावद्भ्रान्तं सर्वं न बाध्यते।
साधिष्ठानो भ्रमस्तस्माद्युक्तो बाधो हि सावधिः॥ १०॥

ननु यद्यविद्यैवेदं रजतमिति ज्ञानं ज्ञेयं च—तदा सर्वस्यैव ज्ञानाद्बाधस्स्यान्न वा कस्याप्यंशस्य, अविशेषात्। ननु भ्रान्तेस्तज्ज्ञेयस्य चाविद्या[1]त्वमुक्तम्। सत्यम्, एकं ह्येदं भ्रान्तिज्ञानमिदं रजतमिति न द्वे; अतस्सर्वस्यैव बाधोऽबाधो वा स्यात्। न च सर्वस्य बाध इष्टः, नापि युक्तिमान्। न हि निरवधिको बाधो निरधिष्ठानश्च भ्रमस्संभवति। न हि भिन्नविषययोर्ज्ञानयो रूपरस-ज्ञानयोरिव बाध्यबाधकभावो युक्तिमान्। अतो यस्मिन्नर्थे भ्रमस्तत्रैव बाधोऽपि न्याय्य इति न सर्वबाधो युक्तिमान्। अथेदं रजतमिति सदसदंशार्थे द्वे ज्ञाने सम्यग्भ्रान्तिरूपे इष्येते, तदापि न भ्रान्तेस्तद्विषयस्य च सर्वात्मना बाधः उक्तेन न्यायेन। अथैकमेव ज्ञानं भ्रान्ताभ्रान्तरूपम्, तदापि सदात्मना ख्यातेरविशेषात् सर्वस्यैव बाधोऽबाधो वा पक्षान्तरवत्त्वत्पक्षेऽपि स्यादिति चेत्—तन्न, विशेष-भावात्। न तावदिदं रजतमित्यस्य सर्वस्य ज्ञानस्य ज्ञेयस्य चाविद्यात्वमुक्तम्, अपि तु तयोर्भ्रान्तांशस्यैव। वेद्यैस्सह भ्रमा अविद्येति ह्युक्तम्। न च सर्वस्य भ्रान्तित्वम्। यावद्धि बाध्यते तावदेव भ्रान्तम्। न च सर्वं बाध्यत उक्तेन न्यायेन। न च न किंचिदपि बाध्यते, भ्रान्तिबाधप्रसिद्धि-विरोधात्। न च पक्षान्तरवन्मत्पक्षेऽपि सर्वस्य बाधोऽबाधो वेत्ययं दोष आशङ्कितुमपि शक्यते। न हि ज्ञानप्राप्तं

[1] E (०द्यार्थमु० )।

रूप्यादि ज्ञानान्तरं निषेधति, प्रकारान्तरेण वा ज्ञानप्राप्तं ज्ञानान्तरं बाधते—इति मत्पक्षः; किंतु अज्ञातमर्थं बोधयत् ज्ञानं तदज्ञानं निवर्तयति, तन्निवृत्तौ च तज्जं रूप्यादि निवर्तते तन्तुनिवृत्ताविव पट इति। अतो न मत्पक्षे ज्ञानप्राप्तं ज्ञानान्तरेण बाध्यते। यस्य तु तथा तस्यैव विरोधादबाधः, सर्वस्य वा अविशेषात् बाधः प्रसज्यते। कथं च मत्पक्षे सर्वबाधाशङ्का। अर्थं ह्यज्ञातं बोधयत् ज्ञानं तदज्ञानतत्कार्ये एव बाधते मम। अतो मत्पक्षे बोध्यत एवार्थो ज्ञानेन, न बाध्यते हि अणुमात्रो-ऽपि। यस्य त्वर्थो बाध्यस्तस्यैव सर्वार्थबाधप्रसङ्गः, अर्थत्व-ज्ञातत्वाविशेषात्। अज्ञानस्य तु सावशेषस्यापि यथा बाधस्संभवति तथा दर्शितः। तस्माच्छुक्त्याद्यर्थ एव तद-ज्ञानतज्जरूप्यादिभ्रमस्याधिष्ठानं तद्बाधे चावधिरिति मत्पक्ष एव बाध्यस्यावधेरधिष्ठानस्य च संभवात्पक्षान्तरे चासंभवान्मत्पक्ष एव साधिष्ठानो भ्रमस्सावधिकश्च बाधो युज्यते, न तु पक्षान्तरेष्वित्यभिप्रायः ॥ १० ॥

रूप्याभावे कुतस्तद्धीर्धीमात्रं स्यात्तु शुक्तिवत्।
नन्वेवं नास्ति तज्ज्ञोऽपि बाढं ज्ञस्त्वस्ति शुक्तिदृक् ॥११॥

भ्रान्तिकालेऽख्यातस्यावधित्वायोगादवध्यभावे च बाधा-संभवात् भ्रान्तौ भातं न सर्वं बाध्यम्। यावद्बाध्यं तावदेव भ्रान्तत्वादविद्यात्मकं नान्यदबाध्यम्, तत्तु वस्त्वि-त्युक्तम्। तत्रेदं चोद्यते—नेदं रूप्यमिति बाधप्रसिद्धेः रूप्यमेव बाध्यम्, न तु तज्ज्ञानमपि। रूप्याभावे त-ज्ज्ञानमपि नास्तीति चेत्, तज्ज्ञाता तत्फलं च न स्यात्।

ज्ञात्रभावे बाधकज्ञानमपि निराश्रयं न स्यात्। अतो न किंचिद्बाध्यं स्यात्। स्याच्चेत्, सर्वमेव बाध्यमिति शून्यवाद-प्रसङ्गः। स चानिष्टः। अतो ज्ञानाद्यस्ति। ज्ञानभावे च ज्ञानप्राप्तमेव पक्षान्तरवद्बाध्यमिति पक्षान्तरमेवाश्रयणीय-मिति। अत्रोच्यते—रूप्यतज्ज्ञानाद्यसत्त्वेऽपि शुक्तीदमंश-तज्ज्ञानतज्ज्ञात्रादिसत्त्वात् बाधकज्ञानसंभवात् रूप्यादि-मात्रबाधोपपत्तेर्नोक्तदोषप्रसङ्गः। रूप्यज्ञानं चेदस्ति, रूप्यमप्यस्त्येवेति न तस्य बाधः सत्यरूप्यस्येव, अन्यथा तस्यापि बाधस्स्यात्। अतो यथा रूप्यं नास्ति तथा तज्ज्ञानमपि नास्त्येवेति नान्यथाख्यातिस्सिध्येत्। तथा आत्मख्यातिरपि, बाह्यरूप्याभावे तदाकारज्ञानाभावात्। असत्ख्यातिस्तु दूरोत्सारिता। अख्यातिपक्षे त्व[1]सत्यार्थ-ख्यात्यभावात् भ्रमाभाव एव दोषः। तस्माद्रूप्याद्यभावे तद्धीरपि नास्त्येव॥ ११॥

यावद्बाध्यं तावदविद्या, न च सर्वं बाध्यमित्युक्तम्। इयद्बाध्यमियन्न बाध्यमिति तु नोक्तम्। अतस्तदाह—

यावद्बाधेऽपि भात्येव तावदेव न बाध्यते।
तावच्चास्त्येव तत्रैव बाधितं तु न कुत्रचित्॥ १२॥

यावद्भ्रान्तौ भातं बाधके शुक्तिज्ञानेऽपि भात्येव, न न भाति—तावदेव न बाध्यते। यदन्यन्न भाति तत्सर्वं बाध्यत एव। यावन्न बाध्यते तावच्चास्त्येव। नासदबाध्यं नाप्य-वर्तमानम्। तत्रैव चास्ति देशे न देशान्तरे। बाधितं तु न कुत्रचिद्देशे काले बुद्धौ वा अस्ति। अत इदमंश एव

[1] BCD (॰सत्ख्यात्य॰)।

बाधेऽपि ख्यातीत्यबाध्यः, नान्यत्। यद्बाधेऽपि ख्याति तदेवाबाध्यमिति कुत इति चेत्—तस्यैवावधित्वसंभवात्, अवधेरेव चाबाध्यत्वात्, बाध्यस्यावधित्वायोगात्, निरवधिकबाधासंभवाच्च। न च देशान्तरादिगतं रूप्यं बाधकज्ञाने ख्याति। न च तदभ्रान्तौ ख्याति, दोषहेतुत्वात्ख्यातेः। न च क्षणिकबुद्ध्याकारो रूप्यं क्षणान्तरे बुद्ध्यन्तरे वा ख्याति। न च स्मृतं परोक्षं रूप्यं बाधकज्ञाने[1] ग्रहणे तत्रस्थस्यैव भाति। न च स्मृतिज्ञानं बाधकम्। न चासत् बाधे भाति। अतस्तन्नेवेदमंशो बाधेऽपि भातीत्यबाध्यः, रूप्यं तु बाध्यमेव ॥ १२ ॥

'बाधितं तु न कुत्रचित्' इत्येतत् कुत इत्याह—

नान्यत्र भाति रूप्यं तदिह बाधात्तु कल्प्यते।
इहासद्भाति चेद्रूप्यं ख्यातिस्सत्तां न कल्पयेत् ॥ १३ ॥

न ता[2]वद्रूप्यमन्यत्रास्ति इह बाधितमिति भाति। अतो न तत् प्रतीतितोऽन्यत्रास्ति। इह बाधात्तु तदन्यत्रास्तीति कल्प्यतेऽसत्ख्यात्यसंभवयुक्त्या। न च सा कल्पनालभ्या, इहासत इह ख्यातेः ख्यातिस्सत्तां न कल्पयेद्यतः। यस्तु ब्रूयादन्यत्रैव तद्रूप्यं भाति नेहेति तस्य प्रतीतिविरोधस्स्यात्, यतो नान्यत्र भाति रूप्यमिहैव तु भाति। इह बाधादेव च तदन्यत्र भातीति कल्प्यते, न तु स्वानुभवत एव तत्सिद्धम्। यदि सिद्धं न भ्रान्तिबाधौ स्याताम्। वादिनां च विप्रतिपत्तिर्न स्यात्। अव्युत्पन्नव्युत्पादनार्था स्मृतिप्रमोषादिप्रक्रिया च भवदीया

[1] CDE (ज्ञानेन ग्र०)। [2] D (०वत्तद्रू०)।

व्यर्था स्यात्, तद्बोध्याभावात्। अत इहैव भाति रूप्यम्। इहासदपि इहास्तीति भातीति चेद्रूप्यम्—न तस्य ख्यातिस्सत्तां कल्पयेत्, असत्त्वेऽपीह ख्यातेः। अतो नास्यान्यत्र भानं कल्प्यम्, तत्र सत्त्वे प्रमाणाभावात् रूप्यस्य ॥ १३ ॥

सत्तां चेत्कल्पयेत् ख्यातिरसत्ख्यातेरयोगतः ।
यत्र यद्भाति तत्रैव तस्य तां किं न कल्पयेत् ॥ १४ ॥

स्पष्टार्थश्श्लोकः ॥ १४ ॥

तत्र बाधान्न कल्प्या चेन्नान्यत्र ख्यात्यभावतः ।
ख्यातिं विनापि चेत्सत्ता कल्प्यते नियमः कुतः ॥ १५ ॥

यत्र रूप्यं भाति तत्र तस्य सत्ता न कल्पयितुं शक्या, बाधात् तत्राभावख्यातेरिति चेत्—तदयुक्तम्। यद्यप्यभावः ख्याति तथापि भावख्यातेर्भावोऽप्येष्टव्यः, अन्यथा सा अर्थशून्यैव स्यात्। न हि सा अन्यत्र सता रूप्येण अरूप्येण वा तत्रस्थेन सार्था स्यात्, अतत्ख्यातित्वात्; किंतु तत्रस्थेनैव रूप्येण। यद्यन्यत्रापि सता रूप्येण सार्था स्यात्, अरूप्येण किं न स्यात्। स्याच्चेत्, न रूप्यख्यातिस्स्यात्। रूप्यस्यान्यत्र सत्ताकल्पनं च व्यर्थम्। तस्मात् रूप्यख्यातिश्चेत् सार्था इष्यते, यथा तद्रूप्यं ख्याति तथैव तदस्तीत्यभ्युपेयम्। यद्यभावोऽपि ख्याति, सोऽप्यस्तु। न च विरोधः। ख्याती चेदुभयं दर्शयतः को विरोधः। विरोधेऽपि भावख्यातिविरोधादभावख्यातेरेवाप्रामाण्यमन्यविषयत्वं वा स्यात्—प्राप्तानुपलब्धावभावख्यातेरिष्टत्वात्। अतो न तद्विरोधाद्भावख्यातिरप्रमाणमन्यविषया वा भवेत्, बलीयस्त्वा-

दविरोधेनैव चोत्पन्नत्वात्प्रत्यक्षस्य च प्रमाणज्येष्ठत्वात् । न च रूप्यख्यातेस्सार्थत्वे अपरोक्षार्थत्वे च सिद्धे अप्रत्यक्षता सिध्येत् । अतो रूप्यख्यातेस्सार्थत्वे यत्र रूप्यं भाति तत्रैव तस्य सत्ता कल्प्या । तत्र बाधान्न कल्प्या चेत्—नतरामन्यत्र कल्प्या, ख्यात्यभावात् । ख्यातिं विनापि चेत्सत्ता कल्प्यते, रूप्यस्यैव सा अख्यातस्य कल्प्या न शशविषाणादेरिति नियमः कः । तस्मादख्यातस्यापि चेत् रूप्यस्यान्यत्र सत्ता कल्प्यते, शशविषाणस्यापि कल्प्यताम् । न चेत्तस्य—नेतरस्यापि, उभयोरपि तत्राख्यातत्वाविशेषात् । रूप्यं क्वचिद्भाति, इतरन्न क्वापीति चेत्—तर्हि गवि विषाणं भाति, अतस्तच्छशादिष्वपि कल्प्यताम् । गवि विषाणस्याबाध्यत्वान्नान्यत्र सत्ता कल्प्या रूप्यस्य त्विह बाधितत्वादन्यत्र सत्ता कल्प्या, क्वचित्सत एव क्वचिन्निषेधदृष्टेरिति चेत्—किं यत्रास्ति तत्रैव निषेधः, उतान्यत्र । आद्ये कल्पे गव्यपि विषाणस्य निषेधादन्यत्र तस्य सत्ता कल्प्या । द्वितीये त्वस्य रूप्यस्यान्यत्र सत्तासिद्धेः, इहैव च सत्त्वख्यातेरिह निषेधासंभवात्, अन्यत्रैव निषेधादिहैव सत्ता कल्प्या न त्वन्यत्र । अन्यत्र सदेवेह निषिध्यत इति चेत्, अस्यानिषेधान्नान्यत्र सत्ता कल्प्या । अन्यत्र सदेवेदं रूप्यमिति चेत्, तर्हि इदानीमिहागतत्वादन्यत्रैव निषेध्यम् । अन्यत्रैव सदिहास्तीति भाति, न त्विहागतमिति चेत्—कुतोऽज्ञायीदम् । न तावद्रूप्यख्यातेरेवैवम्, इदं रूप्यमित्येव ख्यातेः । बाधसामर्थ्यादज्ञायीति चेत्—बाधोऽप्यत्रैव चेत् सत् निषेधति, अन्यत्रैव निषेधेत् । अन्यत्र सच्चेत्—नास्य

निषेधः, अन्यस्यैव तु। उभयत्र स[1]चेत्—तथापि ततोऽन्यत्रैव निषेधः, न तु तत्रैव। यत्र सत्तत्रैव चेन्निषेधः, गव्यपि तद्विषाणस्य निषेधः प्रसज्यत इत्युक्तम्। अतो न ख्यातिं विना सत्ता कल्प्या, शशविषाणादेरपि तत्प्रसङ्गात्॥ १५॥

बाधोऽपि कल्पयेत्तत्र नर्ते प्राप्तिमसौ भवेत्।
बाधोऽत एव नान्यत्र न तु बाध्यस्य सत्तया॥ १६॥

ननु यद्यपि रूप्यस्यान्यत्र ख्यात्यभावान्न ख्यातिस्सत्तां कल्पयेत्, तथापीह बाधो रूप्यस्यान्यत्र सत्तां कल्पयति। स हि तां नान्यत्र निषेधति किंत्विहैव। यदि सा अन्यत्रापि नास्ति इहेवान्यत्रापि तां निषेधेत्, न तु निषेधति इहेव। अतोऽन्यत्र तां बाधः कल्पयति। तत्कल्पनाहेतुर्भवतीत्यर्थः। तस्मादिह बाधितं रूप्यमन्यत्रास्त्यबाधादिति चेत्—नैतत्सारम्, यत्रास्तीति भाति तत्र तस्य निषेधस्यानिष्टत्वादन्यत्रैव निषेध्यत्वादन्यत्रैव बाध इत्युक्तत्वात्। यद्यपि यत्र भाति तत्रैव निषेधः, तथा[2]पि बाधोऽपि ख्यातिरिव तत्रैव सत्तां रूप्यस्य कल्पयेन्नान्यत्र। न हि प्राप्तिं विना बाधो भवेत्। न चान्यत्र प्राप्तिरस्ति रूप्यस्य, अख्यातेस्तत्र। अतो यत्र भाति तत्रैव प्राप्तं सत् रूप्यं निषेधंस्तत्रैव तस्य सत्तां कल्पयेत् बाधः, असतः प्राप्तिनिषेधायोगात् क्वचित्सत एव तु तद्योगादन्यत्र च सत्त्वेन प्राप्त्यभावात्। यतश्च प्राप्तिमृते न बाधो भवेन्न चान्यत्र प्राप्तिः, अत एव बाधो नान्यत्र भवति। न तु बाध्यस्य रूप्यस्य तत्र सत्त्वेन तत्र बाधाभावः॥ १६॥

[1] BCDE (०चेन्न त०)। [2] DE (०पि ख्या०)।

अन्यत्र सदेव रूप्यमिदं रूप्यमिति इह शुक्तौ भाति; अतो नेदं रूप्यमिति इह तस्य बाधादन्यत्र सत्त्वं सिध्यति, असतः ख्यात्ययोगात्—इति वदतां यथान्यत्र सत्त्वमिह चासत्त्वं न रूप्यस्य सिध्यति तथोपपाद्य, ख्यातेर्बाधाच्च अनिर्वचनीयत्वं पूर्वोक्तमेवोपसंहरति—

सच्चेद्भाति कथं बाधो भाति चेत्तदसत्कथम् ।
सदसद्भ्यामतोऽवाच्यं शुक्तौ रूप्यमिति स्थितम् ॥१७॥
नैव कल्प्यान्यथासत्ता यथा भाति तथास्ति चेत् ।
नो चेन्न कल्पनाबीजं न ह्यसत्ख्यात्यसंभवः ॥ १८ ॥

अपि चेदं भवन्तस्सर्वे वादिनः प्रष्टव्याः—किं यस्माद्विज्ञ[1]ानाद्योऽर्थो भाति, अस्ति नास्तीति [2]वा, स तथैव साधुरित्यभ्युपेयः, उतान्यथापि स्यादिति। तत्राद्ये कल्प्य इदं रूप्यं नेदं रूप्यमिति ज्ञानयोस्तथार्थत्वाद्रूप्यमप्यन्यथासत् इत्थं भातीति अन्यथासत्ता रूप्यस्य न कल्पनीया। नाप्यसत्ता, असदेव भातीति। द्वितीये तु न तत्कल्पनाबीजमस्ति, रूप्यख्यातेरयथार्थत्वसंभवात्। बाधकस्यापि। अतोऽन्यथा सदित्थं भाति रूप्यम्, असद्वा भातीति सद्वादिनामसद्वादिनां चेष्टं न सिध्येत्। यथार्थत्वनियमाभावे चार्थपरिच्छेदकत्वं ज्ञानानां स्वभावो न स्यात्। अस्वभावत्वे च तन्नान्येन कर्तुं शक्यते। अतो नायथार्थज्ञानं किंचिदभ्युपेयम्। यथार्थं च ज्ञानं न बाध्यम्। यथार्थत्वनियमाभावेऽपि न बाध्यबाधकनिश्चयस्स्यात्। न [3]च

[1] BD (०नाद्येनार्थः)। [2] D (वा तथै०)।
[3] C (च भिन्नार्थयोश्च ज्ञा०)।

भिन्नार्थयोरभिन्नार्थयोश्च ज्ञानयोर्बाध्यबाधकभावो रूपरसज्ञानयो रूपज्ञानयो[1]रिव चेत्युक्तम्। तस्माज्ज्ञानानामबाध्यत्वादज्ञानमेव बाध्यमित्यन्ये पक्षा निर्युक्तिका इति सिद्धम् ॥ १८ ॥

तथा भानेऽन्यथासत्त्वमुप[2]योगि कथं तव।
रूप्यस्याविद्यया भानेऽज्ञातसत्तोपयोगिनी ॥ १९ ॥

यद्यपीदं रूप्यमिति ख्यातिरात्मनस्सार्थत्वायान्यथासत्त्वं रूप्यस्य न कल्पयति, अरूप्येणेव अन्यथासता रूप्येणापि तस्यास्सार्थत्वायोगात्—तथाप्यात्मलाभाय कल्पयतीति चेत्, तथाभाने रूप्यस्य अन्यथा—अज्ञायमानेन रूपेण—सत्त्वमुपयोगि हेतुस्स्यात् कथं तव। अविद्यानिमित्ते तु भाने अज्ञातसत्ता उपयोगिनी स्यात्। न च तथेच्छसि। अतो रूप्यस्यापि अज्ञातरूपेण सत्त्वम्, घटादेरिव सत्त्वम्, तथाभाने हेतुर्न स्यात्; अतद्विषयत्वाविशेषात्। स्याच्चेत्, घटादिसत्त्वमपि स्यात्। ननु घटादि न भाति रूप्यख्यातौ। सत्यम्, रूप्यमपि भासमानाद्रूपाद्रूपान्तरेण न भात्येव [3]तस्याम्। ननु रूप्यजातेर्भानान्नात्यन्तमभानमन्यथासतोऽपि रूप्यस्येति चेत्—तन्न, न हि जातिरपि भाति, व्यक्तेर[4]भावात्। नेह व्यक्तिरस्ति। अस्ति चेत्, तत्ख्यातिस्सत्यार्था स्यात्। न चान्या व्यक्तयो भान्ति। अतोऽन्यथासत् रूप्यं न भातीह। कथं च तदस्याः ख्यातेरात्मलाभहेतुः। न तावत्तत् तदविद्यावदस्या

[1] D (०योरिवेत्यु०)।
[2] CD (०योगी)।
[3] CE (तस्याः)।
[4] CDE (०भानात्)।

उपादानम्, नापि चक्षुरादिवद्धेतुः, नापि विषयोऽतद्विषयत्वात्ख्यातेः। यद्यपि न परिपूर्णो विषयोऽस्याः ख्याते रूप्यं तथापि विषयो भवत्येव। इदमंशोऽपरिपूर्णो विषयोऽस्यां ख्यातावुपयोगीष्यते। एवं रूप्यमपीष्यताम्, तस्यापीदमंशवदस्यां ख्यातौ स्फुरणादिति चेत्—न, वैषम्यात्। शुक्त्यज्ञानजत्वाद्रूप्यभ्रमस्य तत्सत्ता उपयोगिनी। रूप्याज्ञानजस्तु भ्रमो नेष्यते त्वया मयापि। अतोऽस्य सत्त्वं नोपयोग्यस्यां ख्यातौ ॥ १९ ॥

असताप्यात्मना भाति सदेवातोऽन्यथा स्थिता।
तथाभानस्य हेतुश्चेत्किं रूप्येणास्ति शुक्तिका ॥ २० ॥

असतापि रूपेण सदेव भातीति रूप्यस्यापि सत्त्वमिष्यत इति चेत्—किं रूप्येण कल्पितेन, अस्ति शुक्तिरुभयवादिसंप्रतिपन्ना। सैव असता रूप्यात्मना भास्यति। न चासदात्मना, विना अविद्याम्, सद्भातीत्युक्तम् ॥ २० ॥

एकेन सिद्धयोर्भ्रान्तिबाधयोः कल्पना द्वयोः।
न युक्ता शुक्तिवद्रूप्यं सच्चेद्बाधे न भाति किम् ॥ २१ ॥

ननु शुक्तिवद्रूप्यमपि सत् कस्मान्नेष्यते। द्वयोरपि भ्रान्तिबाधौ दृष्टौ। द्वयोश्च सत्त्वे सामानाधिकरण्यमाचमसत्कल्पयितुं शक्यम्; अन्यथा रूप्यमप्यसत्कल्पनीयं स्यादिति चेत्, न; न हि रूप्यस्यासत्त्वं कल्पनीयम्, बाधादेव तत्सिद्धेः। सत्त्वमेव तु तस्य कल्पनीयम्। तच्च न शक्यं कल्पयितुम्, एकेनैव सता संप्रतिपन्नेन भ्रान्तिबाधयोस्सिद्धयोः द्वितीयस्य कल्पकाभावात्। यदि शुक्तिवद्रूप्यमपि सत्स्यात्, शुक्तिवदेव रूप्यमपि बाधकज्ञाने

दृश्येत। न तु दृश्यते। अतो न सत् रूप्यम्। यच्च ह्युभयोर्भ्रमस्तच्च उभयं बाधकज्ञाने दृश्यते। न चात्र दृश्यते। अतो नोभयोरत्र भ्रमः। तस्माच्छुक्तिरेव स्वाज्ञानजरूप्यरूपा भातीति सिद्धम्। शुक्तिरूप्ययोर्विविक्तयोर्बाधकज्ञाने द्वयोरप्रतीतेस्तयोरविवेको भ्रम इत्येतदपि प्रत्युक्तम्। तस्माद्रूप्यस्य ख्यातेर्बाधाच्च यत्सन्न भवति तदपि ख्यातीति सिद्धम्। अतस्सदेव ख्याति, नासदित्ययुक्तमुक्तम् ॥ २१ ॥

किंच—

नासत्ख्यातीति वाणीयं नाज्ञातेऽसति युज्यते।
इदमीदृगिति ह्युक्तिर्ज्ञातयोर्धर्मधर्मिणोः ॥ २२ ॥

असच्छब्देनात्र अनिर्वचनीयं विवक्षितम्, तस्य प्रकृतत्वात्। तदेव सन्न भवतीत्येतावता असदित्युपचर्यते; न पुनरसदेव, अनिर्वचनीयत्वात्। अभावो वा असच्छब्देनाचोच्यते, यो नास्तिबुद्धिव्यवहारविषय इष्यते। उभयत्राक्षरयोजना उत्तरेषु केषुचिच्छ्लोकेषु द्रष्टव्या। येऽनिर्वचनीयमसच्च नेच्छन्ति येऽप्यनिर्वचनीयमेव तेषां सर्वेषां दूषणमुच्यते। असत्समर्थनं च सदेव ख्याति नान्यदिति नियमाभावप्रदर्शनार्थम्, असच्च निरूप्यमाणमनिर्वचनीयमेव भविष्यतीति तत्समर्थनार्थमेव वा। असन्न ख्यातीतीयं वाणी असति अज्ञातेऽख्यातौ च न युक्ता। ज्ञात एव तु युक्ता। यथा पटश्शुक्ल इत्याद्युक्तिः धर्मिणि धर्मे च ज्ञात एव। अतोऽसन्न ख्यातीत्युक्तिः प्रमाणतो न ख्याति, सद्रूपेण वा न ख्यातीति सविशेषणैव न्याय्या; अन्यथा अबुद्धिपूर्वैव स्यात् ॥ २२ ॥

आत्मा अप्रमेय इति वचनं न विरुध्यते, स्वयंज्योतिष्ट्वात् । तस्य श्रुत्युक्तत्वाच्चेत्याह—

आत्मन्यमेयतोक्तिस्स्यात्स्वयंज्योतिष्यपि श्रुतेः ।
नासदीदृक्तदीदृक् चेदात्मा स्यान्नान्यदीदृशम् ॥ २३ ॥

असतोऽस्वयंज्योतिष्ट्वात्, स्वयंज्योतिष्ट्वे चात्मत्वप्रसङ्गात्, आत्मनोऽसतश्च वैषम्यान्नात्मन्युक्तदोषप्रसङ्ग इत्यर्थः ॥ २३ ॥

सतोऽर्थाद्विवेकेन असतोऽज्ञाने तस्यास[1]त्त्वासिद्धेरसन्न भातीति वचनं मा[2]ता मे वन्ध्येतिवद्विरुद्धार्थं स्यात्, न चेत्सविशेषणमित्यमुमर्थमाह—

सतोऽसन्न विवेकेन ज्ञायते चेदसत्कथम् ।
तस्मादसन्न भातीति माता वन्ध्येतिवद्वचः ॥ २४ ॥
असद्रूपमसद्भाति न सद्रूपेण भाति चेत् ।
नासत्ख्यातिर्निषिद्धैवं निषिद्धा त्वन्यथामतिः ॥ २५ ॥

यदि सविशेषणमुच्येत—असत् स्वरूपेण भाति न तु सद्रूपेणेति, तदाप्यसत्ख्यातेर्न निषेधस्स्यात्, किंत्वन्यथाख्यातेः । स च तद्वादिनोऽनिष्टः ॥ २५ ॥

स यदि ब्रूयात्—नान्यथाख्यातिमात्रं निषिद्धम्, किंत्वन्यथा ख्याति सत् न त्वसदिति । तत्र हेतुर्वाच्यः । नात्मा असतोऽन्यः [3]सन्, सतोऽपि नात्मा असन्; नासद्धीस्सद्धीः, सद्धीरपि नासद्धीः; अतो नासत्सद्रूपेण ख्यातीति चेत्, तथा सतोऽपि नान्यस्सन्नात्मा । सदसतोस्तादात्म्यं त्वयैव निरस्तम् । अतस्सन्नपि सदन्तररूपेण

[1] CDE (॰त्त्वात्सिद्धेः) ।　　[2] BCE (॰ता व॰) ।
[3] C (सत्) ।

न ख्यातीति तुल्यस्सदसतोरन्यथाख्यात्यसंभवः, त्वदुक्तेन न्यायेन। कथं च सतस्सदात्मना ख्यातिरन्यथाख्यातिस्स्यात्। सदन्तरात्मना ख्यातिरन्यथाख्यातिस्स्यादिति चेत्—न स्यात्सदन्तरमपि सदेव चेत्, सर्वासां सत्ख्यातीनामन्यथाख्यातित्वप्रसङ्गात्। अथ असत्सदन्तरम्, न तत्सदुच्यते। अत एकमेव सत्स्यात्, द्वितीयवत्त्वे द्वयोस्सदन्तरत्वादसत्त्वप्रसङ्गात्। असच्चेत्सदुच्येत, [1]सद्वा असत्; सदसच्छब्दयोः पर्यायत्वम्। असच्चेत्सदन्तरम्, सदन्तरस्य सदन्तरात्मना ख्यातिरन्यथाख्यातिरिति वदता असत एवान्यथाख्यातिः, सा चासदात्मनेत्युक्तं स्यात्। कथं चासतोऽसदात्मना ख्यातिरन्यथाख्यातिस्स्यात्, अतिप्रसङ्गात्। असदन्तरात्मना ख्यातिरन्यथाख्यातिस्स्यादिति चेत्—असदन्तरमप्यसदेव चेत्, नान्यथाख्यातिस्सिध्येत्; सच्चेत्, असतस्सदात्मना ख्यातिरन्यथाख्यातिरित्युक्ता स्यात्। तस्मान्न सतस्सदात्मना ख्यातिरन्यथाख्यातिः। नाप्यसतोऽसदात्मना। सदसतोरन्योन्यात्मना ख्यातिरन्यथाख्यातिश्चेत्, असतोऽप्यन्यथाख्यातिरिष्टा स्यात्। असदपि सदेव चेत्—नान्यथाख्यातिस्सिध्येत्, उक्तेन न्यायेन। असत् सद्रूपेण भाति, नानिर्वचनीयमिति चेत्—तदयुक्तम्, अनिर्वचनीयस्यापि रूप्यादेस्सद्रूपेण ख्यातेर्दर्शितत्वात्। तच्चासत् किं सदेव, उत तुच्छम्। नोभयमिति चेत्, प्राप्ता अनिर्वचनीयता अस्य। प्रमाणवत्त्वात् न हि प्राप्तेति चेत्, यथा नास्य प्रमाणवत्त्वं तथा दर्शयिष्यामः। अप्रमाणवत्त्वेऽप्यस्य शुक्तिरूप्यादि-

[1] CD (असद्वा सत्)।

वत्प्रतिभासो नियतव्यवहारहेतुत्वं च सत इवास्तीति न तत्ख्यातेरपह्नवो युक्तः, तदपह्नवस्यापि तदभावेऽसंभवात्। तस्मादनिर्वचनीयस्यैवाज्ञानस्यान्य[1]थान्यथा स्फुरणम्, न वस्तुनः कथंचिदप्यज्ञानं विनेति सिद्धम्। तदेतदाह—

अन्यथा ख्याति सन्नासदिति चेद्धेतुरुच्यताम्।
नात्मासतोऽन्यस्तद्धीर्वा सत्ख्यातिश्चेत्तथा सतः॥२६॥
असदक्षैरसंयोगि कथं भात्यक्षजभ्रमे।
सदप्यक्षैरियाद्योगं कथं देशान्तरादिगम्॥२७॥

असतोऽक्षासंयोगिनोऽक्षजभ्रमे भानायोगात् सदेव देशान्तरादिगं रूप्यादि भातीति चेत्, सतोऽपि देशान्तरादिगस्य अक्षासंयोगित्वाविशेषात् अक्षजभ्रमे भानायोगस्समान इत्यभिप्रायः॥२७॥

दोषादियात्त्वयोगं सद्यद्यसच्चैवमिष्यताम्।
रूप्यं भाति यथा भ्रान्तौ तथास्ति न च कस्यचित्॥२८॥

देशान्तरादिगमपि सत् दोषादिन्द्रिययोगमियादिति चेत्—एवमविद्यादोषोऽपि इन्द्रिययोगीव कुर्यात् रूप्यादि असत् अनिन्द्रिययोग्यपीति इष्यताम्। यद्यपि देशान्तरस्थं रूप्यमक्ष्णा योजयेद्दोषस्तथापि न कालान्तरस्थम्, असत्त्वात्तदा। न हि दोषसहस्रमपि तदा असत् [2]रूप्यं चक्षुषा योजयेत्, तस्य वर्तमानयोगित्वात्। दोषोऽपि चक्षुषस्सहकार्येव स्यात्, न चक्षुरन्तरं सृजेत्; तदेव वा अन्यच्च नयेत्। नयेच्चेत्, तच्चस्था शुक्तिर्न दृश्येत। संततं चेच्चक्षुः, मध्यस्था अपि च पदार्था दृश्येरन्; न च

[1] C (०था ०स्फु)।　　[2] BCDE (रूपं)।

तथा दृश्यन्ते। अतो न देशान्तरस्थमपि। व्यवधानाच्च। समीपस्थमपि व्यवहितं न दृश्यते किं पुनर्दूरस्थम्। कथं चोद्धृतचक्षुषस्स्वप्ने स्फुरद्रूप्यादि चक्षुर्योगि स्यात्। तस्यानक्षजत्वाददोष इति चेत्—जागरितेऽपि भ्रान्त्यंशस्य अनक्षजत्वं समानम्, अन्यथा इदमंशज्ञानवत् रूप्यज्ञानस्यापि [1]सत्यत्वप्रसङ्गात्। इदमात्मना च भ्रान्तौ रूप्यं भाति तथा तत्तत्रापि नास्ति। अतोऽक्ष[2]जभ्रमेऽपि सदेव भातीति नियन्तुं न शक्यम्। अतो न तस्याक्षजत्वमपि—असद्विषयत्वात्। अतोऽनिर्वाच्यमेव रूप्यादि भातीति सिद्धम्। अतोऽसदनिर्वचनीयं वा न ख्यातीति वचनमयुक्तमेव ॥ २८ ॥

सदन्तरमसद्येषां तेऽसत्ख्यातिमुपागमन्।
तुच्छं निषिध्यते तैश्चेत्तुच्छमुक्त्वा निषिध्यताम् ॥२९॥

सदन्तरमसदिति येषां मतं तेषामतितरामयुक्तमसन्न ख्यातीति वचनम्, असत्ख्यातेस्स्वयमिष्टत्वात्। अनिर्वचनीयं न ख्यातीति ते वदन्तीति चेत्—तच्चायुक्तम्, तत्ख्यातेरपि दर्शितत्वात् असतोऽप्यनिर्वचनीयत्वात् तुच्छं न भातीत्यपि तेषामयुक्तमसन्न ख्यातीतिवत् ॥ २९ ॥

नन्वभाणि त्वयापीदं नासत्ख्यातीति तत्कथम्।
अविद्यासिद्धमाश्रित्य युक्त्या सिद्धिर्निषिध्यते ॥३०॥

ननूक्तं तुच्छं न ख्यातीति त्वयापि। तत्र यस्त्वदुक्तदोषपरिहारस्तव, स एवास्माकमसदनिर्वचनीयं तुच्छं वा न ख्यातीति वदतां सर्वेषामेव परिहारो भविष्यति।

[1] BCDE (सत्त्वप्र०)। [2] CD (०जलभ्रमे स०)।

[1]अतस्त्वं ब्रूहीति चेत्, ब्रवीमि। शृणु तम्। [2]तुच्छं ख्यातीति तुच्छवादिनोऽविद्योत्थं भ्रमं तद्वचनाद्बुद्ध्वा, तुच्छं ख्यातीति तदुक्तमेवानूद्य, तन्न युज्यत इति युक्त्या तुच्छख्यातिभ्रमो मया निरस्यते। न पुनस्तुच्छं ख्याति न ख्यातीति वा उच्यते। न चेदृग्भ्रमो भवद्भिस्त्रिभिरप्याश्रयितुं शक्यः। शक्यश्चेत्, न निषेद्धुं शक्यः। कथमिति चेत्, उच्यते—न तावदन्यथाख्यातिवादि[3]ना अयमतुच्छे तुच्छभ्र[4]मः, अतुच्छे अतुच्छख्यातौ वा तुच्छख्यातिभ्रम इति शक्यं वक्तुम्, तुच्छस्य तत्ख्यातेश्च क्वचिद्रूप्यवत् सिद्धत्वेनानभ्युपगमात्। सिद्धत्वे च तुच्छख्यातिर्निषेद्धुं न शक्या। तथा अख्यातिवादिनापि तुच्छातुच्छयोस्तत्ख्यात्योर्वा तुच्छस्यातुच्छख्यातेरतुच्छस्य तुच्छख्यातेर्वा विवेकाख्यातिर्भ्रमोऽयमिति न शक्यं वक्तुम्। तुच्छस्य तत्ख्यातेर्वा रूप्यवत्स्मर्यमाणतया, शुक्तिवत् गृह्यमाणतया वा क्वचिदसिद्धत्वात्। सिद्धत्वे च तन्निषेधो न शक्य इत्युक्तम्। एतेन असत्ख्यातिभ्रमो व्याख्यातः। अख्यातावसत् ख्याति, तुच्छं ख्यातीति वा भ्रम इति चेत्—किं सर्वाख्यातौ, उत यस्य कस्यचित्। आद्ये कल्पे सुषु[5]प्तादावेव तद्भ्रमस्स्यात्। द्वितीये तु सर्वदा तद्भ्रमप्रसङ्गः, यस्य कस्यचिदख्यातेस्सर्वदा संभवात्। कश्चासत्ख्यातिभ्रमो नाम—अख्यातिः, उत ख्यातिः। अख्यातिश्चेत्, उक्तो दोषः। अख्यातावख्यातिरिति भेदोक्तिश्च

[1] CD (०तद्बू०)।　　[2] BCDE (अतुच्छं)।
[3] CDE (०दिनोऽयं)।　　[4] CD (०मः अतुच्छख्या०)।
[5] BCD (०प्तावेव)।

वृथा स्यात्। न वृथा। अख्यात्यसत्ख्यात्योर्विवेकाख्याति-र्द्वितीया अख्यातिरिति चेत्, असत्ख्यातिरिष्टा स्यात्। अथ ख्यातिरेवासत्ख्या[1]तिभ्रमः—तस्याख्यातिश्चेद्विषयः, उक्त एव दोषः। असत्ख्यातिरेव चेत्, असत्ख्यातिरिष्टा। अभ्रमत्वं च। अथाख्यातिमसत्ख्यातिं मन्यते अन्यथा-ख्यातिः। सा चेष्टा स्यात्। अख्यातिरपि ख्यात्यभावश्चेत्, असत् तत्ख्यातिश्चेष्टा स्यात्। ख्यातिरेव चेत्, तवापि ख्यातिरेव भ्रम इति अख्यातिवादित्वहानिः। तस्माद-सत्ख्याति, अनिर्वचनीयं ख्याति, तुच्छं ख्यातीति वा भ्रम इति अख्यातिवादिना नाश्रयितुं शक्यते। तथात्म-ख्यातिवादिनापि, तुच्छादेस्तत्ख्यातेश्च रूप्यवद्बुद्ध्याकारत्वेन अनभ्युपगमात्। अभ्युपगमे च तन्निषेधो न शक्य इत्यु-क्तम्। कथं चाभावमनिर्वचनीयं वा अनिच्छद्भिरिदं नास्ति, न युक्तमिति वा निषेद्धुं शक्यं किंचिदपि। मत्पक्षे त्वसिद्धस्यैव भ्रान्तौ भानान्न कश्चिद्दोषस्स्यात्। न हि रूप्याद्यपि क्वचित्सिद्धमित्युक्तम्। अत्यन्तमसंभाव्य-मानच्छिन्नस्वशिरोदर्शननभोभक्षणाद्यपि भ्रान्तौ भात्येव। तुच्छं भातीत्यपि भ्रान्तिर्भवेत्। दृष्टा हि सा भ्रान्ति-स्तद्वादिनाम्। सा च भ्रान्तिरेवेष्यते भवद्भिरपि तस्याः भ्रान्तित्वं कुपक्षाश्रयणदोषात् संपादयितुमशक्नु-वद्भिरपि। तस्माद्यो मम परिहारो न स भवतां भवेत् सद्वादिनाम्। अतोऽसन्नख्यातीत्यादिवचनं भवतामयुक्त-मेवेति स्थितम् ॥ ३० ॥

[1] C (०ख्यातिर्भ्र०)।

भवतामन्योन्यपक्षा अपि न भ्रमास्सिध्यन्ति । मम त्वन्ये सर्वे पक्षा भ्रमा एवेति सिध्यन्ति, उक्तेन न्यायेन—

अविचारितसंसिद्धमाश्रित्यान्येऽपि युक्तिभिः ।
निराकुर्युः परेष्टं वा यथा भेदं वयं यदि ॥ ३१ ॥
अविद्याशरणास्तेऽपि नान्यथा तन्निराक्रिया ।
न्यायाघातासहिष्णुत्वं वस्तुनो न हि युज्यते ॥ ३२ ॥

यथा वयं विचारणात्प्रागविचारिताविद्योत्थभ्रमसंसिद्धमसत्ख्यात्यादिपक्षं परेष्टं वा, भेदं च सर्वप्राणिभ्रमसिद्धम्, परेष्टं वा आत्मभेदं प्रतिक्षणभेदं च वस्तुनो युक्तिभिर्निराकुर्महे तं तमेवाविचारिताविद्योत्थभ्रमसंसिद्धमेवाश्रित्य न प्रमाणतस्सिद्धम्, प्रमाणतस्सिद्धस्यासिद्धस्य वा अनिराकार्यत्वात्—तथैव यदि भवन्तोऽपि असत्ख्यात्यादिपक्षं निराकुर्युः, अविद्याशरणा एव भवन्तोऽपि वयमिव । न ह्यविद्यासिद्धत्वं विना तस्य निराकार्यस्य निराकरणं युक्तम्, असिद्धस्य प्रमाणतस्सिद्धस्य च निराकरणस्य नैष्फल्यादशक्यत्वाच्च । न हि प्रमाणसिद्धं वस्तु[1]त्वात् न्यायाघातं न सहते । अवस्त्वेव हि तं न सहते तम इव भानुम्; न तु वस्तु, अतिप्रसङ्गात् । अतोऽविद्यासिद्धं[2] अवस्त्वेव न्यायेन निराकार्यम् । अतो न्यायेन किंचिन्निराकुर्वद्भिर्नाविद्या अनिर्वाच्या अपलपनीया । अतोऽस्मत्पक्षमेवाश्रित्य सर्वं निराचिकीर्षितं निराकार्य[3]मित्यस्मत्पक्ष एव न निराकार्य इति सिद्धम् ॥ ३१ ॥ ३२ ॥

[1] CDE (०स्तु न्या०) ।　　[2] CE (०द्धं व०) ।
[3] BCDE (०मिति मत्प०) ।

अत उपसंहरति—

अतोऽविद्यां विना भ्रान्तेरयोगादभ्युपेयताम् ॥
मायामात्रं तु शुक्त्यादौ रजतादीति वादिभिः ॥३३॥

स्पष्टार्थश्श्लोकः ॥ ३३ ॥

मायाविद्यादिशब्दैर्या श्रुतिषु स्मृतिषूदिता ।
सा जगत्प्रकृतिर्माया यतो मायामया भ्रमाः ॥ ३४ ॥

माया, अविद्या, तमः, कारणम्, लयः, शक्तिः, सुप्तिः, महासुप्तिः, निद्रा, अक्षरम्, आकाशमित्यादिशब्दैः 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतिस्मृतीतिहासपुराणादिवाक्येषु उक्ता या माया सैव महदादेस्समस्तस्य जगतः प्रकृतिरिति यदुक्तमाद्यश्लोके तदुपपन्नमेव । यतो लोकेऽपि शुक्तिरूप्यादिभ्रमास्तद्विषया मायामयाः प्रदर्शितास्तस्माद्रूप्यादिभ्रमवदात्मनोऽब्रह्मताभ्रमस्यापि ज्ञानमात्रापनोद्यत्वं सिद्धम् ॥ ३४ ॥

नेह नानास्ति मृत्योस्स वाचारम्भणमित्यपि ।
द्वैततद्दृश्यभावोक्तेर्मायानिर्वचनीयता ॥ ३५ ॥

ननु मायाशब्दः प्रज्ञानामस्वपि पठ्यते । अतो जगत्प्रकृतेर्मायाया अनिर्वचनीयतैवेति कुतस्सिद्धमिति चेत्—त[1]न्न, तत्कार्यस्य द्वैतप्रपञ्चस्य [2]तज्ज्ञानस्य च श्रुतिमुखादेवानिर्वचनीयतावगमात् । तथाहि—यथेह घटो नास्तीत्यन्यत्र सिद्धो[3] घटोऽन्यत्र निषिध्यते न तथा 'नेह नानास्ति किंचन,' 'मृत्योस्स मृत्युमाप्नोति य इह नानेव

[1] CD (०न्न कार्य०) । [2] BCDE (तव ज्ञा०) ।
[3] BCDE (०द्धोऽन्यत्र) ।

पश्यति' इत्यादिवाक्यैरन्यच्च सिद्धं द्वैतं तद्दर्शनं वा अन्यच्च निषिध्यते, किंतु तच्चैव अविद्योपस्थापितं नेदं रजतमितिवत्। अतो रूप्यवद्द्वैततद्दृष्ट्योः शुक्त्यैवानिर्वचनीयत्वनिश्चयात् तत्कारणमपि तादृगेव शुक्त्युक्तमिति निश्चीयते, कार्यानुरूपत्वात्कारणस्य। न च वस्तुनः कार्यकारणभावो युक्तिमानित्युक्तं वक्ष्यते च। प्रज्ञानामत्वेऽपि मायाशब्दस्य न ब्रह्मनामत्वम्—इतरेषां नाम्नामब्रह्मनामत्वात्, 'मायिनं तु महेश्वरम्' इति ब्रह्मणः पृथक्कृतत्वात्, तस्य च कूटस्थस्य बोधमात्रवपुषस्साक्षाज्जगत्प्रकृतित्वायोगात्। अतो बुद्धिनाम स्यात्। बुद्धेश्च न कारणत्वम्—अनित्यत्वात्, स्वयं कार्यत्वात्, कार्यस्य च कारणत्वस्य प्रत्युक्तत्वात्। बुद्धिकार्यत्वे चाकाशादेस्तदनन्यत्वादनित्यत्वं तद्बोध्यत्वं च प्रसज्येत। न हि बुद्धेर्बुद्धिबोध्यत्वमित्युक्तं वक्ष्यते च। न च बुद्धिकार्यं जगदिति वेदवादिनामिष्टम्। अतो जगत्प्रकृतिर्माया अनिर्वाच्या अविद्यैवेति सिद्धम् ॥ ३५ ॥

नान्यच्च कारणात्कार्यं न चेत्तच्च क्व तद्भवेत्।
नानेवेत्युपमायोगाद्दर्शनाभासतोच्यते ॥ ३६ ॥

ननु 'नेह नानास्ति' इति कारणे ब्रह्मणि नानात्वं निषिध्यते न तु नानाभूतं कार्यमेव, तस्य प्रत्यक्षादेस्सृष्टिश्रुतेश्च सिद्धत्वात्। 'नानेव पश्यति' इत्यस्यापि इत्थमेवार्थः। कथं चोपमार्थ 'इव' शब्दो युज्येत, यदि नानावस्तु किंचित् तद्दर्शनं च नास्त्येवेति चेत्, उच्यते—न तावत् 'नाना' शब्दो नानात्वं वदेत्। वदेच्चेत्, नानात्वमिति 'त्व' शब्दोक्तिस्त्वदीया व्यर्था स्यात्। अतो 'नेह नाना' इति

कारणे चेन्नानाभूतं कार्यं निषिध्यते, तन्न क्वचित्स्यात्। न हि कारणादन्यच्च कार्यं स्यात्। नानात्वमपि कार्यं चेत्, तद्ब्रह्मणि निषिद्धं न क्वचित्स्यात्। अकार्यं चेत्, ब्रह्मैवेति तन्नैव निषेध्यम्। न च ब्रह्मतत्कार्यातिरिक्तं वस्त्वस्ति, अद्वैतहानात्। कार्यादनन्यच्चेन्नानात्वम्—ब्रह्मणैव तदपि कार्यम्, न तु कार्येण कार्यस्वरूपवत्। अतस्तत्त्वकारणे ब्रह्मणि निषिद्धं न च क्वचित्स्यात्। तन्निषेधे च तदनन्यत्वात् सर्वं कार्यं निषिद्धं स्यात्; अन्यथा तस्यापि न निषेधः, कार्यानन्यत्वात्। कार्यकारणयोश्चाभेदे कार्याणामेव भेदो न कारणस्येत्ययुक्तम्। भेदे कारणस्यापि भेदोऽस्ति। भेदे च न कार्यकारणभावः, कार्याणामिवान्योन्यम्। भिन्नाभिन्नं चेद्ब्रह्मणः कार्यम्, ब्रह्म अब्रह्मात्मकं स्यात्। तदापि कार्याणां भेदोऽस्ति चेत्, स ब्रह्मणोऽपि स्यात्। न चेत्— न कार्याणामपि स्यात्, ब्रह्मणोऽपि तत्प्रसङ्गात्। अब्रह्मत्वे च कार्यस्य 'ब्रह्मैवेदममृतम्,' 'आत्मैवेदम्' इत्यादिवाक्यं विरुध्यते। ब्रह्मरूपस्य च न जन्म स्यात्, तस्य नित्यत्वात् ब्रह्मणोऽपि जन्मप्रसङ्गाच्च। अतोऽब्रह्मरूपमेव जायत इति जनिमत्सर्वमब्रह्मैव स्यात्। अतो न भिन्नाभिन्नता कार्यस्य। नापि ब्रह्मकार्यत्वम्। तस्मान्न भिन्नमभिन्नं भिन्नाभिन्नं वा ब्रह्मणः कार्यं समस्ति। अतो मायाविलसितमेव रूप्यवत्कार्यमिति 'नेह नानास्ति' इति तस्य निषेधो न्याय्यः। नानात्वनिषेधेऽपि तदभेदात् कार्यस्यापि निषेधस्स्यादित्युक्तम्। भेदे तयोर्नानात्वस्यापि नानात्वान्तरकल्पनादनवस्थानात्। 'नानेव

पश्यति' इत्यप्येतेनैव व्याख्यातम्, नानावस्तुनस्तद्दर्शनस्य च क्वचिदप्यभावादुक्तेन न्यायेन। अत एवोपमार्थत्वासंभवात् 'इव' शब्देनापि रूप्यादिदर्शनस्येव नानावस्तुदर्शनस्याभासता अज्ञानमात्रता उच्यते। अतो [1]मायामयत्वं भेदतद्दर्शनयोस्सिद्धम् ॥ ३६ ॥

यत्र हीत्याद्यविद्यायां भेददृष्टिं वचो जगौ ।
यत्र त्वस्येति विद्यायां तदयुक्तिं जगावपि ॥ ३७ ॥

'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिवाक्यमविद्यावस्थायामेव भेददर्शनं स्वप्न इवेत्याह। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिवाक्यं विद्यायामुदितायां भेददर्शनस्याघटमानतां 'केन,' 'कम्' इति साक्षेपमाह। तस्माच्छ्रुतेरेव सर्वस्य कार्यस्यानिर्वचनीयत्वनिश्चयात्तत्कारणमपि माया अनिर्वाच्यैव श्रुत्या उक्तेति निश्चीयत इति सूक्तम् ॥ ३७ ॥

दृश्यदृष्ट्योरभावेऽपि दृष्टिरस्त्यात्मनोऽचला ।
अविनाशी न हि द्रष्टुस्स्वयंज्योतिरिति श्रुतेः ॥ ३८ ॥

ननु सर्वस्य दृश्यस्य तद्दर्शनस्य चाभावे तद्द्रष्टुस्तत्फलस्य चाभावात् न किंचिज्जडमजडं वा स्यात्। अतो बाधकज्ञानमपि न भवेत्, शुक्त्यादिस्थानीयस्य ज्ञेयादेरभावा[2]त्। अतो द्वैतं तदवस्थमेव प्रत्यक्षादिसिद्धं भवेदिति चेत्—नायं दोषः, यतो दृश्यतद्दर्शनाद्यभावेऽप्यात्मनस्स्थास्नोस्स्थास्न्वी दृष्टिरनन्या मोक्षसुषुप्तस्वप्नादिष्वप्यस्तीति श्रूयते। 'अविनाशी वा अरे अयमात्मा अनुच्छित्ति-

[1] CE (मायात्वं)।   [2] BCE (०वादज्ञातो)।

धर्मा,' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्,' 'न तु तद्द्वितीयमस्ति,' 'ततोऽन्यद्विभक्तं यत्पश्येत्,' 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति' इत्यादिश्रुतिवाक्येभ्यः। अतस्तादृगात्मज्ञानस्य तदविद्या[1]तत्कार्यापनोदिनस्संभवात् [2]न द्वैततद्दर्शनाभ्यां चाबाधाशङ्का। युक्तिभिश्चायमर्थो दर्शितो दर्शयिष्यते च। तथा प्रत्यक्षाद्यविरोधश्च। अतश्श्रुतितो युक्तितश्च महदादेस्सर्वस्य कार्यस्य सकारणस्यानिर्वचनीयत्वं रूप्यवत्सिद्धम् ॥ ३८ ॥

ज्ञानमात्रापनोद्यत्वं नान्यथा बन्धरूप्ययोः।
हेतुर्नान्यस्तयोर्ध्वंसे श्रूयते नापि युज्यते ॥ ३९ ॥

'निचाय्य तं मृत्युमुखात्प्रमुच्यते,' 'तरति शोकमात्मवित्' इत्यादिमन्त्रब्राह्मणवाक्येभ्यो ज्ञानमात्रापनोद्यत्वं यत्संसारस्य श्रूयते, दृश्यते च रूप्यस्य, तत्तयोरज्ञानात्मकत्वे युज्यते; न त्वन्यथा—यतो ज्ञानमज्ञानस्यैव निवर्तकम्, न त्वल्पीयसोऽपि वस्तुनः; न च ज्ञानादन्यो हेतुर्बन्धनाशे श्रूयते। सर्वकर्मणां च सत्त्वशुद्ध्यर्थत्वेन ज्ञानोत्पत्तावेव श्रुतौ स्मृतौ च विनियुक्तत्वात्—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति,' 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥,' 'धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥' इत्यादि वाक्यैः। हेत्वन्तराभावश्च श्रूयते—'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय,' 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती

[1] BCDE (॰द्यावत्का॰)। [2] E (नाद्वैततद्दर्शनाद्बाधा॰)।

विनष्टिः,' 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥' इत्यादिषु। न च ज्ञानादन्यो हेतुर्बन्धनुद्युज्यते, अज्ञानजत्वाद्बन्धस्य। तथा रूप्यस्य[1] ॥ ३९ ॥

मुक्तिशुक्ती क्रियेते चेत्साधनैर्बन्धरूप्ययोः।
बन्धस्य ना[2]शस्स्याद्रूप्ये मृद्वन्न भ्रान्तिबाधकौ ॥ ४० ॥

'नापि युज्यते' इत्युक्तम्। तामेवायुक्ततां दर्शयति— यदि वस्तुवृत्त्यैव बन्धस्य रूप्यस्य च पिण्डस्येव घटीभावः मु[3]क्तिश्च शुक्तिभावश्च साधनैः क्रियते—तदा बन्धस्य नाशस्स्यात् मुक्तिकृतौ पिण्डस्येव घटकृतौ। रूप्ये च मृत्पिण्डवत्सत्ये न तज्ज्ञानं भ्रान्तिस्स्यात् पिण्डज्ञानवत्। नापि तत्कृतं शुक्तिज्ञानं तस्य बाधकं घटज्ञानवत्। तस्माद्बन्धरूप्यनुत् ज्ञानान्नान्यो हेतुर्युज्यते ॥ ४० ॥

भवतो नान्यथाभावो न नाशोऽभवतो भवेत्।
वक्ष्यते चोत्तरत्रेदं तेन नात्र प्रपञ्च्यते ॥ ४१ ॥

न च वस्तुनोऽन्यथाभावो नाशो वा युक्तितो घटते। कथम्। यथा पूर्वं तद्वस्तु व्यवस्थितं तथैव भवतस्तस्य नान्यथाभावस्स्यात्, तथाभावविरोधात्। नाप्यन्यथाभूतस्य अन्यथाभवतो वा अन्यथाभावः, अनवस्थाप्राप्तेः। नापि नष्टस्य। भवतो ह्यन्यथाभावो नाभवतः। नाशोऽपि न भवतो नाप्यभवतः, अनवस्थानाद्वैयर्थ्याच्च। अतो भ्रान्तिपरिकल्पिता एव सर्वे भावविकारा वस्तुनः।

[1] CDE (॰स्य च)। [2] D (॰स्याद्रूप्ये)।
[3] C (॰क्तिशु॰)।

तस्मात्परमार्थतो बन्धस्यान्यथाभावो मोक्षश्चेत्, सोऽपि कल्पित एव स्यात्। प्रपञ्चयिष्यते चोत्तरत्रायमर्थः। तस्मादनिर्वाच्याज्ञानजो बन्धो ज्ञानमात्रापनोद्यश्चाभ्युपेयः, अन्यथा मोक्षासंभवात्। रूप्यं च तथा, अन्यथा बाधायोगात् ॥ ४१ ॥

नन्वनिर्वचनीयत्वे सदसत्त्वविपर्ययात्।
दुर्घटौ ख्या[1]तिबाधौ स्तां नासच्चेत्तत्कथं न सत् ॥४२॥

ननु यत्सन्न भवति न तत्ख्या[2]ति खपुष्यादि। यच्चासन्न भवति न तद्बाध्यते सत्यरूप्यादि। अतोऽनिर्वचनीयत्वे रूप्यस्य सदसत्त्वविपर्ययात् ख्यातिबाधावयुक्तौ स्याताम्। अतः ख्यातेर्बाधाच्च अनिर्वचनी[3]यं रूप्यादीत्ययुक्तम्। अतः ख्यातेर्बाधाच्च नानिर्वचनीयं रूप्यादि, अनिर्वचनीयत्वे तदयोगात्। अतोऽसतः ख्यातेस्त्वयाप्यनिष्टत्वात्सतश्चेष्टत्वात् शुक्तिरूप्यमपि सदेव, ख्यातिमत्त्वात्। बाधोऽपि सत एव युक्तः, ख्यातस्यैव बाधसंभवात् सतोऽन्यस्याख्यातेः। [4]न चाख्यातस्य बाधः। अतस्सत एव ख्यातिबाधौ संस्त इति न ताभ्यां रूप्यस्यानिर्वाच्यतासिद्धिः। किंच—असच्चेन्न भवति तत्सदेव स्यात्, द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत इति। तस्मात्सत एव कथंचिद्बाधोऽप्येष्टव्यो नान्यस्य, अख्यातेस्तदयोगात् ॥ ४२ ॥

नातोऽनिर्वचनीयत्वं युज्यते श्रूयते न च।
श्रौतं नायुक्तिमत्सत्यं सदेवेदमिति श्रुतिः ॥ ४३ ॥

[1] BCDE (॰ति बो॰)। [2] CDE (॰ति यथा ख॰)।
[3] BDE (॰य...र्वच॰)। [4] BCDE (न...स्त इति)।

अतोऽनिर्वचनीयत्वं न युक्तितस्सिद्धम्। नापि श्रुतितः। न ह्यनिर्वचनीयशब्दश्श्रुतो वेदे क्वचित्। श्रुतोऽपि स न त्वद्दिष्टार्थस्स्यात्, तस्यायुक्तिमत्त्वात्। न ह्ययुक्तिमान् श्रौतोऽर्थस्स्यात्। अपि च—'मृत्तिकेत्येव सत्यम्,' 'त्रीणि रूपाणीत्येव सत्यम्,' 'सत्यं चानृतं च सत्यमभवत्,' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा,' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्येभ्यः कार्यस्य कारणस्य च सत्यत्वं श्रूयते। कारणस्य च सत्यत्वे कार्यमपि सत्यमेव, तयोरभेदात्। तथा 'सदेव सोम्येदमग्र आसीत्' इति प्रागुत्पत्तेरपि कारणात्मना कार्यस्य सत्त्वमवधारयति। तस्माद्युक्तिश्रुति-हीनमनिर्वचनीयत्वम्। तत्प्रतीतिस्तु नास्त्येव, अस्ति नास्तीति वा प्रतीतेः। नास्तीत्यपि प्रतीतिस्सद्विषयैव, 'सत्यं चानृतं च सत्यमभवत्' इति हि श्रुतिः। तस्मात्कार्यं रूप्यादि च सदेव, असतो जनेः ख्यातेश्चासंभवादिति सिद्धम् ॥ ४३ ॥

उच्यते नासतः ख्यातिर्जन्म चेष्टं त्वयापि च।
विनानिर्वचनीयत्वं बाधनाशौ सतः कथम् ॥ ४४ ॥
सदसज्जन्मनाशौ न जगज्जन्मलयौ श्रुतौ।
अतोऽनिर्वचनीयत्वं प्रसिद्धं श्रुतियुक्तितः ॥ ४५ ॥

त्वयाप्यसतः ख्यातिजाती नेष्टे। न च सतश्शुद्धस्य बाधनाशौ युक्तौ, शुक्तेर्ब्रह्मणश्च तत्प्रसङ्गात्। अतोऽनिर्वचनीयत्वं रूप्यादेस्सिद्धम्। ननु सतोऽपि जातस्य नाशः, नाजातस्य ब्रह्मणः। सतोऽपि चेत् कार्यस्य [?] जन्म स्यात्—ब्रह्मणोऽपि तत्स्यात्, अविशेषात्। अत एव नाशश्च।

कारणाभावान्न ब्रह्मणो जन्मेति चेत्—न, जगतोऽपि सत्त्वाविशेषाद्ब्रह्मणोऽनन्यत्वाच्च कारणं नास्ति। अस्ति चेत्—ब्रह्मणोऽपि तत्स्यात्, त[1]दनन्यत्वात्। स्वतोऽनन्यस्यापि चेत् जगतो ब्रह्म कारणं स्यात्, स्वस्यापि स्यात्। न चेत्—न जगतोऽपि, अविशेषात्। अन्यत्वेऽपि सच्चेत्—जगदजमकारणं च भवेत्, ब्रह्मवत्। अतो न सतो जन्मनाशौ। असतस्तु त्वयापि तौ नेष्टौ। जगतश्च तौ श्रुतौ। अतोऽस्यानिर्वचनीयत्वं श्रुतियुक्तितस्सिद्धम् ॥ ४४ ॥ ४५ ॥

सतोऽपि बाध्यता चेत्स्याच्छुक्तिः कस्मान्न बाध्यते।
बाध्येतरांशयोस्सत्त्वे समे भ्रान्तिस्समा न किम् ॥ ४६ ॥

सतोऽपि बाध्यत्वे शुक्तेरपि बाधस्स्याद्रूप्यवत्। रूप्यांशबुद्धेर्भ्रान्तित्वात् तदेव बाध्यं न त्विदमंशः, तद्बुद्धेरभ्रान्तित्वादिति चेत्—तन्न, बाध्येतरांशयोस्सत्त्वे समाने तद्बुद्ध्योरपि भ्रान्तित्वमभ्रान्तित्वं वा समा[2]नं न्याय्यं यतः। तस्मादिदं—रूप्यांशयोरपि सत्त्वावि[3]शेषात् बाध्यत्वमबाध्यत्वं वा समानं युक्तम्। न त्वेकस्य बाध्यत्वं नेतरस्येति। तस्मान्न सतो बाधो युक्तः। असतस्तु ख्यातिबाधौ त्वयापि नेष्टौ। अतोऽनिर्वाच्यं बाध्यमिति सिद्धम् ॥ ४६ ॥

किंच—

अदुष्टाक्षोऽपि तत्पश्येत्सति रूप्येऽन्यरूप्यवत्।
शुद्धाक्षादर्शनाद्बाधात्तद्रूप्यं सद्विलक्षणम् ॥ ४७ ॥

सच्चेच्छुक्तिरूप्यम्, शुद्धचक्षुरपि तत्पश्येत्सत्यरूप्यवत्।

[1] DE (०दन्य०)। [2] BCD (०मानन्या०)।
[3] CDE (०शेषवत्)।

न तु तत्पश्यति सत्यरूप्यं पश्यन्नपि। तस्मात्तद्रूप्यं—बाध्यत्वाच्च—सत्यरूप्यविलक्षणम्। यद्यपि ख्यातत्वान्नास[1]त्तथापि बाध्यत्वान्न सदिति। तस्मात्ख्यातं सर्वं सदेवेति वदतो भ्रान्तेर्बाधस्य च नियमो न स्यात् ॥ ४७ ॥

ननु मायैव ते सर्वं भ्रान्तिबाधौ समौ न किम्।
स्वप्नवद्व्यवहारे मे नियमो भ्रान्तिबाधयोः ॥ ४८ ॥
प्रबोधे स्वाप्नवत्सर्वो व्यवहारो निवर्तते।
तद्वेत्वविद्यां दहति ब्रह्मज्ञानाशुशुक्षणौ ॥ ४९ ॥

शुक्त्यादे रूप्यादेश्च सर्वस्य मायात्मकत्वेऽपि यथा तव भ्रान्तिबाधनियमस्तथा ममापि स्यात् सर्वस्य सत्त्वेऽपीति चेत्—तन्न, यतो मायात्मकत्वेऽपि सर्वस्य स्वप्नवत्प्राक्प्रबोधान्मम नियमो युज्यते। प्रबोधे तु स्वाप्नव्यवहारवत् जाग्रद्व्यवहारोऽपि, तत्कार[2]णाविद्यां ब्रह्मज्ञानाग्नौ दहति सति, निवर्तत एव ॥ ४८ ॥ ४९ ॥

व्यवस्था व्यवहारेऽपि न ते तत्त्वे तु दूरतः।
ननु सा दृश्यते बाढं किं तु सा नैव युज्यते ॥ ५० ॥

तव तु भ्रान्तिबाधव्यवस्था व्यवहारेऽपि न युक्ता। इदं सत्यमसत्यमद इति वस्तुतत्त्वव्यवस्था तु दूरोत्सारिता। मम त्वैकात्म्यमेव सत्यं न द्वैतमिति व[3]स्तुतत्त्वव्यवस्थाप्यस्ति। ननु भ्रान्तिबाधादिव्यवस्था व्यवहारे दृ[4]श्यत एव न तु युज्यते त्वत्पक्षेऽपि, सर्वस्य मायामयत्वात्। सत्यम्, तथापि भ्रान्तस्यापि कस्यचिद्बाधस्स्वप्ने सिद्धस्तवापि [?]। न त्वेवं

[1] C ( ॰त्तस्मा॰ )।   [2] CDE ( ॰णामवि॰ )।
[3] CDE ( ॰स्तुतत्त्व॰ )।   [4] D ( ॰श्यन्त ए॰ )।

सत्यस्यापि बाधः क्वचित्सिद्धो मम। अतस्सर्वस्य मायामयत्वेऽपि दृश्यमाना व्यवहारव्यवस्था मम युज्यते, दृष्टान्तभावात्; न तु तव, तदभावात्। तस्मान्मायात्मकमेव रूप्याद्येष्टव्यम् ॥ ५० ॥

यतः—

मायामनिच्छतस्तुच्छख्यातिः प्राप्नोत्यनीप्सया।
यतो न शुक्तौ रूप्यं तत्संसर्गो वास्ति कुचचित् ॥ ५१ ॥

मायात्मकं रूप्यादीत्येवमनिच्छतस्तुच्छं रूप्यादि ख्यातीत्यनिष्टं प्रसज्येत। यतश्शुक्तौ ख्यातं रूप्यं रूप्यसंसर्गो वा शुक्तेर्न क्वचिदस्ति, अतस्तस्य कथंचिदपि सत्त्वासंभवादनिर्वचनीयतामनभ्युपगच्छतस्तुच्छाभ्युपगमो बलात्प्राप्नोत्येव। अतो मायाभ्युपगम एव श्रेयानित्यभिप्रायः ॥ ५१ ॥

अत्राह तुच्छं भातीति तथा बाधाद्धि गम्यते।
न हन्ति बाधधीर्वस्तु सा हि तत्त्वप्रकाशिका ॥ ५२ ॥

'न शुक्तौ रूप्यं तत्संसर्गो वास्ति कुचचित्' इति श्रुत्वा अत्रावसरे तुच्छवाद्याह—तुच्छमेव रूप्यं भाति, तस्य नेदं रजतमिति बाधात् तुच्छतावगमात्। न च बाधो वस्तु नाशयति, तत्त्वनिवेदकत्वात् ज्ञानस्य। बाधकज्ञाने हि सति रूप्यं न भाति नास्ति च। यदि सत् रूप्यम्, तत्किं न भवेन्न भाति वा। नास्तीति च भाति। न चेत्, तन्न कुचचिदस्तीति कथं मायावाद्यपि ब्रूयात्। ब्रवीति च। अतस्सोऽपि तस्यासत्त्वं वेत्त्येव, बाधात्। न स रूप्यस्यासत्त्वं वेत्ति, किंतु सत्त्वाभावमात्रम्; तच्च न बाधकज्ञानात्,

तस्य सदर्थत्वादिति चेत्—कोऽन्यस्तत्त्वाभावोऽसत्त्वात् । अतस्तत्त्वाभावं वेत्ति चेत्, असत्त्वं वेत्त्येव । बाधकश्चेन्नासत्त्वं रूप्यस्य बोधयेत्, कोऽन्यो बोधयेत् सत्त्वेन ख्यातस्य तस्य । कथं च स बाधकस्स्यात् । अतो बाधधी रूप्यस्य तुच्छता-मेव बोधयति, नान्यथा बाधधीस्स्यात् घटादिधीवत् सदर्थत्वात् । तस्मात्तुच्छमेव भातीति ॥ ५२ ॥

न स्याद्भ्रान्तिस्तया सच्चेद्बोध्यते काच बाध्यता ।
ततो बाधादसत्येव सद्धीर्भ्रान्तिरितीष्यताम् ॥ ५३ ॥

ननु न भ्रान्तौ बाधबुद्धौ च तुच्छं ख्याति, तस्य ख्यात्य-योगादिति चेत्—नैतद्युक्तम्, यतस्तया भ्रान्त्या बाधधिया च सच्चेद्बोध्यते, बाध्यबाधकत्वायोगात् भ्रान्तिर्नाम न स्यात् । न हि सद्धीर्बाध्यते सद्धिया असद्धिया वा । नापि सद्धी-[1]र्बाधते सद्धियमसद्धियं वा सत्यरूप्यादिबुद्धिवत्, अन्यथा अतिप्रसङ्गाच्च । अतस्सद्धियोर्बाध्यबाधकत्वायोगात्तद्दर्शनाच्च असत एव सद्रूपेण ख्या[2]तिर्भ्रान्तिः । तस्य चासत्त्वबोधनं बाध इत्युपेयम् ॥ ५३ ॥

नासत्सत्त्वेन भातीति गीर्बाधेन विरुध्यते ।
यत्प्रत्यभाद्दो नेति बाध एव ह्यबूबुधत् ॥ ५४ ॥

तुच्छं निस्स्वरूपत्वात् स्वरूपेणापि न ख्याति, अतो नतरां सद्रूपेण ख्यातीति वचनं बाधकेन विरुध्यते । स हि यत् प्रतिभातं रूप्यं तन्नास्तीति तस्य तुच्छतां बोधितवान् । अतस्तेन विरोधस्स्यात् । तस्मात् 'असत्येव सद्धीर्भ्रान्ति-रितीष्यताम्' इति युक्तमेवोक्तम् ॥ ५४ ॥

[1] DE (०र्बाधिते) ।　　[2] CD (०तिभ्रा०) ।

न भाति तुच्छमिति गीस्तुच्छख्यात्या विरुध्यते।
न चेत्तद्भाति तुच्छत्वं कुतोऽतुच्छं न किं भवेत् ॥५५॥

ननु तुच्छं तुच्छत्वादेव न ख्याति, अतो रूप्यस्य तुच्छतां बाधो बोधयतीत्ययुक्तमुक्तमिति चेत्—ए[1]तद्वचनं नेदं रजतमित्यनयैव तुच्छख्यात्या विरुध्यते। न हि नेदं रजतमिति रूप्यसत्त्वं बोध्यते, नञो वैफल्यात्पूर्वज्ञानवदबाधकत्वप्रसङ्गाच्च। यदि रूप्याभावो नाम धर्मश्शुक्तेरन्यस्य वा वस्तुभूतो बोध्येत, तदाप्यबाधकत्वं स्याद्वस्त्वन्तरज्ञानवत्। प्रत्यक्षभ्रमस्य प्रत्यक्षमेव बाधकं नाभावज्ञानं दौर्बल्यादिति चेत्—नायं दोषस्स्यात्, भ्रमत्वात्। अभ्रमत्वे प्रत्यक्षमपि न बाधकं स्यात्तुल्यबलत्वात्। द्वयोर्वा बाधस्स्यात्। प्रत्यक्षं च भावविषयं कथं रूप्यबाधकं स्यात्। विरोधात् बाधकमिति चेत्, भावज्ञानयोर्भिन्नविषययोर्न विरोधो युक्तः घटपटज्ञानयोरिव। अभिन्नविषययोर्नतरां घटज्ञानयोरिव। मायावादिनापि रूप्यस्य सत्त्वाभावं वदता तत्प्रमाणं बाध एष्टव्यः। बाधश्चेत्तमबोधयन् पर्यवस्येत्, रूप्यसत्त्वमबाधितं तिष्ठेत्। अतस्तुच्छतैव बाधेन रूप्यस्य बोध्येति, न भाति तुच्छमिति गीस्तुच्छख्यात्या विरुध्यत एव। न [2]चेत्तुच्छं भाति, कुतस्तस्य तुच्छत्वं निश्चितम्। अतुच्छं कस्मान्न भवेत्। तस्मात्तुच्छं न भाति चेत्—तुच्छं न भातीति न शक्यं वक्तुम्, तस्याज्ञातत्वात्। ज्ञातं हि इदमित्थमिति ब्रूयाल्लोकः। तस्माद्भात्येव। अतस्तुच्छं न भातीति वदन् मृषावादी स्यात्, ज्ञात्वैव अन्यथा-

[1] D (०तच्च व०)। [2] CD (चेत्तत्तु०)।

वचनान्माता वन्ध्येतिवत्। विरुद्धार्थवादी च, तुच्छ-शब्देनैव अर्थाज्ज्ञातत्वोक्तेः। तद्भ्रान्तिनिवृत्त्यर्थं तद्वचनमिति चेत्—न सद्वादिनामीदृक् भ्रमस्समस्ति, तुच्छख्यातेः तुच्छस्य वा रूप्यवत् क्वचित्सिद्धत्वेनानभ्युपगमात्। अभ्युपगमे च तुच्छख्यातेस्सर्वात्मना अपलापो न युक्तः। मायावादिनापि तुच्छभ्रान्तिमिच्छता तुच्छभ्रान्तौ तुच्छस्य ख्यातिरेष्टव्या रूप्यभ्रान्ताविव रूप्यस्य, अन्यथा न तद्भ्रान्तिस्स्यात्। अतो न तु[1]च्छस्य ख्यात्यनर्हत्वम्, भ्रान्तौ ख्यातेः। न भ्रान्तौ तुच्छं ख्याति नापि रूप्यम्, किंतु मायैव रूप्यरूपा तुच्छरूपा च ख्यातीति चेत्—तथापि तुच्छरूपं नाम किंचिद्रूप्यरूपवत् ख्यात्यर्हं सिद्धम्। तस्मान्मायावादिनापि सद्वादिभिरिव न तुच्छं ख्यातीति मद्भ्रमनिवृत्त्यर्थमपि न युक्तं वक्तुम्, तुच्छभ्रमाभ्युपगमेऽपि तुच्छख्यातेरवश्याभ्युपेयत्वात्। नान्यथासौ तुच्छभ्रमस्स्यात्। यत् ख्याति तेन हि भ्र[2]मो व्यपदिश्यते रूप्यभ्रम इति यथा। तस्मात्सर्वथा तुच्छं न ख्यातीति वचो न युक्तिमत् ॥ ५५ ॥

किंच—

एष्टव्यैव च सन्मायावादिभ्यामपि तुच्छधीः।
तथा नास्त्येव तत्क्वापि यथा भान्नान्यथा भ्रमः ॥ ५६ ॥

शुक्तिसामानाधिकरण्येन रूप्यं भ्रान्तौ भाति, न च तथा अस्ति अन्यथा सदपि; अन्यथा भ्रमो न स्यात्। अतश्शुक्तिरूप्यसामानाधिकरण्यस्य सद्वादिना तुच्छस्य ख्यातिरेष्टव्या। तथा मायाया अतुच्छत्वेऽपि तस्या रूप्यत्वं सत्त्वं च

[1] CD (॰च्छख्या॰)।　　[2] C (॰मोऽप्यप॰)।

नास्त्येव, अनिर्वाच्यत्वात्। अतस्तदुभयं तुच्छमेव अतुच्छवद्भ्रान्तौ ख्याति सामानाधिकरण्यवदिति मायावादिनापि भ्रान्तौ तुच्छख्यातिरेष्टव्या सद्वादिनेव। तथा [1]तद्बाधोऽपि, अत एव। न हि तुच्छस्य तत्त्वं बोधयन् बाधोऽतुच्छख्यातिस्स्यात्॥ ५६॥

योन्यात्मनास्य सत्त्वेऽपि बाधे रूप्यात्मनास्ति न।
सत्त्वेऽप्यव्यक्तरूपेण व्यक्तरूपेण नास्ति तत्॥ ५७॥

यदि मायावादी ब्रूयात्—मायाविवर्तत्वाद्रूप्यस्य तदस्तित्वस्य च स्वकारणमायात्मना सत्त्वान्न भ्रान्तौ तुच्छं ख्यातीति, तथापि न बाधे रूप्यात्मना अस्तीति च भाति, किंतु तुच्छमेव भाति। अतो भ्रान्तावपि तुच्छमेवाभान्नातुच्छम्, अन्यथा बाधोऽप्यतुच्छतामेवास्य बोधयेत्। न त्वबोधि। न च सद्धीर्बा[2]धत इत्युक्तम्। ननु सच्छुक्तिधीरेव तदज्ञानतज्जरूप्यादि दहति, अतस्सद्धीरेव बाधिका न तुच्छधीरिति चेत्—नैतद्युक्तम्, त्वयापि हि रूप्याभावज्ञानमिष्टं तन्न कुत्राप्यस्तीति वदता। अतस्तस्यैव बाधकत्वं न्याय्यम्, प्रसिद्धत्वात्। अतो न भावज्ञानस्य बाधकत्वम्। रूप्यादेश्च अज्ञानजत्वाद्यप्रसिद्धं कल्पनीयम्। अज्ञानं च ज्ञानाभावः। अतस्तज्जं चेत् रूप्यादि, अभावजत्वान्न मायाजं स्यात्। मायाप्यज्ञानं चेत्—साप्यभाव एवेति तज्जस्य नानिर्वाच्यता, अपि त्वसत्त्वं स्यात्। यद्धि यतो जातं तत्तदात्मकं त्वयेष्टम्। अतोऽसदेव रूप्यादि, असत उत्पत्तेः। यद्यसज्जातमपि सत्—तथापि नानिर्वचनीयम्,

[1] CD (तद्बोधो०)। [2] E (०ध इ०)।

सत्त्वात् । न चासज्जमनिर्वाच्यं त्वयेष्टम् । अतो नानिर्वाच्यता रूप्यादेः । अनिर्वाच्यत्वेऽपि मायायास्तज्जं रूप्यादि नानिर्वाच्यं स्यात्, अमायात्मकत्वात् । न ह्यसतो जायमानस्य पूर्वसिद्धमायात्मता स्यात् । न च सत्त्वे जन्म अर्थवत् । अनभिव्यक्तरूपेण सतोऽपि अभिव्यक्तरूपेण जन्मेति चेत्, तथाप्यभिव्यक्तरूपस्य प्रागसत्त्वादमायात्मता ॥ ५७ ॥

व्यक्ताव्यक्तात्मनोरैक्ये सदा व्यक्तिर्भवेन्न वा ।
भेदे त्वव्यक्तभावेऽपि व्यक्तभावो न निश्चितः ॥ ५८ ॥

नन्वनभिव्यक्तमेवाभिव्यक्तं स्यात्, अतस्तयोरभेदात् नासज्जन्मेति चेत्—तदापि तयोरभेदात् सदाभिव्यक्तिरनभिव्यक्तिरुभयं नोभयं वा स्यात् । न तत्र कार्यं कारणं वा किंचित्स्यात् । भेदे त्वनभिव्यक्तस्य भावेऽप्यभिव्यक्तस्याभावात् तस्य असतो जन्मेति न मायात्मता स्यात् । असच्चेज्जायते, किं तस्य मायया । नासतोऽसत्त्वाज्जन्मेति चेत्—न सतोऽपि, सत्त्वात् । सतो मायया जन्मेति चेत्—माययापि न सिद्धेनात्मना जायते, सिद्धत्वात् । असिद्धेन चेत्, असतो जन्म । अतोऽसत एव जन्म सर्वस्य । असतश्चेज्जन्म, किं तस्य सता अनिर्वाच्येन वा कारणेन । अतोऽसदेव असत एव जायते सर्वमिति न किंचिदनिर्वाच्यं सिध्येत् ॥ ५८ ॥

किंच—

नेहानिर्वचनीयत्वं दृश्यते न च युज्यते ।
तन्न सच्चेदसत्प्राप्तमसत्सत्प्रतियोगि हि ॥ ५९ ॥

न तावदिह लोकेऽनिर्वचनीयत्वं कस्यचिद्दर्शनतस्सिद्धम्। नापि युक्तितः, उक्तेन न्यायेन। तच्चेदनिर्वाच्यं सन्न भवति, असदेव हि प्राप्तम्। असदेव हि सतः प्रतियोगि प्रसिद्धं नान्यत्किंचित् ॥ ५९ ॥

सन्नेत्युक्ते न संदेहोऽप्यनिर्वाच्यं न्वसन्न्विति ।
कार्यकारणयोरैक्येऽनिर्वाच्यत्वे च को यमः ॥ ६० ॥

यद्यसदिव अनिर्वाच्यमपि सतः प्रतियोगि प्रसिद्धं स्यात्, तदा सन्न भवतीत्युक्ते संदेहस्स्यात्—अनिर्वाच्यं नु तत्, असन्नु तदिति। न तु तथा संशेरते जनाः, किंत्वसदित्येव निश्चिन्वन्ति। तस्मान्न सच्चेत्, तदसदेवेति नानिर्वाच्यं स्यात्। अपिच—असज्जन्मपरिहाराय कार्यकारणयोरभेदेऽनिर्वाच्यत्वे च इष्टे न कार्यकारणनियमस्स्यात्। तस्मादसत एव असदेव सद्रूपेण जायत इत्यभ्युपेयम्, कार्यकारणनियमसिद्ध्यर्थम् ॥ ६० ॥

असद्वा असदेवेदमित्यसज्जन्म च श्रुतम् ।
संज्ञाभावश्श्रुतो मोक्षस्ततोऽनावृत्तिसंभवः ॥ ६१ ॥

भवतां प्रमाणत्वेनातितरामिष्टा श्रुतिः प्रागुत्पत्तेरसदेव सर्वं जगदसत एव सद्रूपं जायत इत्याह—'असद्वा इदमग्र आसीत्ततो वै सदजायत,' 'असदेवेदमग्र आसीत्तत्सदासीत्' इत्याद्या। अतस्समस्तजगत्कारणत्वादसदेव ब्रह्म। तत्प्राप्तिश्च मो[1]क्षश्श्रुतः। अतस्संसारिणां शून्यताप्राप्तिरेव मोक्षः। तथाच श्रुतिः—'न प्रेत्य संज्ञास्ति' इति बोधस्यापि मोक्षेऽभावं श्रावयति। अतो-

[1] BCDE (०क्षश्श्रुतः)।

ऽनावृत्तिसंभवात् 'न च पुनरावर्तते' इत्याद्या अनावृत्तिश्रुतिरप्युपपन्नार्था भवति—इति सर्वशून्यवादिनो मतं संक्षेपतो दर्शितम् ॥ ६१ ॥

अत्रोच्यते—

मैवं मा चूचुदो मायामनिर्वाच्यामृते यतः ।
नासत्सिद्धिरसत्ख्यातिर्दूरे काशा भ्रमे तदा ॥ ६२ ॥

शून्यपक्ष एव भ्रान्तिबाधजन्मनाशबन्धमोक्षादि संभवति, न मायापक्ष इत्येवं पूर्वोक्तैर्हेत्वाभासैर्मा चूचुदो माम्—यतोऽनिर्वाच्यां मायां विना असन्नाम न किंचित्सिध्येत् । असतोऽसिद्धत्वादेव तस्य ख्यातिर्दूरोत्सारिता, तस्या विषयाभावात् । अतोऽसतोऽप्रसिद्धत्वात् असतस्तद्रूपेण ख्यातिर्भ्रमः, तस्य चासत्त्वबोधनं बाधः, असत एव सर्वस्य जन्म, असदेव कारणम्, अतस्तदेव ब्रह्म, तत्प्राप्तिर्मोक्ष इत्यादावसद्व्यपाश्रयेऽर्थे आशा मनोरथमात्रमपि न संभवेत् तदा—असतोऽप्रसिद्धत्वादेव तद्व्यपाश्रयस्य मनोरथस्याप्यसंभवात्, सिद्धाश्रयत्वात्तस्य ॥ ६२ ॥

सतोऽन्यदस्त्यसन्नाम यदि शून्यं तदा कथम् ।
नास्ति चेन्नासतः ख्यातिः कुतोऽसद्धीस्सदात्मना ॥ ६३ ॥

कथं मायां विना असतोऽसिद्धिरिति चेत्, उच्यते—किमसन्नाम सतो भेदेन अस्ति, उत नास्ति। अस्ति चेत्—न तस्य तुच्छता, सत्त्वादेव । नास्ति चेत्, असत् ख्यातीत्यादिवचोऽयुक्तम् ; अतस्तद्भ्रान्तिमूलमेव ॥ ६३ ॥

नन्वस्तिनास्तिधीशब्दौ नैकार्थौ तेऽप्यसद्यतः ।
व्यत्नीकृपोऽस्ति नास्तीति समातो गतिरावयोः ॥ ६४ ॥

ननु तवाप्यस्तिनास्तीत्येवंबुद्धिपूर्वावस्तिनास्तिशब्दौ नैकार्थौ किंतु भिन्नावेव, अन्यथा तद्व्यवहारासिद्धेः। नास्तिव्यवहारोऽनिर्वाच्यविषय एव, तुच्छस्याख्यातेरसतस्त्वयेष्टस्येति चेत्—नैतद्युक्तम्, यतो मयोक्तं तुच्छमसत्प्रतीत्य सतो भेदेन, असच्छब्देन चोक्ता तद्यचीक्लृपस्त्वम्। यदि तन्न भात्यसच्छब्देन च नोक्तम्, न तद्विकल्पितं दूषितं च स्यात्। अतस्तद्दूषयतापि ज्ञेयत्वं शब्दवाच्यत्वं चाभ्युपेयम्, अन्यथा तद्विकल्पाद्यसिद्धेः। अपिच—अस्ति, उत नास्तीति विकल्पितवानसि। अतोऽनयोर्भिन्नार्थता सिद्धा। न ह्यभिन्नार्थाभ्यां विकल्प्यते, विकल्पासिद्धेः। न चातुच्छार्थविवक्षायां मां प्रत्ययं नास्तिशब्दः प्रयोक्तव्यः, तस्य अतुच्छार्थतासिद्धेर्मम। अतस्तुच्छविवक्षयैव प्रयुक्तः, अन्यथा 'नास्ति चेन्नासतः ख्यातिः' इत्यत्र तुच्छस्यानुक्तत्वादतुच्छख्यातिरेव निरस्ता स्यात्। तस्मान्नास्त्यसत्तुच्छं शून्यमित्यादिशब्दार्थव्यवस्थापने या तव गतिः, सैव ममापीत्यावयोस्तुल्यैव गतिः ॥ ६४ ॥

अतो नासत्तत्ख्यात्याद्यसिद्धिरिति चोदित आह—

मयाश्रितमसन्मायासिद्धं तच्च व्यचीक्लृपम्।
न्यायैश्च लोकसिद्धैस्तन्मायामात्रं न्यरूरुपम् [?] ॥ ६५ ॥

सत्यमस्ति नास्तीति च धियौ शब्दौ च व्यवहारेऽपि भिन्नार्थाविव ममापि, अन्यथा तद्व्यवहारासंभवात्। तथापि नास्त्यसदित्यादिशब्दार्थोऽसत् तुच्छं मया नाश्रितं व्यवहारे, तस्य तदयोग्यत्वात्। किंतु मायासिद्धमनिर्वाच्यमसदाश्रितम्—तस्य अतुच्छत्वात्तद्व्यवहारयोग्यत्वात्,

अतुच्छत्वेऽपि सतो नास्तिव्यवहारानर्हत्वाच्च। ननु तुच्छस्यापि तुच्छशब्दवाच्यत्वं ख्यातिश्चास्ति, अन्यथा तत् अबुद्ध्यारूढं मया चानुक्तं कथं त्वया वाचा विकल्प्यते दूष्यते वा। नायं दोषः, यतस्त[1]त्तुच्छं मायोत्थभ्रमसिद्धं त्वयोक्तं च श्रुत्वा तद्वाचकतया त्वयेष्टैश्शब्दैस्तद्विवक्षयैव प्रयुज्यमानैः त्वद्भ्रमनिवृत्त्यर्थं विकल्पितवान्दूषितवांश्चाहम्; न तु प्रमाणतस्सिद्धम्, नापि तद्वाचकतया गृहीतसंबन्धैश्शब्दैः। भ्रान्तिसिद्धमेव सर्वैर्दूष्यते न प्रमाणसिद्धमसिद्धं वा, अशक्यत्वान्निष्प्रयोजनत्वाच्च तद्दूषणस्य। न च विकल्पदूषणाभ्यां दूष्यसिद्धिः, अतिप्रसङ्गात्। न च भ्रान्तिमात्रात्तुच्छस्य सिद्धिः, रूप्यादेरपि तत्प्रसङ्गात्। अतस्तुच्छं तुच्छख्यातिर्वा यत्किंचिद्भ्रान्तौ स्फुरति तत्सर्वं मायाशरीरमेवेति भ्रान्तावपि तुच्छस्य नास्ति ख्यातिः। अतो भ्रान्तावपि तुच्छरूपं चेत्ख्याति, रूप्यवत्तदपि ख्यात्यर्हमिति यदुक्तं तत्प्रत्युक्तम्—भ्रान्तौ स्फुरतो मायामात्रदेहत्वात्, तुच्छस्य च रूप्यवत् क्वचिदसिद्धेः। न च क्वापि सिद्धमेव भ्रान्तौ ख्यातीति ते मतं सद्वादिवत्। न च रूप्यमपि भ्रान्तौ भाति, तस्यारूप्यत्वात्। अतोऽरूप्यमेव रूप्यमिति भाति। एवमतुच्छमेव तुच्छमिति भ्रान्तौ भातीत्यभ्युपेयम्। तुच्छं चेद्भ्रमे भाति, तस्यापि तुच्छत्वं रूप्यस्येव त्वयाभ्युपेयं स्यात्। तुच्छस्य तुच्छान्तराभ्युपगमेऽनवस्था स्यात्। अतो न क्वचिदभावभ्रमस्स्यात्, त्वत्पक्षे[2]ऽभावभ्रमेऽसत्ख्यात्यसंभवात्। भाव एवाभावस्याभावो नाभावान्तरमिति चेत्—

[1] CDE (०स्तच्च तु०)। [2] CDE (तत्पक्षे)।

भावेऽप्यभावबुद्धिशब्दाविष्टौ चेत्, तथैव सर्वत्र तावेष्टव्यौ न तुच्छविषयौ। प्रतीतिन्यायविरोधात् भावे तौ न युक्ताविति चेत्, अनिर्वाच्यविषयौ तर्हि ताविच्छ। भ्रमं च, अभावभ्रमस्यासत्ख्यातित्वायोगात्। अतो न भ्रमेऽपि तुच्छं भाति। तस्मान्मायोत्थभ्रमसिद्धमेवासद्यचोक्षूपम्—किं तत्सतोऽन्यदस्ति, उत नास्तीति—सत्त्वे घटादि[1]वन्न शून्यत्वम्, असत्त्वे तदसिद्धेस्तत्ख्यात्याद्यसिद्धिरिति। मायां विना असतस्तत्ख्यातेश्चासिद्धिमवोचम्, माययैव तत्सिद्धिरिति स्थापयितुम्। भ्रम एव च सिद्धत्वाद्रूप्यवत् त्वयोक्तमसदपि मायामात्रमिति रूप्यस्य मायामयत्व उक्तैर्लोकप्रसिद्धैर्न्यायैर्निरूपितवानस्मि। रूप्यस्य मायामयत्वनिरूपणेन सर्वस्यैव भ्रमे स्फुरतो मायामात्रत्वं निरूपितमेवेत्यभिप्रायः। असदादिशब्दानामसद्बुद्धेश्च सत्तुच्छविषयत्वायोगाच्च मायामात्रमसदिति न्याय्यम्। 'सतोऽन्यदस्त्यसन्नाम' इत्यादौ शून्यासन्नास्तिशब्दानां तुच्छवाचकतया त्वयेष्टानां तत्परतयैव मयापि प्रयुक्तत्वात् नानिर्वचनीयतत्ख्यातिनिरासप्रसङ्गः। न सन्नाप्यसत् रूप्यादीत्युक्तेरपि त्वदिष्टतुच्छतानिरासार्थत्वात् नानिर्वा[2]च्यतानिरासप्रसङ्गः। तस्मादसद्व्यवहारविषयो मायाविलसित एव। तथापि तद्व्यवहारनियमो युज्यते रूप्यादिव्यवहारनियमवत्। अतो मायां विना असतोऽसिद्धेः असत्पक्षसाधनानि मायापक्षदूषणानि च असद्यपाश्रयाणि त्वयोक्तानि असन्निरासेनैव निरस्तानि।

[1] BDE (०वन शू०)। [2] CDE (०च्यतां नि०)।

अतस्त्वदुक्तसाधनदूषणानां दूषणपरिहारा न प्रत्येकं प्रपञ्च्यन्ते ॥ ६५ ॥

तवासन्न तु मायैव वाच्यातस्सदसद्भिदा ।
सदसद्भ्यामनिर्वाच्यां मायां तां मा विजीघटः ॥ ६६ ॥

मम तावदुक्तेन न्यायेन मायामात्रमसदिति स्थितम् । तव तु न मायामात्रमसत् । अतस्त्वया सतो भेदेन असतस्स्वरूपं वक्तव्यं घटादिव पटस्य । तस्य च सत्त्वेऽसत्त्वे च नासतस्सिद्धिरित्युक्तम् । सदसद्भेदाभेदविकल्पैर्मायामपि विघटयामि, यथा त्वमसदिति चेत्—मैवं क्लेशं कार्षीः । अशक्या हि सा एवं विघटयितुम्, सदसद्भ्यामनिर्वाच्यत्वात् । अत एव न भिन्ना नाप्यभिन्ना सतः । तस्मान्नावयोस्समानगतित्वम्—यतोऽसन्मायां नेच्छसि । इच्छसि चेत्, अस्तु समानगतिता । न च सास्ति, पक्षद्वयाभावात् ॥ ६६ ॥

असन्नास्तीत्यसत्तूक्तं नासतोऽभाव उच्यते ।
नासतोऽन्यत्सदप्युक्तं सदस्तीति यथोच्यते ॥ ६७ ॥
असत्सतोऽन्यदस्तीति लिलक्षयिषयासतः ।
असत्येवास्तिशब्दोऽयं मायायामस्तिशब्दवत् ॥ ६८ ॥

सतोऽन्यदसदस्ति उत नास्तीति विकल्पिते, अस्ति नास्तीति वा मायामनिच्छता वाच्यम्; उभयथाप्यसतोऽसिद्धिरित्युक्तमयुक्तम्, उभयथापि तत्सिद्धेः । कथम् । असन्नास्तीत्यसदेवोच्यते न तु तस्याभावः, नापि ततोऽन्यत् सत् । यथा अस्ति उत नास्ति सदिति विकल्पिते, तदेव सदस्तीति त्वयोच्यते न तु तस्य सत्त्वान्तरं नाप्यसत्त्वम्—एवमसत् सतोऽन्यन्नास्तीत्युक्तेऽप्यसतो नासिद्धिः । एवमस्तीत्युक्तेऽपि,

यतोऽसत एव स्वरूपबुबोधयिषया अस्तिशब्दानर्हेऽपि तस्मिन्नसत्येव अस्तिशब्दः प्रयुज्यते न तु तत्सत्त्वविवक्षया—यथा मायायामनिर्वाच्यायामप्यस्तिशब्दो भ्रान्त्याद्यवस्थायां माया अस्तीत्यादिप्रयोगेषु तव ॥ ६७ ॥ ६८ ॥

सतोऽन्यत्वमताद्रूप्यान्न त्वसद्भेदसत्तया।
असद्भेदोऽपि सद्भेदादिति चेदुक्तमुत्तरम् ॥ ६९ ॥

सतोऽर्थादसतोऽन्यत्वे घटादिव पटस्य, असतोऽपि सत्त्वं स्यात्—अन्यत्वात्पटवत्। सद्वच्च, सतोरेव लोकेऽन्यत्वदर्शनात्। यद्यसतो न सत्त्वम्—किं सतोऽन्यत्, सद्वा कुतोऽन्यत् स्यात्। अतोऽन्यत्वे द्वयोरपि सत्त्वमभ्युपेयम्। अनन्यत्वे तु सत्स्वरूपवदसदपि नासत्स्यादिति चेत्—नैकोऽपि दोषोऽस्ति, यतस्सतोऽर्थादसतोऽन्यत्वं सतश्च तस्मादन्यत्वमतद्रूपत्वात् अनन्योन्यरूपत्वात् तयोः। न ह्यसत् सद्रूपं भाति, सद्वा असद्रूपम्। अतोऽतद्रूपत्वादेवान्यत्वं तयोः, न तु सतोऽर्थादसतो भेदेन सत्तया। भेदधर्मस्य वा तस्य सत्तया। अतो भेदधर्माभावात् घटादिवन्नासतस्सत्त्वप्रसङ्गः। भेदाभावेऽप्यसतः सत्स्वरूपवन्न सत्त्वं स्यात्, अतद्रूपत्वेन प्रतीतेः। यथा भेदवादिनां भेदस्य भेदाभावेऽपि न भेदिस्वरूपतैव—एवमसतो भेदाभावेऽपि न सत्स्वरूपतैव स्यात्, अतद्रूपत्वात्। असतो भेदाभावे कथं घटाभाव[1]ः पटाभावः प्रागभावः प्रध्वंसाभाव इत्याद्यसद्भेदव्यवहारो लोक इति चेत्, सोऽपि सतामेव घटादीनां भेदान्न तु स्वगतभेदात्—यथा घटयोर्भेदः पटयोर्भेद इत्यादिभेद-

[1] CDE (०वः प्रा०)।

व्यवहारः तद्भेदाभावेऽपि, यथा च तवोपाधिभेदादाकाशादिभेदः। तस्मान्नासतोऽसिद्धिः। नापि तत्र सदसत्त्वविकल्पस्य तद्रूपाविरोधेनोत्तरवचनासंभवः, अस्ति नास्तीति तद्वचनसंभवस्योक्तत्वात्। अतो नास्ति मत्पक्षे किंचिद्वक्तव्यम्। अस्ति चेद्ब्रूहीति चेत्, उक्तमुत्तरं त्वयैव तव। मया वा पूर्वमेवोक्तं 'सतोऽन्यदस्त्यसन्नाम' इत्यादिना। तथाहि—असतोऽपि सत्त्वेऽसत्त्वे च सदेवास्ति, नान्यत्किंचिदिति असतोऽसिद्धिः; सतोऽन्यत्वे च असतस्तदन्तरवत् सत्त्वम्, अनन्यत्वे च सदेव नान्यदिति असतोऽसिद्धिरित्युक्तम्। सतोऽनन्यत्वे च नासतोऽतद्रूपत्वम्। सतोऽपि तथा। न हि तदेवा[1]तद्रूपं स्यात्। यदि स्यात्—सदपि न सद्रूपं स्यात्, असदप्यसद्रूपम्। अनन्योन्यरूपत्वे च सदसतोरन्यत्वं घटपटवत् सत्त्वं च स्यात्। सदसद्रूपयोश्च भेदे सत्त्वं द्वयोः, अभेदे नान्यरूपता तयोः। असतोऽपि रूपवत्त्वे घटवत् सत्त्वम्, अरूपवत्त्वे तस्याभावात् कस्यातद्रूपत्वम्। अरूपत्वे चासतो नास्य भेदो दृष्टान्तस्स्यात्। भेदो हि रूपवानिष्यते। अरूपश्चेत्, सोऽप्यसता व्याख्यातः। तथा आकाशादिरपि, अरूपश्चेत्। रूपवांश्चेत्, नारूपस्यासतो दृष्टान्तस्सोऽपि भेदवत्। रूपवत्त्वे भेदस्याकाशादेश्च सत्त्वात् स्वरूपसिद्धेः तयोस्स्वगतभेदाभावेऽपि घटादिभेदादेव तयोर्भेदव्यवहारो युज्येतापि। न त्वरूपेऽसति, स्वरूपासिद्धेः। असत्यपि चेत् कोऽपि व्यवहारस्स्यात्—सर्व एव स्यात्, विशेषाभावात्। रूपवत्त्वे चासतस्सत्त्वमुक्तम्।

[1] BCE (०वासद्रू०)।

भेदभेदिनोश्च स्वरूपभेदे तयोर्घटपटवत् भेदोऽभ्युपेयः। भेदाभावे च तयोर्भेदिस्वरूपवदभेदात् भेदिनामपि भेदासिद्धेर्भेदव्यवहारोऽप्यसद्व्यवहारवत् भ्रान्तिमूल एव। अतो भ्रान्तिमूलत्वे तु दृष्टान्तस्स्यात्, नान्यथा। सर्वं चैतत्पूर्वमुक्तमेव मया सतो भेदाभा[1]वे सत्स्वरूपवदसतोऽपि सत्त्वमेवेत्यादि वदता। असतश्च स्वरूपासिद्धेः तचास्तिनास्तिशब्दप्रवृत्तिसंभवोक्तिक्लेशश्च व्यर्थः। सन्मायययोस्तु स्वरूपसिद्धेश्शब्दप्रवृत्तिसंभवान्न दृष्टान्तता। अतो न मयेदानीं किंचिद्वाच्यमस्ति ॥ ६९ ॥

सदेव सर्वमित्युक्तं त्वयैवातोऽत्र वच्मि किम्।
नन्वभाणि मयासच्च द्वितीयेऽसति चः कथम् ॥ ७० ॥

'न[2] त्वसद्भेदसत्तया' इत्यनेन सतो भेदेनासतो न सत्त्वम्, नापि तस्य भेदधर्मसत्ता—इति वदता सदेव सर्वं नान्यत्किंचिदित्युक्तम्। अत एव तत्र शब्दप्रवृत्तिश्च निरस्ता। अतस्त्वयैव तवोत्तरमुक्तम्, न मया किंचिद्वाच्यमस्त्यवशिष्टम्। ननु मयोक्तं सच्चासच्च, न तु सदेव सर्वमिति। मैवं वोचः—असति द्वितीये तत्समुच्चयार्थस्य 'च'कारस्यानुपपत्तेः, असतश्चावाच्यत्वात्तत्र शब्दाप्रवृत्तेरुक्तत्वात् ॥ ७० ॥

[3]सद्द्वितीयमसच्चेत्स्यात्सत्तृतीयं न किं भवेत्।
सतोऽपि [4]सद्द्वितीयत्वमयुक्तं किमुतासतः ॥ ७१ ॥

यद्यसदपि सतो द्वितीयं स्यात्, सद्वासतः, तदा तृतीयं

[1] CDE (॰वेऽस॰)। [2] BDE (नन्वस॰)।
[3] CD (सद्वि॰)। [4] CD (सद्वि॰)।

चतुर्थं परार्धसंख्यापूरकं च स्यात्, तद्विशेषाभावात्। असतो भेदाभावान्न तृतीयादिभाव इति चेत्, न द्वितीयभावोऽप्यत एव। न ह्यभिन्नं द्वितीयं स्यात्। सतोऽसद्वितीयं स्यान्न त्वसत इति चेत्—न, अविशेषात्। यद्य[1]सत्सतो द्वितीयं स्यात्, तत्किं नासतस्स्यात्। यस्य द्वितीयं तस्यासत्त्वे कस्य द्वितीयं स्यादिति चेत्—नायं दोषः, यथैव सत् असतो द्वितीयमेवमसदसतो द्वितीयं तृतीयं च स्यात्। अतोऽनन्तान्यसन्ति स्युः। किंच—न सदपि सतो द्वितीयम्, अभेदात्। किं पुनरसत्। सदन्तरं सतो द्वितीयमिति चेत्—तदपि सच्चेत्, न द्वितीयम्। न हि तदेव तस्य द्वितीयम्। असच्चेत्, नतराम्। सदन्तरं च सतोऽन्यत् सत्। न च सदेव सतोऽन्यत्स्यात्, अविशेषात्। मिथो भिन्नास्सद्विशेषास्सदन्तराणीति चेत्—तेऽपि सन्तश्चेत्, न भिन्नाः। भेदोऽपि संश्चेत्, भेदभेदिविभागो न युक्तः। पुरस्ताच्च निरस्तो भेदः। तस्मात्सतो भेदाभावाच्च सद्भेदादसद्भेद इत्ययुक्तम्। तस्मात्त्वयैवोक्तं तवोत्तरमिति सूक्तम्। अतो भेदव्यवहारवदसद्व्यवहारोऽपि मायाविलसितविषय एवेत्यभ्युपेयम्, सत्तुच्छयोस्तद्विषयत्वानुपपत्तेः ॥ ७१ ॥

एतदेवोत्तरेण ग्रन्थेन प्रपञ्चयति—

यद्युच्यतेऽसच्छब्देन ततोऽन्यत्तत्सदिष्यताम्।
नाभिन्नेऽसति वा वाच्ये वाच्यवाचकते यतः ॥ ७२ ॥

यद्यसदपि शब्देनोच्यते—तदा तस्माच्छब्दादन्यत् तत् अतुच्छं चाभ्युपेयम्, अन्यथा वाच्यवाचकतायोगात्तयोः।

[1] CDE ( यद्यत्सद्वि० )।

वाच्याभावे कस्य वाच्यता, किं वा वदन् वाचकस्स्यात्। अतो वाच्याभावे वाचकोऽपि न स्यात्। वाच्यवाचकयोरभेदेऽपि तथा। न हि वक्तैवोच्यते ॥ ७२ ॥

आह शब्दस्स्वयं वाच्य इति शब्दो न तत्तथा।
ऐक्ये हि वक्तृता वा स्याद्वाच्यता वा न तूभयम् ॥ ७३ ॥

अत्राह वैयाकरणः—शब्दस्स्वयमेव वाच्यो वक्ता चेति। न तद्युक्तम्। एकस्य हि शब्दस्य वक्तृता वाच्यता वा स्यात्, वाच्ये वक्तरि चान्यस्मिंस्तस्य सति। तदभावे तु उभयमपि न स्यात्, एकस्यैवोभयासंभवात् ॥ ७३ ॥

तथाहि—

वक्तृत्वेन समाप्तत्वाद्वाच्यत्वं तस्य न ध्वनेः।
ध्वन्यंशौ वक्तृवाच्यौ चेत्तदा वक्तुर्न वाच्यता ॥ ७४ ॥

यदा हि स वक्ता स्यात्तदा वक्तृत्वेनैव समाप्तत्वात्तस्य शब्दस्य न तद्वाच्यत्वम्। यदापि वाच्यस्तदापि वाच्यत्वेनैव समाप्तत्वान्न तस्य तद्वक्तृता। अतो नोभयं युगपत्क्रमेण वा एकस्यैव संभवेत्। ध्वनेरेकोऽंशो वक्ता, अन्यो वाच्य इति चेत्—तदापि वक्त्रंशस्य न वाच्यता स्यात्, वाच्यांशस्य च न वक्तृता। ननु 'शब्दः,' 'ध्वनिः,' 'अभिधा,' 'वाचकः'-इत्यादयश्शब्दास्स्वात्मानमपि वदन्तीति चेत्, तथाप्यन्यं वदन्त एव स्वात्मानमपि वदन्तीति शब्दवाच्या अपि ते नात्यन्तमभिन्नार्थाः। अर्थवाच्यास्तु घटादिशब्दा नात्मानं स्पृशन्ति। अतो वक्तृवाच्ययोः शब्दार्थयोर्भेदसिद्धेश्शब्द एव स्वयं वाच्य इत्ययुक्तम्। अतो न शब्दाद्वैतसिद्धिः, शब्दार्थराश्योर्वाचकतद्वाच्ययो-

भेदात् । अभेदेऽपि तयोः, सर्वार्थानां तत्तच्छब्देभ्योऽभेदात् तेषामपि तद्वाचकाच्छब्दशब्दादभेदस्स्यात् । अतश्चेन्द्रियमनोबुद्ध्यात्मार्थानां तच्छब्दानां च शब्दशब्दादनन्यत्वात्तस्य च जडत्वान्न किंचित्प्रकाशेत । अजडात्माभेदात् आत्मशब्दोऽप्यजड एवेति चेत्, तर्हि शब्दार्थयोरभेदाच्छब्दस्यार्थभावो न पुनरर्थस्य शब्दभावः । अतस्सर्वे शब्दास्स्वार्था एव स्युः । अथोच्येत अवाच्यत्वादात्मनो नाभेदश्शब्दात्, अतो नाजडाभावात् सर्वस्याप्रकाशप्रसङ्ग इति—तदापि इन्द्रियादीनां शब्दशब्दाभेदात्, तैश्च विना तस्यासिद्धेः, तदनन्यत्वाच्च सर्वस्यानात्मजातस्य, न किंचिदनात्मवस्तु प्रकाशेत । अतो नाभेदश्शब्दार्थयोः । असतश्चासच्छब्दात् सतोऽभेदेऽसद्व्यवहारो निर्विषयस्स्यात् । असच्छब्द एवासद्व्यवहार इति चेत्—न, तस्य सत्त्वात् । तथापि स्याच्चेत्—न तत्र सद्व्यवहारस्स्यात्, द्वयोरेकविषयत्वेऽन्यत्रापि तत्प्रसङ्गात् । अतश्च असच्छब्दे शब्दबुद्धिरस्तिबुद्धिश्च न स्यात् । अस्ति चोभयं शब्दान्तरेष्विव—अतो नासच्छब्देऽसद्व्यवहारो युक्तश्शब्दान्तरेष्विव, अन्यथा तत्रापि तत्प्रसङ्गात् । असच्छब्देऽसत्कल्पितमिति तत्रैवासद्व्यवहार इति चेत्, तर्हि नाभिन्नं शब्दात् । असदभेदे शब्दस्यापि कल्पितत्वम्, असतोऽप्यकल्पितत्वं वा स्यात् । अतश्च द्वयोरपि कल्पितत्वमकल्पितत्वं वेति शब्देऽसत्कल्पितमित्ययुक्तम् । अर्थ एव कल्पितः, न शब्द इति चेत्—तर्हि तयोरभेदो न युक्तः

[1] DE (०नां तच्छ०) ।

कल्पिताकल्पितयोः। घटादयोऽपि तच्छब्देषु कल्पिताश्चेत्, एतेनैव व्याख्याता द्रष्टव्याः। वाच्यस्य[1] च कल्पितत्वे वाचकस्य शब्दस्यापि वाच्यत्वात् कल्पितत्वमेव। अतोऽवाच्यवाचकरूपमात्मतत्त्वमेवाकल्पितमिति तत्रैव शब्दार्थौ कल्पितौ; न तु शब्देऽर्थः—तस्यापि कल्पितत्वात्तत्रार्थकल्पनायोगात्, अकल्पित एव सर्वस्य कल्प्यत्वात्। न हि कल्पिताश्रया कल्पनेति वक्ष्यामः। तौ च शब्दार्थौ मिथो भेदेनैव परिकल्पितौ। अतश्शब्द एव वाच्यो वाचकश्चेत्ययुक्तमेवोक्तम् ॥ ७४ ॥

शब्दब्रह्मविवर्तत्वाद्वाच्यवाचकयोर्भवेत्।
शब्दत्वमिति चेन्नैवमशब्दं ब्रह्म हि श्रुतम् ॥ ७५ ॥

यद्यपि वाच्यवाचकौ मिथो भिन्नावेव कल्पितौ, तथापि तयोश्शब्दब्रह्मविवर्तत्वात्—तत्रैव कल्पितत्वादित्यर्थः, अतः—तदभेदात् तयोश्शब्दत्वोपपत्तेः शब्द एव वाच्यो वाचकश्चेति नायुक्तमिति चेत्—मैवं मंस्थाः, कल्पिताकल्पितयोरभेदायोगाद्ब्रह्मणश्च शब्दत्वे प्रमाणाभावात्। कल्पिताकल्पितयोर्ह्यभेदे द्वयोः कल्पितत्वमकल्पितत्वं वा स्यादित्युक्तम्। ब्रह्मणश्च कल्पितत्वे तस्याब्रह्मत्वादकल्पितं ब्रह्म अन्यदभ्युपेयम्। प्रपञ्चस्य वा अकल्पितत्वे ब्रह्माभिन्नत्वे च वाच्यवाचकादिभेदप्रतिभा न स्यात्, ब्रह्मणस्तद्भेदहीनत्वात्। अत एव नाभिन्नं प्रपञ्चाद्ब्रह्मेष्यते। इष्यते चेत्—अब्रह्म स्यात्, अब्रह्मलक्षणत्वात् प्रपञ्चस्य। न च प्रपञ्चमूलं ब्रह्म स्यात्। न हि तदेव तस्य मूलम्।

[1] C (०स्य क०)।

तन्मूलं चेष्यते ब्रह्म। अतोऽकल्पितत्वेऽपि प्रपञ्चस्य नाभेदो ब्रह्मणो युक्तः। किं पुनः कल्पितत्वे। भेदो भेदाभेदौ[दः ?] च निरस्तौ। तस्मान्मायाकल्पित एव प्रपञ्चो ब्रह्मणि, न भिन्नो नाभिन्नो नापि भिन्नाभिन्नस्स ब्रह्मण इति चाभ्युपेयम्[1]। उक्तं हि 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्याद्यैर्वचनैः। अतः 'इदं सर्वं यदयमात्मा' इत्यादीन्यपि वचांसि न प्रपञ्चस्यात्मनोऽभेदं वदन्ति, किं त्वैकात्म्यमेव बोधयन्ति। तस्य भेदाद्यभावेन कल्पितत्वमेव सूचयन्ति ॥

नन्वेवं तर्ह्यात्मैव सर्वमितिवत् शब्द एव वाच्यो वाचकश्चेति वयमपि ब्रूमः। तदुक्तम्—'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥' इति। नैवमपि तद्वचो युक्तं शब्दो ब्रह्मेति, प्रमाणाभावात्। अब्रह्मत्वं चोक्तं शब्दस्य, तस्यापि कल्पितत्वात्। इन्द्रियग्राह्यत्वाच्च रूपादिवत्तस्याब्रह्मत्वं युक्तम्। न चानिन्द्रियग्राह्यश्शब्दस्स्यात्, श्रोत्रग्राह्ये शब्दशब्दप्रयोगात्। आन्तरोऽपि शब्दश्शब्दत्वात् बाह्यशब्दवच्छ्रोत्रग्राह्य एव। 'कर्णावपिधाय शृणोति' इति च श्रुतेः[2]। श्रोत्राग्राह्यत्वेऽपि बुद्धिग्राह्यत्वाच्छब्दत्वाच्च बाह्यशब्दवदब्रह्मत्वं तस्य। बुद्ध्यग्राह्यश्चेत्त्वयेष्टश्शब्दः—सोऽस्वयंप्रकाशश्चेत्, न सिध्येत्; स्वयंप्रकाशश्चेत्, आत्मैव स्यात्। न चात्मा शब्दः, अप्रसिद्धेश्शब्दज्ञत्वाच्च। न च ज्ञेयो ज्ञाता स्यात् घटवत्। अज्ञेयस्याशब्दत्वात् ज्ञेयस्य च घटादिवदब्रह्मत्वात् न

[1] BCDE (०ति वाभ्यु०)। [2] CE (श्रुते)।

ब्रह्मणश्शब्दत्वम्। न च शब्दो ब्रह्मेति श्रुतिरस्ति। यदि नामास्ति तथापि सा अन्यपरा; न तु शब्दस्य ब्रह्मत्वं ब्रह्मणो वा शब्दत्वं वदेत्, उक्तेभ्यो हेतुभ्यश्शब्दस्याब्रह्मत्वाद्ब्रह्मणश्च शब्दत्वेऽब्रह्मत्वप्रसङ्गात्। 'यद्वाचानभ्युदितं[1] येन वागभ्युद्यते,' 'यच्छ्रोत्रेण न शृणोति,' 'अशब्दमस्पर्शम्' इत्यादेर्न शब्दो ब्रह्म नापि शब्दवदिति श्रुतम्। अतश्शब्दो ब्रह्मेत्ययुक्तम्। अतो ब्रह्मविवर्तत्वेऽपि जगतोऽशब्दविवर्तत्वात् 'ब्रह्मैवेदम्,'[2] 'आत्मैवेदम्' इतिवत्, शब्द एव वाच्यो वाचकश्चेत्ययुक्तं[3] वक्तुम्। अतो न शब्दाद्वैतसिद्धिः॥

नन्वेवं तर्हि आत्माद्वैतमपि ते न सिध्यत्येव, आत्मनोऽब्रह्मत्वात्। आत्मा ह्यहमिति ज्ञायते। न च ज्ञेयं ब्रह्मेच्छसि। अहंकर्ताप्यनात्मा, ज्ञेयत्वात् घटादिवदिति चेत्—न तस्यैवा[स्याना ?]त्मत्वम्, अहमित्यात्मशब्दवाच्यत्वात्। अमुख्य आत्मा आत्मशब्दवाच्यो मुख्यस्त्वात्मा ब्रह्मैव, तस्यात्मत्वश्रुतेरज्ञेयत्वाच्च। तच्च ब्रह्मात्मादिशब्दैर्लक्ष्यते, न तूच्यते ज्ञायते वा 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतेः। लक्ष्यस्यैव च परमात्मनोऽद्वैतत्वम्, न तु वाच्यस्येति चेत्—एवं शब्दोऽपि मुख्यो ब्रह्मैव, न तु वाच्यः। अतो ब्रह्मैव शब्दशब्देन लक्ष्यत इति न शब्दाद्वैतासिद्धिरिति चेत्—न, उक्तोत्तरत्वात्। शब्दस्य ह्यब्रह्मत्वे प्रमाणमस्ति, न तु ब्रह्मत्वे। न च शब्दस्याज्ञेयत्वप्रसिद्धिरिति च। आत्मनस्तु

[1] CD (॰भ्युद्यते)। [2] CDE (॰दमिति॰)।
[3] CDE (॰क्तमतो)।

'तत्त्वमसि,' 'अहं ब्रह्मास्मि,' 'अयमात्मा ब्रह्म' इत्यादिश्रुतिषु ब्रह्मत्वं ज्ञातम्। न त्वेवमब्रह्मत्वं श्रुतं क्वचित्। अज्ञेयत्वं चात्मनः प्रसिद्धम्, ज्ञातृत्वप्रसिद्धेः। न ह्येकस्यैव निरंशस्य ज्ञातृत्वं तज्ज्ञेयत्वं च युगपत् क्रमेण वा संभवति। ज्ञेयत्वे चान्यज्ञेयत्वमज्ञत्वमनात्मत्वं च घटादिवत्स्यात्। अतोऽज्ञेय आत्मा, ज्ञत्वादात्मत्वाच्च। ज्ञेयत्वे चानात्मत्वं घटवत्स्यादित्युक्तम्। नैवं शब्दस्य ज्ञत्वमात्मत्वं वा प्रसिद्धम्, येनाज्ञेयत्वं प्रसिध्येत्। अतश्शब्दस्य ज्ञेयत्वात् ब्रह्मत्वं प्रत्यक्षादिविरुद्धं नत्वात्मनः, अतद्विषयत्वात्। सुखदुःखेच्छाद्वेषप्रयत्नस्मृतिभ्रान्तिसंशयादयोऽप्यनुभूयमानत्वान्नानुभवितुरात्मनो धर्माः। स चात्मा जातिगुणक्रियादिरहितत्वादवाच्यः। तस्मिन्नपि व्यवहारे अहंशब्दः प्रयुज्यते— अहं सुखाद्यनुभवामीति। तस्मान्नात्मनो ब्रह्मत्वं विरुध्यते। न चानात्मनो ब्रह्मत्वं युक्तम्, घटादिवदचेतनत्वात्— चेतनत्वेऽप्यात्मनोऽभेदात् ब्रह्मणोऽनात्मत्वायोगात्, भेदेऽप्यात्मना सद्वितीयत्वात् ब्रह्मत्वानुपपत्तेः। तस्मादात्मादिशब्दैर्ब्रह्मात्मनोर्लक्ष्यत्वं युक्तम्, न तु शब्दशब्देन ॥ ७५ ॥

अपि च—

शब्दशब्देन लक्ष्यत्वे ब्रह्मणो नात्मतोदिता ।
भवेच्छब्द इदंबुद्धेर्नाहं ब्रह्मेति धीस्तदा ॥ ७६ ॥

शब्दशब्देन ब्रह्मणो लक्ष्यत्वे शब्दस्य पराक्त्वेनैव प्रतीतेः प्रत्यक्ता ब्रह्मणो नोक्ता स्यात्। अज्ञं बोधयता शब्दस्याप्रत्यक्त्वात् अप्रत्यक्त्वैवोक्ता स्यात् शाखाचन्द्र इतिवत्। न ह्यज्ञः शब्दशब्दात्परागर्थात् ब्रह्मणः प्रत्यक्त्वं प्रतिपत्तुं

क्षमते, अन्यतोऽप्रतिपन्नत्वात् । न हि शाखाशब्दाददृष्टपूर्वस्यापि चन्द्रस्य प्रत्यक्त्वं प्रतीयते किं त्वप्रत्यक्त्वमेव, चन्द्रस्यात्मत्वाप्रसिद्धेः । एवं ब्रह्मणो[1]ऽपि ज्ञानात्प्रागात्मत्वाप्रसिद्धेरनात्मत्वप्रसिद्धेश्च भ्रान्त्या, शब्दो ब्रह्मेत्युक्ते परागेव ब्रह्म उक्तमज्ञो मन्यते न तु प्रत्यक् । आत्मशब्देनानुक्तत्वाच्च । अतोऽहं ब्रह्मेति धीर्न भवेत्, अनात्मा ब्रह्मेति वा धीर्भवेत् । [2]तदा 'अहं ब्रह्मास्मि' इत्यादिश्रुतिविरोधः, ब्रह्मणश्चाब्रह्म[3]त्वमनात्मत्वे घटादिवदित्याद्युक्तन्यायविरोधः प्रत्यक्षविरोधश्च स्यात् । आत्मादिशब्दैश्च ब्रह्मणो लक्ष्यत्वे न कश्चिद्विरोध इत्युक्तम् । तस्मादात्माद्वैतमेव सिध्यति, न शब्दाद्वैतं घटाद्वैतं वेति सिद्धम् । अतो वाचकाच्छब्दाद्वाच्याभेदे न वाच्यवाचकते स्यातामिति युक्तमेवोक्तम् ॥ ७६ ॥

असति तु वाच्ये तस्यासत्त्वादेवावाच्यत्वात्, सन्नपि शब्दो न वक्ता स्यात् । अतोऽसदपि शब्दवा[4]च्यं चेत्, तदशून्यमिष्यताम् । तदेतदाह—

नासतो वाच्यतासत्त्वान्नातो वक्तापि स ध्वनिः ।
ततोऽसच्छब्दवाच्यं चेत्तदशून्यमुपेयताम् ॥ ७७ ॥

इतश्च—

अज्ञेयत्वान्न शून्येन संबन्धग्रहणं ध्वनेः ।
नातो वक्ति ध्वनिश्शून्यं बुद्धिर्बोध्यं विना न हि ॥७८॥

अज्ञेयत्वाच्छून्यस्य तेन शब्दस्य संबन्धग्रहणासंभवादपि न शून्यं शब्दो वक्ति । अज्ञेयत्वं च स्वरूपाभावात्, बोध्यं

[1] CD (०णो विज्ञा०)। [2] CDE (अतोऽहं)।
[3] CE (०त्वं न नानात्म०)। [4] CDE (०वाच्यस्वे०)।

विना बुद्धेरभावाच्च। न चैवं चोद्यं त्वया—शून्यं शब्देनैवोक्त्वा[1] तस्यावाच्यतां ब्रूष इति, यतश्शून्यं तद्वाचकांश्च शब्दांस्त्वद्भ्रान्तिपरिकल्पितानेवाश्रित्य शून्यस्याज्ञेयत्वमवाच्यत्वं चोच्यते न्यायेनेति पूर्वमेवोक्तम् ॥ ७८ ॥

शून्यं चेज्ज्ञायते बुद्ध्या बुद्धेरन्यत्सदिष्यताम्।
बुद्धेश्च बुद्धिबोध्यत्वमभेदान्न हि युज्यते ॥ ७९ ॥

शून्यमपि बुद्ध्या ज्ञायते चेत्, तत् बुद्धेरन्यत् सदनिर्वाच्यं वा अभ्युपेयम्। शून्यस्याज्ञेयत्वं ह्युक्तं तुच्छत्वे 'बुद्धिर्बोध्यं विना न हि' इत्यादिना। अनन्यच्चेत् बुद्धेश्शून्यम्, अबोध्यं स्यात् बुद्ध्या। न हि बुद्ध्यैव बुद्धिर्बोध्या—भेदाभावात्, बुद्धित्वेन बोध्यत्वेन वा समाप्तेरेकस्या बुद्धेरुभयासंभवात् ॥ ७९ ॥

अपि च—

बुद्ध्या चेद्बुद्धया बुद्धिर्बोध्या तच्चात्मसंश्रयः।
बुद्धेरसिद्धौ तद्बोध्यबुद्धिसिद्धिः कथं भवेत् ॥ ८० ॥
बुद्ध्यान्ययैव चेद्बुद्धिर्बोध्या तच्चानवस्थितिः।
बोध्यान्ययैव सान्यापि बुद्धिर्बोध्यान्यबुद्धया ॥ ८१ ॥

यदि बुद्धियैद्ध्या बोध्या—स्वयंबुद्धया चेत् बुद्ध्या स्वयं बोध्या, आत्माश्रयत्वं तत्सिद्धौ तत्सिद्धिरिति ; अबुद्धया चेद्बुद्ध्या, बुद्ध्यसिद्धौ तद्बोध्यासिद्धिः ; अन्यबुद्धया चेत्, अनवस्थेति श्लोकद्वयस्यार्थः। तस्माद्बुद्धेर्बुद्धिबोध्यत्वानुपपत्तेर्बोध्यं बोद्धा च बुद्धेरन्यो[?]ऽभ्युपेयः ॥ ८० ॥ ८१ ॥

[1] BD (०वोक्ता त०)।

बुद्धिमालम्ब्य बुद्धिश्चेत्स्याद्धीर्जाता न नश्यति।
नाशे न काचिद्बुद्धिस्स्यात्पूर्वाभावे परा न हि ॥८२॥

अर्थाभावे किमालम्बनं बुद्धेः। बुद्धिरेव चेत्, तच्च यदि पूर्वालम्बना उत्तरा बुद्धिः—पूर्वापि तत्पूर्वालम्बना सती उत्तरालम्बनमिति न काचिद्बुद्धिर्जाता नश्येत्। नाशे तु पूर्वबुद्ध्यभावे तदालम्बना उत्तरापि न भवेत्। अतस्तदालम्बना अन्या न जायत इति न काचिद्बुद्धिस्स्यात् ॥ ८२ ॥

आत्मानमंशं वालम्ब्य स्याच्चेद्भूत्वैव सा भवेत्।
नात्मांशो वास्त्यभूताया धियो नित्यत्वमन्यथा ॥८३॥

यदि स्वमात्मानं स्वांशं वा आलम्ब्य बुद्धिर्भवेत्, भूत्वैव सा भवेत्। न ह्यभूताया आत्मा अंशो वा अस्ति। अस्ति चेत्—नित्या स्यात्, जन्मना विनापि भावात् ॥ ८३ ॥

न निरालम्बना बुद्धिर्भाति सालम्बना यतः।
शून्यं चेद्बुद्धिबोध्यं तदनिर्वाच्यमुपेहि भोः ॥ ८४ ॥

न च निरालम्बनैव बुद्धिः, सालम्बनत्वेन प्रतीतेः। अन्यथा बुद्धिरेव न स्यात्। तस्माद्बुद्धिबोध्ययोरभेदायोगात् शून्यमपि बुद्धिबोध्यं चेत्—अबुद्धित्वादतुच्छत्वात् सत्त्वस्य चानिष्टत्वात् शून्यस्य, तत् अनिर्वाच्यमुपेहि भोः। ननु बुद्धिबोध्यत्वं नानिर्वचनीयत्वव्याप्तं तवापि। सत्यम्, नाहं बुद्धिबोध्यत्वात् शब्दवाच्यत्वाद्वा अनिर्वचनीयत्वमसतस्साधयामि—सतोऽपि तयोर्व्यवहारे भावात्; किंतु ताभ्यां तुच्छत्वमसतो वारयामि। सत्त्वं त्वसतो नेष्यते न युज्यते च। अतोऽनिर्वाच्यमसद्वच्मि, न तु ताभ्यामेव। न चासतो बुद्धिबोध्यत्वं वच्मि; किंतु बुद्धिबोध्यं चेत्, तदतुच्छमेवेति।

अतो नानिर्वाच्यस्य बुद्धिबोध्यत्वाभ्युपगमप्रसङ्गश्च। अतो मायैव असदिति सिद्धम् ॥ ८४ ॥

स्वरूपेणापि न ख्यातिर्युक्ता शून्यस्य शून्यतः।
कुतस्सदात्मना तस्य ख्यातिस्तत्र कथं भ्रमः ॥ ८५ ॥

शून्यस्य शून्यत्वादेव स्वरूपासिद्धेः, स्वरूपेणापि न ख्यातिर्युक्ता। अतस्तस्य सदात्मना ख्यातिर्भ्रान्तिरित्याद्युक्तं सर्वमयुक्तमेवेत्युक्तार्थोपसंहारः ॥ ८५ ॥

यदि सद्रूप्यरूपेण शून्यस्य ख्यातिमञ्जसा।
युक्तां तु मनुषेऽथापि दोषाब्धिं न तरिष्यसि ॥ ८६ ॥

यदि सता रूप्यरूपेण शून्यस्यैव साक्षात् ख्यातिं युक्तां मन्यसे, तथापि दोषसमुद्रं न तरिष्यसि ॥ ८६ ॥

तत्कथमिति चेत्, शृणु—

भाति रूप्यात्मता यास्य सा स्वतः किमुतान्यतः।
स्वतश्चेन्न ततोऽपेयात्तद्रूपत्वान्न शून्यता ॥ ८७ ॥

या त्वयेष्टा रूप्यात्मता शून्यस्य भाति, किं सा तस्य स्वतस्सिद्धा उतान्यत आगता। आद्ये कल्पे सा शून्या[1]-न्नापगच्छेत्कदाचिदपि, तद्रूपत्वात्। अतश्चास्य रूप्यरूपत्वान्न शून्यत्वं रूप्यस्येव ॥ ८७ ॥

अतश्च—

शून्यबुद्धिर्मृषा तत्र ततो बाधो मृषा भवेत्।
अमृषा रूप्यबुद्धिश्च वस्तुतत्त्वनिवेदनात् ॥ ८८ ॥
रूप्यापाये तयोरैक्याच्छून्यापायो भवेद्ध्रुवम्।
रूप्यापायेऽपि चेच्छून्यं नापैत्यस्यागतं तु तत् ॥ ८९ ॥

[1] C (॰न्या नाप॰)।

रूप्यात्मताया अपाये शून्यस्याप्यपायस्स्यात्, तस्यास्तत्स्वरूपत्वात्; अन्यथा सास्य आगतैव[1] स्यात्, न तु स्वरूपम् ॥ ८८ ॥ ८९ ॥

देशान्तरादिगं रूप्यमागतं यदि भाति वा ।
शून्ये सत्ख्यातिरिष्टा ते शुक्तौ किं नैवमिष्यते ॥ ९० ॥

आगतत्वपक्षेऽपि सद्वादिनामिवान्यत्र देशान्तरादौ सदेव तवापि शून्ये भाति—आगतमनागतमेव वा—शुक्ताविव सद्वादिनां[?] यदि, तदा शून्ये सत्ख्यातिरिष्टा स्यात्। तथा च सति, किं शुक्तावेव नैवमिष्यते। असत्ख्यातिश्चेन्न सिध्यति, वृथैव सत्पक्षपरित्याग इत्यभिप्रायः ॥ ९० ॥

रूप्यमन्यस्थमाभाति शून्य आगत्य वा यदि ।
तदेव भाति नो शून्यं भाति तद्धि ततः पृथक् ॥ ९१ ॥

रूप्यमन्यस्थमागत्य अनागत्य वा यदि शून्ये भाति—तदा तदेव रूप्यात्मना भाति न शून्यम्, तयोरन्यत्वात् ॥ ९१ ॥

शून्यगौ भ्रान्तिबाधौ चेत्तत्काले प्राक्ततः परम् ।
विशेषेऽसति तुच्छत्वात्तस्य तौ स्तां सदा न वा ॥ ९२ ॥

शून्यगतौ चेद्भ्रान्तिबाधौ तयोर्भावकाले ततः प्रागुत्तरकाले च शून्यस्य तुच्छत्वाद्विशेषाभावात् भ्रान्तिबाधौ सदैव तत्र स्याताम्; न वा कदाचित्, विशेषाभावादेव तस्य। अत एव न हेतुतोऽपि नियमः। कालाद्यनवच्छिन्नत्वाच्च देशान्त[2]रादौ सत् रूप्यं शून्ये भातीति चायुक्तम्। अतस्सदैव भ्रान्तिस्स्यान्न वा। बाधश्च ॥ ९२ ॥

[1] BDE (॰गततेव)। [2] CDE (॰रादिस॰)।

शून्यं रूप्यात्मना जातं भाति चेत्तत्र न भ्रमः ।
रूप्ये च शून्यबुद्धिस्स्यात्कुम्भादाविव मृन्मतिः ॥ ९३ ॥

न शून्यस्य स्वाभाविकं रूप्यात्मकत्वं, नाप्यन्यत्र [1]सत् आगतम् ; किंतु शून्यमेव रूप्यात्मना जातं भाति मृदिव घटात्मनेति चेत्—तर्हि घटधीरिव रूप्यधीरपि न भ्रान्तिस्स्यात् । रूप्ये च शून्यबुद्धिस्स्यात् घटादाविव मृद्बुद्धिः ॥ ९३ ॥

अनंशत्वान्न जन्मास्य सांशत्वेऽनित्यतास्तिते ।
जातं चेन्नावशेषोऽस्य रूप्यभावे कुतः फणी ॥ ९४ ॥

न च जन्म युज्यते शून्यस्य—निरंशत्वात् सांशानामेव मृदादीनां जन्मदर्शनात् । निरंशस्यापि ब्रह्मवत् जन्मेति चेत्—न, तस्याशून्यत्वात् । न च तस्यापि साक्षाज्जन्म, उक्तवक्ष्यमाणदोषप्रसङ्गात् । अतो माययैव तज्जन्म, असतस्तु न माययापीति वक्ष्यते । अतस्सतोऽपि निरंशस्य अमायया जन्म इच्छतां समानमिदं दूषणं द्रष्टव्यम् । सांशत्वे च शून्यस्यानित्यत्वं घटवदशून्यत्वं च स्यात् । निरंशस्यापि चेज्जन्म शून्यस्य स्यात्, तत्कृत्स्नस्यैव स्यात् । तस्य च रूप्यभावे न रज्जुसर्पादिभावस्स्यात्, तस्यावशिष्टरूपान्तराभावात् ॥ ९४ ॥

नान्यदापि फणी शून्याद्भवेच्छून्यस्य नाशतः ।
शून्ये तिष्ठति रूप्यं चेज्जायते शून्यजन्म न ॥ ९५ ॥

नष्टे रूप्यभावे शून्यात्फणी भवतीति चेत्—न, रूप्यभावकाल एव शून्यस्य नष्टत्वात् । तदापि तच्छून्यात्मनैव

[1] BD (सदगतम्) ।

चेत् स्थितम्, न तस्य रूप्यभावोऽभूत्[?]। न च शून्यात्मना रूप्यात्मना च भावः, अनंशत्वात्। अतश्शून्यं रूप्यं वा स्यान्नोभयम्। शून्ये तिष्ठत्येव रूप्यं जायते चेत्, न तच्छून्यजन्म स्यात् ॥ ९५ ॥

स्थास्नु चेज्जायते शून्यं सदा जन्माविशेषतः।
सकृद्वा कृत्स्नजन्मैवं कृत्स्ननाशस्सकृत्सदा ॥ ९६ ॥

स्थास्न्वेव चेज्जायते शून्यम्—सदैव जन्म सदा च विशेषाभावात्पूर्वोत्तरक्षणयोः। अत एव सकृद्वा कृत्स्नस्य भूतभविष्यद्वर्तमानकार्यस्य जन्म स्यात्। एवं कृत्स्नस्य नाशस्सकृदेव। सदा च सकृत्कृ[1]त्स्नस्य जन्म सदा च, सकृत्कृत्स्नस्य नाशश्च स्यात्, विशेषाभावादेव ॥ ९६ ॥

सह वा स्तां जनिध्वंसौ नियमे हेत्वसंभवात्।
मिथो विरोधाद्वा न स्तां जनिध्वंसौ कदाचन ॥ ९७ ॥

सहैव च जनिध्वंसौ स्याताम्—तयोः क्रमनियमहेत्वसंभवात्, कारणस्यैकत्वादेकरूपत्वाच्च। जन्मनाशयोर्न सहभावो युक्तस्तयोरन्योन्यविरोधादजातस्य च नाशाभावादिति चेत्—तथापि तावेव न स्यातां न तु तयोः क्रमभावः, तन्नियमहेत्वभावस्योक्तत्वात्। यदि च जन्मनाशयोर्भावाभावरूपत्वात् सहभावो विरुध्यते—असतो ज[2]न्म, सतश्च नाशो न स्यात्। भावो हि जन्म। यस्य च भावः तदस[त्; अ]तो नासतो जन्म स्यात्। स्याच्चेत्, भावाभावावेकस्य विरुद्धौ स्याताम्। भावाभावावेकस्याविरुद्धौ न तु सहेति चेत्—किं निवृत्तेऽसत्त्वे असतो जन्म,

[1] CD (०त्स्ननाशस्य)। [2] CDE (०न्मास०)।

उत अनिवृत्ते। अनिवृत्ते चेत्, भावाभावयोस्सहभाव स्स्यात्। निवृत्ते चेत्—निवृत्तिरपि जन्मैव चेत्, उक्तस्सह-भावस्स्यात्। जन्मनि च जन्मेत्यनवस्था। अजन्मत्वेऽपि असत्त्वनिवृत्तिस्सत्त्वप्राप्तिश्चेत्, तथाप्यस्ति सहभावः। किंच—जन्मनः प्रागप्यसतस्सत्त्वप्राप्तेर्वृथा जन्म स्यात्, सतो वा जन्म स्यात्। उभयथापि न जन्मना सत्त्वमसतः। असत्त्व-निवृत्ताव[1]प्यसदसदेवेति चेत्, नासत्त्वं तस्य निवृत्तम्। पूर्ववदसतश्चेज्जन्म, उक्तस्सहभावस्स्यात्। असत्त्वनिवृत्तौ नासत्, नापि सत् जन्मनः प्रागिति चेत्, अनिर्वचनीयस्यैव ज[2]न्म मायामात्रमित्युक्तं स्यात्। असतश्च जन्म निरस्तं स्यात्। यदि क्रमेणापि भावाभावावेकस्य स्याताम्, द्वयोरवस्थयोरेकस्य भावात् भावाभावौ तस्य कल्पितौ स्याताम्। यदि ह्यभावावस्थायां स नास्ति, कस्याभावो धर्मस्स्यात्। भावावस्थस्यैव चेत्, भावाभावयोस्सहभाव एष्टव्यस्स्यात्। एतेन नाशो व्याख्यातः। असतो नाश-पक्षेऽजातस्यापि नाशस्स्यात्। तस्मात् सह वास्तां जनिध्वंसौ न वा कदाचिदिति सूक्तमुक्तम्॥ इदं दूषणं सज्जन्मपक्षेऽपि यथायोगं योज्यम्। 'स्यात्तु चेज्जायते शून्यम्' इति श्लोकद्वयमपि तत्र योजयितुं शक्यम्। तस्मान्न स्यात्तु जायते शून्यं सत्त्व॥ ९७॥

अविकार्यैव शून्यं चेद्रूप्यं स्यान्नैव तन्मयम्।
स्याच्चेदन्यमयं रूप्यं मुधा ते शून्यकल्पना॥ ९८॥

[1] CDE (०प्यसदे०)।  [2] CDE (०न्म मया मा०)।

रूप्यात्मना चेच्छून्यं न विक्रियते, रूप्यं शून्यकार्यं न स्यात्। अन्यकार्यं चेद्रूप्यम्—रूप्यादिकारणतया शून्यस्य कल्पना वृथा, तदसिद्धेः॥ ९८॥

अपि नष्टं पुनर्जातं भवेच्छून्यं फणी यदि।
कुतस्तज्जायते शून्यं स्वकार्यत्वान्न रूप्यतः॥ ९९॥

यद्यपि रूप्यभावे शून्यं नश्यति तथापि पुनर्जातं फणी भवतीति चेत्, तत्कुतो जायते। रूप्यादिति चेत्, न स्वकार्य[1]त्वाद्रूप्याज्जन्म युक्तं पितुरिव पुत्रात्॥ ९९॥

रूप्याच्चेज्जायते शून्यं [2]तद्रूपं स्यान्न शून्यता।
रूप्येऽनष्टे न शून्यस्य जनिस्ते मृदि कुम्भवत्॥ १००॥

रूप्याच्चेज्जायते शून्यम्, रूप्यरूपं स्यात्—यथा मृज्जो घटो मृद्रूपः। यथा च मृद्यनष्टायामेव कुम्भजन्म नैवमनष्टे रूप्ये शून्य[3]जन्म तव युक्तम्, सति रूप्ये सर्वशून्यत्वासंभवात्॥ १००॥

रूप्यनाशेऽपि शून्यस्य रूप्याज्जन्म कथं भवेत्।
तन्नाशादप्यनष्टान्न नाशनाशेऽपि पूर्ववत्॥ १०१॥

रूप्यस्य नाशेऽपि न रूप्याज्जन्म शून्यस्य, रूप्यस्यैवाभावात्। रूप्यनाशाज्जन्मेति चेत्—तन्न, तस्याप्यशून्यत्वे तस्मिन्ननष्टे सर्वशून्यत्वासंभवात् रूप्येऽनष्ट इव। नाशस्यापि नाशे न तस्माज्जन्म [4]रूप्यनाश इव रूप्यात्॥ १०१॥

तन्नाश एव शून्यं चेत्सति रूप्ये स वा कथम्।
रूप्येऽसति न तन्नाशो नातो नाशस्ततो भवेत्॥ १०२॥

[1] BE (°र्यताद्रू°)। [2] DE (तद्रूप्यं)।
[3] BCD (°न्यजं मे त°)। [4] CE (°प्यं ना°)।

रूप्यनाश एव शून्यं नान्यदिति चेत्, रूप्यनाशेऽपि सति रूप्ये न स्यात्। न च नष्टस्य नाशः, नैष्फल्यादनवस्थानाच्च। अतस्ततो नाशो न युक्तिमान्॥ अतो नष्टस्य शून्यस्य पुनर्जन्माभावान्नान्यदापि फ[1]णिभावस्स्यात्॥ १०२॥

एवं शून्यस्य नाशेऽपि रूप्यजन्म न शून्यतः।
शून्ये सति न तन्नाशस्ततो नाशो न कस्यचित्॥१०३॥

यथा रूप्यस्य नाशे न शून्यस्य रूप्याज्जन्म, एवं शू[2]न्य-नाशेऽपि न शून्याद्रूप्यस्य जन्म स्यात्। स्थिते च शून्ये न रूप्यस्य जन्म, सर्वशून्यताविरोधात्। शून्यस्य न स्थितस्य नाशो नापि नष्टस्य रूप्यस्येव। अतस्सतोऽसतश्च नाशा-संभवात् न कस्यचिन्नाशः। तस्मान्मायैव जन्मनाशाविति न्याय्यम्॥ १०३॥

नातोऽसतो जनिख्याती नाशबाधौ तदा कुतः।
शून्यं न कारणं नापि मोक्षं वेदो जगौ ततः॥ १०४॥

अत उक्तेन न्यायेन न प्रागसतः कार्यस्य सद्रूपेण जन्म, नाप्यसतः कारणात्। नाप्यसदात्मना सतोऽस[3]तो वा जन्म कुतश्चित्। अतो नाशो दूरोत्सारितः—जाताभावे नाशा-संभवात्, नाशस्य चासत्त्वे जन्मायोगात्। अतो न भ्रान्ति-बाधौ च ते युक्तौ, तयोरपि जन्मनाशायोगात्। असतश्च स्वरूपासिद्धेर्न स्वरूपेण नापि सदात्मना ख्यातिः। अतो न भ्रान्तिबाधावित्युक्तम्। अतोऽसतोऽख्यातेरपि न तस्य कारणत्वादिकल्पना संभवति। अतश्शून्यं जगत्का[4]रणं

[1] B (फणीभा०)। [2] CDE (शून्यनापि)।
[3] CDE (०तो ज०)। [4] BD (०रणत्वं ब्र०)।

ब्रह्म तत्प्राप्तिश्च मोक्ष इति वेदो व[1]दतीति न युक्तमुक्तम्, शून्यस्य युक्तिप्रतीतिबाह्यत्वात् ॥ १०४ ॥

शून्यापत्तावनावृत्तिश्शून्यं चेज्जायते कथम्।
मोक्षे चावृत्तिशङ्का का यतस्सा वृत्तिसंभवे ॥ १०५ ॥

शून्यताप्राप्तौ मोक्ष इष्टेऽपि कथमनावृत्तिः, अशून्यस्य संसारिणश्शून्यता चेज्जायते। न हि जातं न नश्यति। शून्यं नित्यम्, तत्प्राप्तिर्मोक्ष इति चेत्—तथापि तत्प्राप्तिस्साध्यत्वादनित्या। शून्यस्यैव भ्रान्तिनिमित्ता अशून्यता, तन्निवृत्तिर्मोक्ष इति चेत्—तच्च न, शून्यपक्षे भ्रान्त्यसंभवस्योक्तत्वात् वक्ष्यमाणत्वाच्च। त्वदिष्टे च मोक्षे आवृत्तिशङ्काभावात् अनावृत्तिश्रुतिरनर्थिका स्यात्। यस्माद्वृत्तिसंभवे सा आवृत्तिशङ्का स्यान्न तु वृत्ते[2]रभा[3]वे, अतः शून्यस्य वृत्त्यभावान्नावृत्तिशङ्का। देशाद्देशान्तरं गतस्य च पूर्वदेशं प्रत्यावृत्तिस्संभवति, न तु तत्रैव नष्टस्य। अत आवृत्त्यसंभवादपि शून्यस्य नावृत्त्याशङ्का। अतश्शून्यं कारणम्, शून्यापत्तिर्मोक्ष इति चानुपपन्नमेवोक्तम् ॥ १०५ ॥

शून्यभावः कुतो बोद्धुर्बोध्यस्यापि यदा न सः।
भावाभावविभागो हि सति बोद्धरि युज्यते ॥ १०६ ॥

बोद्धुश्शून्यभावोऽतितरामयुक्तः, बोध्यस्य जडस्यापि स शून्यभावो नास्तीति यदा उपपादितम्। भावाभावविभागस्य बोद्धधीनत्वात् सर्वस्य, न तत्साधकस्य बोद्धुः स्वतोऽन्यतो वा अभावस्सिध्येत् ॥ १०६ ॥

[1] BD (वातीति)। [2] D (०त्तेरप्यभा०)।
[3] DE (०वे तत् शू०)।

यतः—

विशेषज्ञाननाशोऽतस्तान्येवानुविनश्यति।
न प्रेत्य संज्ञास्तीत्युक्त आत्मनोऽनाशिता श्रुतेः॥१०७॥

अत उक्तोपपत्तेरात्मनोऽनाशित्वात् 'अविनाशी वा अरे अयमात्मा' इति श्रुतेश्च 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञास्ति' इति श्रुत्या विशेषज्ञाननाश एवोक्तः, न त्वात्मनाशः। ज्ञानादज्ञानतत्कार्यदाहे विशेषज्ञानानामपि दाहात् नाशव्यपदेशो न तु कार्यस्य कारणभावलक्षणो नाशोऽत्र विवक्षितः, कारणस्याज्ञानस्यापि ज्ञानान्मोक्षे निवृत्तेः। न चाज्ञाननिवृत्तिश्शून्यभाव इत्युक्तं पुरस्तात्॥१०७॥

नाशो न शून्यता भावाज्ज्ञानानां कारणात्मना।
शून्यभावे पुनर्जन्म ज्ञानानां न हि युज्यते॥१०८॥

मोक्षादन्यत्रापि ज्ञानानां कार्याणां प्रसिद्धो नाशो न शून्यता, नष्टानामपि ज्ञानानां कार्याणां स्वकारणात्मना भावात्—अभावे पुनः पूर्वमपि तेषां जन्मायोगात्, असतो जनेर्निरस्तत्वात्। अतो रूप्यतज्ज्ञानयोरपि तुच्छत्वं त्व[1]योक्तं प्रत्युक्तम्॥१०८॥

तदेव कारणं कार्यमव्यक्तं व्यक्ततां गतम्।
कार्यकारणते न स्तां तयोर्भेदोऽस्वमेषवत्॥१०९॥

कारणात्मना भावेऽपि कार्यात्मना नास्त्येव कार्यं जनेः प्राङ्नाशाच्चोर्ध्वमिति चेत्—न, कारणात्मना भावे कार्यात्मनापि भावात् तयोर्भेदाभावात्। अभिव्यक्त्यनभि-

[1] DE (त्वयैवोक्तं)।

व्यक्तिकृतो भेदव्यवहारः। तदेव ह्यनभिव्यक्तं कारणम्, अभिव्यक्तं कार्यमुच्यते। अतो न भेदः। भेदे तु तयोरश्व-मेषवन्न कार्यकारणते स्याताम् ॥ १०९ ॥

अव्यक्तमेव च व्यक्तं नान्यथा व्यक्तिसंभवः।
व्यङ्ग्येऽसति न तद्व्यक्तिर्न व्यक्तं व्यज्यते पुनः ॥ ११० ॥

अनभिव्यक्तस्य भावेऽप्यभिव्यक्तं नास्त्येव, तयोर्भेदादिति चेत्—तन्न, अनभिव्यक्तस्यैवाभिव्यक्तेः, अन्यथा अभिव्यक्त्य-योगात्। न ह्यसत्यभिव्यङ्ग्येऽभिव्यक्तिः। नाप्यभिव्यक्तमेवा-भिव्यज्यते। अतोऽनभिव्यक्तमेवाभिव्यक्तं भवतीति न तयोर्भेदः ॥ ११० ॥

किंच—

नाव्यक्ताद्भिद्यते व्यक्तं व्यक्तेः पूर्वमसिद्धितः[1]।
अभिन्नस्यैव चेद्व्यक्तिर्व्यक्तेरूर्ध्वं कुतो भिदा ॥ १११ ॥

न तावदनभिव्यक्तमभिव्यक्तेः पूर्वमेव भिद्यते, तस्य पूर्वमसिद्धत्वात्तव। नाप्यूर्ध्वम्, अनभिव्यक्तस्यैवाभिव्यक्त-त्वात्। न हि तदेव ततो भिद्यते ॥ १११ ॥

नन्वव्यक्ते विशेषश्चेन्न व्यक्तेर्व्यक्ततास्य का।
स्याच्चेद्विशेषः किं न स्यादव्यक्ताद्व्यक्तभिन्नता ॥ ११२ ॥

नन्वनभिव्यक्तस्याभिव्यक्त्या यदि विशेषो न स्यात्—न तस्याभिव्यक्तता स्यात्, पूर्वावस्थातोऽविशिष्टत्वात्। यद्यभि-व्यक्त्या अनभिव्यक्तस्य कश्चिद्विशेषस्स्यात्, तदा किमित्यन-भिव्यक्तादभिव्यक्तस्य भिन्नता न स्यात् ॥ ११२ ॥

[1] DE (॰सिद्धतः)।

[1]मैवं विशेषः को व्यक्तेर्व्यक्तं चेद्गिद्यते ततः ।
विशेषात्प्राङ्न भेदस्स्यादूर्ध्वं कस्य कुतो भिदा ॥११३॥

मैवं चूचुदः, यतोऽभिव्यक्तस्यान्यत्वेऽनभिव्यक्तमनभिव्यक्तमेवेति न तस्य कश्चिद्विशेषोऽभिव्यक्त्या स्यात् । न चाभिव्यक्तस्याभिव्यक्त्या विशेष इष्यते । अतोऽनभिव्यक्तस्यैव चेदभिव्यक्त्या विशेषमिच्छसि—अनभिव्यक्तं नान्यदितीच्छ, अन्यथा तद्विशेषायोगात् । न च विशेषभावात् प्राक् अभिव्यक्तस्य भेदः, असिद्धत्वात् । नाप्यूर्ध्वम्, अनभिव्यक्तस्यैव विशेषयोगात्तद्योगिनश्चाभिव्यक्ततायास्त्वयेष्टत्वात् ॥ ११३ ॥

नाव्यक्तस्य विशेषस्स्याद्यद्यसन्नेव जायते ।
व्यक्तिश्चैवं तयोर्नर्ते संबन्धाद्धि तदीयता ॥ ११४ ॥
नासिद्धयोश्च संबन्धो नर्ते [2]तं सिद्धता तयोः ।
तस्मान्न जायते शून्यं न च सच्छून्यतामियात् ॥११५॥

अनभिव्यक्तस्याभिव्यक्तिरभिव्यक्तत्ववि[3]शेषश्चासन्नेव जायत इति चेत्—तन्न, असतोश्चेत्तयोर्जन्म न तदीयता स्यात्तयोस्संबन्धाभावात् । न ह्यसिद्धयोरसतोस्तयोरनभिव्यक्तेन संबन्धः । न च तं संबन्धं विना तयोस्सिद्धिः, अस्वतन्त्रत्वात् । स्वातन्त्र्येण च तयोस्सिद्धौ नान्यदीयता स्याद्यथान्यस्य न तदीयता । अतो न जायते शून्यं सद्रूपेण, नापि सत् शून्यतामियादिति सिद्धम् ॥ ११४ ॥ ११५ ॥

[1] CD (नैवं) ।  [2] DE (तत्सि०) ।
[3] CDE (०शेषोऽसन्ने०) ।

इतश्च—

कुतस्तु खलु सोम्यैवं नासतो भाव इत्यपि।
श्रुतेस्स्मृतेश्चासतोऽसद्वेत्यसज्जन्म न श्रुतम्॥ ११६॥

'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादिना असत्पक्षमुपन्यस्य, 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच। कथमसतः सज्जायेत' इति तं निराकरोति श्रुतिः। अतोऽपि न जायते शून्यम्। न च सच्छून्यतामियात्। तथा 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति स्मृतेश्च। तस्मात् 'असद्वा इदमग्र आसीत्', 'असदेवेदमग्र आसीत्' इति च श्रुत्या शून्याच्छून्यस्य जन्म सद्रूपेण नोक्तम्; किं त्वनभिव्यक्तनामरूपत्वादशून्यमेवासदासीदित्युक्तम्। तदेव चाभिव्यक्तनामरूपं 'तत्सदासीत्' इत्युच्यते, अभिव्यक्ते घटादौ सच्छब्दस्य प्रयुज्यमानत्वाल्लोके। एवं च सति, आसीच्छब्दस[1]च्छब्दस्तच्छब्दश्च युज्यते, न तु शून्यपक्षे॥ ११६॥

नन्वव्यक्तोऽस्त्यनन्या च व्यक्तिश्चेत्सा न किं सदा।
व्यक्त्यव्यक्त्योस्सहस्थानेऽव्यक्तता केन वार्यते॥ ११७॥
तच्चाव्यक्तास्ति चेद्व्यक्तिर्व्यक्तेर्व्यक्तिस्तु तच्च न।
व्यक्तेर्व्यक्तौ च तन्माला नातस्सत्ख्यातिजन्मनी॥ ११८॥

ननु यद्यनभिव्यक्ते वस्तुनि अभिव्यक्तिस्सदा अस्ति तदनन्या च, तदा अभिव्यक्तेस्सदाभावात् न कदाचिदनभिव्यक्तिस्स्यात्। स्याच्चेत्—न कदाचिन्निवर्तेत, तद्धेत्वभावात्। न ह्यभिव्यक्तिरनभिव्यक्तिं निवर्तयति, तया सह स्थितेः।

[1] E (सप्तशब्दः)।

अनभिव्यक्त्यैवाभिव्यक्तिस्तया सह भवति, नाभिव्यक्त्येति चेत्—तर्हि अभिव्यक्तेरभिव्यक्तिः पूर्वमसती भविष्यतीति इष्यतम्। अभिव्यक्तेश्चाभिव्यक्त्यनभिव्यक्त्यभ्युपगमेऽनवस्था-प्रसङ्गः। तस्मात्सुदूरमपि गत्वा असतो जन्म, सतश्च नाशोऽभ्युपेयः। ख्यातिश्चासतः, जनेः प्राङ्नाशाच्चोर्ध्वं कार्यस्यासत्त्वख्यातेः। अतस्तत एव ख्यातिजनी इत्य-युक्तम् ॥ ११७ ॥ ११८ ॥

सत्यमेवमतोऽवोचमनिर्वाच्यस्य ते इति ।

व्यक्त्यव्यक्ती च मत्प्रोक्ते कल्पिते एव मायया ॥ ११९ ॥

सत्यम्, सत एव ख्यातिजनी इत्येतच्चायुक्तमेव। अत एव सतोऽसतश्च तयोरयुक्तत्वादनिर्वाच्यस्य ते ख्यातिजनी इत्य-वोचम्। ख्यातिरत्र रूप्यादिख्यातिरभिप्रेता, तस्याः प्रकृत-त्वात्। सर्वा वा अख्यात[1]स्वभावस्य जडस्य ख्यातिः, सर्वस्य जडस्य रूप्यादिसाम्यस्य वक्ष्यमाणत्वात्। अख्यातस्वभावस्य च ख्यानासंभवादख्यातस्य ख्यातता चेत्क्रियेत, अनिर्वाच्य-स्यैव सा स्यात्। न क्रियते चेत्—न ख्यातिस्तस्य, स्वतोऽ-ख्यातेः। अतः ख्यातिरप्यनिर्वाच्यस्यैव जनिवत्। स्वयं चानिर्वाच्यैव। अतोऽभिव्यक्त्यनभिव्यक्ती अपि मयोक्ते मायाकल्पिते एव, न तु सत्ये जनिध्वंसवदेव। अतो-ऽप्यख्यातस्वभावस्यासतो न ख्यातिर्युक्ता। नन्वख्यात-स्वभावत्वान्मायाया अपि न ख्यातिर्युक्तिमती। सत्यम्, अत एव सा माया; अन्यथा तत्ख्यातेस्सत्यत्वात् सापि सत्यै[2]वेति न माया स्यात् ॥ ११९ ॥

[1] CDE (॰तस्य भा॰)। [2] BCDE (॰त्यैव न॰)।

सा चानिर्वचनीयत्वादस्ति नास्तीति चोच्यते।
शून्ये तु बुद्धिशब्दानां प्रवृत्तिर्न कथंचन ॥ १२० ॥

सा च माया अनिर्वचनीयत्वादशून्यत्वादस्ति नास्तीति च व्यवहर्तुं शक्यते। शून्ये तु शून्यत्वादेव बुद्धिशब्दानां न प्रवृत्तिः कथंचिदपि युज्यते। अतश्शून्यवादिनः क्रियाकारकव्यवहारस्य प्रमाणप्रमेयव्यवहारस्य च सर्वस्य लोपः प्रसज्यते, सर्वसत्यवादिनामिव। आत्मवादिनस्त्वात्मनोऽव्यवहार्यत्वेऽपि स्वमायावशेनैव तस्य सर्वव्यवहारास्पदत्वोपपत्तेर्न व्यवहारलोपप्रसङ्गः ॥ १२० ॥

ना[1]विद्ययापि शून्यस्य ख्यातिजाती सतो हि सा।
सासतश्चेन्न तद्धानिर्न हि विद्यासतो[2]ऽसति ॥ १२१ ॥

न चाविद्ययैव शून्यस्यापि ख्यातिजनिसंभवात् व्यवहारद्वयास्पदत्वमात्मन इवेति शक्यं वक्तुम्, शून्यस्य अविद्यासंभवात्। सतो हि चैत्रस्य, सति च शुक्त्यादाववविद्या प्रसिद्धा; नासतो नृशृङ्गस्य, नाप्यसति खपुष्पे सा स्यात्। यद्यसतोऽसति च सा स्यात्—न तस्या निवृत्तिस्स्यात्, विद्यासंभवात्। न हि विद्या असतोऽसति प्रसिद्धा। असति च विद्याया असंभवमुपापीपदम्। तेनैव न्यायेनासतोऽपि सा न संभवेत्। असति चासिद्धे कथं तस्य विद्येति सिध्येत्। यथा च वेद्येन विना विद्या न सिध्यति, एवं वेदित्रापि। न च वेदितुर्वेद्यता। असच्च वेद्यमिच्छसि। अतोऽप्यसतो न विद्या। तस्मादसतोऽसति च विद्याभावा-

[1] CD (॰विद्यापि)। [2] CE (॰तोऽसतो)।

दसतोऽ[1]सति चाविद्याभावे न तद्धानिस्स्यादिति युक्त-मेवोक्तम् ॥ १२१ ॥

अविद्या यस्य यत्रात्र तस्य विद्यैव हन्ति ताम् ।
सतोऽप्यनात्मनो जाड्यान्न स्याद्विद्या कुतोऽसतः ॥ १२२ ॥

यस्य यत्राविद्या तस्यैव तत्रैव भवन्ती विद्यैव तां हन्तीति प्रसिद्धं लोके। अतो न तद्विद्यां विना अन्यविद्यया असद[2]विद्या निवर्तत इत्याशङ्कनीयम् । अतोऽसदविद्या चेत्स्यात्—न सा निवर्तेत, तद्विद्याभावात् । किंच—सतोऽप्यनात्मवस्तुनो जडत्वादचित्स्वभावत्वान्न विद्या स्यात्, किं पुनरसतः ॥ १२२ ॥

यस्याज्ञानं भ्रमस्तस्य भ्रान्तस्सम्यक् च वेत्ति सः ।
जडं न विद्याद्वेद्यत्वान्नातोऽज्ञानं जडस्य च ॥ १२३ ॥

अज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वप्रसिद्धेः, जडस्य च वेद्यत्वाद्विद्याभावात् नाविद्यास्ति । न ह्येकस्यैव वेद्यत्वं वेदितृत्वं च युज्यत इत्यसकृदवादिष्म ॥ १२३ ॥

अज्ञानिनो भ्रमो भ्रान्तो बध्यते स च मुच्यते ।
नार्थानर्थौ जडस्य स्तां नातो विद्यास्य युज्यते ॥ १२४ ॥

अज्ञानी भ्रान्त्या बध्यते, स एव च ज्ञानान्मुच्यते । न चार्थानर्थौ मुक्तिबन्धौ स्वर्गनरकौ वा जडस्य युक्तौ । अतोऽपि नाविद्या जडस्य न्याय्येति न जडाविद्ययापि व्यवहारसिद्धिः असदविद्ययेव । यदि जडस्याविद्या स्यात्—न सा निवर्तेत असत इव, तस्य विद्या-भावात् ॥ १२४ ॥

[1] CD (०ति वाविद्याया भा० ) ।　　[2] D (०विद्यया नि० ) ।

अज्ञान्यस्मीति चाज्ञानसंवित्तिश्चादृशः कथम् ।
अमानमेयमज्ञानं प्राक्सिद्धेस्तन्मितेः कथम् ॥ १२५ ॥

अज्ञान्यस्मि न जानामीति चाज्ञानानुभवो यथा पुंसो भवति नैवं जडस्य स्यात्, अदृक्स्वभावत्वात् । अतो न स्वानुभवसिद्धं जडस्याज्ञानम् । नाप्यस्य प्रमाणसिद्धम्, प्रमाणागम्यत्वादज्ञानस्य—प्रमाणप्रवृत्तेः प्रागेव तत्सिद्धेः ॥

काच युक्तिरिति चेत्—तां किमजानन् जिज्ञासमानः पृच्छसि, उत जानन् । अजानन्पृच्छामीति चेत्—किं तदज्ञानं तव सिद्धम्, उत असिद्धं तज्ज्ञानात्प्राक् । असिद्धं चेत्, कथमजानन्निति निश्चित्य ब्रूषे । सिद्धं चेत्, युक्तिज्ञानात् प्रागेव तर्हि तदज्ञानं सिद्धम् । अत एव सर्वस्यैव ज्ञेयस्याज्ञानं तज्ज्ञानात्प्रागेव सिद्धमेष्टव्यम् । इतश्च—अज्ञानं चेत्प्रमाणगम्यम्, तदज्ञानं तदज्ञानं च प्रमाणगम्यमेवेति तस्य तस्य ज्ञेयस्याज्ञानं प्रमाणेन पूर्वं ज्ञात्वा तत्तज्ज्ञेयमित्यनवस्थानान्न किंचित्सिध्येत् । नित्यात्मानु[1]भवसिद्धत्वे त्वज्ञानस्य इष्टे नायं दोषः । अज्ञानान्तराप्रसङ्गाच्च । अथोच्येत—सर्वस्याज्ञानं यद्यपि ज्ञानात्प्राक् स्वरूपतस्सिद्धम्, तथापि न प्रमाणं विना प्रतीतितस्सिध्येत्; त्वद्युक्त्यज्ञानमपि प्रमाणेनैवाहं ज्ञात्वा, तामजानन् पृच्छामीत्यवोचम्; अतो न प्रमाणं विना अज्ञानसिद्धिरिति । एवमपि मद्युक्तेः प्रामाणिकत्वं सिध्येत्, तदज्ञानस्य प्रामाणिकत्वात् । अतोऽज्ञा[2]नं प्रमाणं विनैव सिध्यतीति मत्प्रतिज्ञातार्थसिद्धः, तद्युक्तेः प्रामाणिकत्वात् । न हि तस्या अप्रामाणिकत्वे

[1] BCDE (०भवस्सि०) ।   [2] CDE (०नं ज्ञानं प्र०) ।

तदज्ञानं प्रामाणिकं स्यात्। प्रामाणिकस्याप्यज्ञानं न प्रामाणिकम्, किं पुनरप्रामाणिकस्य यस्य ज्ञानाज्ञाने न स्तः। न च युक्त्याभासाज्ञानं युक्त्यज्ञानम्। न च युक्त्याभासस्य प्रमाणसिद्धता। भ्रान्तिसिद्धस्य च न ज्ञानं नाप्यज्ञानमस्ति; स्वयमेव तदज्ञानमित्युक्तम्। अतो मद्युक्तेः प्रामाणिकत्वेऽप्रामाणिकत्वे च तदज्ञानस्य प्रामाणिकत्वासिद्धेस्तस्य च तव सिद्धत्वात्, प्रमाणं विनैवाज्ञानं सिध्यतीति सिद्धम्। वक्ष्यते चाज्ञानस्य प्रमाणासिद्धिः। तस्मादज्ञानस्य प्रमाणागम्यत्वात् प्रमाणगम्यस्य जडस्याज्ञानमस्तीति न जडप्रमाणेन ज्ञातुं शक्यम्, तदविषयत्वादज्ञानस्य। अज्ञानप्रमाणमपि केवलं नान्यप्रमाणविषयं स्पृशतीति न तेनापि प्रमेयसंबन्धितया अज्ञानं ज्ञायते। न चाज्ञानप्रमाणगम्यमेवाज्ञानाश्रयत्वक्षमं जडमन्यदस्तीतीष्यते त्वया। नापि मया। अन्तःकरणादीनां चानित्यत्वादनाद्यज्ञानाश्रयत्वानुपपत्तिः। अन्यदपि जडं विभक्तं चेत्, कार्यत्वादनित्यमेवेत्यनाद्यज्ञानाश्रयो न स्यात्। अविभक्तं च जडं न सिध्येत्, स्वतोऽसिद्धेः। अजडस्य त्वात्मनो विभागः कुतश्चिदपि न संभवतीत्युक्तम्। अतस्स एवानादित्वादनादिनोऽज्ञानस्याश्रयो युक्तः। अज्ञानं चानाद्युक्तम्; अन्यथा अज्ञानमेव तन्न स्यात्, प्राङ्मुक्तानां बन्धहेत्वज्ञानाभावे पुनरपि तद्भावादनिर्मोक्षप्रसङ्गात्। तस्मादात्मन एवाज्ञानं युक्तम्, न त्वनात्मनो जडस्य। नन्वात्माज्ञानमेव प्रमाणागम्यं त्वयोपपादितम्, न तु जडस्याज्ञानम्; अतस्तस्य प्रमाणगम्यत्वं न विरुध्यत इति

चेत्—तन्न, तस्यापि ह्यज्ञानमस्ति चेत्—अप्रमेयमेव स्यात्; अन्यथा अज्ञानमेव तन्न स्यात् प्रमेयान्तरवत्। न च जडस्याज्ञानं समस्तीत्युक्तम् ॥

ननु जडमज्ञानं कथमजडस्यात्मनस्स्यात्। न हि जडमजडस्य स्वरूपं गुणो धर्मो विकारो वा स्यात्तव रूपादिवत्। सत्यम्, यद्यप्यात्मनस्स्वरूपादि न भवत्यज्ञानं तथापि तत्तस्याज्ञानं भवत्येव। यज्जडं तदात्मनोऽज्ञानं न भवत्यमुकवदिति न शक्यं वक्तुम्, दृष्टान्ताभावात्—सर्वमेव जडमात्माज्ञानमिति मयेष्टत्वात्। तदुपपिपादयिषयैव सत्यपि प्रमाणगम्ये जडे अज्ञानातिरिक्ते, तस्य क्वचिदज्ञानं न संभवतीत्युक्तम्। तेनैव न्यायेन तस्मिन्नप्यात्मनोऽज्ञानं न संभवति, जडस्याज्ञानमितिवत् जडेऽज्ञानमित्यपि ज्ञातुमशक्यत्वात्—अज्ञानस्याप्रमेय[1]त्वात्, जडस्य च प्रमेयत्वात्तयोस्संबन्धाप्रतीतेः। नन्वज्ञानं यदि जडे नास्ति, ज्ञानमपि तच्च न स्यात्। अतश्च नाज्ञासिषं पूर्वं घटमिदानीं तं जानामीत्यादिव्यवहारो न स्यादिति चेत्—नायं दोषः, पूर्वं द्वितीयं चन्द्रं नाद्राक्षमिदा[2]नीं तं पश्यामीतिवत्तदुपपत्तेः। अपिच—अज्ञाते घटे, घटेऽज्ञानमिति न शक्यं ज्ञातुम्। ज्ञातेऽपि तथा, तदा तदज्ञानाभावात्। ज्ञाते घटे अयं पूर्वं न ज्ञात इति घटेऽज्ञानं सिध्यतीति चेत्—तन्न, अज्ञातघटासिद्धेः। न ह्यज्ञातरूपो घटः प्रमाणात्सिध्यति, प्रमाणप्रवृत्तेः प्रागेव तस्येष्टत्वात्। ऊर्ध्वं चेदज्ञातत्वं स्यात्—अज्ञातत्वमेव

[1] CDE (०त्वात्तयोस्सं०)। [2] B (०नीं प०)।

मानात्स्यान्न तु ज्ञातत्वम्, उभयार्थत्वायोगान्मानस्यै[1]-कस्यैव—विरोधात् । ज्ञातत्वं तु प्रागेव स्यात्, ऊर्ध्वं तद-योगात् । प्रागपि ज्ञातत्वे तद्धेतुमानं च व्यर्थं स्यात् । न च ज्ञातत्वं प्रागपि जडस्य, स्वतो ज्ञातत्वासिद्धेर्मानाच्च तदयोगात् । स्वतस्सिद्धत्वे च जडत्वहानिः । तस्मान्माना[2]-दज्ञातत्वे न जातु ज्ञातत्वं स्याज्जडस्य । अज्ञातत्वासिद्धौ च ज्ञातत्वासिद्धिः, अज्ञातस्यैव सतो ज्ञातताया दृष्टत्वात् ॥

ननु मानाज्ज्ञातत्वमेव भवत्यज्ञातस्यार्थस्य न त्वज्ञात-त्वम् । तत्तु प्रमाणप्रवृत्तेः प्राक् तस्य स्वतस्सिद्धमेव मानेन ज्ञायते । अतो नाज्ञातार्थासिद्धिः ; नापि मानाज्ज्ञातत्वा-सिद्धिरज्ञातस्य ; न चाज्ञातत्वस्य ज्ञातत्ववन्मानहेतुत्व-प्राप्तिरिति चेत्, तथापि—पूर्वमज्ञातत्वासिद्धौ मानाज्ज्ञा-तोऽयमर्थो न तु स्वत इति ज्ञातुमशक्यत्वात्, तत्स्वभावत्व-निश्चयसंभवात्, तस्य तथैव दृष्टत्वात्—मानप्रवृत्तेः प्राक्सो-ऽज्ञात इति न शक्यं ज्ञातुं मानेन । प्रवृत्तेऽपि माने, तत्प्रवृत्तिनिश्चयहेत्वभावात् । मानमपि ज्ञातं चेत्, स्वयं-ज्ञातमेवेति न तस्य प्रागभावस्सिध्येत् । न हि स्वयंप्रकाशस्य प्रागभावादिज्ञानं समस्तीत्युक्तम् । अत एवाभावोऽपि ज्ञातश्चेत्, स्वयंप्रभ एवेति न तस्यान्यदीयत्वं[3] भेदो वा कुत-श्चित्सिध्येत् । भावस्यापि तथा । अतस्सर्वस्यैव ज्ञातस्य भेदो-त्पत्त्याद्यसिद्धेरेकं निर्विकारं वस्तु प्रसज्येतात्मज्योतिः । न च तस्याज्ञातत्वं ज्ञातुं शक्यं मानेन, तद्रूपविरोधात्

[1] C (०नस्यैव) ।　　[2] BCD (०नाज्ज्ञातत्वे न ज्ञा०) ।

[3] BDE (०यत्वमभे०) ।

अवध्यभावाच्च। यत्त्वयोक्तं मानाज्ज्ञातत्वमेवार्थस्य भवति न त्वज्ञातत्वम्; तत्तु मानप्रवृत्तेः प्राक् सिद्धमेवास्य मानेन ज्ञायत इति, तच्चोच्यते—अर्थस्याज्ञातत्वज्ञापकमपि [1]मानं तद्विषयमेव, उत अन्यविषयम्। अन्यविषयं चेत्, न तस्याज्ञातत्वं ज्ञापयेत्। तद्विषयमेव चेत्—तेनापि मानेन तस्य ज्ञातत्वमेव भवेत्, न त्वज्ञातत्वं ज्ञाप्येत मानान्तरेणेव। अथ न तेन ज्ञातत्वं भवेन्मानान्तरेणापि न भवेत्, तद्विषयत्वाविशेषात्। न चातद्विषयेण ज्ञातत्वं भवेत्। अ[2]तद्विषयत्वे तयोरुभाभ्यामपि ज्ञातत्वमेव भवेत्। न चेत्, नैकेनापि स्यात्। अतो यावत्किंचित्प्रमाणेन स्पृश्यते तत्सर्वं ज्ञातमेव भवतीति नाज्ञातत्वं मानेन ज्ञापयितुं शक्यते प्रदीपेनेव तमः। अथ किंचिन्मानमज्ञातत्वमेव ज्ञापयति नार्थमिति यदि भवतोऽभिनिवेशः, तथापि पृच्छामः—किमज्ञातत्वमर्थाद्भिन्नम्, उत अभिन्नम्। अभिन्नं चेत्, तस्मिन् ज्ञाते अर्थोऽपि ज्ञात एव स्यात्। भेदेऽप्यर्थे अज्ञाते तत्संबन्ध्यज्ञातत्वं न ज्ञाप्येत। अज्ञातत्वमपि न ज्ञाप्यते चेत्—तन्मानं व्यर्थं स्यात्, अज्ञापकत्वात्। अतोऽज्ञातत्वं ज्ञाप्यते चेत्, अर्थोऽपि ज्ञाप्यः; अन्यथा तयोस्संबन्धासिद्धिः। यस्मान्मानादज्ञातार्थसि[3]द्धिरिष्यते, यदि तस्मान्नार्थस्य ज्ञातत्वं भवति नाप्यज्ञातत्वं तस्य पूर्वमेव सिद्धत्वात्—तदा किं तेन मानेन तव अकिंचित्कारिणा। अथ मनुषे—यद्यप्यर्थस्य ज्ञात-

[1] BCDE (ज्ञानं)। [2] BC (०तस्तद्वि०)।
[3] CDE (०द्धिरेवेष्य०)।

त्वाज्ञातत्वे न मानाद्भवतः तथाप्यज्ञातमर्थमज्ञातात्मनैव ज्ञापयति मानम्, यथा कृष्णं कृष्णात्मनैव बोधयति मानं न शुक्लीकरोति ; एवमज्ञातेऽर्थे स्वल्पमप्यतिशय-मकुर्वद्यथावस्थिताज्ञातस्वरूपमात्रपर्यवसाय्येव मानं, मानं भवतीति न तस्य नैष्फल्यमिति—तर्हि नार्थस्याज्ञातत्व-सिद्धिर्मानात्, प्रवृत्तेऽपि मानेऽर्थेऽतिशयाभावस्येष्टत्वात्। अतो यथा मानात् प्राङ्गाज्ञातत्वं सिद्धम्, तथा ऊर्ध्वमपि न सिध्येत् ; अन्यथा प्रागपि सिध्येत्, विशेषाभावात्। न चेत्—नोर्ध्वमपि, अविशेषादेव[1]। उभयथापि मानं व्यर्थम्। एवं चेत् प्रमाण[2]वृत्तमन्यत्रापि, तदा जडं न किंचित्सिध्येत्, मानात्प्रागूर्ध्वं च तस्य विशेषाभावा-त्स्वतश्चासिद्धेः॥

ननु न मानं वस्तुविकारकृत्तवापि। सत्यम्, अत एव न जडस्य मानात्सिद्धिः कस्यचित्कदाचिदपीत्यवोचं जडे मानस्य नैष्फल्यम्। नन्वजडस्यापि मानात् प्रागूर्ध्वं च विशेषाभावात् स्वतस्सिद्धत्वाच्च तन्मानस्यापि तदसाधक-त्वाद्वैफल्यं समानमिति चेत्—तन्न, अज्ञाननिवर्तकत्वा-त्तन्मानस्य। स्वतस्सिद्धस्यापि ह्यजडस्याज्ञानादसिद्ध-कल्पत्वात्तदज्ञाननिवर्तकं तन्मानं तत्साधकमिवेति न वैफल्यं स्यात्। साधकत्वप्रकारान्तरासंभवाच्च। जडस्य त्वज्ञानाभावान्न तन्निवर्तनेनापि तन्मानस्य साफल्यम्। निवर्तितेऽप्यज्ञाने जडस्य स्वतोऽसिद्धेर्मानाच्च विशेषा-भावात्तस्यासिद्धिरेव। अथ मनुषे—अन्यविशेषाभावेऽपि

[1] CDE (०व तूभ०)। [2] CDE (०णाप्रवृ०)।

मानाज्जडस्य ज्ञातत्वं भवत्येव, अन्यथा जडासिद्धेस्तन्मानवैफल्याच्चेति। तर्हि यावत्किंचिन्मानस्पृष्टं तत्सर्वं ज्ञातमेवेति नाज्ञातजडसिद्धिर्मानात्। अथ मानस्पृष्टमपि किंचिज्जडमज्ञातं भवेत्, तर्हि सर्वं जडं तथैवेति न किंचिज्जडं सिध्येत्। अनेनापि न्यायेनाज्ञानस्य मानगम्यत्वं प्रत्युक्तम्, तस्यापि जडत्वात्। मानस्यापि तथा। अतो जडं वस्त्वस्ति, तदज्ञातं सत् मानाज्ज्ञायत इत्याद्या प्रसिद्धिरज्ञानमूलैव। अतोऽज्ञानव्यतिरेकेण असत इव जडस्यापि स्वरूपासिद्धेः तस्य तत्र चाज्ञानासंभवात् स्वरूपेण स्वाविद्यया वा जडस्याप्यात्मा[1]ज्ञानातिरिक्तस्य व्यवहारास्पदत्वं संभवतीति नाशङ्कनी[2]यमसत इवेति सिद्धम्। अतः परमार्थसत्य आत्मैव स्वाविद्यामायया सर्वस्य लौकिकवैदिकव्यवहारस्य आ प्रबोधात् मायावीव स्वमायया गिरिनदीसमुद्रादि व्यवहारस्यास्पदं भवतीत्यभ्युपेयं न्यायमनुसरद्भिस्सर्वैरेव। अस्यैवार्थस्य प्रदिदर्शयिषया लोकव्यवहारसिद्धसत्यत्वशुक्त्याद्यज्ञानजरूप्यादयोऽसत्या इति दर्शितम्। अतो न विरोध आशङ्कनीयो दृष्टान्ताभावो वा लोकप्रसिद्धदृष्टान्तोपादानात् ॥ १२५ ॥

शून्ये जडेऽप्यविद्यायाः किं फलं भ्रमतो न ते।
दृश्यस्याविद्यया द्रष्टुर्न भ्रमोऽतिप्रसङ्गतः ॥ १२६ ॥

प्रयोजनाभावादपि शून्यजडयोर्नाविद्या कल्पनीया। न तावत्तयोर्भ्रमः प्रयोजनम्। न हि ते भ्रमतः—अज्ञत्वात्, यस्याज्ञानं समस्ति तस्यैव भ्रमोऽपीत्युक्तत्वात्। न

[1] CDE (०प्यात्मानाज्ञा०)। [2] CE (०यं स०)।

च तयोरविद्यया द्रष्टुर्भ्रमः, अतिप्रसङ्गात् । अन्यस्याविद्यया चेदन्यो [1]भ्रमेदपि, सर्वस्सर्वदा भ्रमेत् । न हि सर्वस्याविद्या सर्वं च युगपन्निवर्तेत । शून्यजडयोरविद्यया चेद्द्रष्टुर्भ्रमस्स्यात्, न स द्रष्टुर्विद्यया निवर्तेत । न च तयोर्विद्या अस्ति । अतस्स न निवर्तेत कदाचिदपि । तस्मान्न दृश्यस्थया अविद्यया द्रष्टुर्भ्रमो युक्तः । न च शून्यपक्षे द्रष्टाप्यस्ति ॥ १२६ ॥

द्रष्ट्रविद्यावशेनैव नियमश्चेद्दृथेतरा ।
नर्ते तां रूप्यसिद्धिश्चेन्न स्वप्नेऽप्यस्य दर्शनात् ॥१२७॥

द्रष्टुरविद्यायां सत्यामेव दृश्याविद्यया द्रष्टुर्भ्रमो भवत्यसत्यां तु न भवत्येवेति नियमान्नातिप्रसङ्ग इति चेत्, तर्हि द्रष्ट्रविद्ययैव भ्रमसिद्धेरितरा जडाविद्या व्यर्था । तज्जत्वे च भ्रमस्य द्रष्ट्रा असंबन्धोऽनिवृत्तिश्च उक्ता । यद्यपि द्रष्ट्रविद्ययैव रूप्यादिज्ञानं सिध्येत्, तथापि दृश्यबाह्यदूरस्थशुक्त्यर्कमण्डलादिस्थतया स्फुरतो रूप्यसुषिरादेर्दृश्यरूपस्य दृश्यस्थाविद्यां विना न सिद्धिस्स्यात् द्रष्ट्रविद्याजश्चेत्, तदाश्रयो भासेत रूप्यादिस्तज्ज्ञानादिवत्; न तु शुक्त्याद्याश्रयः, अतदविद्याजत्वात् । सर्पोदकपुरुषादिवत् । सर्पादीनामपि रज्ज्वाद्याश्रयत्वनियमो न स्यादात्माविद्याजत्वे । दृश्यस्थाविद्याजत्वे तु तन्नियमसंभवात्सा अभ्युपेयेति चेत्—तन्न, स्वप्नेऽप्यस्य यथोक्तस्य रूप्यादेर्यथोक्तशु[2]क्त्यादितत्स्थाविद्याभावेऽपि दर्शनात् ॥ १२७ ॥

[1] BCDE (भ्रमोऽपि) । [2] BCDE (०क्त्या…भा०) ।

एतदेव विवृणोति—

शुक्त्यभावात्तदज्ञानान्न स्वप्ने शुक्तिरूप्यधीः।
तत्रात्माज्ञानजैवापि शुक्तिधी रूप्यधीरिव ॥ १२८॥

न हि स्वप्ने शुक्त्यर्कमण्डलादयश्चक्षुरादिसंप्रयुक्ता जागरित इव सन्ति तथापि तदाश्रया इव रूप्यसुष्यादयो [1]भान्ति द्रष्टृविद्ययैव न तु शुक्त्याद्यविद्यया, तेषां तत्राभावात्; तथा शुक्त्यादयो दृश्या बाह्या गिरिनदीसमुद्रादयो दवीयोदेशादिसं[2]बद्धा ध्रुवादयश्च तत्तदनुरूपदृश्यतत्स्थाविद्याभावेऽपि द्रष्टृविद्ययैव तेन तेन रूपेण भान्ति—एवं जागरिते सत्स्वपि शुक्त्यादिषु तत्स्थाविद्यां विनैव द्रष्टुरेव तत्र तत्राविद्यया तत्तदाश्रया इव रूप्यादयो भान्ति द्रष्टृविद्याजा अपीति। सत्यपि दृश्ये जडे तस्य तदाश्रया अविद्या न कल्पनीया, दृश्येषु सत्स्वभ्युपेतेषु द्रष्टुस्तत्र तत्राविद्याविद्ययोश्चाभ्युपेयत्वात्तत्र तत्र रूप्यादिभ्रमस्य तद्बाधस्य च नियमोपपत्तेः। दृश्यस्थाविद्याजाश्चेत् रूप्यादयः, न द्रष्टा दृश्येरन्। न हि दृश्यस्थं मानं विना दृश्येत रू[3]पादिवत्। मानदृश्याश्चेत्—रूपादिवत्सत्यत्वान्नाविद्याजास्स्युः, सर्वैश्च दृश्येरन्। भ्रान्त्यैव दृश्यत्वान्नोक्तदोष इति चेत्—भ्रान्त्यापि चेत् किंचिद्दृश्येत, न सा भ्रान्तिस्स्यात् रूपादिज्ञानवत्। अर्थदृष्टेरपि भ्रान्तित्वे, रू[4]पादिदृष्टेरपि तत्प्रसङ्गः। रूप्यादिर्नार्थो भ्रान्तिदृष्टत्वादिति चेत्—न, रूप्यादितद्दृष्ट्योरनर्थत्वभ्रान्तित्वयोरन्योन्याश्रयत्वात्।

[1] C (भ्रान्तिद्र०)। [2] C (०संबन्धाद्ध्रु०)।
[3] BDE (रूप्यादि०)। [4] E (रूप्यादि०)।

बाध्यत्वान्नोक्तदोष इति चेत्, तन्न; न हि ज्ञानान्तरदृष्टमर्थं ज्ञानं चार्थज्ञापकं ज्ञानान्तरं बाधेत, अतिप्रसङ्गात्। न च दृश्याविद्याजं द्रष्टुर्विद्यया बाध्यमित्युक्तम्। तज्ज्ञानमेव बाध्यं न रूप्यादीति चेत्—तन्न, रूप्यादेर्बाध्यताप्रसिद्धिविरोधात्। ज्ञानं बाधितमपि पुनस्स्यात्, ज्ञेयस्य स्थितत्वात् घटादिज्ञानवत्। कथं च ज्ञेये स्थिते ज्ञानं बाध्येत। ज्ञाने बाधिते ज्ञेयमपि नश्यतीति चेत्, तथापि विद्यया तस्यानाश्यत्वादन्यतो नाशे बाधितत्वप्रसिद्धिर्हीयेत। न हि हेत्वन्तरान्नष्टा घटादयो बाधिता उच्यन्ते। विद्यानाश्यमेव चेद्रूप्यादि—द्रष्टृविद्याजमेव स्यात्, दृश्याविद्याजत्वे तदसंभवस्योक्तत्वात्। तस्माद्दृश्यानां भावेऽपि तत्स्थाविद्यां विनैव भ्रान्तिसिद्धेर्न तदर्थं सा कल्प्या। अतो यत्राविद्यया द्रष्टुस्स्वप्नभ्रमो[1] भवति, यत्र च विद्यया स निवर्तते[2] तत्तादृग्दृश्यं जडमजडमिश्रं शुद्धमेव वा शुक्तिस्थानीयं स्वप्नावस्थायामपि यद्यपि संभवति, तथापि तत्र प्रतिभासमानरूपादिमन्नानाविधप्रपञ्चानुरूपस्य[3] तदाश्रयस्य रूप्याश्रयशुक्तिवच्चक्षुरादिसंप्रयुक्तदृश्यस्यासंभवात्, दृश्याविद्याजत्वे च बाधाद्यसंभवात्, न दृश्याविद्याजस्स्वप्नप्रपञ्चः। तस्मात्सत्यपि जडे तस्याविद्या[4] भ्रमे नोपयुज्यते, द्रष्टुरेव तत्र तत्राविद्यया भ्रमनियमसिद्धेः। न च जडस्य सत्त्वे प्रमाणमस्तीत्युक्तम् ॥ १२८ ॥

[1] D (०स्वप्ने भ्र०)।   [2] CDE (०वर्तेत)।
[3] BCD (०ञ्चानरू०)।   [4] CDE (भ्रमो नो०)।

शुक्त्यवस्थात्ममोहोत्था रूप्यधीश्शुक्तिमोहजा ।
कथ्यते मृदवस्थात्मजातो मृज्जो यथा घटः ॥ १२९ ॥

यदि जडं नास्त्येवाज्ञातं ज्ञायमानं तदा कथं शुक्त्याद्यज्ञानजा रूप्यादिभ्रान्तय इति प्रसिद्धिरिति चेत्, शृणु—शुक्त्यादीदमंशावस्थापर्यन्तं विकसितादात्ममोहाज्जाता रूप्यादिभ्रमाश्शुक्त्यादिमोहजाः कथ्यन्ते, शुक्त्यादीनामपि रूप्यादिवदज्ञानजत्वाविशेषात् तेषामप्यज्ञानाभावात्—रूप्यादिवत्, यथा स्वप्ने, यथा चाकाशादिक्रमेण मृदवस्था[1]न्तं परिणतादात्मनो जातो घटो मृज्ज इत्युच्यते, कार्यस्य कारणत्वायोगात् मूलकारणस्यैव आ चरमकार्यात् कारणत्वात् ॥ १२९ ॥

अज्ञानजत्वसाम्येऽपि स्वप्ने किंचिन्न बाध्यते ।
जाग्रत्यपि तथा बोधात्प्रागूर्ध्वं सर्वबाधनम् ॥ १३० ॥

अज्ञानजत्वे समानेऽपि सर्वस्य प्रपञ्चस्य किंचिद्बाध्यं किंचिदबाध्यं किंचिद्बाधकं चेति प्रसिद्धिः यथा स्वप्ने प्राग्बोधात्—एवं ब्रह्मात्मताबोधात् प्राक्सा न विरुध्यते, तथाप्यूर्ध्वं सर्वप्रपञ्चो निवर्तते स्वाप्न इव प्रबोधे। उक्तं चैतत्पुरस्तात् ॥ १३० ॥

पुनरपि जडस्य सत्यत्वमभ्युपेत्याह—

भ्रान्त्ययोगादतोऽविद्या व्यर्थैव जडशून्ययोः ।
नाज्ञातत्वं न चाज्ञत्वं स्वतस्सिद्धेस्तया तयोः ॥ १३१ ॥

अत उक्तेन न्यायेन भ्रान्तिरागद्वेषादेरविद्याकार्यस्यासंभवाज्जडस्याविद्या व्यर्थेत्युक्तम्। तथा शून्यस्य च।

[1] CDE (०स्थान्तमप०)।

न चाज्ञातत्वमज्ञत्वं वा जडस्याविद्यायाः प्रयोजनम्, तयो[1]स्तस्य स्वत एव सिद्धत्वादचित्स्वभावत्वात् । तथा शून्यस्य च ॥ १३१ ॥

अज्ञातमज्ञं वा शून्यं जडं वा यद्यविद्यया ।
अज्ञाताज्ञत्वबाधस्याद्विद्यया रूप्यवत्तदा ॥ १३२ ॥

यद्य[2]ज्ञातत्वाज्ञत्वे तयोरविद्याकृते स्याताम्, तदा तयोर्विद्यया अज्ञातत्वमज्ञत्वं च रूप्यवत् बाध्यं स्यात् । ज्ञातत्वज्ञत्वे स्वत एवेति तत्[?]स्वाभाविकं स्यात् । अतश्च शून्यत्वं जडत्वं च तयोः कल्पितं स्यात् ॥ १३२ ॥

अतश्च—

स्वतो ज्ञातो ज्ञ आत्मैवाविद्यया जडशून्यवत् ।
ज्ञाताज्ञातवदाभाति नान्यदस्तीति चापतेत् ॥१३३॥

स्वत एव ज्ञातस्स्वत एव ज्ञश्चात्मैव स्वाविद्यया जडमिदं शून्यमिदं ज्ञातमिद[3]मज्ञातमिदमिति चानेकधा भात्यतद्रूप एव सन्नान्यदात्मनः किंचिज्जडं शून्यं वा नाम अस्तीत्येतदेवोक्तं स्यात्, अज्ञा[4]ताज्ञत्वे शून्यजडयोरविद्याकृते इति वदता ॥ १३३ ॥

तत्कस्मादिति चेत्, यतः—

स्वतो ज्ञातज्ञते स्वस्य युक्ते न जडशून्ययोः ।
अविद्ययात आत्मैव तथा भातीति सुस्थितम् ॥१३४॥

नन्वविद्याकृते चेज्जडशून्ययोरज्ञातत्वाज्ञत्वे तयोर्ज्ञातत्व-

[1] CDE (०स्तस्यास्व०) ।　[2] CDE (०ज्ञाताज्ञ०) ।
[3] CE (०दमिति) ।　[4] C (०ज्ञानाज्ञ०) ।

ज्ञत्वे स्वत एव प्राप्नुत इत्येतावति वक्तव्ये किमिदं त्वयोक्तमिति चेत्, शृणु—यत आत्मन एव स्वतो ज्ञातत्वं ज्ञत्वं च युक्तम्, अज्ञेयत्वात्; न तु जडशून्ययोः, तयोर्ज्ञेयत्वस्येष्टत्वात्; ज्ञेयस्य च स्वतो ज्ञातत्वज्ञत्वायोगात्, अज्ञेयत्वे च तयोरसिद्धेः, स्वयंप्रकाशस्याप्यात्मनोऽन्यस्यासिद्धेः—अत एवात्मैवाविद्यया जडादिरूपेण भाति, नान्यत्किंचिदित्युक्तं युक्तमेव ॥ १३४ ॥

स्वतो ज्ञातज्ञते युक्ते स्वयंज्योतिष आत्मनः ।
त्वज्ञेयते हि नैकस्य ज्ञेयस्यापि न च ज्ञता ॥ १३५ ॥

नन्वात्माप्यहंप्रत्ययेन अन्येन वा ज्ञेय एव, अन्यथा तस्याप्यसिद्धेः । त्वयाप्युक्तं स्वतो ज्ञात इति । अतो ज्ञेयत्वेऽपि स्वतो ज्ञातत्वज्ञत्वे आत्मन इव जडशून्ययोरपि युक्ते इति चेत्, तन्न; यत आत्मन एव ते युक्ते स्वयंज्योतिष्ट्वात्, ज्ञेय[1]त्वगन्धानभ्युपगमात्; न तु जडशून्ययोः, ज्ञेयत्वाभ्युपगमात्तयोः ज्ञेयस्य च स्वतो ज्ञातत्वज्ञत्वायोगात् । स्वतो ज्ञातत्वं चात्मनः परज्ञेयत्वव्युदासेन स्वयंज्योतिष्ट्वमेवोच्यते न त्वेकस्यैव ज्ञातृज्ञेयत्वे, तदसंभवात् ज्ञेयस्य च घटादेरज्ञत्वप्रसिद्धेः । अतो नात्मा अहंप्रत्ययादिवेद्यः, वेद्यत्वे तस्यात्मत्वासिद्धेः घटादिवत् । अतस्स्वयंज्योतिरेवाभ्युपेयस्तत्सिद्धिमिच्छद्भिर्न तु ज्ञेय आशङ्क्यः । तस्मात् ज्ञेयज्ञात्रोः ज्ञातृत्वज्ञेयत्वयोः—प्रकाश्यप्रकाशकयोरिव प्रकाशताप्रकाश्यत्वयोः—असंभवात् जडशून्ययोस्स्वतो ज्ञातत्वज्ञत्वाभ्युपगमे अज्ञेयत्वात्मत्वप्राप्तेस्तयोरज्ञात-

[1] D (०त्वनन्या०) ।

त्वाज्ञत्वार्थमपि स्वाश्रयाविद्या नार्थनीया, स्वतस्सिद्धत्वात्तयोरज्ञातत्वाज्ञत्वयोः। अत एव नात्माविद्यापि तच्चार्थवतीति न तयोः प्रमाणगम्यत्वम्, तच्चाज्ञानाभावात्। अतो नात्माज्ञानातिरेकेण जडं नाम सिध्येत्, नतरां शून्यम्। अत आत्मन एव स्वात्मन्येव अविद्ययैव सर्वव्यवहारास्पदत्वम्, न त्वन्यस्य कस्यचित् स्वरूपेण अविद्यया वेति सिद्धम् ॥ १३५ ॥

नन्वविद्यास्वयंज्योतिरात्मानं ढौकते कथम् ।
कूटस्थमद्वितीयं च सहस्रांशुं यथा तमः ॥ १३६ ॥

नन्वात्मानं स्वयंज्योतिषमविद्या अस्वयंज्योतिः कथं सहस्रांशुमिव तमो ढौकते। न ह्यात्मनस्स्वतोऽविद्या युक्ता, स्वयंज्योतिष्ट्वात्। अनुच्छित्तेश्च तस्याः। नाप्यन्यतोऽद्वितीयत्वादनाधेयातिशयत्वान्निर्हेतुकत्वाच्चाविद्यायाः। अतो न कस्यचिदप्यविद्या, आत्मनोऽपि तदसंभवात्। अतस्तां विनैव प्रमाणप्रवृत्तिः, जडस्य वा सा अभ्युपेया—अन्यथा तदसंभवात् ॥ १३६ ॥

इति चोदिते तच्चोत्तरमाह—

प्रसिद्धत्वादविद्यायास्तापह्नोतुं न शक्यते ।
अनात्मनो न सा युक्ता तयानात्मा विना न हि ॥१३७॥

न तावदविद्या नाम नास्तीति शक्यते वक्तुम्, तस्यास्सर्वजनप्रसिद्धत्वात्तदभावे च सर्वप्रमाणवैफल्यात्। न च सा अनात्मनो युक्ता, उक्तेभ्यो हेतुभ्यः। तया च विना अनात्मा न समस्तीत्युक्तम्। अतोऽनात्मनो न सा युक्ता ॥ १३७ ॥

तर्हि स्वतन्त्रा अस्त्विति चेत्, न ; यतः—

सात्मैव स्यात्स्वतन्त्रा चेन्न ह्यन्यस्य स्वतन्त्रता ।
तदधीनात्मसिद्धित्वादतोऽविद्याश्रयः पुमान् ॥ १३८ ॥

तस्यास्स्वतन्त्रत्वे स्वतन्त्रत्वादेव आत्मवदात्मत्वमेव स्यात्। न चान्यस्य स्वतन्त्रता, आत्माधीनत्वादन्यस्य सिद्धेः। न ह्यन्यज्जडमजडेनात्मना विना सिध्येत्, स्वतोऽसिद्धेः। स्वतस्सिद्धत्वे चान्यत्वमनात्मत्वं च न स्यादात्मवदेव। तस्याः प्रतीतेरात्माधीनत्वेऽपि स्वरूपस्य पृथक्सिद्धेस्स्वतन्त्रतेति चेत्—न, अज्ञातरूपस्य जडस्यासिद्धेरुक्तत्वात्, ज्ञातरूपस्य चान्यज्ञातत्वे प्रमाणाभावात् जडत्वासिद्धेः। न चाजडा अविद्या इष्टा, आत्मत्वप्रसङ्गात्। अविद्यायाश्च स्वतन्त्रत्वे न प्रमाणगम्यता, तच्चाविद्यान्तराभावात् प्रमाणाप्रवृत्तेः। नाप्यनुभवमात्रगम्यता, अतदाश्रयत्वाद्घटादिवत्। अतोऽविद्यायास्स्वातन्त्र्यजडाश्रयत्वापह्नवानामसंभवात् पुमानेवाविद्याश्रयोऽभ्युपेयः। न वेद्मि, अविद्वान्, मूढोऽस्मीति च पुंसोऽविद्याश्रयत्वप्रसिद्धेश्च ॥ १३८ ॥

यादृश्यविद्या तद्वत्ताप्यस्य तादृश्यथ स्वतः ।
अविद्यात्वक्षतिस्तस्या निवृत्तिश्च न बोधवत् ॥ १३९॥

ननु पुंसोऽविद्यासंबन्धस्सत्यश्चेत्, संसारस्सत्यस्स्यात्; मिथ्या चेत्, अविद्यासंबन्धोऽविद्यान्तरसंबन्धादित्येवमनवस्थेति चेत्—नायं दोषः। यथा अविद्या न पुंसस्स्वरूपं नाप्यन्या अन्यानन्या वा, न च सा सती नासती नापि सदसती, किं त्वनिर्वचनीयैव स्वत एव नाविद्यान्तरात्—एवं पुंसोऽविद्यासंबन्धोऽपि द्रष्टव्यः, अविद्या-

संबन्धत्वादेव। न ह्यविद्यासंबन्धस्सत्यश्चेति युज्यते ; सत्यत्वे अविद्याया अपि सत्यत्वादविद्यात्वहानिः। न हि सत्यासत्ययोरसत्ययोर्वा संबन्धस्सत्यो दृष्टः। न च सत्यस्याविद्यात्वम्—अतिप्रसङ्गात्, प्र[1]सिद्ध्यभावात्, विद्यानपनोद्यत्वाच्च आत्मस्वरूपवत्। न च सत्यस्य निवृत्तिः कुतश्चिदपीत्यसकृदुक्तम् ॥ अपिच—अन्योऽपि संबन्धो निरूप्यमाणोऽसत्य एव, न केवलमात्माविद्यासंबन्ध एव। तथाहि —संबन्धस्संबन्धिभ्यामनन्यश्चेत्, तावेवेति न तयोस्संबन्धो नाम स्यात्। अन्यश्चेत्, संबन्धिवत्संबन्धोऽपि संबन्धान्तरं विना न ताभ्यां संबध्येत। संबन्धान्तरकल्पनायामनवस्था। द्वयोश्च संबन्धो नैकस्यैव। द्वित्वं चाविद्यामूलमेव। अतोऽविद्यैव सर्वस्संबन्ध इति न संबन्धान्तरं तस्या मृग्यम्। पुंसोऽन्यस्य च सत्यस्याभावादविद्यासंबन्धस्य सत्यत्वे न प्रमाणमस्ति। न च पुमानेव संबन्धः—संबन्ध्यभावात्, तस्य विद्यानिवर्त्यत्वात्सर्वप्रमाणवैफल्यात्, अविद्यानिवृत्तेरनिर्मोक्षप्रसङ्गाच्च। तस्मान्नाविद्यासंबन्धस्सत्यः, किंत्वविद्यैव ॥ १३९ ॥

ननु न संबन्ध्येव संबन्ध इत्युक्तम्, अतो नाविद्यैव तत्संबन्धः। स्याच्चेत्, किं नात्मैव तत्संबन्ध इत्यसौ सत्यः। आत्मनश्चिन्मात्रवपुषो निस्संबन्धत्वादन्यत्रापि संबन्धस्याविद्याशरीरत्वादविद्यैव तत्संबन्धोऽपीति चेत्—तर्हि नात्मनोऽविद्या, अषष्ठ्यर्थत्वात्तस्य। न च सा अन्यस्य, अनिष्टेरयुक्तेश्च। अत एव न स्वतन्त्रा। अतोऽविद्या

[1] BCDE (०सिद्ध्यपायात्)।

दुर्घटा। नाविद्याप्रसिद्धिरपि तां साधयति, यतस्सा स्वतन्त्रा[1] परतन्त्रा वा न जाघटीति तव। अतः प्रसिद्धिबलादविद्या[2] आश्रीयते चेत्, यथा घटते तथैवाश्रयणीयेति चेत्—तन्न, यतः—

दुर्घटत्वमविद्याया भूषणं न तु दूषणम्।
कथं चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत्॥ १४०॥

न तावदविद्या नास्त्येव, तस्याः प्रसिद्धेः। न च निर्मूलैव[3] तत्प्रसिद्धिः, विद्याप्रसिद्धिवत्समूलैव युक्ता। भ्रान्तिमूला चेत्—सिद्धा अविद्या, तां विना भ्रान्त्यसिद्धेरुक्तत्वात्। अविद्याभावे च विद्यानुपपत्तेः[4]स्सर्वव्यवहारलोपप्रसङ्गः। तस्मान्न नास्त्यविद्या। सा च नात्मनोऽन्यस्य। नन्वात्मनो[5]ऽपि नाविद्येत्युक्तम्, संबन्धाभावात्तस्य षष्ठ्यर्थानुपपत्तेः[6]। न, 'तस्य संबन्धः' इतिवत् संबन्धान्तरं विनापि 'तस्य अविद्या' इति षष्ठ्युपपत्तेः[7]। अविद्यायास्संबन्धाभावे नात्मीयतेति चेत्—न, संबन्धवदात्मीयतोपपत्तेः। संबन्धेन चेदविद्या आत्मीया स्यात्—संबन्धस्य संबन्धान्तरेण नात्मीयता, अनवस्थानात्। तच्च संबन्धस्संबन्धान्तरं विना नात्मीयश्चेत्, ततो नाविद्याप्यात्मीया। अथ संबन्धस्संबन्धान्तरं विनाप्यात्मीयस्तथा अविद्यापीति नास्यास्संबन्धो मृग्यः, संबन्धानपेक्षत्वात् संबन्धवत्। तस्याश्चेत्संबन्धो मृग्यः—स

[1] CE (०न्त्रा न परतन्त्रा च न)। [2] D (०द्याप्याश्रीयते)। [3] CDE (०व प्र)। [4] CD (०द्यानुत्पत्तेः)। [5] CD (०नो त्विनावि०)। [6] CD (०नुत्पत्तेः)। [7] CD (०ष्ठ्यनुत्पत्तेः)।

मिथ्या चेत्, अविद्यैवेति नास्यास्संबन्धः; सत्यश्चेत्, आत्मैवेति नास्यास्संबन्धः। न ह्यात्मनोऽन्यत्सत्यम्, स्वतः परतश्चासिद्धेः। अतो नात्मा संबन्धः, ह्याश्रयत्वादसत्यत्वप्रसङ्गाच्च संबन्धान्तरवत्। न हि संबन्धस्सत्यो दृष्टः क्वचित्। अतस्संबन्धस्सत्यश्चेति विप्रतिषिद्धम्। अतस्सर्वसंबन्धानागन्धितस्यैवात्मनोऽविद्येति युक्तम्। संबन्धवतश्चेदविद्या, तत्कल्पितस्यैवाविद्येत्युक्तं स्यात्। न ह्यकल्पितस्यात्मनस्संबन्धः। स चेद्वेद्यो नात्मनस्स्यात् घटादिसंबन्धवत्। अवेद्यो न सिध्येत्। स्वयंप्रभश्चेत्, आत्मैव। अत आत्मा निस्संबन्ध एव; अन्यथा घटादिवदनात्मा स्यात्। अतोऽस्य कल्पित एव सर्वस्संबन्धो रूप्यादिवद्दुःखादिवच्चेत्यविद्यासंबन्धोऽप्यविद्याशरीर एव, नात्मनस्स्वरूपमिति सिद्धम्॥

यत्तूक्तं दुर्घटा अविद्येति—तत्किं दुर्घटत्वं तस्या वस्तुत्वस्य अघटमानत्वात्, उताविद्यात्वस्य। यदि वस्तुत्वस्य तद्दुर्घटत्वं तस्या भूषणमेव न तु दूषणम्। अथाविद्यात्वस्य—तच्चायुक्तम्, वस्तुत्वस्याघटमानतयैव अविद्यात्वस्य घटमानत्वात्। नृशृङ्गवदप्रसिद्धभावाच्च। यदि तस्या वस्तुत्वं घटेत—अविद्यात्वं दुर्घटं स्यात्, विद्ययाहेयत्वादविद्यात्वक्षतेः। अतोऽघटमानैवाविद्या जाघटीति। अतस्सा तथैवाश्रयणीया। तस्मादात्मन एवाविद्या आत्मन्येव च, न त्वनात्मनोऽनात्मनि चेति सिद्धम् ॥ १४० ॥

आत्माविद्यानुत्त्यर्थं तद्विद्यामिच्छता तद्धेतुशब्दादिज्ञानसिद्ध्यर्थमविद्या अनात्मन्यप्येष्टव्या, अन्यथा तदसिद्धेरिति चोदयति नवभिश्श्लोकैरुत्तरैः—

नन्वनात्मन्यविद्या चेन्नास्ति मानं करोति किम्।
तस्याज्ञातस्वरूपत्वान्नाज्ञातत्वं निहन्ति तत्॥ १४१॥

यद्यनात्मनि नाविद्या—अक्षजादि तन्मानं व्यर्थं स्यात्, अकिंचित्करत्वात्। त[1]थाहि नाज्ञात[2]त्वं तत् तस्य हन्ति, तत्स्वरूपत्वात्—स्वरूपहानात्॥ १४१॥

ज्ञाततां कुरुते नास्य तत्स्वरूपविरोधतः।
अविरोधेऽपि सोऽज्ञातस्तत्कृतावपि पूर्ववत्॥ १४२॥

अज्ञातस्वरूपविरोधादेव नास्य ज्ञाततां कुर्यादङ्गारस्येव शौक्ल्यं तत्स्वरूपविरोधात्। अविरोधेन चेत् ज्ञातत्वं नाम अन्यत्कुर्यात्, तस्याज्ञातस्वरूपं स्थितमेव अङ्गारस्येव कार्ष्ण्यमन्यशौक्ल्यकरणे। तदा मानं व्यर्थम्॥ १४२॥

ज्ञातता मानजन्या चेन्मानकर्मभिदा च का।
सकृदेकेन च ज्ञातस्सदा सर्वैर्मितो भवेत्॥ १४३॥

यदि ज्ञातता नाम विकारो जडे मानेन जन्यते क्रिययेव मृदो घटता, तदा क्रियामानयोः को विशेषः। न हि स्वगतेन विकारेण जडस्यापरोक्ष्यं मृद इव घटेन स्यात्। मानजन्येनेति चेत्, न स्यात्। जन्यत्वे हि ज्ञातत्वस्यापि क्रियाजन्यत्वमेव घटवत् स्यात्। मानस्यापि जनकत्वे घटक्रियावत् क्रियात्वमेव। अक्रियात्वे मानस्याजन्यफलत्वमेष्टव्यम्। यदि स्वगतेनापि विकारेण जडं पुंसोऽपरोक्षं स्यात्, तदा माननाशेऽपि तस्य क्रियानाश इव घटस्य भावात् सकृज्ज्ञातं जडं सुषुप्तेऽप्यपरोक्षं स्यात्। सर्वपुंसां च स्यात् नैकस्यैव—मेयमात्रगतत्वाद्विशेषस्य, पुंसां विशेषा-

[1] CDE (०थापि)। [2] DE (०त्वं तस्य)।

भावात्; अन्यथा नैकस्यापि स्यात्। न ह्येकेन कृतोऽन्येषामघटस्स्यात्, अतत्कृतोऽपि। सत्यां त्वविद्यायां यस्य यच्च तन्निवृत्तिस्तस्यैव तदपरोक्षं नान्यस्य, अन्यच्चेति युज्यते। ज्ञानकाल एव जडाविद्या निवर्तते यथा प्रदीपकाल एव तमः, अतोऽस्य सुषुप्तादौ नापरोक्ष्यप्रसङ्गः। नाविद्यानिवृत्तिमात्राज्जडस्यापरोक्ष्यं युक्तम्, जडत्वादिति चेत्—न, मानप्रवृत्तौ जडस्यापरोक्ष्यप्रसिद्धेः, मानस्य चाविद्यानिवर्तकत्वप्रसिद्धेः, जडे मानप्रवृत्तेश्च प्रसिद्धत्वात्—जडे प्रवृत्तेन प्रमाणेन तदविद्यानिवृत्तेः तस्यापरोक्ष्यमिति निश्चीयते यतः। न च तन्मानजन्यमित्युक्तम्। न च तन्नास्त्येव, प्रसिद्धत्वात्। कुर्वदप्यापरोक्ष्यं मानं जडेऽविद्यां नुदत्येव, तन्नुत्त्वप्रसिद्धेः; अन्यथा नात्मन्यपि तां नुदेत्। तच्चापरोक्ष्यस्यापि स्वतस्सिद्धेर्व्यर्थं मानं स्यात्। न च जडे मानं नास्ति ॥ १४३ ॥

प्रत्यक्षादेरमानत्वं यद्यनात्मा न मीयते।
तच्चासिद्धिश्श्रुतीनां च तदात्मा हि न सेत्स्यति ॥ १४४ ॥

अनात्मन्यमेये विषयाभावात् प्रत्यक्षाद्यप्रामाण्यम्। अतो वेदासिद्धेस्तद्गम्यात्मासिद्धिश्च ॥ १४४ ॥

अक्षजादेरनात्मत्वात्सोऽपि तेन न मीयते।
तदसिद्धेरयोग्यत्वाच्चात्मापि न च तत्प्रमः ॥ १४५ ॥

अक्षजादिरेव अक्षजादेर्विषय आत्मा वा; ततो न तस्य निर्विषयता, आत्मनोऽपि नाप्रमाणतेति चेत्—तन्न, अनात्मत्वादभेदाच्च अक्षजादिरपि न तत्प्रमेयः। अतस्तस्यासिद्धेरयोग्यत्वाच्च आत्मापि न तत्प्रमाणकः ॥ १४५ ॥

प्रत्यक्षादिभिरात्मा चेन्मेयश्शास्त्रमनर्थकम्।
सदा ज्ञानान्न बन्धो वा मोक्षो वा नात्मवेदनात् ॥१४६॥
नात्माक्षजादेर्मेयोऽतो नाप्यनात्मात आत्मनः।
नाक्षजादिर्न शास्त्रं वा मानं नातस्स सेत्स्यति ॥१४७॥
यद्यात्मैवात्मनो मानं स्वतोऽविद्यानिवृत्तितः।
संसृतिर्न कदाचित्स्यान्न मुक्तिर्वा कदाचन ॥ १४८ ॥

स्पष्टार्थाश्श्लोकाः ॥ १४६—१४८ ॥

तस्मादविद्यानुत्त्यर्थं यदि विद्यात्मनीष्यते।
अनात्मज्ञानसिद्ध्यर्थमविद्यानात्मनीष्यताम् ॥१४९ ॥

आत्माविद्यानुत्त्यर्थमात्मविद्या चेदिष्यते—तद्धेतुशब्दाद्यनात्मज्ञानसिद्धये तदविद्यापीष्यताम्, अन्यथा तदयोगात्[1]—इत्युक्तार्थोपसंहारः ॥ १४९ ॥

अत्रोत्तरं मयावादि तथाप्यज्ञायि न त्वया।
अतो वच्मि पुनर्व्यर्थाविद्यानात्मस्विति स्थितम् ॥१५०॥

अनात्मस्वविद्याभावेऽपि स्वप्नादिदृश्येष्विव मानमेयफलादिव्यवहार आत्माविद्ययैव समस्तीत्यसकृन्मयोक्तम्। तथाप्यज्ञानाच्चोदयतस्तवोत्तरं पुनरपि तदेव वच्मि। शृणु—इदं तावत्स्थितमेव, अनात्मसु जडत्वादाच्छादनादिप्रयोजनाभावादविद्या व्यर्थेति। न च मानप्रवृत्तिरेव प्रयोजनम्, तस्या अपि प्रयोजनाभावात्। न हि तयाप्यापरोक्ष्यं जन्यमित्युक्तं त्वयैव। जडस्थत्वेन जन्यस्य च जडत्वान्न तेन विशेषः। दृश्यत्वे जाड्यम्, अदृश्यत्वे जन्माद्यसिद्धिः। न चाविद्यानिवृत्तिः प्रयोजनम्, तन्नि[2]वृत्तावपि

[1] CDE (०दविद्यायो०)। [2] CDE (०वृ...अना०)।

जडस्य विशेषाभावादविद्याया अनात्मन्यनिष्टिरेव श्रेयसी। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्। न चात्मन इव जडस्याविद्यावत्त्वे प्रमाणमस्ति, नाप्याच्छादिकेत्युक्तम्। अतोऽविद्या अनात्मसु व्यर्थेति स्थितमेव॥ १५०॥

न चाविद्याभावेऽपि तेषु मानादिव्यवहारप्रसिद्ध्यभावः। यतः—

प्रमाणव्यवहारोऽपि तेष्वविद्यामृतेऽपि हि।
आत्माज्ञानैकहेतुस्स्याद्भ्रान्तिस्वप्नादिवत्सदा॥ १५१॥
तथाहि भाति यद्रूप्यं शुक्तौ तत्क्वापि नास्त्यतः।
नाज्ञानं तच्च भात्येव तथाप्यात्मन्यविद्यया॥ १५२॥
यथैव स्वप्नमायादावत्यन्तासंभवि स्फुटम्।
तदविद्यामृते भाति सर्वोऽनात्मा त[1]थेष्यताम्॥ १५३॥
स्पष्टार्थाश्श्लोकाः॥ १५१—१५३॥
ज्ञाता ज्ञेयं तदज्ञानं ज्ञानात्तन्नाश इत्यपि।
आ बोधात्स्वप्नवन्नित्यं सिद्धमेवाविचारितम्॥ १५४॥
तच्च सिद्धाश्श्रुतिन्यायास्स्वात्मानं बोधयन्ति ते।
न च बोधस्य [2]बाधोऽस्ति नापि कारणदुष्टता॥ १५५॥

नन्वेवं च सति अनात्मसु ज्ञानाज्ञानयोरभावाद्रज्जुज्ञानोत्थसर्पादिवदात्माज्ञानोत्थद्वैतप्रपञ्चो रज्जुज्ञानेनेवात्मज्ञानान्निवर्तते इत्यादिव्यवहारो भवतां निर्मूल एव। तथा ज्ञातृज्ञेयाद्यभावाच्च। अक्षजादिप्रमेयपदपदार्थतत्संबन्धज्ञानाद्यसिद्धेः, शाब्दप्रामाण्याद्यप्रसिद्धेः, श्रवणमन-

[1] C (॰थेयताम्)।  [2] DE (बोधो॰)।

नादिपूर्वकात्मज्ञानासंभवाच्छाब्दादात्मविज्ञानात्तदज्ञानतत्कार्यनिवृत्तौ मोक्ष इत्येषापि प्रतिज्ञा निर्मूलैवेति चेत्—तन्न, शब्दाद्यनात्मवस्तुतदज्ञानतज्ज्ञानतज्ज्ञात्रादेरा बोधात् स्वप्न इवाविद्ययैव सिद्धेः। तच्च ज्ञानादज्ञानं निवर्तत इति च सिद्धत्वात्, शब्दन्यायादीनां च प्रसिद्धत्वात्, तेभ्योऽसंदिग्धात्मज्ञानोत्पत्तेः, तेषां कल्पितानामेव कारणत्वात् कारणदोषाभावात्, असत्यादेव सत्यस्यात्मनः—ह्रस्वदीर्घादेरसत्यादेव धर्मस्येव सत्यस्य—प्रतिपत्तेस्संभवात्, आत्माज्ञानोत्थप्रमात्राद्यशेषभेदनिवर्तकस्यात्मविज्ञानस्य पुनर्बाधकासंभवात्—रज्ज्वज्ञानोत्थसर्पभयादिवद्रज्जुज्ञाने[1]न—आत्माज्ञानोत्थसंसारभयस्यात्मज्ञानेन निवृत्तेः, मोक्षो युज्यत इत्यादि अस्माभिस्सम्यगेवोच्यते। तस्मान्नाविद्या अनात्मन्यस्ति—तदभावेऽपि सर्वव्यवहारोपपत्तेः। अतो नाविद्यां नुद[2]ज्जडे मानमर्थवत्। नापि ज्ञाततां कुर्वत्—कृतेन जडेनातिशयाभावात्, अजडस्याकार्यत्वात्। नाप्यज्ञातत्वं निवर्तयत्, स्वरूपहानात्॥ १५४—१५५॥

आत्मनि तु पुनर्नैवम्। यतः—

अविद्याया निवर्त्यत्वान्मानं चार्थवदात्मनि।
अनात्मत्वादविद्यायास्तद्ध्वंसे नात्मनः क्षतिः॥१५६॥

प्रमाणस्य स्वप्रमेयाविद्यानिवृत्तिमात्रप्रयोजनत्वात्तस्य च जडेष्वनात्मस्वसंभवादात्मनि च स्वयंप्रकाशेऽनन्तचिन्मात्रविग्रहे संभवात्तस्यैव प्रमाणार्हत्वाच्छ्रुतेस्तत्रैव प्रामाण्यसंभवात्, स एव श्रुत्यर्थः। अतो नाचेतनं प्रधानं

[1] BCD (०नात्मज्ञा०)। [2] BCDE (०ज्जडे मानर्थं०)।

परमाणवोऽ[1]भावः परपरिकल्पितं चिदचिदात्मकं सप्रपञ्चं ब्रह्म अन्यद्वा—तच्च श्रुतेः प्रामाण्यासंभवात्। तथा प्रत्यक्षादीनाम्। अतो न तद्विरोधाशङ्का श्रुत्यर्थे, तद्विरुद्धार्थत्वाभावात्तेषाम्। अतः प्रत्यगात्मैव परमार्थसत्यं वस्तु नान्यदिति स ए[2]व औपनिषदः पुरुषो ब्रह्मेति सिद्धम्। कर्मोपासनादिवाक्यानां चाविद्यावत्कल्पितेष्टानिष्टप्राप्तिपरिहारोपायज्ञापकानामविद्यावस्थायामेव प्रत्यक्षादीनामिव आ बोधात् स्वप्नावस्थायामिव प्रामाण्यमिति न वेदान्तवेद्यवस्तुविरुद्धरूपवस्तुसंस्पर्शिता इत्यात्मैव सम्यक्प्रमाणवस्तु नान्यत्किंचिदिति स्थितम् ॥ १५६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्यपाद-शिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ प्रथमोऽध्यायः।

---

[1] CDE (०भावाः)। [2] CDE (०व चौप०)।

# अथ द्वितीयोऽध्यायः।

शुक्तिरूप्यादिस्फुरणानामन्यथाख्यातित्वाद्यसंभवादनिर्वचनीयाविद्याविलासतैव युक्ता। अतस्तद्धेतुरविद्या माया अभ्युपेयेति प्रत्यपी[1]पदत्। इदानीमन्यथाख्यात्याद्यभ्युपगमेऽपि असत्ख्यात्यभ्युपगम इव अवश्यं सा अभ्युपेया, अन्यथा तासामसिद्धेरिति प्रतिपादयन्नाह—

अन्यथाख्यातिरख्यातिरात्मख्यातिरिति त्रयः।
सत्ख्यातिपक्षा नैतेऽपि विना सिध्यन्ति मायया ॥१॥

[2]तच्च—

अन्यथाख्यातिरिष्टा चेद्भ्रान्तिस्तज्जननीष्यताम्।
मायापि नान्यथाख्यातिर्विना मायां हि सिध्यति ॥२॥

[3]तत्कथम्—

ब्रूहि किं सान्यथाख्यातिर्यान्यथाभूतवस्तुधीः।
यान्यथा प्रथयेदर्थं स्वयं वा यान्यथा भवेत् ॥ ३ ॥

त्रिधापि मायां विना सा न सिध्येत्। यथा असतः स्वरूपसिद्धेः[?], तत्ख्यातेः, तस्य सद्रूपेण ख्यातेश्च मायां विना असिद्धिः—एवमर्थस्यान्यथाभावस्य, तत्ख्यातेरन्यथाख्यापनस्य च[?], ख्या[4]तेः स्वयमन्यथाभावस्य च मायां विना असिद्धेर्वक्ष्यमाणत्वात् ॥ ३ ॥

[1] BC (॰पदम्)। [2] This word is found only in CDE.
[3] BCD (तत्कथं ब्रूहि सा ख्यातिः)। [4] CD (॰तेः सत्त्वम॰)।

तच्च—

यदीष्टा सान्यथाख्यातिर्यान्यथाभूतवस्तुधीः ।
कूटस्थात्मधियोऽन्या धीस्सर्वा भ्रान्तिः प्रसिध्यति ॥४॥

कूटस्थात्मधीरेव मानं विकारिवस्तुधीस्सर्वा भ्रान्तिरिति मयेष्टमेव प्रकर्षेण सिध्यति, त्वयापीष्टत्वात् ॥ ४ ॥

विकारिवस्तुज्ञानस्य भ्रमत्वम्, अन्यथाभावतज्ज्ञानयोर्मायामात्रत्वादित्येतदाह—

किं चार्थस्यान्यथाभावस्तथैव भवतो न च ।
स्याच्चेत्सदाविशेषात्स्यात्ता[1]द्रूप्यान्नान्यथाभवः ॥ ५ ॥

यथा पूर्वमभूत्तथैव भवतोऽर्थस्य नान्यथाभावः पूर्ववत् ; अन्यथा अविशेषात् सदा तद्भावादैकरूप्यान्नान्यथाभावः ॥ ५ ॥

देशकालनिमित्तानां प्राप्तावपि तथास्थितः ।
नैवान्यथा भवेत्तेषां प्राप्ति[2]श्चाविकृते कथम् ॥ ६ ॥

देशकालनिमित्तानां प्राप्तिर्विशेषश्चेत्, तत्प्राप्तावपि तथैव सतो नान्यथात्वं पूर्ववत्। तत्प्राप्तिविशेषोऽपि नाविशेषस्य पूर्ववद्भवेत्। भावे वा सदा भावः। विशेषान्तरभावेऽनवस्था ॥ ६ ॥

अथ भूत्वान्यथा पूर्वमन्यथासौ भवेत्पुनः ।
अनवस्था तदावश्यमन्योन्याश्रयताथवा ॥ ७ ॥

अन्यथा भूत्वा चेदन्यथा भवेत्, पूर्वपूर्वान्यथाभावापेक्षत्वादुत्तरोत्तरस्यान्यथाभावस्य अनवस्था। ननु भावि-

[1] BCDE (०द्रूप्यं ना० )।　　[2] C (०श्चापि कृ० )।

रूपमपेक्ष्य पूर्वस्थितरूपेण भावोऽन्यथाभाव एव, अतोऽन्यथाभावपूर्वकेऽप्यन्यथाभावे नानवस्था। सत्यम्, उत्तरोऽन्यथाभावोऽन्यथाभावपूर्वकस्सिध्येन्न तु पूर्वः। सोऽप्युत्तरपूर्वकश्चेत्—अन्योन्याश्रयता, तयोरन्योन्यपूर्वकत्वात् ॥ ७ ॥

अन्यस्मिन्नन्यथाभावे सत्यप्यन्योऽन्य[1]थाभवः।
तथास्थितस्य नैव स्यादत आत्माश्रयो भवेत् ॥ ८ ॥

यदि भाविरूपापेक्षया पूर्वस्थितरूपमन्यथाभावः, तस्मिन्सत्यपि अन्योऽन्यथाभावः तथास्थितस्य न भवेत् पूर्ववत्। पुनरन्यथा भूत्वा अन्यथाभावे अनवस्था उक्ता। अतोऽन्यथा भूत्वा अन्यथा भवतीति वदता स एवान्यथाभावो भूत्वा भवतीत्युक्तं स्यात्। तत आत्माश्रयोऽसौ भवेत्। भाविरूपापेक्षया पूर्वरूपस्य अन्यथाभाव इष्टे, तथास्थितस्यैवान्यथाभाव इष्टस्स्यात्। अथवा—एकमन्यथाभावमभ्युपगम्य अन्यासंभव उच्यतेऽनेन श्लोकेन ॥ ८ ॥

ननु यद्यन्यथाभावस्तथास्थाने न युज्यते।
मा भूत्पूर्वं परित्यज्य रूपं किं नान्यथा भवेत् ॥ ९ ॥
उच्यते पूर्वरूपस्य त्यागेऽप्यस्य तथास्थितौ।
युज्यते नान्यथाभावो न स त्यागोऽन्य[2]थाभवः ॥१०॥

यदि तथास्थितं नान्यथा भवेत्, मा भूत्। पूर्वं तु रूपं त्यक्त्वा अन्यथा भवतीति चेत्—पूर्वरूपत्यागेऽपि तथास्थितस्य नान्यथाभावः पूर्ववत्। न च स त्याग एवान्यथाभावः—तदर्थत्वात्तस्य, अन्यथा उक्तदोषप्रसङ्गाच्च ॥ ९ ॥ १० ॥

[1] D (०थाभावः)। [2] CDE (०थाभावः)।

तथैव भवतः पू[1]र्वरूपत्यागोऽपि नेष्यते।
पूर्वत्यागोऽन्यभावे चेदन्योन्याश्रयता तयोः॥ ११॥

तथा सतो न पूर्वरूपत्यागोऽपि पूर्ववत्। स चेदन्यथाभावे स्यात्, अन्योन्याश्रयता तयोः॥ ११॥

स्वरूपं चेन्न तत्त्याज्यं त्यक्तुरव्यतिरेकतः।
एकस्य त्यक्तृता वा स्यात्त्याज्यता वा न तूभयम्॥१२॥
त्यक्ता विना न हि त्याज्यं [2]त्यक्ता त्याज्यं विना न च।
द्वयं विना न च त्यागस्ततोऽभेदे मृषा त्रयम्॥ १३॥
न चान्यत्त्यज्यतेऽप्राप्तेरप्राप्तं त्यज्यते यदि।
अविशेषात्सदा त्याज्यं त्यक्ततां तन्न यास्यति॥ १४॥
संबन्धात्प्राप्तमेवान्यत्तत्त्यागात्त्यज्यते यदि।
अप्राप्तस्सोऽपि संबन्धस्तताभ्यामन्य एव चेत्॥ १५॥
त्याज्यानन्यो न स प्राप्तस्त्यक्त्रनन्यो न हीयते।
द्वयानन्यो भिदां हन्यादभेदे त्याग एव न॥ १६॥

एते निगदव्याख्याताश्श्लोकाः॥ १२—१६॥

एवं नांशगुणादिश्च त्याज्योऽन्योऽनन्य एव च।
अन्यानन्योऽपि स त्यक्ता सदा त्यक्तस्सदा न वा॥१७॥

न साक्षात्त्यक्तुः स्वरूपं त्याज्यं नाप्यन्यत्; किंतु तस्यांशो गुणोऽवस्था क्रिया वा त्याज्येति चेत्—तन्न, यतोऽंशगुणादिरपि अन्योऽनन्यश्च उक्तेन न्यायेन न

[1] CD (०र्वंपरित्या०)। [2] CD (त्यक्ता)।

त्याज्यः। सोऽन्यानन्यश्चेत्—न, अनन्यस्यान्यत्वायोगात् स्वरूपवत्। अन्यस्य च नानन्यत्वमन्यवदेव। अन्यो नाम नास्ति अन्यानन्यत्वात्सर्वस्येति चेत्—न, अनन्यशब्दार्थादन्यशब्दार्थस्यान्यत्वात्। न चेत्—अनन्य एव सर्वः, नान्यानन्यः कश्चित्। अन्यानन्यशब्दयोश्च पर्यायत्वात् सहप्रयोगोऽयुक्तस्स्यात्। अतोऽंशगुणादिरप्यनन्यत्वादत्याज्यस्स्यात्। अन्यशब्दार्थोऽनन्यशब्दार्थादन्योऽनन्यश्च, न त्वन्य एव नाप्यनन्य एव इति चेत्—इदमेव तव वचोऽन्यानन्यशब्दयोरर्थभेदं साधयति, प्रत्येकं निषेधात् समुच्चयविधानाच्च। यदि चान्य एवानन्यः, पर्यायत्वमुक्तम्। किं कृत्स्न एवान्योऽनन्यश्च, उत अंशेन। कृत्स्नश्चेदन्यः, अन्यत्वेनैव समाप्तत्वान्न तस्यानन्यत्वं तदा। नाप्यन्यदा, अन्यस्वरूपस्य भावे; तदभावे स्वरूपाभावात् कस्यानन्यता। तथा अनन्यत्वेन समाप्तस्य अन्यता न तदा; नाप्यन्यदा, अनन्यरूपस्य भावेऽभावे च। यद्यनन्योऽप्यन्यः, स्वयमेव स्वतोऽन्य इष्टस्स्यात्। तदा स एव भवति न भवति चेति दुर्घट[1]मापद्येत। अतो नांशादिरप्यन्यानन्यस्त्यक्तुः। यदि स्यात्—किं त्यागादूर्ध्वमपि अन्यानन्य एव पूर्ववत्, किं वा अन्य एव, उत अनन्य एव। सदा चेदन्यानन्यः—सदा त्यक्तोऽत्यक्तो वा, विशेषाभावात्। न चान्यानन्यस्य अन्यदाप्यन्यत्वमनन्यत्वं वा, तद्रूपविरोधात्। तदभावे नतराम्, स्वरूपाभावात्। तस्मान्नांशादिरपि त्याज्यः॥ १७॥

[1] BCDE (॰मापाद्ये॰)।

इदानीमंशादित्यागे प्रत्येकं दूषणमाह चतुर्भिश्श्लोकैः—

तिष्ठन्नांशी त्यजेदंशं न विनांशं स तिष्ठति ।
नष्टो नांशी त्यजेदंशमत्यागे नाश एव न ॥ १८ ॥

अंशं विना अंशिनोऽस्थितेर्न स तिष्ठंस्त्यजेत् । नापि नष्टः, अत्यागे नाशाभावात् ॥ १८ ॥

न गुणो गुणिना त्याज्यस्स्वरूपत्यागसक्तितः ।
नर्ते गुणं गुणी तिष्ठेन्नागुणोऽपि गुणं त्यजेत् ॥ १९ ॥

अवयविनोऽवयवारभ्यत्वान्न तं विना स्थितिः, गुणस्य त्वनारम्भकत्वात् पदार्थान्तरत्वाच्च तं विनापि द्रव्यं तिष्ठेत् ; अतो गुणस्त्याज्य इति चेत्—तन्न, शुक्लः पट इत्याद्यभेद-बुद्ध्ययोगात् । गुणस्य द्रव्यादर्थान्तरत्वे घटपटवद्भेदेनापि स्थित्युपपत्तेर्द्रव्याश्रयत्वनियमासंभवाच्च । अतो द्रव्याद्गुणोऽनन्यः, अन्यानन्यो वेति गुणत्यागे गुणिनस्स्वरूपत्यागः । अन्यानन्यत्वेऽपि हि नर्ते गुणं गुणी तिष्ठेत्, गुणाभावे तदभेदाद्गुणिनोऽप्यभावात् । नागुणोऽपि गुणादन्योऽपि गुणी गुणं त्यजेदन्यथा भवितुम्, तत्त्यागेऽप्यन्यत्वादेव तस्य विशेषाभावात् ॥ १९ ॥

नावस्था तद्वता त्याज्या नावस्था तद्वता विना ।
तत्रैव सा भवन्ती स्यादभावे त्यज्यते कथम् ॥ २० ॥

अनारम्भकत्वादवस्त्वन्तरत्वाच्च पूर्वोक्तदोषाभावादवस्था त्याज्या, तत्त्यागेन अन्यथाभावप्रसिद्धेश्चेति चेत्—तन्न, अवस्थाया अन्यत्र अभावात् । तद्वत्येव भवन्ती सा भवेत् । अतस्सती न त्याज्या ; नाप्यसती, असत्त्वादेव ॥ २० ॥

क्रिया न कुर्वता त्याज्या सा कृता त्यज्यते कथम्।
तथा सती न सा नश्येत्क्रियायाश्च क्रिया कथम्॥ २१॥

कर्मत्यागस्य विदुषामपि लोके वेदे च सिद्धत्वात् तत्त्यागो युज्यत इति चेत्—तन्न, क्रिया न कुर्वता त्याज्या क्रियमाणत्वादेव; न कृता, कृतत्वादेव; नाप्यकृता, अप्राप्तत्वात्। कृताया नाशस्त्याग इति चायुक्तम्। यतस्तथा सती न सा नश्येत्; असत्यास्तु को नाशः। क्रियायाश्च क्रिया कथम्—[1]त्यागो नाशो जन्म वा, अनवस्थानात्। कर्मत्यागादिप्रसिद्धिश्च अन्यथाभावरूप्यादिवदविचारितसंसिद्धैव लोके। तामेव प्रसिद्धिमाश्रित्य कर्म कारयति त्याजयति च श्रुतिस्स्मृतिश्च। न तु स्वयमे[2]व प्रसाधयति, अशक्यत्वात्। प्रसिद्धिमात्राच्चेत्सिद्धिः, शुक्तिरूप्याद्यपि सिध्येत्। प्रसिद्धस्यैव च भ्रान्तित्वम्, नाप्रसिद्धस्य॥ २१॥

संबन्धादेश्च नैव स्यात्तथाभावेऽन्यथाभवः।
न स्वान्यरूपसंत्यागस्तदा संबन्धिनः क्व तौ॥ २२॥

अन्यथा बुभूषता योऽन्यरूपसंबन्धादिस्तित्यक्षितः न तस्यापि तथाभावे अन्यथाभावः, नापि स्वरूपस्यान्यरूपस्य वा[3] संत्यागः। तदा संबन्धिनोऽन्यथा बुभूषतो दूरोत्सारितौ [तौ ?]॥ २२॥

अप्यन्यरूपसंत्यागे स्वरूपस्य तथास्थितौ।
नैव स्यादन्यथाभावस्तत्त्यागे नतरां भवेत्॥ २३॥

[1] CDE (त्यागे ना०)। [2] CD (०व सा०)।
[3] C (वा सत्या०)।

सत्यप्यन्यरूपसंत्यागे अन्यथाबुभूषोः स्वरूपस्य तथास्थितौ नान्यथाभावः। स्वरूपस्यापि त्यागे नतराम् ॥ २३ ॥

यतः—

तत्त्यागे नास्ति भावोऽपि कुतस्तस्यान्यथाभवः ।
पुनर्भवेच्चेद्भावस्यान्न तदाप्यन्यथाभवः ॥ २४ ॥

स्वरूपत्यागे भावोऽपि नास्तीति नान्यथाभावस्यात्। भवतो ह्यन्यथाभावो नाभवतः। पुनर्भावेऽपि भाव एव पूर्ववत्, नान्यथाभावः ॥ २४ ॥

नष्टस्यापि पुनर्भावो न स्यान्नष्टात्मना स्थितौ ।
तत्त्यागे पूर्वरूपाप्तेर्नाशत्यागौ वृथा तदा ॥ २५ ॥

स्वरूपत्यागान्नष्टस्य तथास्थितौ पुनर्भावो न स्यात्। नष्टात्मतात्यागे पूर्वभावरूपप्राप्तेः नाशत्यागौ वृथा पङ्कस्पर्शप्रक्षालनवत् ॥ २५ ॥

तस्मान्नास्त्यन्यथाभावो भवतोऽभवतोऽपि वा ।
न चान्यस्यान्यथाभावो मायामात्रमसौ ततः ॥ २६ ॥

एवमुक्तेन न्यायेन न सतोऽसतश्चान्यथाभावः। न च सदसदस्ति। अस्ति चेत्, न तस्याप्यन्यथाभाव उक्तेन न्यायेन। अतो मायैवान्यथाभावो नाम, न वस्तु ॥ २६ ॥

किंच यस्यान्यथाभावस्स तस्माद्भिद्यते न वा ।
अभेदे तत्स्वरूपत्वादन्यथाभाव एव न ॥ २७ ॥
भिन्नत्वे कोऽन्यथाभावः कस्यासावस्ति कस्य न ।
नान्योन्यस्यान्यथाभावो विन्ध्यो हिमवतो यथा ॥२८॥
अपि भेदेऽन्यथाभावो यत्संबन्धी स तस्य चेत् ।
भिन्नत्वे कस्य संबन्धी कस्य नेति न निश्चयः ॥ २९ ॥

ननु दृष्टोऽन्यथाभावो नाशोऽपि न च दृश्यते।
दध्यादिभावो दुग्धादेरन्यथाभाव उच्यते॥ ३०॥

ननु पयोमृद्धेमादीनां पूर्वावस्थात्यागेन दधिघटस्वस्तिकादिभावो दृश्यते अन्यथाभावस्स्वरूपनाशं विनापि लोके। अतस्सतो नाशोऽसतश्च जन्मापि दृश्यते। तच्च हेतुलाभे कदाचिदेव, न तु सदा। न चानवस्थादिदोषादसिद्धिः, दृष्टत्वादेव। न हि दृष्टं शुष्कतर्केणापोद्यते। न हि दृष्टेऽनुपपन्नं नाम॥ ३०॥

कस्य दृष्टोऽन्यथाभावो हेम्नो वा रुचकस्य वा।
रुचकावस्थहेम्नो वा सर्वथापि न दृश्यते॥ ३१॥

कथम्। यतः—

हेम्नोऽन्यथात्वं नो दृष्टं हेम हेमैव हीष्यते।
स्वस्तिके रुचकं नेक्षे तदवस्थं च हेम न॥ ३२॥

हेम्नो हेमतैव सदा दृष्यते, नाहेमता कदाचित्। अतोऽस्य नान्यथाभावः। नापि रुचकस्य तदवस्थस्य वा हेम्नः। न हि तयोस्स्वस्तिकादिभावो दृष्टः। दृष्टोऽपि नान्यथाभावः। न हि रुचकाद्यहेम हेम्नि पश्यामः, हेमैव तु। हेम्नश्चान्यथात्वं नास्तीत्युक्तम्॥ ३२॥

नन्वेकहेम्नोऽवस्थे द्वे ततोऽस्त्येवान्यथाभवः।
पूर्वावस्थां परित्यज्य ह्यन्यां यास्यति हेम तत्॥ ३३॥

नन्वेकं हेम, अवस्थे द्वे। ततो नाभेदः। न ह्येकस्य द्वयोश्चात्यन्तमभेदः। न चावस्थे ते युगपत्। किं त्वेकां त्यक्त्वा अन्यां याति तदेव हेम। अतोऽस्त्येवान्यथाभावः॥ ३३॥

अवस्था हेम्न एवेष्टा सावस्थस्य न सेष्यते।
अनवस्थान्यथा तु स्यान्नावस्थावस्थया विना॥ ३४॥

न[1]न्वेकं हेम अन्यूनानतिरिक्तमवस्थयोर्मिथो भिन्नयोरन्वितं चेत्, न तस्यावस्थे ते युक्ते। अन्यथा तस्यापि ताभ्यामभेदात्तयोरिव भेदः, तयोर्वा [2]तस्मादभेदोऽभ्युपेय इति, तयोस्तदवस्थात्वं न स्यादिति चेत्—न, यतः रुचकादिरवस्थैव हेम्न एवान्वितस्य युक्ता, तथा प्रतीतेः। यद्यनन्वितस्य रुचकादेः सावस्थस्य वा हेम्नोऽवस्था, अवस्थातद्वद्विभागो न स्यात्। अनवस्था च, यतोऽवस्थान्तरं विना नावस्थासिद्धिः। न चावस्था नास्त्येव, दृष्टत्वात्—अन्यथा तद्वतोऽप्यभावप्रसङ्गात्॥ ३४॥

उच्यतेऽवस्थयोरेकं पूर्णं हेमान्वितं यदि।
ताभ्यामन्यददोऽवश्यं नान्यथास्यैकतान्वयौ॥ ३५॥

द्वयोरवस्थयोर्मिथो भिन्नयोर्यद्येकं हेम अन्यूना[3]नतिरिक्तं पूर्वत्यागोत्तरप्राप्त्योरन्वितम्, ताभ्यां तदन्यदभ्युपेयम्; नान्यथा तस्यैक्यमन्वयश्च स्यात्॥ ३५॥

यतः—

द्वाभ्यामभेदे नैकत्वमेकाभेदे द्वयं न हि।
एकाभावेऽन्वयः कस्य द्वयाभावेऽन्वयः [4]कुह॥ ३६॥

द्वाभ्यामवस्थाभ्यामभेदे हेम्नोऽपि द्वित्वमेव स्यान्नैकत्वम्। न ह्येकस्य द्वाभ्यामभेदः। पूर्वावस्थाया अभिन्नस्य तदात्मनैव समाप्तेर्नोत्तराभेदः पूर्वस्या इव। तयोश्चैक-

[1] CDE (॰न्वेकहे॰)।　　[2] DE (अस्मात्)।
[3] CDE (॰नाति॰)।　　[4] C (कुतः)।

स्माद्धेम्नोऽभेद एकत्वमेव स्यान्न द्वित्वं हेमवदेव। एकाभावे द्वयाभावे च कस्य [1]कुचान्वयः स्यात्॥ ३६॥

नष्टाभिन्नस्य न स्थानमस्थितस्य कुतोऽन्वयः।
स्थिताभेदे न नाशस्स्यान्नान्यथात्वं तथास्थितौ॥ ३७॥

हेम्नः पूर्वावस्थातोऽभेदे तन्नाशे नाशान्नोत्तरान्वयः। हेम्ना स्थायिना अभेदे न पूर्वावस्थाया नाशः। तस्याश्चानाशे नान्यथाभावो हेम्नः, अनागमापाय्यवस्थत्वात्॥ ३७॥

हेम्नोऽवस्था स्वरूपं चेन्नापेयाद्धेमवत्ततः।
हेम्नस्सापैति चेन्नासौ हेम हेममलो यथा॥ ३८॥

हेम्नि तिष्ठत्येव अवस्था अपैति चेत्, ततो न तद्धेम [2]तन्मलवत्। न हि तद्धेम ततोऽपेयात्। तस्मा[3]न्नानन्या हेम्नोऽवस्था॥ ३८॥

हेम्नोऽन्ये यद्यवस्थे ते तस्य स्तां केन हेतुना।
नासंबन्धे तयोस्सिद्धिस्संबन्धो नाप्यसिद्धयोः॥ ३९॥

नाप्यन्या हेम्नोऽवस्था, तदवस्थात्वहानात् वस्त्वन्तरवत्। संबन्धायोगाच्च। नासंबद्धा सा पृथक्सिध्यति, असिद्धायाश्च न संबन्धः। अन्यत्वे अनन्यत्वे च वस्त्वन्तरवत् स्वरूपवच्च अवस्थात्वायोगात् नान्या अवस्था, नाप्यनन्या। नापि चान्यानन्या, अनन्यस्यान्यत्वायोगाच्च[?] स्वरूपवत्। अतस्सत्त्वायोगात् स्फुरणाच्च खकाष्ण्र्यादिवन्मायैव अवस्था। अवस्थाभावे तद्वतोऽभावेऽपि न वस्त्वभावः, तद्विना मायायोगात्। मृदाद्यपि तुल्यन्यायम्॥ ३९॥

[1] CDE (कुतोऽन्व०)। [2] CDE (हेमवत्।)।
[3] BCDE (०न्नान्या)।

स्वतश्चेदन्यथाभावस्तदा स्यादविशेषतः ।
स्वतश्चेद्धेतुता हेतोर्हेतोरपि सदा भवेत् ॥ ४० ॥
हेतोश्च हेत्वपेक्षायामनवस्था प्रसज्यते ।
तद्धेतोरपि तद्धेतुव्यपेक्षायास्समत्वतः ॥ ४१ ॥

अपिचेदं भवान्प्रष्टव्यः—किं स्वत एवान्यथाभावः, उत हेतुतः । स्वतश्चेत्, विशेषाभावात्तदा स्यात् । हेतुतश्चेत्—हेतोस्स्वत एव हेतुता, उत हेत्वन्तरात् । स्वतश्चेत्, सदा हेतोर्भावात् सदा कार्यं स्यात् । हेत्वन्तराच्चेत्—अनवस्था, तस्य तस्य हेतोर्हेत्वन्तरापेक्षासाम्यात् ॥ ४०—४१ ॥

अपिच—

यस्येष्यतेऽन्यथाभावस्स सत्त्वान्नैव जायते ।
यद्यनन्योऽन्यथाभावस्स च सत्त्वान्न जायते ॥ ४२ ॥
अन्यत्वेऽपि स्वयं संश्चेदविशेषान्न जायते ।
कोऽसत्त्वे जनिकर्ता का प्रकृतिः के च हेतवः ॥ ४३ ॥

असतश्चेज्जनिः, सा अकर्तृका स्यात् । सा च क्रियात्वात् सकर्तृकैव युक्ता । असतश्च नोपादानम् । निमित्तकारणानि च न स्युः, संबन्धाभावात् । यत्किंचिद्वा यस्य कस्य[1]चित्कारणं स्यात्, विशेषाभावात् । न ह्यसिद्धस्य कारणसंबन्धः, सिद्धस्य च न कारणापेक्षा ॥ ४३ ॥

हेतुयोगाद्विशेषे चेज्जाते हेमान्यथा भवेत् ।
तत्पूर्वरूपतैव स्याद्धेतुयोगविशेषयोः ॥ ४४ ॥
[2]तच्च स्वतोऽन्यथाभावः प्रसज्येत तथा सति ।
तथाभावो न जातु स्यात्कुतस्तत्रान्यथाभवः ॥ ४५ ॥

[1] CD (०चिद्यत्किंचित्का०) । [2] CDE (ततस्स्व०) ।

यदापि हेतुतोऽन्यथाभावस्तदापि न स हेतुसत्तामात्रात्, किंतु तत्संबन्धे सति। सति च तस्मिन्विशेषाभावे पूर्ववन्नान्यथाभावः। अतो विशेषोऽभ्युपेयः। तच्च हेतुयोगाद्विशेषे जाते चेत् हेम अन्यथा भवेन्न पूर्वम्, तदा हेतुयोगविशेषौ हेम्नोऽनन्यथा[1]भूतस्वरूपमेवेति ततो योऽन्यथाभावः स स्वत एवेति सदा भावात्तस्य न कदाचित्तथाभावस्स्यात्। तच्च किमपेक्षोऽन्यथाभावः॥ ४४—४५॥

हेतुयोगविशेषौ च हेम्नो यद्यन्यथाभवः।
स्वतश्चेत्तौ सदा स्यातां न चेत्स्यादनवस्थितिः॥ ४६॥

हेतुयोगविशेषौ यद्यन्यथाभावः—स्वतश्चेत् तयोर्भावः, सदा [2]स्यात्; हेतुयोगविशेषान्तरापेक्षत्वे चानवस्था॥ ४६॥

स्वभावान्नान्यथाभावो नैस्स्वाभाव्यादशक्तितः।
अन्यतस्त्वन्यथाभावस्सदास्त्येवान्यदस्ति चेत्॥ ४७॥

किं स्वभावात्स्वरूपाद्धेम्नोऽन्यथाभावः, उत अन्यरूपात्। आद्ये कल्पे नैस्स्वाभाव्यमिष्टं स्यात्। तदा अन्यथाभाव इति भावशब्दोऽनुपपन्नः। येन येन रूपेण भवति तत्तत् स्वरूपं चेत्, अशक्यश्च स्वरूपादन्यथाभावः। अभावरूपेण चेद्भवति—तदपि स्वरूपं चेत्, न स्वरूपादन्यथाभावः; अभावरूपेण भवतस्स्वभावादन्यथाभावश्चेत्, न; भावशब्दविरोधात्। स्वभावादन्यथा न भवति चेत्, सिद्धं नस्समीहितम्। भावरूपान्तरेण भावात् भवत एवान्यथा-

[1] CE (०भूतः स्व०)। [2] E (स्याताम्)।

भाव इति चेत्—न, भावरूपेऽन्यत्वायोगात्। निवृत्तात्स्व-भावादन्यथाभाव इति चेत्—सोऽपि भावश्चेत्, न भेदः; अभावश्चेत्, स्वभावान्नान्यथाभावः किंत्वभावाद्भवति वा न वा[?][1]। कथं च भावे स्थिते भावो निवर्तेत। भावस्य भेदाभावात् स कृत्स्नो भवति वा न वा। अतोऽस्य न किंचिद्रूपं निवर्तते प्रभवति वा। अतस्स्वभावान्नान्यथाभावः। नाप्यन्यतः। सोऽपि हि भावोऽभावो वा। द्विधापि न भेदः, द्वयाभावात्। न चासतो द्वितीयतेत्युक्तम्। असतश्च प्रकाराभावात् तदपेक्षोऽन्यथाशब्दो व्यर्थः। अथान्यदस्ति प्रकारान्तरवत्, तदा तदपेक्षमन्यथात्वं कूटस्थस्याप्यस्तीति तवेष्टोऽन्यथाभावो न सिध्येत्। न चान्यदस्तीत्युक्तम्॥ ४७॥

अन्यत्वे चान्यथाभावोऽन्यथाभावेऽपि चान्यता।
अतोऽन्यतान्यथाभावौ न स्वरूपान्न चान्यतः॥४८॥

ननु रुचकस्वस्तिकयोर्हेमात्मना अनन्यत्वेऽपि—भावात्मना वा—तयोरन्यप्रकारत्वादेवान्यत्वं सिध्यति। तथा सर्वभावानां भावात्मनाभेदेऽपीति चेत्—न, अन्योन्याश्रयत्वात् रुचकात् स्वस्तिकस्यान्यत्वे सिद्धे तस्य ततोऽन्यप्रकारता ततश्चान्यत्वमिति। न च प्रकारान्यत्वं तत्प्रकारान्यत्वात्, अनवस्थानादन्योन्याश्रयत्वाच्च—तदन्यतासिद्धौ तत्प्रकारान्यत्वासिद्धेः। न च प्रकारयोरपि हेमात्मना भावात्मना वा अनन्यत्वम्। अतो न प्रकारमात्रभेदोऽपि। एतेन प्रकारान्यत्वादन्यत्वं सर्वभावेषु प्रत्युक्तम्। प्रकार-

[1] C (वा। स्व०)।

वत्त्वेऽप्यभावस्य भावाभावयोरपि नान्यत्वमुक्तेन न्यायेन भावयोरिव। तस्मान्नानयोरिवान्यत्वमन्यथाभावश्च स्वरूपाद्भेदो नापि भावान्तरतोऽभावाद्वा। तथा सर्वभावानाम्। अतः कूटस्थमेकं वस्तु सिध्येत्। तच्चात्मैव नान्यत्, तस्य स्वतोऽसिद्धेरन्यापेक्षत्वात् ॥ ४८ ॥

भावो भावान्तरात्मत्वमत एव न यास्यति।
न द्वयोरन्यथाभा[1]वम्हतेऽन्योऽन्यात्मतामियात् ॥ ४९ ॥

यतोऽन्यत्वान्यथाभावौ न स्वरूपान्नापि भावान्तरात् भावस्य भवतः, अत एव न भावस्य भावान्तरैक्यप्राप्तिः— यतस्सा द्वौ प्राप्यप्राप्तृभावौ तयोरन्यथाभावं विक्रियां च विना न समस्ति ॥ ४९ ॥

प्राप्तुरेव विक्रिया अस्तु किं प्राप्यस्येति चेत्—न, विक्रियमाणोऽपि हि अविकृतेन नैक्यं याति। न ह्यन्नं भक्षणाद्यनेकविक्रियोपेतमपि नभसा आत्मना वा ऐक्यं याति देहेनेव। देहैक्यमप्यन्नस्याविद्यासिद्धमेव, न सत्यम्। तदेतदाह—

अप्यन्यथा भवनन्यो नाच[2]लान्यात्मतामियात्।
न ह्यन्नं भुक्तमप्येति खात्मत्वं देहतामिव ॥ ५० ॥
प्राप्यस्याप्यन्यथाभावे प्राप्यो नैव भवेत्तदा।
द्वयोरप्यन्यथाभावो विफलः प्राप्त्यसंभवात् ॥ ५१ ॥

तच्च प्राप्यस्यापि प्राप्तुरिवान्यथाभावे प्राप्यो नैव भवेत् प्राप्तेव। तदा द्वयोरपि प्राप्त्यर्थोऽन्यथाभावो व्यर्थः, प्राप्त्यसंभवात् ॥ ५१ ॥

[1] E (०भावं ह्वते)। [2] DE (०लाद्यात्म०)।

अन्यथाभूत एवासौ प्राप्यते चेदिदं वद।
किं प्रेप्स्यतेऽन्यथाभूतः [1]प्रेप्सिते वान्यथाभवः॥ ५२॥

अन्यथाभूतस्यैव प्राप्यत्वान्न प्राप्याभावादप्राप्तिः। प्राप्तुस्त्वन्यथाभावो न दोषाय, प्राप्यैक्यस्येष्टत्वादिति चेत्—तर्हीदं ब्रूहि—किं पूर्वमेवान्यथाभूतः प्राप्तुमिष्यते, किं वा प्रेप्सिते पश्चात्तस्यान्यथाभावः॥ ५२॥

तत्र—

प्रेप्सितस्यान्यथाभावे तत्प्राप्तिस्स्यान्न पूर्ववत्॥
अपीप्सितेऽन्यथाभूते प्राप्तिर्नर्तेऽन्यथाभवम्॥ ५३॥

यो यद्रूप ईप्सितस्तस्यान्यथाभावे तदभावात् पूर्ववत्प्राप्त्यभावान्न तत्प्राप्तिः। पूर्वमेवान्यथाभूते प्रेप्सितेऽपि पश्चाद्विक्रियां विना न तत्प्राप्तिः स्वात्मनोरिव। यो यद्रूपश्च प्रेप्सति तस्यान्यथाभावे तदभावान्न तेन किंचित्प्राप्यते॥ ५३॥

निश्चलस्यापि चेत्प्राप्तिरविशेषात्सदा भवेत्।
तदाप्राप्तिर्मृषैव स्यात्तच्च प्रेप्सापि निष्फला॥ ५४॥

निश्चलश्चेन्निश्चलं प्राप्नोति, सदैव तत्प्राप्तेरप्राप्तिस्तत्प्राप्तीच्छा च भ्रान्तिमूलैव स्यात्॥ ५४॥

अथ प्राप्तुर्विशेषेण तत्प्राप्तिर्नियियंस्यते।
प्राप्तुर्विशेषो न प्राप्तिस्तद्वशान्नियमः कुतः॥ ५५॥

निश्चलेऽपि प्राप्ये प्राप्तुर्विशेषभावे तत्प्राप्तेस्तन्नियम इति चेत्—तन्न, प्राप्तुरन्यथाभावे तस्याभावात् तत्प्राप्त्यसिद्धेरुक्तत्वात्। प्राप्तुर्विशेषोऽपि प्राप्तिरप्राप्तिर्वा। प्राप्ति-

[1] B (प्रेप्स्यते)।

श्चेत्, निश्चलस्यैव सा इष्टा। अप्राप्तिश्चेत्, तस्मिन् सत्यपि निश्चलस्यैव पुनस्तत्प्राप्तिर्न वेति सोऽपि व्यर्थः। अप्राप्तिविशेषान्तराभ्युपगमे चानवस्था। प्राप्तुर्विशेषेऽपि प्राप्यस्याविशेषादप्राप्तिस्तदवस्थैव, तयोर्भेदात्; अभेदे त्वप्राप्तिर्मृषा ॥ ५५ ॥

अथ प्राप्तुर्विशेषेण प्रतिबन्धो निवर्त्यते।
तदाप्यनात्मवस्त्वाप्तिर्विना हेतुं न सिध्यति ॥ ५६ ॥

प्राप्तुर्विशेषेण प्रतिबन्धश्चेन्निवर्त्यते, तदाप्यन्यवस्त्वाप्तिर्न [1]हेतुं विना। अभेदे त्वप्राप्तिर्मृषा उक्ता ॥ ५६ ॥

प्रतिबन्धनिवृत्त्यैव यदि तत्प्राप्तिरिष्यते।
स्वतस्तत्प्राप्तिरेष्टव्या नान्यथा तावताप्यते ॥ ५७ ॥
प्रतिबन्धोऽपि यद्याभ्यां भिन्नः का प्रतिबन्धता।
भिन्नस्य प्रतिबन्धत्वे सर्वस्य प्रतिबन्धता ॥ ५८ ॥

अथाभिन्नः प्रतिबन्धस्तदा—

प्राप्यादभिन्ने तद्ध्वंसे प्राप्यनाशो भवेद्ध्रुवम्।
प्राप्तुर्वा तदभेदे स्यात्तदा प्राप्तिर्न कस्य चित् ॥ ५९ ॥

[2]स्पष्टोऽर्थः ॥ ५७—५९ ॥

द्वयोरप्यन्यथाभावे यत्तद्रूपं भविष्यति।
तत्प्राप्यमिति चेन्नैवं ना[3]न्यस्यान्यात्मता तदा ॥ ६० ॥

द्वयोरप्यन्यथाभूतयोरेकीभावेन यत्तयो रूपं भविष्यति तत्प्राप्यमिति न प्राप्याभाव इति चेत्—तथापि न प्रेप्सता प्रेप्सितं प्राप्यते, किं तूभाभ्यां रूपान्तरमेकं प्राप्तम् ॥ ६० ॥

[1] CDE (हेतुत्वं)। [2] B (स्पष्टार्थाः)।
[3] BCDE (नानन्यस्यात्म॰)।

न च तत्प्राप्यते, अन्यथाभूतयोरपि भिन्नस्वरूपस्थितावेकत्वाप्राप्तेः । तदाह—

उभयोरन्यथाभावेऽप्यन्यथाभूततैव हि ।
अन्योन्यमेकता न स्यात्तत्स्वरूपव्यवस्थितेः ॥ ६१ ॥

यदि नामान्योन्यात्मता तयोस्स्यात्तदापि अनेनासौ प्राप्तः, नामुना अयमिति नियमाभावात्तयोः प्राप्यप्राप्तृविभागो निष्प्रमाणकस्स्यात् । तदाह—

तयोरेकात्मकत्वं चेदन्यथाभूतयोर्भवेत् ।
प्राप्यप्राप्तृविभागोऽपि तयोस्स्यान्निष्प्रमाणकः ॥ ६२ ॥
नातोऽन्यथा भवेच्छुक्तिर्नान्यरूप्यात्मतां गता ।
अतोऽन्यस्यान्यथाख्यातिर्मायामात्रमितीष्यताम् ॥ ६३ ॥

उक्तेन न्यायेन अन्यथाभावोऽन्यभावश्च नास्ति यतः, अतो नान्यथा शुक्तिः स्वयमेव रूप्यात्मना जाता नाप्यन्यव्यवस्थितरूप्यात्मतां गता । अतोऽन्यथाभूतस्य ख्यातिरित्यपि[?] अन्यथाख्यातेरमायात्मकत्वायोगात्, अन्यस्य शुक्तिरज्ज्वादेरन्यथा रूप्यसर्पात्मना ख्यातिर्मायामात्रमेवेति इष्यताम्; अन्यथाख्यापनान्यथाभावयोश्च धियः, अर्थान्यथाभावनिरासेनैव निरस्तत्वात् ॥ ६३ ॥

ननु यद्यन्यथाभावो नास्ति शास्त्रमनर्थकम् ।
कर्मणा विद्यया वा किं तदवस्थः पुमान्यदि ॥ ६४ ॥

ननु नास्तिचेदन्यथाभावः पुंसस्तदैकरूप्यात् कर्तृत्वभोक्तृत्वबन्धमोक्षाद्यसंभवात् कर्मज्ञानविधायि शास्त्रमनर्थकं स्यात्, तयोरसिद्धेः । प्रयोजनाभावाच्च । अतोऽन्यथाभावोऽस्ति ॥ ६४ ॥

इतश्च—

देवो भूत्वा ब्रह्म वेद ब्रह्मैव भवतीत्यपि ।
श्रुतोऽन्यस्यान्यथाभावो यं यं वापीति च स्मृतिः ॥६५॥
उच्यतेऽविद्यया सिद्धमन्यथाभावमिच्छताम् ।
व्यनक्ति साधनं शास्त्रं तयोस्सत्तां व्यनक्ति न ॥ ६६ ॥

न तावत्कस्यचित्कुतश्चिदन्यत्वमन्यथाभावो भावान्तरापत्तिश्चास्तीति अक्षजादिभिरपि ज्ञातुं शक्यमित्युक्तम् । अत एव नतरां शास्त्रेण शक्यम्, अन्यादिपदपदार्थतत्संबन्धासिद्धेरन्यतश्चाशास्त्रासिद्धेः । अत एव न शास्त्रज्ञाप्यता तेषाम् । अतः प्रमाणादप्रसिद्धेः प्रसिद्धत्वाच्च अन्यथाभावादि अविद्ययैव प्रसिद्धं सर्वस्य । अतः पुंसः कर्तृत्वभोक्तृत्वाद्यन्यथाभावमात्मनस्सिद्धं मन्यमानस्य हिताहितप्राप्तिहानिसाधनं जिज्ञासमानस्य तत्साधनं प्रकाशयति शास्त्रम्; न तु साधनस्य तत्साध्यस्य वा अनात्मभूतस्य सत्तां प्रतिपादयति—साध्यसाधनमात्रसत्ताया लोके सिद्धत्वादसिद्धत्वे ज्ञापयितुमशक्यत्वाच्च ॥ ६६ ॥

कूटस्थस्यापि पुंसो भ्रान्त्यैव कर्तृत्वाद्यन्यथाभावस्समस्ति जन्मादिवदित्येतदाह—

स्थाणोरप्यन्यथाभावः पुंसो भ्रान्त्यैव संभवेत् ।
देहाद्भिन्नोऽपि जन्मादीनात्मीयान्मन्यते यथा ॥ ६७ ॥
यदि पुंसोऽन्यथाभावः कर्मणा विद्ययापि च ।
पुंसस्ताभ्यां फलं किं स्यान्नात्मनाशोद्भवौ फलम् ॥ ६८ ॥

यदि वस्तुवृत्त्यैव विद्याकर्मभ्यां पुंसोऽन्यथाभावस्स्यात्, तदा तस्याभावान्न तस्य फलं किंचित्स्यात् । न च

स्वनाशस्तस्य फलम्, फलिनोऽभावात् । न च फलस्यैव फलम् । ननु मरणमप्यर्थ्यते, तत्कामस्य च कर्म श्रूयते । तच्चायुक्तं फलिनोऽभावे । भाव एव तु युक्तम् । न चात्मनाशो मरणम्, देहनाशस्तु । तस्मान्न स्वनाशः पुंसः फलम् । नाप्युद्भवः, पूर्वस्थितस्य फलिनोऽभावात् । भावे, नोद्भवः । न च फलं फलीत्युक्तम् ॥ ६८ ॥

न च पूर्वस्य कर्तुर्नाशे पश्चाज्जातस्य भोक्तृत्वम्, अकृताभ्यागमकृतविप्रणाशप्रसङ्गादित्येतदाह—

यदि धीकर्मणोः कर्ता फलकालेऽन्यथा भवेत् ।
अन्येन कृतमन्येन कथं भोक्तुं च लभ्यते ॥ ६९ ॥

अपिच—यदि भोगोऽपि पुंसो विक्रिया तदा जातस्यापि तथास्थितस्य न स्यात्, विशेषाभावात् ; अन्यथाभावे नतरां पूर्ववत् । स्वरूपमेव चेत् पुंसो भोगः, न त[1]दर्थं साधनं क्रियादिना अन्यथाभावश्चार्थ्यः । तथा ज्ञानकर्मणी अपि विक्रिये चेत्, न स्यात्तोस्स्याताम् । पुंसोऽभावे, नतराम् । स्वरूपं चेत्, न तदर्थमन्यथाभावः प्रार्थ्य इत्युक्तम् । कुर्वंश्चेत्कुर्यात्, अनवस्था । अकुर्वंश्चेत्, सदा कुर्यादिति नान्यथाभावः । कुर्वतोऽपि चेदन्यथाभावः, क्रियापि न स्यान्न केवलं कर्तैव । न हि कर्त्रा विना क्रिया नामास्ति । तथा भोगो जन्म नाशोऽन्यथाभावश्च तद्वता विना न स्यात् ॥ ६९ ॥

नन्वेवं सत्यन्यथाभावे पुंसो भावान्न कर्तृत्वाद्यसंभवः ;

[1] BDE ( ०दर्थसा० ) ।

तस्य चैकत्वान्नाकृताभ्यागमादिप्रसङ्ग इति चेत्—तत्रोच्यते—

कर्तृभोक्त्रोरभिन्नत्वे पुंसस्स्वर्गेऽपि कर्तृता ।
इह वा स्वर्गिता यद्वा कल्प्यिते कर्तृभोक्तृते ॥ ७० ॥

यदि कर्तृभोक्त्रोरभेद एव तदा कर्तुश्चेदभिन्नो भोक्ता, स्वर्गादिष्वपि पुमान्कर्तैवेति भोगाभावान्न भोगार्थापि क्रिया स्यात्। भोक्तुश्चेदभिन्नः कर्ता, सदा भोक्तैवेति न भोगार्था क्रिया। उभयथापि नान्यथाभावः पुंसः, [1]सदैकरूप्यात्। ननु न सदा कर्ता पुमान्नापि सदा भोक्ता, अतो नैकरूप्यमिति चेत्—न, कर्त्रकर्त्रोः भोक्त्रभोक्त्रोश्च अभेदे भेदे च ऐकरूप्यस्यैव संभवात् रूपान्तराभावात्। न च भेदाभेदौ संस्तः, अकर्तुरभिन्नस्य कर्तुस्तद्वदेव ततो भेदाभावात्। भावेऽप्यकर्तैव स्वतो भिन्नो नान्यः। स चेद्भिन्नः कर्ता स्यात्, इतरोऽपि भागस्स्वतो भिन्नत्वात् कर्तैवेति नाकर्ता। अतो न कर्त्रकर्त्रोर्भेदाभेदौ। तथा [2]भोक्त्रभोक्त्रोः कर्तृभोक्त्रोश्च। स्वतश्चेद्वस्तुनो भेदः, भेद एव स्वत इति नाभेदस्तस्य। तदा एकाभावे द्वितीयाभावान्नान्यतोऽप्यभेदो भेदो वा। तस्मात्कर्तृभोक्त्रादीनां भेदाभेद-भेदाभेदपक्षा न संभवन्ति। तथापि भान्ति चेत्, सन्तु कल्पिताः; तथा चैकस्यैव कर्तृत्वादिसंभवान्नाकृताभ्यागमादिदोषप्रसङ्गः ॥ ७० ॥

इतोऽपि नान्यथाभाव आत्मनोऽवेद्यता यतः ।
भवन्नप्यन्यथाभावोऽमेय आत्मन्यसत्समः ॥ ७१ ॥

[1] BCDE (समैक०)। [2] BDE (भोक्तृभो०)।

इतश्च नात्मनोऽन्यथाभावस्समस्ति । कथम् । यद्यपि कर्तृत्वादिरन्यथाभावः स्वरूपेणास्ति तथाप्यसौ नात्मनः स्वरूपं धर्मो वा, दृश्यत्वाद्घटवत् तद्धर्मवच्च । अवेद्यत्वाच्चात्मनो नान्यथाभावः । स हि वेद्यस्यैव दृष्टो नावेद्यस्य । अवेद्ये सन्नप्यवेद्यत्वात् सोऽसत्समः । न च सोऽवेद्यः प्रसिद्धः । अतस्सोऽवेद्यस्य नास्त्येव—अमेयत्वात्, मेयस्य चामातृधर्मत्वात्, धर्मिदृशा विना तद्धर्मादृष्टेश्च ॥ ७१ ॥

कुत आत्मनस्तद्धर्मस्य चावेद्यत्वम् । यतः—

नात्मानं नान्यथाभावं [1]स्वमात्मा वेत्त्यभेदतः ।
वेद्यत्वे नात्मतान्नत्वे कुम्भवच्चान्यवेद्यता ॥ ७२ ॥
अथात्मनोऽन्यथाभाव आत्मवत्स्यात्स्वयंप्रभः ।
तस्यात्मवदमेयत्वात्प्रागभावादयः कथम् ॥ ७३ ॥

अन्यथाभावस्यात्मवत्स्वयंप्रभत्वे प्रागभा[2]वजन्मप्रध्वंसभेदाद्यसिद्धेरनित्य[3]ताधर्मत्वाद्यसिद्धिः आत्मवदेव । अतोऽसौ नान्यथाभावस्स्यात् । अनित्यत्वे दृश्यत्वान्नात्मधर्मत्वम् । व्यभिचाराच्च वस्त्रादिवत् । न चानित्यगुणं नित्यं पश्यामः, खस्यापि जन्मश्रुतेः । नित्यश्चात्मा इष्यते, अन्यथा घटादिवदनात्मा स्यात् । न चास्यानित्यता दृश्यते केनापि, अदृश्यत्वात् ; अन्यथा नात्मा स्यादित्युक्तम् ॥ ७३ ॥

भावान्तरात्मतामात्मा तत एव न यास्यति ।
न विक्रियापि यस्य स्यात्कुतो भावान्तरात्मता ॥७४॥

यत उक्तेभ्यो हेतुभ्यः स्वयंप्रभत्वाच्च आत्मा अविक्रियः,

[1] BCDE (समात्मा) ।　　[2] C (०वप्र०) ।
[3] CD (०तातद्धर्म०) ।

अत एव आत्मा अद्वितीयश्च। स ह्यात्मनो द्वितीयः न स्वतस्सिद्धः ; नाप्यात्मसंबन्धात्, तस्याविक्रियत्वादन्यसंबन्धायोगात्। अत एवात्मा न भावान्तरात्मतां याति। विक्रियाद्वितीयवतोऽपि न भावान्तरैक्यं समस्तीत्युक्तम्। यस्य विक्रिया द्वितीयं च नास्ति तस्य कुतो भावान्तरैक्यप्राप्त्याशङ्कापि संस्यात् ॥ ७४ ॥

नेयादनात्मतामात्मा स्वात्मत्वं तु सदा गतः।
अन्यस्य त्वात्मता न स्यादात्मत्वे च कुतोऽन्यता ॥ ७५ ॥

सत्यप्यात्मनो विक्रियाद्वितीयवत्त्वे, तथा अनात्मनस्संभवत्यपि भावान्तरभावे—स नात्मनस्संभवेत्। न ह्यात्मनोऽनात्मवस्तुभावश्शास्त्रीयज्ञानकर्मभ्याम्—दृष्टोऽदृष्टप्राप्तेरुच्छेदकल्पत्वात्, अपुमर्थत्वात्पुंसोऽनिष्टत्वात्तत्साधनज्ञापकत्वायोगाच्छास्त्रस्य। तर्ह्यात्मभावोऽस्तु ताभ्याम्। न, आत्मभावस्य सदा सिद्धत्वात्; अन्यथा साधनाद्यसिद्धेः। तर्ह्यन्यात्मभावोऽस्त्विति चेत्—न, विप्रतिषेधात्। न ह्यन्यस्यात्मत्वं घटवत्। अत एवात्मापि नान्यः। यद्यन्य आत्मा न स्यात्, तदभावे तदन्योऽपि न स्यात्; [1]अतः स्वयं चान्यश्चात्मै[2]व। तर्हि सर्वस्यात्मत्वान्न तद्भावस्साध्यः। न चात्मभावोऽसिद्धः, साधनाद्यसिद्धेरित्युक्तम्। नन्वन्य एव घटादिर्नात्मा, अतो नात्मैव सर्वम्। तर्हि सम्यगेवावोचम्—अन्यश्चात्मा चेति विप्रतिषिद्धमिति। नन्वन्य आत्मेत्येकस्यैव चेतनस्य स्वत एवान्यत्वं न वच्मि किंतु चेतनान्तरात्। तच्च कुतो विप्रतिषेधः। इत एव—यतोऽन्यश्चेतनश्चेतनेन

[1] E (अथ)। [2] CDE (०व सर्वः तर्हि सम्यगेवा०)।

ज्ञेयश्चेत्—अनात्मैव, अन्यज्ञेयत्वात् घटवत्; अज्ञेयश्चेत्, नान्यं प्रति सिध्येत्। ततो ज्ञातोऽज्ञातश्चान्यश्चेतनो नास्तीति अन्यश्चेतनश्चेतनान्तरादिति विप्रतिषिद्धम्। 'एको देवस्सर्वभूतेषु गूढः', 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिभ्यश्च। अत आत्मान्तराभावाज्जडप्राप्तेश्चापुमर्थत्वान्नात्मनो भावान्तरभावः। अतोऽस्य कर्मादिसाध्यं वस्तुभूतं किंचिद्रूपं न समस्ति ॥ ७५ ॥

ननु ब्रह्माप्यते जीवैर्भिन्नाभिन्नं च तत्ततः ।
आत्मैव तदभिन्नत्वाद्भिन्नत्वात्प्रेप्स्यतेऽपि च ॥ ७६ ॥

ननु 'ब्रह्म वेद ब्रह्मैव भवति' इति, 'ब्रह्मविदाप्नोति परम्' इति च तद्विदो ब्रह्मभावश्श्रूयते। न च ब्रह्मण एव तज्ज्ञानात्तद्भावः, सदासिद्धेः; अन्यथा तदसिद्धेः। अतोऽन्यस्य तज्ज्ञानात् तद्भावः। न च जडस्य ज्ञत्वम्। ब्रह्म च नाज्ञम्, 'तदैक्षत', 'यस्सर्वज्ञस्सर्ववित्' इति च श्रुतेः। अतो ब्रह्मतज्ज्ञयोः प्राप्यप्राप्त्रोश्चेतनयोर्भेदसिद्धेर्न चेतनभेदासिद्धिः। नापि चेतनान्तरज्ञानात्तद्भावासिद्धिः। दृष्टे चात्मभेदे प्रतिशरीरं तद्भेदः प्रसिद्धो नापलपनीयः, अन्यथा विद्वदविद्वन्मुक्तामुक्तस्वर्गादिभोगव्यवस्था दुर्लभा। विदुषश्चाचार्यादविदुषो विद्याप्राप्तिः। तस्य तस्यान्योऽन्यश्चाचार्य इत्यनादौ संसारे विद्याप्राप्त्यर्थमप्यनन्ताः पुरुषा एष्टव्याः। अध्ययनमप्यन्यतः। तथा हिरण्यगर्भस्यापि पूर्वकल्पेषु। अतोऽनन्ता जीवाः। ते च संसारिणः। ब्रह्म चैकं नित्यशुद्धबुद्धमुक्तस्वभावम्। तच्च कथमात्माभेदः॥

नन्वेवं च सति, 'एकमेवाद्वितीयम्', 'स आत्मा तत्त्व-

मसि', 'अनेन जीवेनात्मना', 'अहं ब्रह्मास्मि', 'एष त आत्मा' इत्यादेरद्वितीयत्वं ब्रह्मणो जीवानामात्मत्वं च श्रूयमाणं विरुध्यत इति चेत्—न, भिन्नाभिन्नत्वात्। तथाहि—समस्तस्य जगतस्तत्कार्यत्वात् तयोर्भिन्नाभिन्नता मृद्घटयोरिव। तथा जीवानामपि चिदंशत्वात् भिन्नाभिन्नतैव। अंशत्वं च 'अंशो नानाव्यपदेशात्' इति सूत्रात्, 'ममैवांशः' इति च स्मृतेः। अंशांशिनोश्च भिन्नाभिन्नत्वं प्रसिद्धम्, तयोरेकान्ततो भेदेऽभेदे चांशांशित्वहानात्। अतोऽभेदात् ब्रह्मणोऽनन्तत्वैकत्वाद्वितीयत्वजीवात्मत्वादिश्रुतिः, भेदाच्च ज्ञेयज्ञातृप्राप्यप्राप्तृत्वादिकर्मकर्तृव्यपदेशस्सर्वज्ञस्सर्वशक्तिस्सर्वात्मेत्यादिश्च घटते। अत्यन्ताभेदे भेदे च न तत्संभवः। प्राप्यप्राप्त्रोश्चान्यथाभावेऽभावे च न तत्प्राप्तिरित्यादयश्च दोषाश्श्रुतिबलादेव प्रत्युक्ताः॥

अत्रोच्यते—न ब्रह्म भिन्नाभिन्नं कुतश्चिन्नापि तस्मात्किंचित्, प्रमाणाभावात्। न तावज्जीवब्रह्मणोर्भिन्नाभिन्नत्वेऽक्षजादि मानम्, तदगोचरत्वात्तयोः। नापि शास्त्रम्। असिद्धे तु तद्भेदेऽन्यतस्तद्वाचकपदयोस्ताभ्यां संबन्धाग्रहात् अयमस्माद्भिन्नोऽभिन्नश्चेति वाक्यार्थज्ञानानुत्पत्तेः। न च तद्भेदोऽन्यतस्सिद्धः। सिद्धश्चेत्, न स शास्त्रगम्यः। अप्राप्ते हि शास्त्रमर्थवत्। न च सोऽक्षजादिगम्यः अयोग्यत्वादित्युक्तम्। अतोऽविद्यासिद्धः। अतस्तमनूद्य अभेदमेव तयोश्शास्त्रं बोधयति। तथा जगद्ब्रह्मणोरपि। जगतोऽक्षजादिगम्यत्वेऽपि ब्रह्मणोऽतद्गम्यत्वात्तयोर्भेदो नाक्षजादिगम्यः। तद्गम्यत्वेऽपि तस्याशास्त्रगम्यत्वात् अभेद

एव शास्त्रार्थः, न भेदगन्धोऽपि। भेदस्यापि मानान्तर-
गम्यत्वात् भिन्नाभिन्नं ब्रह्मेति चेत्, न स शास्त्रार्थः। न च
मानान्तरार्थः। नापि मानानामेकवाक्यता येन भिन्ना-
भिन्नं ब्रह्म गम्येत। न चैकस्मिन्नेव धर्मिणि, पूर्वप्रतिपन्न-
रूपतज्ज्ञानाद्यनुपमर्देनेव रसज्ञानम्, पूर्वप्रतिभातभेदत[1]-
ज्ज्ञानाद्यनुपमर्देन अभेदतज्ज्ञानोत्पत्तिः; किंतु समस्त
भेदतज्ज्ञानाद्युपमर्देनैव। अन्यथा तदनुत्पत्तेः 'एकमेवा-
द्वितीयम्', 'तत्त्वमसि', 'नेह नानास्ति' इत्यादिश्रुतिभ्यः।
यदि समस्तभेदज्ञानानुपमर्देनैवाभेदज्ञानं शास्त्रात्—
सोऽध्यासस्यान्नामादिषु ब्रह्माध्यासवत्, न तत्त्वज्ञानम्।
अथ सर्वभावानां ब्रह्मणश्च भेदवदभेदोऽपि धर्मान्तरं
रूपिण इव रसो बोध्यते, तदा अनन्तेषु भावेषु सत्सु
'एकमेवाद्वितीयम्' इत्यत्यन्ताभेदश्रुतिविरोधः। भेदे
सत्यपि अभेदधर्मभावादविरोधश्चेत्, तदा घटोऽप्येक एवा-
द्वितीयस्स्यात्। तथा सर्वे भावाः, अभेदधर्मवत्त्वाविशेषात्।
अतोऽनन्तान्यद्वैतानि, तानि च ब्रह्माणि स्युः। न चैकं
ब्रह्म, विशेषाभावात्। घटादेर्न सर्वाभेद इति चेत्—न,
सर्वाभिन्नब्रह्माभेदात्। अभेदधर्मेणैव ब्रह्मणोऽप्यभेदः। स
चैकस्सर्वत्र, अन्यथा तेनाप्यभेदासिद्धेः। अथ भिन्नेनैवा-
भेदेन ब्रह्म अभिन्नं, तथा सन्तु सर्वे भावाः। न च तथे-
च्छसि। अतोऽशेषभेदोपमर्देनैवाभेदं बोधयति श्रुतिः,
अन्यथा अमानं क्रियामानं वा सा स्यात्। न च क्रिया
ततो भाति। अतो न भिन्नाभिन्नं ब्रह्म, प्रमाणाभावात्।

[1] D (०र्व प्र०)।

कर्मणोऽपि[1] भेदोऽन्यतस्सिद्धोऽसिद्धश्च न शास्त्रगम्यः जीवब्रह्मणोरिव। अतो लोकप्रसिद्धभेदद्वारैव कर्मभेदावगतिः[2]। न चाक्षजादिनापि भेदो गम्यः, असिद्धे भेदे प्रतियोग्यसिद्धेस्तं विना भेदानवगतेः[3]। मेयभेदे तद्गम्येऽपि न मातृमानादिभेदस्तद्गम्यः, अमेयत्वान्मात्रादेः। तस्यापि मानमेयत्वे मात्राद्यनवस्था। अतस्तद्भेदवन्मेयभेदोऽपि न मानमेयः। तस्मान्न मृद्घटयोरपि भेदः। न च मृदोऽन्यं घटं पटमिव वेद कोऽपि, किंतु मृद्रूपमेव। अतो न मृद्घटदृष्टान्तो भेदाभेदवान्, किंत्वभिन्न एव। वाचारम्भणश्रुतेश्च। अतो न जीवब्रह्मणोर्भेदाभेदौ जगद्ब्रह्मणोर्वा। यद्यभिन्नमपि ब्रह्मणस्ततो भिन्नम्, ब्रह्मैव स्वतो भिन्नमिति सर्वभेदानां प्रत्येकं ब्रह्मत्वादनन्तानि ब्रह्माणि स्युः। न चैको भेदो ब्रह्म नान्य इति युक्तम्। ब्रह्मभेदत्वाविशेषात् सर्वेषां ब्रह्मत्वं न वा कस्य चित्। सर्वे भेदास्समुच्चिता एकं ब्रह्म नैकैकमिति चेत्—तर्हि न ब्रह्मणो भिन्नं किंचित्, ब्रह्मानन्यत्वात् सर्वस्य ब्रह्मत्वात्। न च तदंशानां मिथो भेदः। न हि तदेव तदंशस्स्यात्। स्याच्चेत्, एक एवांश इति नांशभेदोऽपि। तस्मान्न भिन्नाभिन्नता कस्यचित् कुतश्चित् ॥ ७६ ॥

अपिचेदं भवान्प्रष्टव्यः—ययोर्जीवब्रह्मणोर्भिन्नाभिन्नता इष्टा, तयोः किं स्वरूपमिति। किं चिदेव, उत अचिदेव, अथ उभयम्, एको वाचिद्रूपः। तत्राद्ये कल्पे—

चिन्मात्रमेव चेद्ब्रह्म प्राप्तमेव सदात्मना।
तस्य चिन्मात्ररूपत्वाच्चिन्मात्रत्वे कुतो भिदा ॥ ७७ ॥

[1] DE (॰णोरपि)। [2] D (॰भेदगतिः)। [3] D (भेदागतेः)।

ब्रह्मात्मत्वे न हि स्यातां यद्यचिद्रूपता तयोः ।
चिदात्मत्वे जडांशत्वं न स्याज्जाड्ये चिदंशता ॥ ७८ ॥

तयोरचिद्रूपत्वे घटवज्जीवस्यात्मत्वद्रष्टृत्वमुमुक्षुत्वादि, ब्रह्मत्वसर्वज्ञत्वसर्वस्रष्टृत्वादि ब्रह्मणश्च, न स्यात्। चिदात्मत्वे नाचित् अंशस्तयोः, नाप्यचिदात्मत्वे चित्। न हि घटो द्रष्टुरंशो दृष्टः। नापि घटस्य चित्। तथैकस्याचिद्रूपत्वेऽपि तयोर्नांशांशिभावः। अतः पक्षान्तरासंभवात् तयोश्चिद्रूपतैवेति न भेदो नाप्राप्तिर्वा। चिदचिद्रूपत्वे तयोर्नाभेदो घटतद्दृशोरिव। अतः परजीवयोर्न भेदाभेदौ। तथा जगद्ब्रह्मणोः, चिदचिद्रूपत्वेऽभेदायोगात् ॥ ७७—७८ ॥

न जगद्ब्रह्मणो रूपं तेन वेद्यं यदीष्यते ।
वेद्यं हि वेदितुर्भिन्नं सर्वत्रैवेह दृश्यते ॥ ७९ ॥

यद्याकाशादिप्रपञ्चो जीवाश्च ब्रह्मणो वेद्यास्तेषां तस्य च भेदादभेदाभावात् घटतद्दृशोरिव तद्रूपत्वं तदंशत्वं च तवेष्टं न स्यात्। न हि घटो द्रष्टु रूपमंशो वा। प्रपञ्चवत् तद्वेद्यत्वे जीवानामपि तदंशत्वतद्वित्त्वदुःखित्वमुमुक्षुत्वादयो न स्युः। प्रपञ्चवत्कार्यता च स्यात्। तदा ब्रह्मण एव बन्धमोक्षौ, न वा कस्यचित्। अवेद्यत्वे तेषामसिद्धिः, ब्रह्मणस्सर्वज्ञत्वहानिश्च तव। ब्रह्मणश्च जीववेद्यत्वे[1], अज्ञत्वात् सर्वज्ञत्वाद्यसिद्धेर्ब्रह्मत्वासिद्धिः। जीवस्य च ततोऽन्यत्वं तदवेद्यत्वं च स्यात्। जीवब्रह्मणोर्द्वयोरपि वेद्यत्वे घटपटवदन्योन्यवेद्यत्वायोगात् स्ववेद्यत्वायोगाच्च ताभ्यामन्यस्तद्वेदिता अवेद्योऽभ्युपेयः। तदा स एवात्मा

[1] BCDE (०द्यर्थे)।

ब्रह्म च। तस्य ज्ञानमविषयत्वादवेद्यतयैव 'यस्यामतं तस्य मतम्' इत्यादिश्रुतिभ्यः। तस्य च तदविद्योत्थत्वात्सर्वस्य तद्भासा च भास्यत्वात् सर्वकर्तृत्वसर्वरूपत्वसर्वज्ञत्वाद्युपपत्तिः। सर्वश्चासौ ज्ञश्चेति वा सर्वज्ञः, तदन्यवस्त्वभावात् ॥ ७९ ॥

यदि खादि सर्वं वस्तु ब्रह्मणा अभिन्नं तदा सर्वं जानाति करोति चेति कर्मकर्तृत्वाद्ययोगात्सर्वज्ञत्वसर्वकर्तृत्वाद्यसंभव इत्येतदाह—

सर्वं चेद्ब्रह्म तद्वेद्यं न वेदित्रवशिष्यते।
वेद्यत्वेन समाप्तत्वाद्वेदितृत्वे न वेद्यता ॥ ८० ॥

यदि सर्वं ब्रह्म, तच्च वेद्यत्वेन वर्तेत, न तस्य वेदित्रवशिष्यते—तस्य सर्वस्य वेद्यत्वेनैव समाप्तत्वात्। तथा वेदितृत्वेऽपि तस्य तथैव समाप्तत्वात् न वेद्यता। अतो नास्य युगपत्क्रमेण वा वेद्यवेदितृभाव इति न सर्वज्ञत्वम्। तथा नास्य सर्वकर्तृत्वमपि। न चासिद्धस्य कर्तृता, सिद्धस्य च न कार्यता। अतोऽपि न सर्वकर्तृत्वम्। तद्वेद्यं चेदस्ति तस्याब्रह्मता उक्ता ॥ ८० ॥

ब्रह्म चेज्ज्ञातृ वेद्यं च ब्रह्म द्वे ब्रह्मणी तदा।
ब्रह्मैकमुभयं तच्चेन्न तद्वेद्यं न वेदितृ ॥ ८१ ॥

वेद्यं वेदितृ च ब्रह्म चेत्, द्वे ब्रह्मणी स्याताम्। द्वयं समुच्चितमेकं ब्रह्म चेत्—न तद्वेद्यम्, नापि वेदितृ ॥ ८१ ॥

तदेकांशस्य बोद्धृत्वात्सर्वज्ञं ब्रह्म चेन्मतम्।
तदेकांशस्य मूढत्वादकिंचिज्ज्ञं न किं मतम् ॥ ८२ ॥

एकांशस्य ज्ञत्वात् सर्वज्ञत्वे अकिंचिज्ज्ञमपि स्यात्,

एकांशस्य मौढ्यात् । तदंशयोरपि न ज्ञज्ञेयभावः । न हि तदेवांश इत्युक्तम् ॥ ८२ ॥

ब्रह्मणश्चेज्जगज्जातं कथं ब्रह्मोच्यते जगत् ।
जगच्च ब्रह्मशब्दं चेद्द्वे स्यातां ब्रह्मणी तव ॥ ८३ ॥
द्वयं समुच्चितं ब्रह्म यदि पूर्वं जगज्जनेः ।
न स्यात् ब्रह्म ततो न स्याद्ब्रह्मणो जगतो जनिः ॥८४॥

यदि ब्रह्मणः पूर्णात् जगज्जातं ततोऽन्यत्वादब्रह्म स्यात्, एकस्यैव[1] जन्यजनकत्वायोगात् । न ह्येकस्यैव कर्मकर्तृत्वं युगपत्क्रमेण वा—न चासिद्धस्य कर्तृत्वं, सिद्धस्य च न कार्यतेत्युक्तत्वात् । जगदपि ब्रह्मशब्दवाच्यं चेत्, तदा द्वे ब्रह्मणी स्याताम् । द्वयं समुच्चितं ब्रह्म नैकैकमिति चेत्—तदा ब्रह्मभावे जगतो भावान्न तस्य जन्म, जगदभावे ब्रह्माभावान्न ततोऽस्य जनिः । जगज्जनेः प्राक् पूर्णब्रह्माभावेऽपि तदंशभावात्ततोऽस्य जन्मेति चेत्—न, अंश्यभावे तदंशाभावात् । जगज्जनौ चेदंशिब्रह्मसिद्धिः, तस्यापि कार्यतैव । पूर्वसिद्धत्वे पश्चात्सिध्येत् जगत् नास्यांशः पूर्वसिद्धांशस्येव । न च ब्रह्मैव तदंशः । स्याच्चेत्—एक एवांशः, तस्यैकत्वादित्युक्तम् । अतो नास्यांशयोरपि कार्यकारणता, ब्रह्मण एव तत्कार्यतायोगात् । तत्कार्यस्य सत्यत्वे तस्याब्रह्मत्वात् ब्रह्मणोऽप्यविकारित्वाद्वितीयत्वाद्युक्तलक्षणाभावात् ब्रह्मत्वहानिः । तस्माद्यथोक्तं ब्रह्म इच्छद्भिस्तत्कार्यं[2] जगज्जीवभेदश्चाविद्याकल्पित एवाभ्युपेयः ; अन्यथा अप्रामाण्याच्छ्रुतेः, बन्धमोक्षासंभवाच्च ॥ ८३—८४ ॥

[1] CDE (०व जनक०) ।　　[2] BCDE (०त्कार्यज०) ।

तदेव दर्शयति—

सप्रपञ्चं यदि ब्रह्म ब्रह्मांशोऽणुश्च देहभृत् ।
साक्षाद्ब्रह्म कथं स स्यान्नाब्बिन्दुस्स्यान्महोदधिः ॥८५॥
पृथक्स्थितस्य त्वब्बिन्दोरब्धियोगो भवेदपि ।
ब्रह्मांशत्वे तु जीवस्य तद्योगोऽपि न विद्यया ॥ ८६ ॥

सदा सिद्धत्वात् ॥ ८६ ॥

ब्रह्मांशस्सन्नणुर्जीवस्साधनैर्ब्रह्म चेद्भवेत् ।
एकस्य पूर्वसिद्धत्वाद्द्वितीयं ब्रह्म तद्भवेत् ॥ ८७ ॥

कथम्—

विद्याक्रियाभ्यां न ब्रह्म सदा भूतं भविष्यति ।
कुलालव्या[1]पृतेर्न स्यात्पूर्वसिद्धघटोदयः ॥ ८८ ॥
ब्रह्मांशत्वं परित्यज्य जीवो ब्रह्म भवेद्यदि ।
तदंशहीनं ब्रह्म स्यादंशत्वे ब्रह्मता कुतः ॥ ८९ ॥
जीवस्यौपाधिको भेदस्त्वभेदः पारमार्थिकः ।
उपाधिनाशे कर्मादेर्ब्रह्माप्तिरिति चेन्मतम् ॥ ९० ॥
औपाधिकश्चेद्भेदोऽसाववविद्यामय इष्यताम् ।
तन्नाशो विद्ययैवातो ब्रूहि किं तत्र कर्मणा ॥ ९१ ॥
औपाधिकोऽपि चेद्भेदो नाविद्यामात्र इष्यते ।
न विद्यया च तन्नाशः किं नासौ पारमार्थिकः ॥ ९२ ॥
नन्वाधिजोऽपि नाविद्यामात्रो ह्यरुणिमा मणौ ।
न धियैव च तन्नाशः किं तूपाधिवियोगतः ॥ ९३ ॥
एवं ब्रह्मैव सन् जीव आधिना मनसा परात् ।
भिन्नो दुःखी च तं[2]हित्वा धीकर्मभ्यामियात्परम् ॥९४॥

[1] BCDE (०व्यावृतेः) । [2] CDE (तद्धीत्वाद्धी०) ।

मणावरुणिमोपाधेर्जातः किं भात्युत भ्रमात्।
जातश्चेदाधिनाशेऽपि तावता न विनङ्क्ष्यति ॥९५॥
लौहित्यमग्नियोगोत्थं विनाप्यग्निं घटे भवेत्।
एवमाधिजसंसारो विनाप्याधिं परे भवेत् ॥ ९६ ॥

ननु जीवे भवेदिति वाच्यम्, न परे भवेदिति—तन्न, यतः—

परस्यैवाधियोगस्स्याज्जीवस्य प्राग[1] सिद्धितः।
प्राक्सिद्धौ नाधिजो भेदो जीवे स्यादनवस्थितेः ॥९७॥

तामेवानवस्थामाह—

प्रागाध्यन्तरयुक्तस्य जीवस्याधियुजा यदा।
पूर्वोऽप्याधिर्विना नाधिमन्यमित्यनवस्थितिः ॥ ९८ ॥
परस्यैवाधियोगोऽतः कृत्स्नस्यैवांशहानतः।
कस्य भेदः कुतश्चैवमेको जीवो भवेत्परः ॥ ९९ ॥

आधिभेदे जीवभेद इति चेत्—न, यतः—

आधिभेदेऽप्यनंशत्वात्कृत्स्नस्यैव युजाधिभिः।
अविरोधे विरोधे तु मुधानेकाधिकल्पना ॥ १०० ॥
एकस्यापि निरंशस्य ब्रह्मणो भेद आधिभिः।
खस्येव चेत्तदा भेदो भ्रान्तिमात्रः प्रसज्यते ॥ १०१ ॥

यतः—

नाधिभिः क्रियते किंचिद्भिन्नं भ्रान्त्यैव भाति खम्।
तथा चेद्ब्रह्मणो भेदो ब्रह्मानाप्तिरविद्यया ॥ १०२ ॥

औपाधिकस्य भेदस्याविद्यात्मकत्वाद्विद्ययैव तन्निवृत्तौ सदाप्तस्यैव परस्याप्तेस्तद्भावः [2]श्रुतः ॥ १०२ ॥

[1] BCE (॰सिद्धतः)। [2] CD (श्रुतौ)।

जीवानां नान्यभावो नाप्यन्यथाभाव इत्येतदाह—

अविद्याया निवृत्तिश्च[1] विद्ययैव न कर्मणा ।
नातोऽन्यस्यान्यथाभावस्तदाप्राप्तेः परात्मनः ॥१०३॥
नन्वाधिस्तन्नसौ नश्येत्कर्मणैव न विद्यया ।
घटे स्थिते घटाकाशो महाकाशो भवेन्न च ॥ १०४ ॥
जीवस्य ब्रह्मभावोऽतः कर्मणोपाधिसंक्षये ।
घटे नष्टे घटाकाशो महाकाशो भवेद्यथा ॥ १०५ ॥
उच्यते ब्रह्मणो रूपमाधिश्चेत्तत्क्षये क्षयः ।
ब्रह्मणोऽपि प्रसज्येत नान्यथा तत्क्षयो भवेत् ॥१०६॥

कथम्—

शक्तिशेषे क्षये तस्य सर्गकाले पुनर्भवः ।
अभेदाच्छक्तिमन्नाशं विना शक्तिर्न नङ्क्ष्यति ॥१०७॥

यद्यपि ब्रह्मानाशेऽप्युपाधिनाशः, तथापि—

एकोपाधिविनाशेऽपि ह्युपाध्यन्तरमस्ति चेत् ।
अनिर्मोक्षः प्रसज्येत तदभावे जगत्क्षयः ॥ १०८ ॥

न चालक्तकाद्युपाधेस्तद्वतो मण्यादेश्चादृष्टावौपाधिकभेदधीर्लोके । तच्च ब्रह्मण आधेः स्वरूपत्वेऽदृश्यत्वात्, अस्वरूपत्वेऽपि ब्रह्मणोऽदृश्यत्वात्, तस्यौपाधिको भेदोऽपि नाविद्यां विना भासेतेत्येतदाह श्लोकाभ्याम्—

उपाधिर्ब्रह्मरूपं चेन्न दृश्यो ब्रह्मणात्मवत् ।
तददृष्टौ च तद्भेदाद्ब्रह्मभेदमतिः कुतः ॥ १०९ ॥
दृष्टेऽप्युपाधावन्यस्मिन्ब्रह्मणोऽविषयत्वतः ।
उपाधिभेदे[2] बुद्धेऽपि नैव स्याद्ब्रह्मभेदधीः ॥ ११० ॥

[1] BDE (०त्तिस्त्वेद्वि०) । [2] CDE (०भेदो बु०) ।

औपाधिकोऽपि भेदोऽतोऽविद्यैव परजीवयोः ।
आधिभेदोऽपि भेदत्वान्मृषा स्यादात्मभेदवत् ॥१११॥

जीव[1]वदाधीनामपि ब्रह्मस्व[2]रूपत्वाविशेषाच्च ॥१११॥

उपाधिर्ब्रह्मणो रूपं तद्भेदश्च स्वतो यदि ।
ब्रह्मात्मत्वेऽपि जीवस्य तद्भेदो वा स्वतो न किम् ॥११२॥

यद्याधेर्ब्रह्मस्वरूपत्वेऽपि स्वत एव भेदो नौपाधिकः, जीवस्यापि तथा स्यात् ब्रह्मात्मत्वेऽपि । तस्माज्जीवभेदवदाधिभेदोऽपि मृषा ; आधिभेदवद्वा जीवभेदोऽपि सत्यस्स्यात् । न द्वैरूप्यं लभ्यम्, ब्रह्मस्वरूपत्वाविशेषात् । आत्मभेदो न परमार्थश्चेत्, अन्योऽपि तथा । न चाधिभेदादाधिभेदः, अनवस्थानात् । अतस्सर्वो भेदोऽविद्याशरीर एव ॥ ११२ ॥

अत उपसंहरति—

नात्मात्मनस्स्वतो भिन्नो नान्यतो नाप्युपाधिभिः ।
नात्मनोऽतोऽन्यथाभावो नान्यभावोऽपि युज्यते ॥११३॥

आत्मा आत्मनोऽन्यतश्च न स्वत एव—आधिं विनैव—भिन्नः, नाप्याधिभेदात् । अत आत्मनोऽन्यथाभावोऽन्यभावश्च न युक्तः ॥ ११३ ॥

ब्रह्माप्तिर्विद्यया मोहध्वंसादेवोपचर्यते ।
आत्मनोऽब्रह्मता मोहाच्छुक्ते रूप्यत्ववद्यतः ॥ ११४ ॥

यत आत्मनो ब्रह्मस्वरूपत्वान्मोहोत्थभ्रान्त्यैवाब्रह्मत्वं शुक्तेरिव रूप्यत्वमतो [3]विद्यया मोहध्वंसान्नित्यप्राप्तस्यैव

[1] BCE (०वमदा०) ।　　[2] BCDE (०रूपावि०) ।
[3] BCDE (विद्यायाः) ।

ब्रह्मणः प्राप्तिरुपचर्यते हस्तगतविस्मृतसुवर्णस्येव ‘ब्रह्मविदाप्नोति परम्’ इत्यादौ। न तु भावान्तरप्राप्तिः तद्योगो वा ग्रामप्राप्तिवत्॥ ११४॥

तदेव शुक्तौ रूप्यात्मत्वस्य मोहोत्थत्वं दर्शयति। पूर्वं वस्तुनोऽन्यथाभावादिसंभवं निरस्तमप्यभ्युपगम्य, अधुना मृद इव घटात्मना शुक्तौ रूप्यात्मना न जन्मेत्याह—अन्यथाभूतस्य ख्यातिरन्यथाख्यातिरित्येतत्पक्षनिरासार्थमेव—

शुक्ती रूप्यात्मना जाता यदि कुम्भात्मनेव मृत्।
रूप्यं किं बाध्यते किं वा न कुम्भो हेतुरुच्यताम्॥११५॥
शुक्तौ रूप्यात्मना जातौ बाह्यो हेतुर्न दृश्यते।
ज्ञेयजन्म न च ज्ञानाज्ज्ञेयं ह्यालम्ब्य धीभवः॥ ११६॥
शुक्तिकालम्बना बुद्धिश्शुक्तिं रूप्यं करोति चेत्।
किं नैवं शुक्तिधीस्सर्वा किं वैका शुक्तिधीर्भ्रमः॥ ११७॥

यदि न रूप्यधियो रूप्यजन्म रूप्यात्तद्धीसिद्धेः, तथापि पुर्वसिद्धशुक्त्यालम्बना धीस्तां रूप्यं करोतीति चेत्—सर्वैव तद्धीस्तां रूप्यं कुर्यात्, विशेषाभावात्। तदा शुक्तिधीर्न क्वापि। अतो न शुक्तिश्च। अथ भ्रान्तैव शुक्तिधी रूप्यं तां कुर्यात्—सर्वैव तद्धीर्भ्रान्ता अभ्रान्ता वा, विशेषाभावात्॥ ११७॥

यदि काचित् भ्रान्ता, तदापि—

भ्रान्त्या चेद्रूप्यता शुक्तेः कृताभ्रान्तैश्च दृश्यताम्।
भ्रान्त्या तु नैव दृश्येत तत्कृतौ तदुपक्षयात्॥ ११८॥

रूप्योत्पत्तौ निमित्तं चेद्भ्रान्तिस्तस्यैव वेश्मनः ।
भ्रान्तेर्नाशेऽपि तत्तिष्ठेद्रूप्यं तस्मिन् गृहादिवत् ॥ ११९ ॥

अतो मायैव शुक्तिरूप्यम् । अतो नान्यथाभूतस्य ख्यातिरन्यथाख्यातिः । भ्रान्तित्वहानाच्चायं पक्षो न भ्रान्तौ युक्तिमान् ॥ ११९ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य अव्ययात्मभगवत्पूज्यपादशिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ द्वितीयोऽध्यायः ॥

---

# अथ तृतीयोऽध्यायः।



यान्यथा प्रथयेदर्थं यदि सेष्टान्यथामतिः।
असत्यर्थेऽन्यथाभावे तथा तं प्रथयेत्कथम् ॥ १ ॥

न हि ज्ञेयं विना ज्ञानमित्युक्तम् ॥ १ ॥

अथातद्देशकालं या मतिस्तद्देशकालगम्।
प्रथयेत्सान्यथाख्यातिर्विनाप्यर्थेऽन्यथाभवम् ॥ २ ॥

अन्यदेशादिगस्यैतद्देशादिस्थत्वसंभवः।
विनार्थस्यान्यथाभावं कालादेर्वा कथं वद ॥ ३ ॥

अन्यदेशादितत्स्थार्थेष्वग्रहान्नान्यथामतिः।
सुषुप्तेऽप्यन्यथाधीस्स्यात्साग्रहेऽपीष्यते यदि ॥ ४ ॥

अन्यदेशकालयोस्तत्स्थानां चार्थानामग्रहणान्न तेष्वन्यथाख्यातिः। स्याच्चेत्, सुषुप्तेऽपि स्यात् ॥ ४ ॥

कुतोऽन्यदेशादितत्स्थार्थरूप्यादीनामग्रहणमिति चेत्, यतः—

रूपादिमानक्षगम्यस्संनिकर्षेऽक्षगम्यता।
तदभावान्नार्थदृष्टिस्स्वप्ने त्वक्षं च संहृतम् ॥ ५ ॥

अक्षाद्यभावेऽप्यर्थानां स्वप्नादौ—

दोषाच्चेद्दर्शनं दोषः कथं दृष्टौ कुतो भ्रमः।
भ्रान्तौ नष्टस्य च ख्यातेर्नार्थदृष्टिः प्रकल्पते ॥ ६ ॥

पूर्वमासीद्विनष्टोऽपि नेदानीमस्ति यद्यपि ।
पूर्वसत्तैव वेद्याद्याप्यन्यदेशस्थसत्त्ववत् ॥ ७ ॥

अन्यदेशस्थध्रुवादिसत्तेव इहासतः पूर्वकालसत्तैवाद्य भाति ॥ ७ ॥

अतः—

वेद्यते सोऽन्यथा चेति ख्यातिर्भ्रान्तिश्च युज्यते ।
अन्यथादर्शनादेव दोषत्वं चेति चेन्मतम् ॥ ८ ॥
नैतत्सारं यदा धीस्स्यान्न तदा वेद्यमस्ति चेत् ।
सा निरालम्बनैव स्यादस्ति चेन्नान्यथामतिः ॥ ९ ॥

यद्यक्षजवद्भ्रान्तेश्च स्वार्थालम्बनत्वं तत्कालार्थोऽक्षजवदभ्युपेयः, अन्यथा अनालम्बनता । अस्ति चेदर्थः—न भ्रान्तिः, अक्षजवत् यथाज्ञानमर्थसद्भावात् । तथा स्मृतिसंशयादेः, अन्यथा तद्भानात् ॥ ८—९ ॥

किंच—

गृह्यतेऽवर्तमानोऽर्थो वर्तमानधिया यदि ।
अवर्तमानया बुद्ध्या वर्तमानग्रहो न किम् ॥ १० ॥
स्याच्चेदन्धोऽपि संपश्येत्पूर्वबुद्ध्याद्यनर्तनम् ।
वृत्त आसीन्न सा धीश्चेदस्तु साद्यैव वृत्तगा ॥ ११ ॥
नेदानीं सास्ति चेन्माभूत्पूर्वं त्वासीद्घटो यथा ।
पूर्वं सत्त्वाद्घटो वेद्यो यथैवं वेदिकाद्य धीः ॥ १२ ॥
स्वकाले गोचरोऽप्यर्थो धियश्चेन्नोचरोऽन्यदा ।
नान्यदा वेदिका किं स्यात्स्वकाले वेदिकापि धीः ॥ १३ ॥
धीकारकं चेन्नष्टं स्यात्करोत्यर्थक्रियां न किम् ।
द्वयोस्तत्कारकं चेत्स्यान्नष्टानष्टभिदा कुतः ॥ १४ ॥

ननु नार्थात् स्मृतेर्भ्रान्तेश्च जन्म, किंतु दोषात्संस्काराच्च। तर्हि ताभ्यामेवोत्पत्तेस्तयोर्नार्थोऽर्थेन । [1]अर्थज्ञापकत्वे च तयोर्मानवत् भ्रान्तित्वस्मृतित्वहानिः । वक्ष्यते च स्मृतेर्व्यर्थत्वम् ॥ १४ ॥

नष्टं च भाति चेत्—

अजातं चेक्ष्यतां तेन विशेषेण भविष्यता ।
करोत्यर्थक्रियां चैवं भाव्यर्थेहा वृथा तव ॥ १५ ॥

ननु भूतभाव्यर्थविषयमपि ज्ञानमद्येष्यतेऽनुमानात्, तथा कार्यज्ञानं वेदात्; अतो ज्ञानज्ञेययोर्नैककालतानियम इति चेत्—तत्रापि ज्ञानानुरूप एवार्थोऽर्थानुरूपमेव च ज्ञानम्। भ्रान्तौ त्वस्तीति धीः। अतो धीकालेऽर्थो नास्ति चेत्, सा निरालम्बनैव स्यात्। भ्रमेऽप्यवर्तमानश्चेदर्थो भाति, अभूद्भविष्यतीति वा भासेत। तदा भ्रमो न स्यादिति चेत्—तर्हि न [2]सत् भाति भ्रमे, भ्रमत्वहानात्। न चानुमानादिष्वर्थो ज्ञानजनकः, लिङ्गादीनामेव संबन्धविशेषाद्विशिष्टार्थज्ञानोत्पादकत्वात्। भ्रान्तौ त्वर्थसंबन्धस्तज्ज्ञानहेतुर्नास्ति। दोषो ज्ञानहेतुश्चेत्—सोऽपि न लिङ्गादिस्थानीयः, चक्षुरादिस्थानीयस्तु। अतोऽ[3]क्षजस्येव भ्रान्तेरप्यर्थविषयत्वे [4]अर्थव्यापारं विना न जन्म। अतो नष्टस्यार्थस्य ज्ञानहेतुत्वे सर्व एवोक्ता दोषाः प्रसज्यन्ते। शुक्तीदमंशवद्रूप्यस्य स्वकीयसद्रूपेण ज्ञानविषयत्वे ज्ञानहेतुत्वं प्रत्यक्षत्वं बाधकज्ञानेऽनुवृत्तिश्च इदमंशवदेव;

[1] BCD (अर्थे ज्ञा०)। [2] CDE (संभवति भ्र०)।
[3] DE (०त्वजस्येव)। [4] CDE (अर्थे व्या०)।

अन्यथा संसर्गवद्रूप्यादेरपि न सद्रूपेण ज्ञानविषयत्वम्, संसर्गस्यापि तत्प्रसङ्गात्। अनुमानादिषु भूतभाव्याद्यर्थानां तज्ज्ञानाजनकत्वान्नोक्तदोषः। जनकत्वे तु स्यादेव दोषः ॥ १५ ॥

यतः—

भावि चेद्भाविधीमेयं तत्प्रामाण्यं च भावि तु।
नर्ते मेयाद्धि तन्मानमस्ति चेत्कस्य भाविता ॥ १६ ॥

यदि भवदिव रूपं तद्धियः, भविष्यतीति धियो भावि वस्तु मेयम्—तदा तद्धीस्तत्फलं च भाव्येव, [1]न त्विदानीं भवति। न हि मेयं विना मानाद्यस्ति। अस्ति चेन्मेयम्, न कस्यचिद्भाविता ॥ १६ ॥

तथा—

भूतं चेद्भूतधीमेयं भूतं प्रामाण्यमद्य न।
मानत्वं न विना मानं मानं मेयं विना न च ॥१७॥

पूर्वस्येवास्यापि व्याख्या ॥ अतोऽनुमानादिष्वर्थस्य वर्तमानस्यापि स्वज्ञानोत्पत्तौ न व्यापारः। यदि स्यात्, प्रत्यक्षवदापरोक्ष्यं चार्थस्य स्यात्। न चेत्—प्रत्यक्षेऽपि न स्यात्, विशेषाभावात्। अतोऽन्यकालादिसन्नप्यर्थोऽनुमानादिनेव भ्रान्त्यापि भातीति न मन्तव्यम्। कथं च तदा असतोऽर्थस्य[2] ज्ञानम्। ज्ञायतेऽनेनेति हि ज्ञानम्। न च ज्ञानं ततोऽन्यज्ज्ञेयं विना समस्ति। न चासतोऽन्यत्वं ज्ञेयत्वं चेति चोक्तम्। ननु न भूताद्यर्थो नृशृङ्गसमः, कालान्तरे सत्त्वात्। किं सोऽद्यापि सन्, उत असन्।

[1] D (नन्विदा०)।　　[2] D (०स्याज्ञानं)।

असंश्लेत्स[1] नाद्य ज्ञेयः। न हि तस्याद्य नृशृङ्गाद्विशेषः, अन्यथा सन्नेव स्यात्। अतो नाद्य ज्ञेयः, किं त्वन्यदैव। तदापि न भूतादिज्ञानेन, सत्त्वात्तदा। अथोच्येत— कालान्तरे सत्येव अद्य भूतादिज्ञानं यथा देशान्तरे सति ध्रुवादौ तज्ज्ञानम्। न चान्यदा असत्ता स्वकाले सतोऽप्यज्ञाने हेतुः, विद्यु[2]तोऽपि ज्ञेयत्वदर्शनात्। अतः कालान्तरसंबन्ध्येवाद्य भूतादि ज्ञेयं भूस्थेनेव द्युस्थध्रुवादीति। तत्किं कालान्तरमद्यास्ति, उत नास्ति। अस्ति चेत्, तस्य संबन्धिनश्च वर्तमानत्वान्न भूतता भाविता वा; नास्ति चेत्, तस्याज्ञानात् तत्संबन्धिनोऽप्यज्ञानम्। न च तत् कालान्तरेऽस्ति, कालस्य कालसंबन्धाभावात्—अनवस्थानात्। अतो नाद्य कालान्तरस्य तत्संबन्धिनश्चासत्त्वात् ज्ञेयत्वम्। देशान्तरतत्संबन्धिनां तु सत्त्वादद्य ज्ञेयत्वम्। अतो न दृष्टान्तस्तः। अस्मिंस्तु पक्षे 'नैतत्सारम्' इत्यादयश्श्लोका धीकालेऽर्थाभावे न काचिद्धीस्सालम्बना इत्येवमर्था एव योज्याः। नन्वेवं सति कालस्य कालान्तराभावात् भूतादिरूपासंभवादैकरूप्यात्तत्संबन्धिनां भावानां च तथात्वात् प्रागभावाद्यसंभवादज्ञेयत्वाच्चाभावस्य कथं भूतादिज्ञानं कार्यज्ञानं च प्रमाणम्। इत्थमेव—यथा त्वं पश्यसि। अविद्यावस्थायामेव भेदादिज्ञानं सर्वं च जडज्ञानमित्यसकृच्छ्रुत्वापि किमत्रैव भूतादिज्ञाने तदन्तर्गतेऽनुपपन्नं पश्यसि। न हि तत् आत्मवस्तुज्ञानम्, कूटस्थचिद्देहत्वादात्मनः। अतस्तदा असतो न ज्ञानमिति स्थितम्॥ १७॥

[1] CD (०त्सन्नाद्य)। [2] CDE (०तो विज्ञे०)।

दोषाच्च दर्शनं सत्त्वे नासत्त्वे युज्यते ततः ।
दोषोऽपि गुण एवार्थबोधकश्चेद्दृगादिवत् ॥ १८ ॥

यतो नासतो दृष्टिरतो दोषादपि सत एव दृष्टिः, नासतः । दोषोऽप्यर्थबोधकश्चेच्चक्षुरादिवत्, गुण एव न दोषः ॥ १८ ॥

ननु देशान्तरादिस्थबोधकत्वे गुणोऽपि सन् ।
अन्यथाबोधनाद्दोषस्सम्यग्बोधमपेक्ष्य तु ॥ १९ ॥
किं शुक्तावन्यथाख्यातिः किं वा रूप्येऽन्यदेशगे ।
उतोभयोर्मता रूप्ये यदि न भ्रान्तिबाधनम् ॥ २० ॥

कथम् । यतः—

दोषेऽसति न सम्यग्धी रूप्ये दोषाद्धि रूप्यधीः ।
सति दोषेऽपि सा न स्याद्दोषाद्भ्रान्तिर्हि ते मता ॥२१॥
अयुक्तभानेऽव्यापाराद्दुष्टाक्षस्सर्वदृक्सदा ।
सदृशार्थग्रहे भ्रान्तिर्यदि सा तत्र न ग्रहात् ॥ २२ ॥

इन्द्रियैरसंप्रयुक्तस्यापि वस्तुनो दोषप्रसादात्प्रतिभान इष्टे—इन्द्रियव्यापारनिरपेक्षत्वात्तद्दर्शनस्य दुष्टेन्द्रियस्सर्वं सर्वदा च पश्येत्, विशेषाभावात् । स्यान्मतम्—सादृश्यस्यापि दोषत्वात् सदृशस्यैवार्थस्य ग्रहणे दोषादपि वस्तुभानं नत्वग्रहणे नापि यस्यकस्यचिद्ग्रहणे ; न च सम्यग्धीर्दोषात्, अपि तु भ्रान्तिरेव ; अतो न सर्वं सर्वदा पश्येद्दुष्टाक्षोऽपीति । तदापि तत्र गृहीते न सा भ्रान्तिः, गृहीतत्वादेव ; अन्यथा अतिप्रसङ्गाच्च । ननु तेऽपि गृहीते भ्रान्तिः । न ह्यभात्यधिष्ठाने सा दृष्टा । सत्यम्, भात्येवाधिष्ठाने भ्रान्तिः । न तु गृहीतोऽर्थो भ्रान्तिज्ञानस्य विषयः, भ्रान्तितद्वेद्ययोर्मायात्मकत्वाभ्युपगमात् । न चाधिष्ठानस्य भ्रान्ति-

गम्यत्वम्, रूप्यवत् बाधादधिष्ठानत्वहानात्। अगृहीत-श्चात्मा अधिष्ठानम्, स्वयंप्रभत्वात्। अतो न गृहीते भ्रमो मत्पक्षे ॥ २२ ॥

सर्वात्मनाग्रहात्सा चेत्स्यात्सदा न हि कार्त्स्न्यधीः।
विशेषाग्रहणेऽप्येवं कृत्स्नो दृष्टः क्वचिन्न सः ॥ २३ ॥

गृहीतेऽप्यंशे शुक्त्यादेस्सर्वात्मना अग्रहणात् भ्रमस्स्यादिति चेत्, सदा स्यात्। न हि सर्वात्मनार्थो ज्ञानेन केनचिद्गृहीतुं शक्यः। तदुक्तम्—'सर्वात्मनार्थो ज्ञानेन केन चिन्न हि गृह्यते' इति। गृहीतेऽपि विशेषाग्रहात् भ्रमश्चेत्, सोऽपि सदा स्यात्। न हि सर्वो विशेषो ज्ञातुं शक्यः केनचिज्ज्ञानेन ॥ २३ ॥

एकस्याप्यग्रहो नात्र विशेष[1]श्शुक्लता न किम्।
सामान्यमात्रधीर्नैषा द्रव्यव्यक्तिस्सिता मिता ॥ २४ ॥

न सर्वो विशेषो ग्राह्यः; एकस्यापि ग्रहे न भ्रान्तिरिति चेत्—अत्रापि सदृशशुक्त्याद्यर्थग्रहे शुक्लतादिरेको विशेषो गृह्यत इति भ्रान्तिर्न स्यात्। न च सामान्यमात्रधीश्शुक्लतादिसदृशार्थधीः, द्रव्यविशेषस्यैव सदृशस्य प्रतीतेश्शुक्लताद्युपेतस्य। न हि सामान्यमात्रस्य सादृश्यम् ॥ २४ ॥

स सामान्यविशेषश्चेन्निर्विशेषो न दृश्यते।
योग्यस्यानुपलम्भाच्चेदभावः प्रलयं गतः ॥ २५ ॥

शुक्लतादिश्शुक्तिरूप्यादिसाधारणत्वात्सामान्यविशेषो नासाधारण इति चेत्—सत्यम्, तथापि स विशेष एव। शुक्तिरित्यपि विशेषः शुक्त्यन्तरसाधारण एव। अत-

[1] BCDE (॰श्शुक्लता)।

स्सामान्यविशेषग्रहेऽपि भ्रान्तिस्स्याच्चेत्, तत्रापि स्यात्। न च निर्विशेषो विशेषो द्रष्टुं योग्यः। तददर्शने चेद्भ्रमः, सदा स्यात्। योग्यस्यैव विशेषस्यानुपलम्भाद्भ्रम इति चेत्—तस्य योग्यत्वं किं सविशेषत्वम्, उत उपलब्धिलक्षण-प्राप्तत्वम्। तत्राद्ये कल्पे यद्वक्तव्यं तदुक्तम्—एको विशेषः सदृशग्रहणेऽपि भाति, सर्वं तु न जात्विति। द्वितीये त्वभावज्ञानानुत्पत्तेरभावो नाम ते न स्यात्॥ २५॥

तत्कथम्—

ग्रहयोग्याग्रहे भ्रान्तिस्स्याच्चेन्नाभावधीः क्वचित्।
दोषादंशाग्रहे चेत्ते नाग्रहोऽतोऽपि तु भ्रमः॥ २६॥

उपलब्धिलक्षणप्राप्तस्यानुपलब्धावभावधीरिष्टा। तत्र चेत् भ्रान्तिस्स्यात्, न क्वाप्यभावधीस्स्यात्। अतोऽभावाख्यं प्रमेयं न स्यात्। दोषादंशाग्रहे भ्रमः, अर्थाभावात्त्व-भावधीरिति चेत्—न, न ह्यग्रहो दोषात्त्वयेष्टः किंतु भ्रमः॥ २६॥

न च ग्रहस्स्वतश्शुक्तेर्येन दोषात्तदग्रहः।
स्वतो ग्रहेऽग्रहो न स्याच्छैत्यमग्नेरिवान्यतः॥ २७॥

मायां विनेति वाक्यशेषः॥ २७॥

दृशोऽंशाग्रहशक्तिं घ्नन्दोषो भ्रान्तिं करोति चेत्।
सतोरेवान्यथाख्यातावग्रहः क्वोपयोक्ष्यते॥ २८॥

इन्द्रियस्यार्थांशग्रहे शक्तिं निरुन्धन्दोषो भ्रान्तिं करो-तीति दोषादग्रहं वच्मि, न तु स तं करोतीति चेत्—तदापि नान्याग्रहात् गृहीते भ्रमः, अतिप्रसङ्गादित्युक्त-त्वात्। न च दोषादग्रहस्य विशेषः। न चाग्रहस्ते भ्रान्ति-

हेतुः, किंतु दोषः। गृहीतेंऽशे दोषोऽपि न दोषः। न चागृ[1]हीतेऽंशे दोषादप्यन्यथाख्यातिः। ख्यातो ह्यन्यथा ख्याति, नाख्यातः। न च ग्रहो भ्रान्तिहेतुः, अतिप्रसङ्गात्। न च दोषसहितो ग्रहः, ग्रहदोषयोस्संबन्धाभावात्। एकाश्रयत्वं संबन्धश्चेत्, सति दोषे सर्वो ग्रहो भ्रान्तिहेतुस्स्यात्। न च तयोरेकाश्रयत्वनियमः। किंच सतोरेवान्यथाख्यातौ भ्रम इष्टे अग्रहो नार्थवान्। ग्रह एव त्वर्थवान्, अख्यातेरन्यथाख्यात्ययोगादख्यातिकाल इव। न च गृहीते भ्रमो युक्त इत्युक्तम् ॥ २८ ॥

व्यक्त्योरैक्यधियोऽयोगाच्छुक्तिबोधे भ्रमो न चेत् [?]।
न द्रव्यशुक्तिकाव्यक्त्योरैक्यबुद्धेश्च दर्शनात् ॥ २९ ॥

यद्यपि नाख्यातेरन्यथाख्यातिस्तथापि व्यक्त्योर्ग्रहे तयोरैक्यबुद्ध्ययोगात् शुक्तिस्वरूपग्रह इदं रूप्यमिति भ्रमासंभवात् शुक्त्यग्रहो भ्रमेऽर्थवानिति चेत्—किं व्यावृत्तमात्रं व्यक्तिं ब्रूषे, उत जातिव्यञ्जकं द्रव्यम्। व्यावृत्तं चेत्, मिथो व्यावृत्तयोरपि द्रव्यशुक्ति[2]काजात्योरियं शुक्तिका द्रव्यमिति सामानाधिकरण्येन ऐक्यबुद्धिदर्शनाद्व्यक्त्योरैक्यबुद्ध्ययोगोऽसिद्धः ॥ २९ ॥

एकामपेक्ष्य जातिं ये व्यक्ती तत्रैकधीर्न चेत्।
न गौरित्येकधीर्ह्यस्ति गोव्यक्त्योः खण्डमुण्डयोः ॥ ३० ॥

एकां जातिमपेक्ष्य ये व्यक्ती तद्व्यञ्जिके तत्रैकधीर्नास्तीति चेत्—तन्न, गोव्यक्त्योः खण्डमुण्डयोर्गौरित्येकधीभावात् ॥ ३० ॥

[1] BCE (हीतोंऽशे)। [2] BCD (०का…रि०)।

जातावेवैकधीश्चेत्स्याद्गावाविति मतिर्मृषा।
व्यक्त्योस्तथापि नैक्यं चेन्नैकजातेरभेदतः ॥ ३१ ॥

न च सैका धीर्जातावेव, गावाविति गोशब्दाद्द्विवचनोत्पत्तेः। न च जातेर्द्वित्वम्, व्यक्त्योरेव तु। नन्वेवमपि न व्यक्त्योरैक्यं द्वित्वादेव—तन्न, एकजात्यभेदात्। न च जातिव्यक्त्योर्भेद एव घटपटवत्, जातिव्यक्तित्वहानात् ॥३१॥

जात्यात्मना तयोरैक्यं जातिवद्व्यक्तिवन्न चेत्।
जातिव्यक्त्योश्च नात्यन्तमैक्यं ताद्रूप्यहानतः ॥ ३२ ॥

तर्हि जात्यात्मना तयोर्व्यक्त्योरैक्यम्, न तु साक्षात् जातिवद्व्यक्तिवज्जातिव्यक्तिवद्वा। न ह्येकस्या जातेर्व्यक्तेर्वा[1] जातिव्यक्त्योर्वा तज्जात्यात्मना ऐक्यम्, किंतु स्वत एवेति चेत्—यद्यपि तज्जात्यात्मना नैक्यं जातिव्यक्त्योस्तथापि नात्यन्तमैक्यम्, जातिव्यक्तित्वहानात्। न चेदं रूप्यमित्यत्राप्यत्यन्तमैक्यबुद्धिः। अतो व्यक्त्योरत्यन्तैक्यबुद्ध्यभावो न दोषाय ॥ ३२ ॥

सामान्येतरयोर्भ्रान्तिर्मीयमानविरूपयोः।
स्याच्चेदिदं रूप्यमिति किं न स्याच्छुक्तिकामितौ ॥३३॥

इदमिति चैकवित्त्योपेतं [?] शुक्तिरूप्ययोः समानत्वात् सामान्यम्, रूप्यमिति विशेषरूपं शुक्तेर्विशिष्टत्वात्। रूप्यमिति वा सामान्यं जातिप्रतीतेः, इदमिति तद्व्यक्तिः[2]। तयोस्सामान्यविशेषयोः प्रतीयमानान्यरूपयोरपीदं रूप्यमिति यदि भ्रान्तिस्स्यात्, किं सा न स्यात् शुक्तिविशेषरूपे

[1] CD (०क्तेर्जा०)। [2] BCDE (०क्तिः। सा०)।

ज्ञातेऽपि । ननु न भवति । सत्यम्, भवतीति न ब्रूमः किंतु विरोधाभावम् ॥ ३३ ॥

शुक्तिरूप्याकृती ये द्वे तद्व्यक्त्योरेकधीर्न चेत् ।
न भिन्नजातिव्यक्त्योस्स्यादेकधीरित्यवादिषम् ॥३४॥

ये शुक्तिरूप्यजाती द्वे तत्संबन्धिन्योर्व्यक्त्योस्तयोरेव वा व्यावृत्तत्वाद्व्यक्त्योरेकधीर्नास्तीति चेत्—न तावदाद्यः पक्षः, यतश्शुक्तिरूप्यव्यक्त्योरिदं रूप्यमिति तवैकधीस्स्यादित्यवोचं पूर्वश्लोकेन । न च तत्र रूप्यमिति जातिरेव भाति, व्यक्त्यभाने तद्भानायोगात् । न सर्वात्मना अभानाद्व्यक्त्यभानम्, अतिप्रसङ्गात् । यावच्च व्यक्त्यो रूपं भाति तत्रापि भेदो भातीत्युक्तम् । अतो नाद्यः पक्षो युक्तः । नापि द्वितीयः, यतो भिन्नयोरपि जात्योर्द्रव्यं शुक्तिकेत्येकधीदृष्टिमवोचं 'न द्रव्यशुक्तिकाव्यक्त्योः' इत्यादिना । अतश्शुक्तिरूप्यजात्योर्भान्त्योरप्येकधीर्वस्संस्यात् ॥ ३४ ॥

व्याप्यव्यापकसामान्यव्यक्त्योरेकाभ्यधायि चेत् ।
शुक्तिकारजतव्यक्त्योर्द्रव्यमित्येकधीर्ननु ॥ ३५ ॥

भिन्नयोरपि जात्योर्व्याप्यव्यापकयोरेवैक्यबुद्धिरुक्ता नान्ययोरिति चेत्—नायं दोषः, शुक्तिकारूप्यव्यक्त्योर्द्रव्यं वस्त्विति वा एकधीदृष्टेः, जात्योश्च व्यक्तिभ्यामभेदाद्भेदे जातिव्यक्तित्वहानात् । अभेदेऽपि तद्भानात् भेदाभेद इति चेत्, तथापि अभेदस्य भावान्नैक्यबुद्धिविरोधो भेदरूपे भात्यपि । न च भ्रमेऽत्यन्ताभेदधीरिष्टेत्युक्तम् ॥ ३५ ॥

ययोर्जात्योस्तु ते व्यक्ती तदालिङ्गितधीर्न चेत् ।
अन्यदेतद्भवांस्त्यक्त्वा प्रकृतं भाषतेऽधुना ॥ ३६ ॥

कथं नाभाणि भातीति सर्वं सर्वत्र चापि तु।
मितान्यरूपव्यक्त्योस्स्याद्विजात्योरेकधीरिति ॥ ३७ ॥
भवांस्तु वक्ति नो भाति या जातिर्यत्र नास्ति सा।
तत्रेति नैकधीर्व्यक्त्योर्विजात्योरिति नाधुना ॥ ३८ ॥

शुक्तिरूप्यव्यक्त्योस्तज्जात्यालिङ्गिता शुक्तौ रूप्यमित्येकधीर्नास्ति इदं रूप्यमितिवदिति चेत्, प्रकृतं हित्वा अन्यदिदानीं ब्रूषे। कथमिति चेत्—यतो नोक्तं मया सर्वं सर्वत्र भातीति शुक्ति [क्तौ?] रूप्यमिति चेति, किंतु भिन्नजात्योर्भेदेन भात्योरपि व्यक्त्योरेकधीस्समस्तीत्येतावन्मात्रम्। [1]त्वं तु या यत्र नास्ति जातिर्न भाति च, सा तत्र नास्ति न भाति चेति ब्रूषे; न तूक्तलक्षणयोर्व्यक्त्योरेकधीर्न समस्तीति। अतोऽन्यद्ब्रूषेऽप्रकृ[2]तम्। अतो न मे काचित्क्षतिः। कथं च शुक्तिरूप्ययोरभेदे तव एकभावे भाने चान्याभावोऽभानं च ॥ ३६—३८ ॥

जा[3]तिं मुखं विना व्यक्त्योर्मिथ एका मतिर्न चेत्।
नेयं शुक्तिरिति ह्येका सद्व्यक्त्योर्धीर्न [4]सन्मुखम् ॥ ३९ ॥

नैकां जातिं मुखं विना अन्योन्यैक्यबुद्धिर्व्यक्त्योरिति चेत्—तन्न, शुक्तिरूप्यव्यक्त्योः शुक्तौ रूप्यमिति वा ऐक्यभ्रान्तिधीदृष्टेः। न च तयोर्जात्यात्मना सा ऐक्यबुद्धिः। तथा सद्व्यक्त्योर्द्रव्यगुणयोः शुक्लः पट इति सत्तानाश्रया ऐक्यबुद्धिः ॥ ३९ ॥

[1] B (त्वया तु)।   [2] BCD (०तो मतो न)।
[3] CD (०तिर्मु०)।   [4] BC (संमुखं)।

सामान्येतरभावात्स्यात्सद्व्यक्त्योस्तान्यथा न चेत् ।
नाकारे ह्रस्वताबुद्धेर्न जातिव्यक्तितैं तयोः ॥ ४० ॥

इयं शुक्तिरित्यादौ सामान्यविशेषभावात् सद्व्यक्त्योः शौक्ल्यपटयोश्च गुणगुणिभावादेका धीस्स्यान्नान्यथेति चेत्—तन्न, ह्रस्वोऽकार इत्येकधीदृष्टेः । न हि ह्रस्वस्य ध्वनेरकारस्य च सामान्यविशेषभावो गुणिगुणभावो वा जातिव्यक्तिभावो वा वर्णनित्यत्ववादिनाम् । जातिव्यक्तिभावशब्देन सामान्येतरभावादिरत्र विवक्षितः । तस्मात्साधूक्तम्—'सतोरेवान्यथाख्यातावग्रहः क्वोपयोक्ष्यते' इति । अस्मत्पक्षे त्वग्रहात्मकत्वात् भ्रमस्य, अग्रहोऽर्थवानित्यसकृदुक्तम् ॥ ४० ॥

किंच—

स्वतश्चेन्न मिथो व्यक्त्योरैक्यं नास्त्येव चान्यतः ।
अन्येन चेत्कृतं तत्त्वं न चेद्भ्रान्तिस्तदेकता ॥ ४१ ॥

स्वतश्चेद्व्यक्त्योरन्योन्यमेकता न स्यात्, न जातिद्वारेणापि स्यात् । जातेरभेदे, तदात्मना ऐक्यं व्यक्त्योस्स्वत एव । भेदे तु न तदात्मना ऐक्यम्, अन्यत्वादेव । अन्यत्वेऽपि तन्निमित्तं तयोरैक्यमिति चेत्—तत्कृतं चेत्तयोरैक्यम्, तत् स्वरूपमेवेति स्वत एवैक्यबुद्धिस्स्यात् । न च भिन्नयोरैक्यं साध्यमित्युक्तम् । अकृतं चेदैक्यमन्यनिमित्तं भिन्नयोर्भाति, तद्भ्रान्तमेव स्यात् । तस्माद्व्यक्त्योरैक्यमस्ति चेत्, तत् स्वत एव । अतस्तयोर्भात्योरप्येकधीर्न विरुध्यते भवताम् ॥ ४१ ॥

प्रतीयमानान्यरूपेषु वस्तुष्वप्यन्यथामतिः।
भवेच्चेन्ननु सास्माकं स्यात्सर्वत्र मुहुर्मुहुः॥ ४२॥
बाढं पश्यत वोऽभीष्टा एकानेकादिबुद्धयः।
बाध्यबाधकतां यान्ति कल्लोला इव सागरे॥ ४३॥

प्रतीयमानान्यरूपेष्वपि वस्तुषु अन्यथा चेद्बुद्धि[1] स्स्यात्—सा सर्वत्र सदा स्यादिति नस्सर्वव्यवहारलोपप्रसङ्ग इति चेत्, सत्यम्; अस्त्ययं दोषो वः, सर्वत्रानेकान्ततामिच्छता-मेकमनेकं नित्यमनित्यं सदसदित्येवंरूपा बुद्धयोऽन्योन्य-विरोधिन्यो वस्सदा भवितुमर्हन्ति यतः; न वा कदाचित् क्वचित्, अनेकान्तत्वादेव। व्यवहारो न नास्तीति चेत्, मा तर्हि चीक्लृपोऽनेका[2]न्तताम्। [3]मम तु अयथावस्तु-व्यवहारो [यथा ?] न तथा समस्ति अमायावादिनाम्। नातोऽग्रहोऽर्थवान् भवतां भ्रमे॥ ४२॥ ४३॥

रूप्याकृतिरसत्येव भाति शुक्तौ तदग्रहे।
न तु ग्रहेऽतोऽग्रहणं भ्रान्तिज्ञानोपयोगि चेत्॥ ४४॥
सत्यं न त्वन्यथाख्यातावन्यो भाति हि तेऽन्यथा।
अग्रहे[4] न ग्रहोऽपि स्याद्दूरतस्त्वन्यथाग्रहः॥ ४५॥

शुक्तौ रूप्याकृतिरसती शुक्त्यग्रहे भाति, न तु ग्रहे। अतो भ्रमेऽग्रहोऽर्थवानिति चेत्—सत्यम्, अर्थवानस्मत्पक्षे न त्वन्यथाख्यातौ। तत्र ह्यन्यस्य ख्यातोऽन्यथाख्यानं नाख्यातः। अख्याने ख्यातिरपि न स्यात्, अन्यथा-ख्यातिस्तु दूरोत्सारिता॥ ४४॥ ४५॥

[1] CDE (०स्स्यात्। सर्व०)। [2] C (०न्तत्वम्)।
[3] BC (उभयथा व्य०)। [4] CD (०हेण ग्र०)।

इदमंशो गृहीतश्चेत्स चेद्भाति ततोऽन्यथा ।
नाग्रहस्योपयोगित्वं ग्रहस्यैवोपयोगिता ॥ ४६ ॥

नन्विदमंशो गृहीतो नास्यात्यन्तमग्रह इति चेत्, स चेद्गृहीतोऽंशोऽन्यथा ख्याति तदा ग्रह एव भ्रमेऽर्थवान्नाग्रहः ॥ ४६ ॥

नन्वस्त्यंशान्तराज्ञानं सर्वाज्ञानं न किं तदा ।
अन्यस्याग्रहणाज्ज्ञाते भ्रमश्चेत्सुलभस्स वः ॥ ४७ ॥

नन्विदमंशग्रहेऽपि शुक्तेरंशान्तरस्याग्रहात् भ्रमेऽग्रहोऽर्थवानेव—न, अन्याग्रहत्वात्। अन्याग्रहात् ज्ञाते भ्रमश्चेत्, घटाद्यग्रहादपि शुक्तौ भ्रमस्स्यात् ॥ ४७ ॥

अग्रहोऽनतिभेदाच्चेदंशेऽत्यन्तभिदा क्व वः ।
अंश्येकोऽस्त्यच चेदेको जगदात्मापि वस्तुषु ॥ ४८ ॥

अंशान्तराग्रहोऽपि इदमंशाग्रहः, तयोरत्यन्तभेदाभावादिति चेत्—तुल्यमेतद्वो घटादिषु वस्तुष्वपि। इदमंशशुक्त्यंशयोरेकोऽंशी अस्ति न शुक्तिघटाद्योरिति चेत्—न, अविशेषात्। अंशिभावेऽप्यत्यन्ताभेदो नास्तीति चेत्, कोऽयं विशेषः। अंश्यात्मना एकेन अंशयोरभेद इति चेत्, सर्वस्य जगतो येनात्मना एकत्वं स जगदात्मा एको वस्सर्ववस्तुष्वस्तीत्यविशेषता। अतो नाग्रहो वो भ्रान्तिहेतुः ॥ ४८ ॥

ग्रहस्य भ्रान्तिहेतुत्वे जाग्रतस्स्यात्सदा भ्रमः ।
गृहीतेऽंशे न च भ्रान्तिर्नेदं भात्यनिदंतया ॥ ४९ ॥

न च ग्रहो वो भ्रमहेतुः, जाग्रतस्सदा भ्रमप्रसङ्गात्। न च गृहीतेऽंशे भ्रमः, न हीदमंशोऽनिदंतया भाति ॥ ४९ ॥

भातीदं रूप्यरूपं चेद्रूप्यमित्येव धीर्भवेत्।
इदंरूप्यात्मना ख्याताविदमंशो द्विधा भवेत् ॥५०॥

इदमंशो रूप्यरूपो भाति, अतो गृहीतेऽप्यंशे भ्रमोऽस्तीति चेत्—न, उक्तोत्तरत्वात् 'नेदं भात्यनिदंतया' इति। यदि च इदमंशो रूप्यरूपो भाति, रूप्यमित्येव धीस्स्यान्न-त्विदं रूप्यमिति। तदापि न गृहीते भ्रमस्स्यात्। इदमंशः स्वात्मना रूप्यात्मना च भातीति चेत्—एकदा एकस्य स्वात्मना अन्यात्मना च ख्यानायोगादतिप्रसङ्गात्, इद-मंशस्य द्विधाभावोऽभ्युपेयस्स्यात्। तदापि तथाख्यातोऽंशस्य नान्यथाख्यानम्॥ ५० ॥

रूप्यात्मा भाति योऽंशांशस्स चेद्भातीदमात्मना।
तस्य नैवान्यथाख्यानमख्यानेऽख्यातभागवत् ॥ ५१ ॥

यश्चेदमंशस्यांशो रूप्यात्मा ते भाति सोऽपीदमात्मना भाति चेत्, न तस्यान्यथाख्यानमितरांशवत्। न चेत्—नतरामख्यातशुक्त्यंशवत्। तस्मान्नान्यथा ख्याति किंचित् ॥ ५१ ॥

भाति रूप्यशिरस्कं चेत्तच्छिरस्त्वं किमुच्यताम्।
सर्वथा नेदमनिदमैक्यं चेदुक्तमुत्तरम् ॥ ५२ ॥

यद्यपीदं न भाति रूप्यरूपम्, नापीदं रूपं रूप्यरूपं च; तथापीदं रूप्यमिति रूप्यशिरस्कं तद्भातीति चेत्, किमिदं रूप्यशिरस्कत्वं नाम। किमिदमंशेऽन्तर्भूतमेव रूप्यं भाति चैत्र इव तच्छिरः, किं वा अन्यदेव। आद्ये कल्पे सशिरस्केऽपीदं धीरेव स्याच्चैत्रधीरिव सशिरस्के, न त्विदं रूप्यमिति। न हि धीः चैत्रशिर इति। अन्यत्वे तु न

तच्छिरस्त्वम्। न ह्यन्यत्वेन भाता शिरस्थेनापि घटादिना चैत्रस्तच्छिरा भाति। किं बहुनोक्तेन। सर्वथा नेदमनिदं भाति, अनिदं च नेदम्; अन्यथा रूप्यम्, इदमित्येव वा धीस्स्यान्न त्विदं रूप्यमिति। उभयथापि नेदमो रूप्यशिरस्कता। अतो नास्य रूप्यशिरस्कत्वं विद्मः। तदैक्यं रूप्यशिरस्कत्वमिति चेत्, अस्योत्तरमुक्तं पूर्वपादेनैव। कथम्। यदीदं रूप्यादभिन्नं भाति इदमो वा रूप्यम्—तदा रूप्यम्, इदमित्येव वा धीस्स्यान्न त्विदं रूप्यमिति। द्विधापि नास्य रूप्यशिरस्कतेति ह्युक्तम्। तयोर्मिथो भेदे भात्यपि तदंश्यैक्यादैक्यम्, तयोस्तदभेदादिति चेत्—न तावदेकोऽंशी द्वाभ्यामभिन्नः, एकस्मादभेदेऽस्य तद्वदेव इतराभेदायोगात्। द्वाभ्यां चाभेदे द्वित्वमेव नैकता अंशिनोऽपि। एकस्माच्चांशिनस्तयोरभेदे तद्वदेवैक्यान्न भेदो भासेत। तच्चेदं रूप्यमिति च धीर्न स्यात्, अतद्रूपत्वादंशिनस्तयोश्च तदभेदात्। अतद्रूपोऽंशी न भातीति चेत्—न भात्येव, एकस्यानेकरूपताया निरस्तत्वात्। तस्मान्न वो ग्रहोऽग्रहश्च भ्रमोपयोगी ॥ ५२ ॥

'रूप्याकृतिरसत्येव भाति शुक्तौ तदग्रहे। न तु ग्रहे' इति यदवोचः, तच्च ब्रूमः—

कथं रूप्याकृतिश्शुक्तावसती भात्यतद्ग्रहे।
ग्रहे कथंचिन्नातीति युज्यते व्यक्त्यभेदतः ॥ ५३ ॥

कथं शुक्त्यग्रहे शुक्तौ रूप्याकृतिर्भातीति युक्तम्; कथं वा शुक्तौ सा नास्तीति, तदभावधर्मि[1]शुक्त्यग्रहे। ग्रहे

[1] BCD (०धर्मी शु०)।

तु तदुभयं कथंचिद्युज्यते, व्यक्त्यभेदतः। भिन्नरूपयोरभेदादित्यर्थः। रूप्याकृतिराकारो जातिर्वा। द्विधापि तदभावश्शुक्तौ वो भाति, अन्यत्वादन्योन्याभावधर्मत्वात् भावानामभेदाच्च। शुक्तेर्भावे भाने च रूप्याकृतेरपि भावो भानं चास्ति। अतो भेदाभेदाश्रयाच्छुक्तावसती सा तत्र भातीति कथंचिद्युज्यते शुक्तिग्रहे, न त्वग्रहे ॥ ५३ ॥

शुक्तौ रूप्याकृतेर्भानं भ्रमे बाधादवैमि चेत्।
न प्रतीतिं भ्रमे वक्ति बाधस्तत्तत्त्वहानतः ॥ ५४ ॥

शुक्त्यग्रहेऽपि भ्रमकाले शुक्तौ रूप्याकृतेर्भानमसत्त्वं च बाधकादवैमीति चेत्—न तदुभयमपि भ्रमे बोधयति बाधकः, बाधकत्वहानात्। स ह्यज्ञानं नुदन्नेव तज्जरूप्यादि नुदति, नान्यत्करोतीति युक्त्या असकृदवादिष्म ॥ ५४ ॥

कश्च शुक्त्यग्रहो नाम ग्रहाभाव उतान्यधीः।
भ्रमोपयोगी नाभावो यदि तुच्छोऽग्रहो भवेत् ॥ ५५ ॥

कश्चासौ शुक्त्यग्रहो यस्त्वया भ्रमोपयोगी इष्टः। स किं ग्रहाभावः, उत अन्यवस्तुग्रहः। यद्यभावः—सोऽपि तुच्छः, भावान्तरं वा। यदि तुच्छस्तदा न भ्रमोपयोगी अग्रहः, तुच्छत्वादेव। भावान्तरत्वेऽपि ग्राह्यादिश्चेत्, तत्रोत्तरं वक्ष्यते। ग्रहान्तरं चेत्, शुक्तिग्रहान्तरं च शुक्त्यग्रहस्स्यात् ॥ ५५ ॥

अथ वस्त्वन्तरग्रहः, तत्र ब्रूमः—

अथान्यधीर्ग्रहेऽन्यस्य भ्रान्तिश्शुक्तिग्रहेऽपि ते।
अन्याग्रहे न तु भ्रान्तिश्शुक्तौ शुक्त्यग्रहेऽपि च ॥ ५६ ॥

शुक्त्यग्रहोऽन्यवस्तुग्रहश्चेत्—तस्मिन् सति, सत्यपि

शुक्तिग्रहे, तत्र भ्रमप्रसङ्गः । अन्याग्रहे तु शुक्त्यग्रहेऽपि शुक्तौ भ्रमो न स्यात् । नन्वन्यादृष्टावदृष्टेऽपि क्वचिद्भ्रमो न दृष्टः—तन्न, अन्धकारेऽन्यादृष्टावपि खद्योतादावग्न्यादि-भ्रमदृष्टेः । तत्रेन्द्रियान्तरदृष्टभावान्नान्यादृष्टौ भ्रम इति चेत्—तन्न, स्वप्नभ्रमदृष्टेः । स्वप्नस्य सर्वस्य भ्रमत्वाद्दृष्टि-हेत्विन्द्रियाप्रवृत्तेश्च न तत्र कस्यचिद्दृष्टिस्समस्ति भवतः । तस्मादन्याग्रहेऽपि भ्रमो युक्तः । स वो न स्यात्, अन्य-ग्रहश्शुक्त्यग्रह इति वदताम् ॥ ५६ ॥

शुक्तिग्रहोऽन्याग्रहणं तद्वीश्शुक्त्यग्र[1]होऽप्यतः ।
नान्याग्रहेऽग्रहश्शुक्तेरिति चेन्न सुषुप्तता ॥ ५७ ॥

शुक्तिग्रहोऽन्याग्रहः, अन्यग्रह एव च शुक्त्यग्रहः; ततोऽन्यग्रहं विना न शुक्त्यग्रह इति चेत्, तर्हि न ते सुषुप्तता संस्यात् ॥ ५७ ॥

इदमेव स्पष्टयति—

एकस्य ग्रहणं नर्ते स्यादन्याग्रहणं यदि ।
सर्वदैकग्रहप्राप्तेर्न कदाचित्सुषुप्तता ॥ ५८ ॥

स्पष्टार्थश्श्लोकः ॥ ५८ ॥

शुक्तिग्रहोऽन्याग्रहणं तद्वीश्शुक्त्यग्रहोऽपि चेत् ।
सहोभयोर्ग्रहश्चेत्स्यान्नाग्रहः किं सहोभयोः ॥ ५९ ॥

यदि शुक्तेरन्यस्य च ग्रह एवान्योन्याग्रहो नान्यः, तदा उभयोरपि सदा सहैव ग्रहभावादग्रहोऽपि सहैव स्यात् । अतो 'नान्याग्रहे ग्रहश्शुक्तेः' इत्ययुक्तमेवोक्तम् ॥ ५९ ॥

[1] CD (०हो ह्यतः ।) ।

किंच—

सर्वज्ञत्वं सदा पुंसां ग्रह एवाग्रहोऽपि चेत् ।
सदान्ध्यं जगतः प्राप्तं ग्रहोऽप्यग्रह एव चेत् ॥ ६० ॥

यदि ग्रह एवाग्रहो नान्यः, तदा सर्वपुंसां सर्वज्ञता स्यात् । ग्रहोऽप्यन्याग्रह इति नोक्तदोष इति चेत्, तर्हि सदा आन्ध्यं प्राप्तं ग्रहोऽप्यग्रह एवेति । अतस्सर्वज्ञत्वमान्ध्यमुभयं वा सर्वेषाम्, न किंचिज्ज्ञ[1]ता कस्यचित् ॥ ६० ॥

अग्रहे सति नित्यस्स्याद्ग्रहोऽनर्थक एव वा ।
ग्राह्यस्यात्मा प्रकाशस्स्यात्तदा ग्राह्यग्रहौ कुतः ॥६१॥

यद्यग्रहो ग्रहान्नान्योऽस्ति वस्तुनि ग्रहः सदैवास्ति, अस्ति चेत्; अन्यथा अन्योऽग्रहोऽभ्युपेयस्स्यात्। अतस्स नित्यस्स्यात्सर्ववस्तुषु। अतश्शुक्त्यादिग्रहसहभावात् तदग्रहसहभावः, सर्वपुंसां च सर्वज्ञता आन्ध्यं वेत्याद्युक्तं नायुक्तम् । अथवा —अग्रहेऽसति निवर्त्याभावात् ग्रहो व्यर्थ एव । ग्रहोऽर्थप्रकाशार्थ इति चेत्—अग्रहाभावे प्रकाशोऽप्यर्थस्यात्मैव स्यात्, सदाभावेऽन्यव्यक्ततत्वासिद्धेः रवेरिव । तदा स्वयंप्रकाशत्वाद्वस्तुनो ग्राह्यग्रहादिभेदो न सिध्येत् । अ[2]तोऽद्वयस्स्वयंप्रभ आत्मैव वस्तु स्यात् । तस्मान्नान्यग्रहोऽग्रहस्तु युक्तः ॥ ६१ ॥

तर्हि पूर्वोक्तो ग्रहाभाव एवाग्रहोऽस्त्विति चेत्, अत्रोच्यते—

ग्रहादन्यो ग्रहाभावो नैव वा ग्रह एव वा ।
सर्वथा ग्रहकौटस्थ्यं विभुत्वं च प्रसज्यते ॥ ६२ ॥

[1] E (०तास्य क० ) ।  [2] BD (०तोऽद्वयं ख० ) ।

स किं ग्रहाभावो ग्रहादन्यद्वस्तु, उत अवस्त्वेव, अथवा स एव ग्रहः । निरस्तपक्षोक्तिर्दोषान्तरं वक्तुम् । त्रिधापि ग्रहस्य कौटस्थ्यं व्यापित्वं वस्तुनोऽद्वयत्वं च पूर्ववत्प्रसज्यते ॥ ६२ ॥

एतदर्थ उत्तरो ग्रन्थः । तत्राद्ये पक्षे दूषणमाह—

प्रागभावादिरन्यश्चेत्तत्सत्त्वेऽपि ग्रहो न न ।
अन्यासत्त्वे तु सत्त्वं चेद्वस्तुनोऽद्वैततापतेत् ॥ ६३ ॥

ग्रहप्रागभावादिर्ग्रहादन्यश्चेत्, तद्भावेऽप्यन्यवस्तुभाव इव ग्रहस्स्यादेव ; अन्यथा अन्यवस्तुभावेऽपि न स्यात् । अन्याभावे चेद्वस्तुनस्सत्त्वम्, अद्वैतप्रसङ्गः । ग्रहः पुनरन्यभावे न भवति चेत्—न भवत्येव, विषयाभावात् । ग्रहाभावे ग्राह्यं [1]न भातीत्यान्ध्यं वा स्यात् । आत्मप्रभं वा एकं वस्तु नः सिध्येत् ॥ ६३ ॥

प्रध्वंसे प्रागभावे वा सति नास्ति विरोधतः ।
ग्रहो भेदेऽपि तत्सत्त्वे नैवस्तस्तावपीति चेत् ॥ ६४ ॥
तयोस्सतोस्स नास्तीति तावुक्तौ चेद्ग्रहो ध्रुवः ।
ग्रहे [2]सति स्तस्तौ नेति ग्रहोक्तौ तावपि ध्रुवौ ॥ ६५ ॥

अविरोधिनोर्वस्तुनोरेकभावेऽप्यन्यद्भवेत् ; ग्रहतदभावयोस्तु विरोधात् भेदेऽप्येकस्मिन् सति अन्यो नास्तीति चेत्, वद इदं त्वम्—सति ग्रहाभावे तद्विरोधाद्ग्रहो नास्तीत्यत्र नास्तिशब्देन स एव ग्रहाभावोऽस्तीत्युच्यते, उत अन्यः, किं वा ग्रहस्सः, न वा किंचित् । चतुर्धापि न ग्रहस्य काचित्क्षतिः । न ह्यन्यभावेऽन्याभाव इत्यु-

[1] BCE (न भवती॰) । [2] BC (सतीस्तः) ।

क्तम्। उक्ताभावसत्त्वोक्तौ पुनरुक्तिश्च। ग्रहोक्तौ सुतराम्। तदस्तिताग्रहे सति तदभावो नास्तीत्यचाप्येषैव गतिः॥ ६४॥ ६५॥

नैकदा चेद्ग्रहाभावौ कस्य भेदः कुतः कदा।
विरोधश्च द्वितीये हि सति भेदविरोधिते॥ ६६॥

ग्रहतदभावयोर्भेदविरोधौ चेदिच्छसि—इच्छ सहभावमपि; अन्यथा तदयोगात्॥ ६६॥

सति तत्प्रागभावे चेद्ग्रहो न स्याद्विरोधतः।
कदा स्यात्तन्निवृत्तौ चेत्तन्निवृत्तिर्ग्रहात्पृथक्[1]॥ ६७॥

यदि ग्रहो न भवेत् स्वप्रागभावे सति, तस्य सदाभावान्न कदाचिद्भवेत्। तन्निवृत्तौ भवतीति चेत्—तन्निवृत्तिरपि तद्विरोधिनी चेत्, तस्मिन् सति न भवेत्। निवृत्त्यन्तरकल्पनेऽनवस्था। अविरोधिनी चेत्, तया सह सोऽपि भवतीति तन्निवृत्तिभावेऽपि ग्रहो न भवेत्। यदि नाम तन्निवृत्तिस्तद्विरोधिन्यपि भवेत्, तद्भावे सोऽपि न भवेत्। तदापि तस्या एवासौ प्रागभावः, तद्भावेऽभावात्तदभावे च भावात्; न तु ग्रहस्य। तस्य तदाप्यजातत्वादन्योऽपि प्रागभावो वाच्यः। यदि ग्रहप्राग[2]भावः तज्जनिं विनापि न भवेत्, तदास्याप्रागभावत्वात् नृशृङ्गवज्जनिर्न भवेत्॥ ६७॥

ग्रहोऽनादिर्यतो नास्य प्रागभावोऽप्यृते जनिम्।
ग्रहे सति न च ध्वंसो ध्वस्ताध्वस्तेरनन्तता॥ ६८॥

ग्रहस्य सत्त्वप्रसिद्धेर्नृशृङ्गसाम्यमयुक्तमिति चेत्—तर्हि

[1] E (०त्तिग्र०)।　　[2] DC (०भावं त०)।

आत्मवदनादित्वम्, जनिं विनाप्यस्य प्रागभावाभावात् जन्मना सत्त्वायोगात्। तथानन्तता चास्य, सतोऽध्वंसात् ध्वस्तस्य च ध्वंसेऽनवस्थानात् प्रागभावनिवृत्तिग्रहजन्यो-रुक्तन्यायस्य ग्रहनिवृत्तिप्रध्वंसजन्योस्समत्वाच्च। जनिनाशौ विना अन्येऽपि भावविकारा न सन्ति। अतो ग्रहः कूटस्थः। तथैव सर्वे भावाः ॥ ६८ ॥

अभावौ च ध्रुवौ स्तश्चेत्कृत्स्ने नित्ये च कस्य तौ।
नेहेति चेद्ग्रहादन्यद्वाच्यं किं न ग्रहो विभुः ॥ ६९ ॥

जन्यादयो भावविकारत्वादेव नाभावानां स्युः। तेऽपि भावाश्चेदुक्तकौटस्थ्याः। तथा जन्यादयोऽपि। सर्वं चेत्कूटस्थम्, कस्य अभावा जन्यादयश्च। न च ते स्वतन्त्रा इष्टाः। ननु कूटस्थेऽपि प्रध्वंसादिवत् नेतरेतराभावस्य विरोधः। तेनेह घटादौ शुक्तिग्रहो नास्तीत्युक्तेऽस्य विभुत्वं तवेष्टं नासेधीति चेत्—इह घटादौ ग्रहो नास्तीत्युक्त्या ग्रहादन्यदिहास्तीत्युच्यते चेत्, किं ग्रहो न विभुस्स्यात्। न हि घटादौ जलादिभावे खस्य अविभुता। देशतोऽनवच्छिन्नं वस्तु विभ्वाहुर्भवन्तः। न च वस्त्वन्तरभावो देशपरिच्छेदो व इष्टः, खात्मनोरपि तत्प्रसङ्गात्। तस्माद्देशतोऽपरिच्छिन्नो ग्रहो विभुस्सिद्धः ॥ ६९ ॥

शुक्तिग्रहे च कूटस्थे सर्ववस्तुगते सति।
न स्याद्ग्रहान्तरं तच्च शुक्त्यद्वैतमतो भवेत् ॥ ७० ॥

एवमुक्तेन न्यायेन शुक्तिग्रहे कूटस्थे सर्ववस्तुविषये तिष्ठति सर्वस्य शुक्तित्वात्तच्च घटादिग्रहणान्तराणामसंभवात् शुक्त्यद्वैतं भवेत् ॥ ७० ॥

भाति चेच्छुक्तिबुद्ध्यैव सा चान्यच्च भिदात्र का ।
शुक्त्यात्मैव ग्रहोऽपि स्याच्छुक्तिबुद्ध्यैव तद्ग्रहे ॥ ७१ ॥

ननु शुक्तिग्रहवत् कौटस्थ्यादेव ग्रहान्तराणां तद्ग्राह्याणां च भावान्न शुक्त्यद्वैतता स्यात् । तथा शुक्तिग्रहस्यापि भावात् । नायं दोषः, शुक्तेस्तद्ग्रहस्यान्यस्य च वस्तुजातस्य शुक्तिधियैव भानाच्छुक्त्यात्मत्वे भेदासिद्धेः । ननु शुक्तिधिया सा न ग्राह्या । अनया गिरा तयान्यद्ग्राह्यमिति चेद्ब्रूषे—युक्तमेव तत्, सर्वस्य तद्ग्राह्यत्वेष्टेः । यद्यत्यन्ताभावो नाम कोऽप्यस्ति सोऽप्यनेनैव व्याख्यातः । तस्मान्नान्यो ग्रहात्तदभावः ॥ ७१ ॥

इतश्च—योऽन्यस्स किं ग्राह्यो ग्रहीता गृही[1]तिर्ग्रहान्तरं वा । निरस्तपक्षोक्तिर्दोषान्तरं वक्तुम् । सर्वथा अनिर्वाच्यमग्रहमनिच्छतां तेषां ग्रहान्मिथश्चान्यत्वासिद्धिः । कथम् । शृणु—ग्रहे तावद्ब्रूमः—

नाभिन्नेऽर्थे विभातीष्टं ग्रहान्यत्वं विनाऽग्रहम् ।
द्वयोरप्येकधीदृष्टेर्न द्वयोर्न बहुष्वतः ॥ ७२ ॥
नार्थभेदाद्ग्रहान्यत्वं तस्मान्नापि ज्ञभेदतः ।
ग्रहे नित्ये विभौ चेष्टे ज्ञभेदेऽप्यस्य का भिदा ॥ ७३ ॥

एकस्मिन्नर्थेऽपि स्पष्टं भाति मध्येऽग्रहं विना ग्रहान्यत्वं नेष्टम्, एकस्मिन्नपि ग्रहेऽन्यत्वप्रसङ्गात् । अतो धारावाहिकविज्ञानेष्वपि मध्ये अग्रहोऽभ्युपेयः । न चार्थभेदाद्ग्रहान्यत्वम्, द्वयोर्बहुष्वप्येकधीदृष्टेः । नापि ज्ञभेदात्, एकस्य ग्रहे स[2]त्यन्यस्याग्रहो नास्ति चेत्, कुतो ग्रहान्यत्वगतिः ।

[1] D (०हीति ग्र०) ।　　[2] CDE (०त्यन्या०) ।

असति चाग्रहे ग्रहस्य कौटस्थ्ये सर्ववस्तुविषयत्वे च संभवति सति, ऐक्यमेव न्याय्यं खार्कैक्यवत् ज्ञभेदेऽपि। न हि ज्ञातॄणां भेदेऽपि खस्य अर्कस्य वा भेद इष्टः। ग्रहस्य ध्रौव्ये ज्ञानां ज्ञातृत्वमपि न स्यादिति चेत्—अस्त्वयमपि वो दोषः, अग्रहानिष्टेः॥ ७२—७३॥

किंच—

न स्याद्ग्राह्यज्ञभेदोऽपि ग्रहैक्येऽव्यभिचारतः।
नातो ग्रहोऽन्योऽतो नैव ग्रहाभावो ग्रहान्तरम्॥७४॥

अर्थानां [1]ज्ञानां च ग्रहान्मिथश्च भेदो न स्यात्—ग्रहैक्येऽव्यभिचारतः, अग्न्यौष्ण्यवत्सहोपलब्धेः। औष्ण्यस्य त्वग्नौ दवीयसि दृष्टेऽग्रहात् भेदगतिश्च स्यात्; न त्विह तथा, सहैव सर्वस्फुरणात् कस्यचिदप्यग्रहानिष्टेः। अतो नान्यो ग्रहो ग्राह्यो ग्रहीता गृहीतिर्वा ग्रहादस्ति। अतो न ग्रहान्तरादिर्ग्रहाभावः॥ ७४॥

न च ग्राह्यो ग्रहाभावस्तद्भावेऽपि ग्रहो न चेत्।
न रूप्ये सति शुक्तौ वा तद्ग्रहौ तच्च वा न ते॥ ७५॥

भावतदभावयोर्न सहभाव इति भवद्वाक्यविरोधादपि न ग्राह्यो ग्रहाभावः, ग्रहग्राह्ययोस्सहभावस्येष्टत्वात्; अन्यथा तयोरसिद्धेः। ग्रहीतरि गृहीतौ चैतद्योज्यम्॥ ७५॥

ग्रहो न भवति ग्राह्य इत्युक्तो ग्रह एव चेत्।
ग्रहग्राह्यैकतैवोक्ता नान्या गीर्भेदिका तयोः॥ ७६॥

कस्यचि[2]दप्यन्यत्वे प्रमाणाभावाच्च न ग्रहादन्यो ग्रहाभावः। कथम्। ग्रहादन्यो ग्रहाभावश्चेत्, सोऽभावबुद्धैव

[1] BCDE (ज्ञानानां)। [2] CD (०दन्य०)।

ग्राह्यः। तच्चासिद्धे भेदे ग्रहग्राह्ययोर्ग्रहो न भवति। ग्राह्य इत्यनया अन्यत्वप्रमया ग्रह एव चेदुक्तः, तयोरेकतैव पूर्वप्राप्ता उक्ता स्यात्। प्राप्ता हि तयोरेकता, एकस्यैव भेदं विना ख्यातेः। न च सिद्धे भेद इयं भेदप्रमा, वैफल्यात् भेदप्रमाया अन्यस्या अभावाच्च। गौणशब्देनाच धीर्विवक्षिता, धीपूर्वत्वाद्वाचः। उभयं वा। नन्विष्टो भिन्नयोरितरेतराभावः, अतोऽन्यैव भेदधीरिति चेत्—न, तस्या अपि भेदे सिद्धेऽसिद्धे चाभेदकत्वात्॥ ७६॥

एवं सर्वेषु भावेषु सजातिषु विजातिषु।
नान्योन्याभाव इत्येको भावो भावान्तरं न तु॥७७॥

अस्मिन्नभावे प्रत्युक्ते प्रागभावादयः कथम्।
न ह्यृते तमभावानां मिथो भावाच्च भिन्नता॥७८॥

अभावस्याभावे भेदस्य च भेदे अनवस्था। अतो ग्रहान्नान्यो ग्रहाभावः॥ ७८॥

नाममात्रभिदैव स्यात्स्वाभावो ग्रह एव चेत्।
अभावापह्नवेऽप्येवमप्यभावमतिष्ठिपम्॥ ७९॥

स एव ग्रहस्तदभावश्चेत्—नामभेद एव, नार्थभेदः। तथा अभावापह्नवे[1]ऽपि। अतो व्यवहारलोपः, अभावं विना तदसिद्धेः। तं च व्यवहाराङ्गं स्थापितवानस्मि। अतो नापलपनीयस्सः॥ ७९॥

आत्मनोऽपरिणामश्चेदग्रहोऽभ्युपगम्यते।
प्रत्युक्तोऽपरिणामोऽपि परिणामान्तरं यदि॥ ८०॥

[1] E (॰वेप्यव्यवेतो॰)।

आत्मैव चेत्सदाभावात्सदा मुक्त्यग्रहो भवेत् ।
तस्मादग्रह इष्टश्चेदनिर्वाच्यस्स इष्यताम् ॥ ८१ ॥

"आत्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि" इत्युक्तत्वात् आत्मनोऽपरिणामोऽग्रह इति चेत्—स किं परिणामान्तरम्, उत आत्मैव। आद्यः कल्प उक्तेनैव न्यायेन प्रत्युक्तः। आत्मैव चेत्, तस्य सदाभावादनिवृत्तेश्च सदा मुक्त्याद्यग्रहभावात् सदा आन्ध्यं जगतः। सत्यप्यग्रहेऽर्थो भाति चेत्, स भ्रमः संशयो वा। सम्यग्धीश्चेत्—व्यर्थो वोऽग्रहः, अकिंचित्करत्वात्। अतोऽग्रह इष्यते चेत्, अनिर्वचनीयस्स एष्टव्यः ॥ ८०—८१ ॥

सदृशार्थग्रहे भ्रान्तिरित्यवोचोऽच वच्मि ते ।
सदृशार्थग्रहो भ्रान्तेरुपकारी क्व कथ्यताम् ॥ ८२ ॥

सदृशार्थग्रहे भ्रान्तिरित्यवादीः। तत्र पृच्छामि—स सदृशार्थग्रहो भ्रान्तेः कस्मिन्नंशे तेऽर्थवानिति ॥ ८२ ॥

रूप्यबोधेऽन्यथात्वे वा बोधे चेद्बोधयानयोः ।
धूमाग्न्योरिव संबन्धमन्यपक्षे कुतोऽस्य धीः ॥ ८३ ॥

किं देशान्तरादिगतरूप्यबोधे, किं वा तद्बोधस्य अन्यथात्वे। बोधे चेत्, रूप्यसदृशार्थयोरग्निधूमयोरिव संबन्धो वाच्यः। अन्यथात्वे चेत्, रूप्यधीहेतुर्वाच्यः ॥ ८३ ॥

सादृश्यादुपमानं वा स्मृतिर्वा तत्र न भ्रमः ।
दोषाद्भ्रमश्चेत्किं तेन सदृशार्थग्रहेण ते ॥ ८४ ॥

सदृशग्रहणे व्याप्तिग्रहं विनापि तत्सदृशज्ञानदृष्टेः सादृश्यस्य च विषयदोषत्वात्तेनान्यथा रूप्यबोधस्स्यादिति चेत्—न, यतः सादृश्यादुपमानं स्मृतिर्वा भवेत्। न

तयोर्भ्रमत्वं प्रसिद्धम्। सादृश्यस्य दोषत्वे तयोरपि भ्रमत्वं स्यात्। तस्मान्न सदृशधीर्भ्रमकृत्। चक्षुरादिदोषान्तरा-दूष्येऽन्यथाग्रहो न केवलात् सदृशार्थग्रहादिति चेत्—सोऽस्तु दोषान्तरादेव, तस्यैव भ्रमान्वयात्। न तु सा[1]दृश्याच्च, अनन्वयस्योक्तत्वात्। सादृश्यं विनापि भ्रमदृष्टेश्च ॥ ८४ ॥

कथम्—

शङ्खः पीतः पयस्तिक्तं तमो भानुर्नभोऽसितम्।
द्वाविन्दू स्वरितोऽकार इति धीस्सदृशात्कुतः ॥ ८५ ॥
सर्वत्र किंचित्सादृश्यं सुसादृश्यं न कुत्रचित्।
सर्वत्रैव भ्रमो नो वा वस्तुमात्रग्रहे तथा ॥ ८६ ॥

शङ्खादिष्वपि किंचित्सादृश्यमस्ती[2]ति चेत्, तत्सर्ववस्तुष्वस्ति। सुसादृश्यं सर्वत्र नास्तीति चेत्, तन्न शङ्खादिष्वपि क्वचिदस्ति। अतः किंचित्सादृश्यात्सर्वत्र भ्रमो नो वा, उक्तेष्वपि सुसादृश्याभावात्। अत्रासादृश्यजत्वनिर्णया-दन्यत्र सुसादृश्ये सत्यपि न तज्जो भ्रमस्स्यात्। वस्तु-मात्रग्रहाच्चेत्—भ्रमस्सर्वत्र [3]न वा उक्तेष्वपि, अविशेषात्। तस्मात् 'अयुक्तभानेऽव्यापाराद्दुष्टाक्षस्सर्वदृक्सदा' इत्येतन्न परिहृतम् ॥ ८६ ॥

मूढे निमीलिताक्षे च भ्रमोऽतीते ग्रहे स चेत्।
भ्रमग्रहौ सकृच्चेद्द्वौ नैकत्रान्यत्र चेद्ग्रहः ॥ ८७ ॥
ग्रहात्किं स्याद्भ्रमस्यैवं ग्रहांशोऽपि भ्रमेऽस्ति चेत्।
किं ना[4]न्योऽंशो ग्रहो मैवमनक्षात्मग्रहो हि सः ॥ ८८ ॥

[1] BCD (०दृ…क्ता०)। [2] BCD (०ति…ष्व०)।
[3] BCD (न…वि०)। [4] BC (०न्यो…मै०)।

सदृशार्थग्रहो वस्तुमात्रग्रहो वा अतीतो भ्रमहेतुश्चेत्, स सकृज्जातस्सदा ऊर्ध्वं भ्रमं कुर्यात्। अतस्सुषुप्तो निमीलिताक्षो मूर्च्छितश्च भ्रमेदित्यक्षव्यापारं विनापि दोषादेव भ्रमसिद्धेः 'दुष्टाक्षस्सर्व[1]दृक् सदा' इत्युक्तं युक्तमेव। भ्रमग्रहौ स्तः सहैवेति चेत्—तन्न, सव्येतरगोविषाणवद्धेतुहेतुमत्त्वायोगादेकमनसो युगपज्ज्ञानद्वयायोगाच्च। न च सहैकस्मिन्नर्थे भ्रमग्रहौ स्तः, विरोधादतिप्रसङ्गाच्च। अ[2]तो भिन्नार्थौ चेत्, ग्रहात् भ्रमस्य कोऽर्थः। न हि रूपग्रहाद्रसभ्रमः। अथोक्तदोषभीत्या एकमेव ग्रहभ्रमांशं ज्ञानमिच्छसि, एवमप्येकत्वादेव न हेतुतद्वद्भावः। भ्रमस्य वा ग्रहत्वम्। भ्रमोऽपि ग्रह एव, अक्षासंयुक्तग्रहस्तु ; अतो गोबलीवर्दवद्भेदव्यवहारोऽपि ॥ ८७—८८ ॥

भ्रमांशं च ज्ञानं भ्रमज्ञानमिति चेत्, अत्रोच्यते—

भ्रमश्चेत्स्वार्थयोग्याक्षयोगजातग्रहांशकः।
सोऽक्षाभावान्न हि स्वप्नेऽविशेषेऽग्नौ रसभ्रमः ॥ ८९ ॥

रूपभ्रमस्य रूपग्रह एवांशो ग्रहमात्रं वा। द्विधापि न स्वप्ने रूपादिभ्रमस्स्यात्, तत्र सर्वाक्षोपरमात् तज्जरूपादिग्रहासंभवात्। ग्रहमात्रपक्षे अग्नौ दृष्टेऽपि रसभ्रमस्स्यात् ॥ ८९ ॥

स्वप्नेऽप्यवर्तमानस्य ग्रहश्चेन्मनसान्यथा।
किं नेह नेह निद्रा चेद्भ्रमस्सोऽपि ह्ययोगजः ॥ ९० ॥

स्वप्नेऽपि मनसैव अवर्तमानस्य रूपादेर्ग्रहाद्रूपादिभ्रमः स्यादिति चेत्—तन्न, मनोमात्रेणेह जागरितेऽवर्तमानस्य

[1] BC (॰दृक्...त्यु॰)। [2] BC (॰तो...र्थौ)।

रूपादेश्चापरोक्षग्रहादृष्टेः स्वप्नेऽपि तदयोगादपरोक्षरूपादिभ्रमासिद्धेः। न च परोक्षग्रहोऽप्यवर्तमाने मनसा लिङ्गादि विना क्वच दृष्टः। इहादृष्टोऽपि ग्रहो निद्रादोषात् स्वप्ने समस्तीति चेत्, सोऽप्यवर्तमानग्रहो भ्रम एव असंप्रयोगजत्वेन दोषैकहेतुत्वात् ॥ ९० ॥

मनोमात्रेण तद्योग्यग्रहे स्वप्नेऽपि चेद्भ्रमः।
अतद्योग्यभ्रमो न स्यान्न चेच्छ्रोत्राद्रसभ्रमः ॥ ९१ ॥

मनोमात्रेण तद्योग्यस्य ग्रहे स्वप्नेऽपि भ्रमो नाग्रह इति चेत्, तदयोग्यरूपादिभ्रमो न स्यात्—न चेच्छ्रोत्रादेः रसादिभ्रम इष्यते। मनोमात्रेण स्वप्ने कस्यचिद्ग्रहोऽस्तीत्येतच्च निरूप्यम् ॥ ९१ ॥

स्वप्नेऽप्यवर्तमानत्वाद्बहुत्वात्स्वपरात्मना।
दृष्टानां दोषदृष्टत्वात्प्रबोधो न कदाचन ॥ ९२ ॥

यदि स्वप्नेऽप्यवर्तमाना रूपाद्यर्था विनाप्यक्षैर्निद्रादोषेणैव भान्तोऽन्योन्याध्यासेन भान्ति—तेषामवर्तमानत्वादेवाक्षायोग्यत्वात्, बहुतरत्वाद्रूपादीनां चैकाक्षजज्ञानायोग्यत्वात् युगपदनेकाक्षजानेकज्ञानासंभवात्, दोषदृश्यत्वाच्च, तेषां स्वरूपग्राही सर्वस्वप्नभ्रमबाधात्मा जाग्रद्बोधो न जातु स्यात्। नाप्येकदा अन्योन्याभावग्राही वा तद्बोधः, अनन्तत्वात् ॥ ९२ ॥

स्याच्चेद्दोषाच्च सम्यग्धीर्नातो भ्रान्तिः कदाचन।
दोषस्यादोषतैव स्यादन्यतो नियमे तथा ॥ ९३ ॥

तेषां दोषदृश्यत्वात्तत्रैव तत्सम्यग्धीरपीति चेत्, न जात्वतो भ्रम इति अदोष एव स्यात्। न चाक्षवत्स्वरूप-

बोधकोऽन्यथाबोधकः। अतिप्रसङ्गाच्च। स दोषान्तरेण अन्यथा बोधकश्चेत्, दोषान्तरग्राह्योऽपि बाधायोगस्समानः। दोषान्तरकॢ[1]प्तौ चानवस्था। दोषान्तरजभ्रमबाधे च स्वप्न एव बाधस्स्यात्, न तु स्वप्नस्य। अतो निद्रादोषस्याभावे भावे च न स्वप्नबाधः। तथान्यभ्रमबाधोऽपि ॥ ९३ ॥

न च रूप्ये भ्रमो युक्तो न रूप्ये शुक्तिधीर्यतः।
नेदं रूप्यमियं शुक्तिरिति यस्माच्च बाधधीः ॥ ९४ ॥

शुक्तौ [2]रूप्ये द्वयोर्वान्यथाख्यातिरिति विकल्प्य 'रूप्ये चेन्न भ्रान्तिबाधनम्' इति सप्रपञ्चमुक्त्वा तदेवेदानीं युक्त्यन्तरेणाह। न च देशान्तरादिस्थे रूप्येऽन्यथा ख्यातिः— सा शुक्तिरिति बुद्ध्यदृष्टेरिदं रूप्यमिति च दृष्टेः, नेदं रूप्यमियं शुक्तिरिति बाधेष्टेश्च ॥ ९४ ॥

[3]रूप्ये चेदन्यदध्यस्तं रूप्यधीर्बाधिका भवेत्।
सम्यग्धिया यथादेशकालं [4]रूप्यं मितं भवेत् ॥ ९५ ॥

तर्ह्यस्तु शुक्तावन्यथाख्यातिः, तन्न। कथम्। शृणु—

शुक्तौ न रूप्यधीर्भ्रान्तौ रूप्यदृष्टेरसंभवात्।
दृष्टेऽपि रूप्ये न भ्रान्तिर्यथावत्तस्य दर्शनात् ॥ ९६ ॥

अय[5]थादर्शनात्स्याच्चेदयथादर्शनं वद।
किं रूप्यांशाग्रहः किं वा तद्देशाद्यनवग्रहः ॥ ९७ ॥

रूप्यांशाग्रहणे रूप्यधीश्शुक्ताविति गीर्मृषा।
रूप्यांशधीश्शुक्तिकायामिति वाच्यं तदा भवेत् ॥ ९८ ॥

[1] B (०प्तौ...न०)। [2] BC (रू...यो०)।
[3] B (...वेदन्य०)। [4] C (रूप्यमि ०)।
[5] C (०थार्थ...च्चे०)।

रूप्यांशे रूप्यबुद्धिश्चेत्तत्राप्यंशाग्रहे कथम् ।
अंशे चेद्रूप्यधीरंशे भ्रान्तिश्शु[1]क्तौ कथं भवेत् ॥ ९९ ॥
अयथादर्शनं रूप्ये तद्देशाद्यग्रहो यदि ।
तद्देशाद्यग्रहे रूप्यबुद्धिश्शुक्तौ कथं भवेत् ॥ १०० ॥
रूप्यस्य देशापेक्षत्वाच्छुक्तिदेशस्य दर्शनात् ।
शुक्तौ रूप्यमिति स्याच्चेन्नैवं रूप्ये हि रूप्यधीः ॥ १०१ ॥
रूप्यं हि देशापेक्षं ते न तद्धी रूप्यदे[2]शगा ।
[3]शुक्तौ रूप्यमिति स्याद्धीस्तदा शुक्तौ न रूप्यधीः ॥ १०२ ॥
नायथादर्शनाच्छुक्तेश्शुक्तौ रूप्यभ्रमो भवेत् ।
रूप्यदृष्टेर्विवेकेनाविवेके ह्यन्यथामतिः ॥ १०३ ॥
शुक्ते रूप्याद्विवेके चेच्छुक्ते रूप्यं विविच्यते ।
अन्योन्याश्रयतैवं स्याच्छुक्तिरूप्यविवेकयोः ॥ १०४ ॥

रूप्ये शुक्तौ चान्यथाख्यातिं निरस्य, उभयोस्तां निरस्यन्नाह—

नोभयोरन्यथाख्यातिस्तद्ग्रहे नाप्यतद्ग्रहे ।
अविवेकग्रहात्स्याच्चेत्कोऽविवेको ग्रहे द्वयोः ॥ १०५ ॥

सति ग्रहे नाविवेक इत्यर्थः ॥ १०५ ॥

अविवेकोऽंशबोधाच्चेदेकांशेऽन्यांशधीर्भवेत् ।
न त्विदंरूप्यबुद्धिस्स्याद्रूप्यस्याबोधतोऽंशिनः ॥ १०६ ॥
शुक्तिरूप्यांशयोर्बोधात्सामान्येतररूपयोः ।
स्यादिदंरूप्यबुद्धिश्चेदसत्ख्यातिस्तु रूप्यधीः ॥ १०७ ॥

[1] BC (०क्तौ...॥) ।    [2] BC (०शग...।) ।
[3] B (...मि०) ।

कथम्—

नैकोऽंशो रजतं न द्वौ नांशि रूप्यं द्वयोरपि।

न चान्यरूप्यजा बुद्धिर्जाता तत्रेत्यसन्मतिः ॥ १०८॥

नैकैकोऽंशो रूप्यम्, नापि द्वौ, नाप्यंशि तयोः। न चान्यरूप्यधीस्तयोर्भवति, रूप्यस्य ग्रहेऽग्रहे तदंशग्रहे च तद्विषयशुक्ताविवांशयोरप्यसंभवस्य तुल्यत्वात्। ततस्तयोर्न रूप्यधीस्तद्धीस्स्यात् ॥ १०८ ॥

शुक्तिरूप्यांशबोधेऽपि तद्विवेकात्कथं भ्रमः।

अविवेकग्रहात्स्याच्चेत्कोऽविवेकग्रहो मतः ॥ १०९ ॥

विवेकशून्यग्रहणं ग्रहणं वाविविक्तयोः।

विवेकोऽपि स्वरूपं चेत्तद्ग्रहे काविवेकधीः ॥ ११० ॥

अविवेकोऽपि रूपं चेत्तद्ग्रहे तु सदा भ्रमः।

अरूपत्वेऽंशयोर्बुद्धिरविवेकग्रहः कथम् ॥ १११ ॥

विवेकशून्योऽविवेकयुक्तो वा ग्रहोऽविवेकग्रहः। तत्र विवेकोऽप्यंशस्य स्वरूपं चेत्, तद्ग्रहे नाविवेकग्रहः; वस्त्वन्तरं चेत्—तदग्रहान्नांशभ्रमः, अतिप्रसङ्गात्। अविवेकोऽप्यंशस्वरूपं चेत्, तद्ग्रहोऽविवेकग्रह इति सदा भ्रमस्स्यात्। अस्वरूपत्वेऽंशग्रहो नाविवेकग्रहः। अविविक्तग्रहोऽस्तीति चेत्, कोऽर्थः। यद्यविवेकस्तद्योगश्च गृह्यत इति, तथापि नांशे भ्रमो युक्तः। न ह्यन्यवस्तुग्रहादन्यत्र गृहीते भ्रमः, अतिप्रसङ्गात् ॥ ११०—१११ ॥

तस्मान्न रूप्यधीश्शुक्तौ रजते नापि शुक्तिधीः।

नोभयोरेकधीर्नान्यदेशादावन्यधीर्भ्रमः ॥ ११२ ॥

नोभयोः एकस्य रूप्यस्यान्यस्य वा तयोर्वैकस्य

[1]धीः एकधीः । नान्यदेशादावन्यस्य देशादेस्तत्स्थस्य वा धीः अन्यधीः ॥ ११२ ॥

अतोऽन्यथाख्यापिका धीर्नान्यथाख्यातिरिष्यते ।
अन्यथा ख्याप्यते चार्थ इति गीश्च विरोधिनी ॥ ११३ ॥
रूप्यबुद्ध्यापि चेच्छु[2]क्तिर्ज्ञायते रूप्यमेव सा ।
न चेत्सा रजतं रूप्यबुद्ध्या ज्ञायेत सा कथम् ॥ ११४ ॥
रूप्यं चेत्तद्धिया भाति तथा तद्भाति नान्यथा ।
न तया भाति चेत्किंचित्सा कथं ख्यातिरुच्यते ॥ ११५ ॥

द्वितीयपक्षदूषणमुपसंहरति—

यन्न ख्याति न तत्ख्याति यत्ख्याति न तदन्यथा ।
अन्यथाख्यातिगीस्तस्मान्माता वन्ध्या ममेतिवत् ॥ ११६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्यपाद-
शिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ
तृतीयोऽध्यायः ॥

---

[1] C (धीः । ना॰)।　　[2] BCE (॰क्तिर्जा॰)।

# अथ चतुर्थोऽध्यायः ।

अथान्यथा भवेद्वा धीस्तान्यथाख्यातिरिष्यते ।
ब्रूह्यन्यथात्वं बुद्धेः किमन्यथाख्यापनं न चेत् ॥ १ ॥
रूप्यधीजन्म शुक्तौ चेच्छुक्तिजा रूप्यधीः कथम् ।
तज्जास्तु रूप्यधीश्चेत्सा नान्यथा रूप्यबुद्धिता ॥ २ ॥

विनैवान्यथाख्यापनं शुक्तौ रूप्यधियो जन्म धियोऽन्यथाभाव इति चेत्—नन्वेवं शुक्तिजा चेत्सा सम्यक्शुक्तिधीरेव । नायं दोषः, अन्यकारणत्वात् । यथा बडबायां जातापि गर्दभेन न बडबा, अपि त्वश्वतरी—एवं दोषेण शुक्तौ जातापि न शुक्तिसम्यग्धीस्स्यात् । अस्त्वशुक्तिधीस्सा, अरूप्यजा चेत्कथं रूप्यधीः । यथाश्वतर्यामजाताप्यश्वतरी, एवमिति चेत्—नैवम्, अत्र प्रसिद्ध्यभावात् । न ह्यरूप्यजा इह काचिद्रूप्यधीः प्रसिद्धा । अश्वतरीजाता तु नास्त्यश्वतरी । रूप्यधीरनुमावदमेयजा, आपरोक्ष्यं च दो[1]षजत्वादिति चेत्—सा अनुमावत्सार्था युक्ता । न चात्र रूप्यमस्ति । अस्ति चेदभ्रमस्स्यात् । न च रूप्यं विना तद्धीरिति ह्युक्तम् ॥ २ ॥

रूप्याकृतित्वात्तद्धीश्चेन्नातद्योगे तदाकृतिः ।
संस्काराच्चेत्स्मृतिस्सा स्यात्सा बाह्ये बाह्यवादिनाम् ॥ ३ ॥

अरूप्यजापि रूप्याकृतित्वाद्रूप्यधीस्सेति चेत्—तन्न,

[1] CD (०षला०) ।

तद्योगं विना तदाकृतित्वायोगात्। संस्कारात्केवलाद्रूप्याकृतिस्स्येति चेत्, सा स्मृति[1]स्स्यात्। स्मृतिश्च [2]बाह्येऽर्थे बाह्यवादिनाम्, अबाह्यवादिनां तु अबाह्येऽन्तःकरणे। तदुक्तम्—"अनालिङ्गितबाह्यार्था बुद्धावेव स्मृतिर्यतः" इति। द्विधापि न रूप्यधीश्शुक्तिजा ॥ ३ ॥

तदाह—

बाह्यरूप्यगता तद्धीस्तत्स्थत्वान्नैव शुक्तिगा।
तथान्तराप्यान्तरत्वान्नैव स्याद्बाह्यशुक्तिगा ॥ ४ ॥
अतो न रूप्यधीश्शुक्तावविवेके तयोरपि।
रूप्येऽपि रूप्यधीर्न स्यात्तदा शुक्तौ तु सा कुतः ॥५॥

यतो द्विधाप्यशुक्तिगैव रूप्यधीरतस्तयोस्सत्यप्यविवेके न रूप्यधीश्शुक्तौ भवेत्। स[3]त्यविवेके रूप्येऽपि रूप्यधीर्न स्यात्, किं पुनस्सा शुक्तौ ॥ ५ ॥

कथम्। शृणु—

कोऽविवेकोऽग्रहः किं वा विपरीतग्रहोऽथवा।
अर्थयोरविवेकोऽर्थकृतो [ते ?] दधिगुडादिवत् ॥ ६ ॥
अग्रहे न विवेकस्स्याद्विपरीतग्रहोऽस्थितः [?]।
कृते नान्यतरज्ञानं नातो भ्रान्तिस्तथा ग्रहे ॥ ७ ॥

स्पष्टार्थौ ॥ ६—७ ॥

शुक्तिधीरेव किं न स्याद्रूप्यधीश्शुक्तिजा यदि।
तस्माद्धियोऽन्यायाभावो नान्यचान्यधियो जनिः ॥८॥

यदीयं रूप्यधीश्शुक्तौ तामालम्ब्य जाता शुक्तिधीरेवेयं

[1] B (०स्स्यात्। स्मृतिश्च न भ्रमः। स्मृ०)।
[2] C (बाह्ये वादिनाम्)।　　[3] CD (०त्यप्यवि०)।

युक्ता, न रूप्यधीः। न ह्यशुक्तिधीश्शुक्त्यालम्बना इह क्वापि प्रसिद्धा अश्वतरीव बडबायां जाता। न चेयमेव धीरुदाहरणम्, असिद्धत्वात्—शुक्त्यालम्बनत्वस्य रूप्यधीत्वस्य[1] च [2]सिषाधयिषितत्वात्। न चासिद्धमसिद्धेन तेनैव तत्साध्यम्। कथं चेयं शुक्त्यालम्बना अज्ञायि, अनया चेन्नाज्ञायि शुक्तिः। न हि धीः क्वापि वः प्रत्यक्षा, अनुमेया तु। अतस्सा रूप्यसंविल्लिङ्गा चेत्, रूप्यालम्बनैवानुमेया इतररूप्यधीवत्। शुक्त्यालम्बनैव चेदनुमेया, शुक्तिसंविल्लिङ्गैवेति शुक्तिधीरेव सा युक्ता। अन्यसंविदा चेदन्यालम्बना धीरनुमेया, अनियमस्स्यात्। न चेहास्ति रूप्यसं[3]वित्, रूप्याभावात्। अतश्शुक्तिभावात् तत्संविदेवास्ति चेत्, अस्ति; नास्ति चेत्—न क्वापीह धीरनुमेया, अलिङ्गत्वात्। अतोऽन्यचान्यधियो जन्म धियोऽन्यथाभाव इत्ययुक्तम् ॥ ८ ॥

तत्स्थापि रूप्य[4]धीर्दोषाच्छुक्तिगेव विभात्यतः।
सान्यथाख्यातिरिति चेत्कश्चिद्ब्रूयात्स पृच्छ्यताम् ॥ ९ ॥
किं तथासौ स्वयं भाति किं वा बुद्ध्यान्ययेयते।
न स्वयं रूप्यनिष्ठत्वान्नात्मानं भासयत्यपि ॥ १० ॥
भास्यत्वेन समाप्तत्वाद्भास्यत्वे भासिका न सा।
भासिका चेन्न सा भास्या नानंशत्वात्सहोभयम् ॥ ११ ॥
रूप्यधीर्नान्यबुद्ध्यापि शुक्तिगेव विभास्यति।
न शुक्ते रूप्यबुद्धेश्च ग्रह एकधिया यतः ॥ १२ ॥

[1] D (०स्य धीत्वस्य च)। [2] BC (सिसाध०)।
[3] BCD (०वित् रूप्यसंवित् रू०)। [4] BC (०धीदोषात्)।

शुक्त्यग्रहे शुक्तिगेव कथं भास्यति रूप्यधीः।
रूप्यबुद्ध्यग्रहेऽप्येवं धीग्रहो नान्यया धिया ॥ १३ ॥
ग्रहणेऽपीवशब्दार्थः कोऽन्यथाग्रहणेऽसति।
अख्यातिरात्मख्यातिश्च प्रत्युक्ते तु दिशानया ॥ १४ ॥

शुक्तिरूप्यधियोरेकया द्वाभ्यां वा ग्रहेऽपि शुक्तिगेवेत्यस्य 'इव' शब्दस्य कोऽर्थः, अन्यथाग्रहणे प्रत्युक्ते मायां मुक्त्वा ॥ अख्यात्यात्मख्यातिपक्षौ चोक्तन्यायेन प्रत्युक्तौ। तयोरप्यन्यथाख्यानमेष्टव्यम्, अन्यथा भ्रमव्यवहारायोगात्। तथाहि—अख्यातिवादिनोऽपि शुक्तिरूप्ययोः पृथक्सतोः अपृथगवभासाभिमान इति केचित्। अनुत्पन्न एवैकत्वज्ञान उत्पन्नभ्रम इति चान्ये। अपरे तु तृतीयं मानसमैक्यज्ञानमाहुः। यदा त्वविवेकग्रह एव भ्रमो विवेकग्रहश्च तद्बाध इति, तदा 'कोऽविवेको ग्रहे द्वयोः', 'कोऽविवेकग्रहो मतः' इत्यादौ कृतेनाविवेकादिनिरूपणेन प्रत्युक्तः। आत्मख्यातिपक्षेऽपि रूप्यादि[दिः?]धियश्चेत् स्वरूपम्, न भ्रमः; अस्वरूपं चेत्, स एव तेनात्मना ख्याति न तु धीः। न ह्यन्यस्य भानमन्यकर्तृकम्। अतो 'यन्न ख्याति' इत्याद्युक्तदोषोऽत्रापि तुल्यः। अथ ब्रूषे—धीरेव आन्तरा बहिरिव भाति, न तु बहिः किंचिद्भातीति। 'यदन्तर्ज्ञेयतत्त्वं हि बहिर्वदवभासते' इति ह्युक्तम्। इदमपि 'इवशब्दार्थः कोऽन्यथाग्रहणेऽसति' इत्ये[1]तेनैव प्रत्युक्तम्। अख्यातिपक्षेऽपि 'इव' शब्दप्रयोग इदमेवोत्तरम् ॥ १४ ॥

[1] C (॰त्येकेनै॰)।

इतश्च नाख्यातिपक्षो युक्तः, यतः—

न ग्रहस्मृतितन्मेयविवेकोऽपि ग्रहान्तरात्।

अशक्तेरनवस्थानान्नातोऽख्यातिर्भ्रमो मतः॥ १५॥

गृह्यमाणस्मर्यमाणयोरविवेको भ्रमस्तद्विवेको बाध इति चायुक्तम्। न गृह्यमाणस्मर्यमाणाविवेको युक्तः ग्रहण[1]-स्मरणयोस्सतोः, अन्यथा सदाविवेकप्रसङ्गात्। न हि तयोर्विवेको ग्रहान्तरात्, अशक्तेरनवस्थानाच्च। कथम्। शृणु—यदि शुक्तिरूप्यग्रहणस्मरणाभ्यां स्वार्थयोश्शुक्ति-रूप्यतया गृह्यमाणस्मर्यमाणतया वा न विवेकस्सिद्धः, तदा कस्य कुतो ज्ञानान्तरात् तत्सिध्येत्। न च तद्विषयं ग्रहणं स्मरणं वा एकं समस्ति, गृह्यमाणस्मर्यमाणत्वादेव तयोः। द्वे चेज्ज्ञाने तद्विषये, ताभ्यामपि पूर्वाभ्यामिव न स्याद्विवेकः; अन्यथा पूर्वाभ्यामपि स्यादित्युत्तरेऽप्यर्थे[रे व्यर्थे?]। न चाच [2]द्वे बाधकज्ञाने। यदि स्तां स्वप्नादिष्वनन्तानि स्युः युगपत्। ज्ञानविषयविवेकाय ज्ञानान्तरापेक्षायां तस्यापि ज्ञानान्तरापेक्षा समानेत्यनवस्था स्यात्। स्मृतिग्रहकर्मत्वे गृह्यमाणस्मर्यमाणते, न च स्मृतिग्रहौ स्वकर्मते गमयतः; अतो ज्ञानान्तरगम्य एव तत्कर्मत्वविवेक इति चेत्—न, एतदनुरूपबाधाद्यनिष्टेः। न हि सिद्धविवेकयोश्शुक्ति-रूप्ययोः ग्रहादिकर्मत्वविवेककारी दृष्टो बाधः; शुक्त्याद्य-विवेके कस्य ग्रहादिकर्मता विविच्येत। न चार्थयोस्तज्ज्ञान-योश्च विवेक एकज्ञानलभ्यः, अयोग्यत्वात्। ग्रहादिकर्मत्व-विवेकश्चेत् बाधः, ग्रहणस्मरणकर्मत्वयोर्गृहीतयोस्तदविवेको

[1] BC (०हस्म०)। [2] BDE (द्वेधा बा०)।

भ्रमोऽभ्युपेयः । न ह्यगृहीताविवेको भ्रम इष्टः, अतिप्रसङ्गात् । ग्रहादिकर्मत्वे च तज्ज्ञानसि[1]द्धे तद्विवेकाय न ज्ञानान्तरं मृग्यं, मुक्त्यादेरिव । किं बहुना प्रलपितेन । ग्रहणस्मरणयोस्तदर्थयोस्तत्संबद्धयोः शुद्धयोश्च स्वज्ञानप्रकाशितयोर्नाविवेकस्तज्ज्ञानान्तरहेयस्समस्ति । नापि विवेकस्तज्ज्ञानान्तरलभ्यः, अशक्त्यनवस्थाभ्याम् । ग्रहणस्मरणयोस्तद्विशिष्टार्थयोश्चाप्रत्यक्षत्वात् तद्विवेकाविवेकौ न प्रत्यक्षभ्रमबाधौ स्याताम् । गृह्यमाणस्मर्यमाणयोश्च प्रत्यक्षपरोक्षत्वान्न प्रत्यक्षो नापि परोक्षो भ्रमो बाधो वा स्यात् । द्विरूपस्तु युक्तः । स्वप्नादिषु च परोक्ष एव । न च तथेष्यते । अतो न गृह्यमाणस्मर्यमाणाविवेको भ्रमः ॥ १५ ॥

इतश्च—

अवेद्यत्वात्स्मृतेश्चैवं सवेद्या चेत्प्रमा न किम् ।
गृहीतेऽपि ग्रहो दृष्टस्तुल्यो हीनोऽधिकोऽर्थतः ॥ १६ ॥

स्मृतेर्वेद्यार्थहीनत्वाच्च न स्मृतार्थाविवेको भ्रमः । सवेद्या चेत्प्रमावत्, प्रमैव स्मृतिस्स्यात् । गृहीतार्थत्वात् स्मृतिर्न ग्रह इति चेत्—तन्न, यतो गृहीतेऽपि [2]चन्द्रे ग्रहो दृष्टस्तुल्यार्थो न्यूनार्थोऽधिकार्थश्च । अतो गृहीतार्थसाम्यादिवाग्रहत्वेनाप्रमाणहेतुः स्मृतेरर्थवत्त्वे [?] । गृहीतमिति ग्रहादप्रमेति चेत्—न, गृहीतत्वस्य ग्रहात्सुतरां प्रामाण्यात् । न चागृहीतग्रहोऽप्यप्रमा, अतिप्रसङ्गात् ॥ १६ ॥

नष्टस्मृतिः कथं सार्था तत्स्मृतिस्स्याद्विनापि तम् ।
तदाकृतित्वादाकारोऽप्यृतेऽर्थाक्षाणि संस्कृतेः ॥ १७ ॥

[1] BC (॰द्धेस्तद्वि॰) ।　　[2] CD (च ग्र॰) ।

नष्टेऽप्यर्थे तत्स्मृतिदर्शनान्न सार्था स्मृतिः। कथं तत्स्मृतिस्तं विनेति चेत्, तदाकारत्वात्। तत्कथं तदाकारता अर्थेन्द्रियसंबन्धं विनेति चेत्, संस्कारादेव केवलात्॥ १७॥

बुद्ध्याकारस्स्मृतावर्थस्साक्षिणोऽक्ष्यस्स नो धिया।
धीवन्न दृश्यस्साक्षीति नानवस्थात्मसंश्रयौ॥ १८॥

[1]नष्टोऽप्यर्थः स्मृतौ भातीति चेत्, सोऽर्थो बुद्धेरेवाकारोऽर्थग्रहणसंस्कारजो मुद्रामुद्रितप्रतिमुद्रावद्भाति; न तु बाह्योऽर्थः, तस्य नष्टत्वात्। अनष्टेऽप्ययमेव न्यायः, स्मृतेरमानत्वात्। बुद्धेश्चेत्स आकारः—कथं तया दृश्यः। न कथंचित्। साक्षिणैव तु दृश्यः। साक्षिणश्चादृश्यत्वात् बुद्धेर्बुद्धिदृश्यत्व इव नानवस्थादिदोषप्रसङ्गो बुद्धेस्तद्दृश्यत्वे॥ १८॥

आत्मख्यातिपक्षे च दोषान्तरमाह—

बौद्धस्य साक्षिणोऽभावान्न बुद्धिस्तेन दृश्यते।
अनवस्थादिदोषोक्तेर्नान्यबुद्ध्या न च स्वयम्॥ १९॥
नार्थदृष्टिर्धियोऽदृष्टौ द्वयादृष्टौ न वासना।
क्षणिकत्वाच्च नर्ते तां बुद्धे रूप्याकृतिस्ततः॥ २०॥
न भ्रमो न च सम्यग्धीरन्धमूकं जगद्भवेत्।
शास्त्रादि चैवं निर्मूलं नात्मख्यातिरतो भ्रमः॥२१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्यपादशिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ चतुर्थोऽध्यायः॥

---

[1] C (नष्टौ व्यर्थस्म॰)।

# अथ पञ्चमोऽध्यायः ।

रूप्यं शुक्तेरभावोऽतच्छुक्तौ रूप्यमतिर्मृषा ।
भा[1]वान्तरमभावोऽन्यो नेत्युक्तं तच्च भण्यते ॥ १ ॥

रूप्यं शुक्तेरभावः, भावान्तरत्वात् । अतच्छुक्ती रूप्यात्मना भाती यथा नास्ति तथा भातीति शुक्तौ रूप्यधीर्मृषा—भावान्तरं ह्यभावो नान्य इति । तदुक्तम्—'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इति । भावान्तरधर्मश्चेदभावः—तदा शुक्तौ रूप्यधर्मात्मना धीरभावात्मना धीस्स्यात्, न तु रूप्यात्मना धीः । न च धर्मात्मना अत्र धीरस्ति । सा सत्यपि न सत्ख्यातिस्स्यात्, अभावख्यातित्वात् । रूप्यात्मना तु धीस्स्यात् सत्ख्यातिः, न तु भ्रान्तिः । न हि तदा यथा शुक्तिर्भाति तथा नास्ति, रूप्यस्य शुक्त्यभावतानिष्टेः । तथा नास्ति चेत्, स भ्रमस्स्यात्; न त्वन्यथा, स्वात्मना ख्यातेरभ्रमत्वात् । ननु शुक्ती रूप्यात्मना नास्ति । तर्हि धर्म्यैवाभावो न धर्मः, अभावद्वयानिष्टेः । ननु नासती शु[2]क्ती रूप्यात्मनेति वच्मि, किंतु न सतीति । तर्हि न सती नाप्यसती शुक्ते रूप्यात्मनेति अनिर्वाच्यख्यातिप्रसङ्गः । अतः अन्यथाख्यातिं सत्ख्यातिमिच्छतां भावान्तरमेवाभावो युक्तो न तु तद्धर्म इति यत्पुरोक्तम्, तच्चोच्यते—

[1] BCD ( भावोन्त० ) । [2] CE ( शुक्ति रू० ) ।

भावान्तरमभावश्चेदन्याभावानिरूपणात् ।
भावभावान्तराभावनामैको वः प्रसज्यते ॥ २ ॥

यदि भावान्तरमेवाभावोऽन्यस्याभावस्य प्रमाणाभावात्—तदा भावः, भावान्तरम्, अभाव इति पर्यायास्स्युः ॥ १—२ ॥

कथम् । शृणु—

भावान्तरादभावोऽन्यो न चेद्भावान्तरं क्व वः ।
नान्योन्याभावसिद्ध्या हि विना भावान्तरग्रहः ॥ ३ ॥

यदि भावान्तरान्नान्योऽभावो न भावान्तरं सिध्येत्, नायमयमित्यन्योन्यात्मताव्यवच्छेदमन्तरेण भेदासिद्धेः ; अन्यथा एकस्मिन्नपि तत्प्रसङ्गात् ॥ ३ ॥

नान्योन्याभावसिद्धिश्च विना भावान्तरग्रहम् ।
इति चेद्बाढमेषोऽपि दोषो वोऽन्योन्यसंश्रयः ॥ ४ ॥

नान्योन्यात्मताव्यवच्छेदोऽपि भेदग्रहं विना, एकस्मिंस्तदयोगादिति चेत्—सत्यम्, अस्त्येवान्योन्याश्रयत्वदोषोऽपि वो भेदाभावयोः । ननु भिन्नयोरितरेतराभावः, अतो नायं दोषः । तर्हि न भिन्नौ भावौ अन्योन्याभावौ । तद्धर्मश्चेदभावः—उक्तो दोषः, भ्रान्तेः सत्ख्यातित्वायोगः । न च भेदग्रहं विना भेदग्रहः, एकस्मिन्नपि तत्प्रसङ्गात् । अत आत्माश्रयो भेद[1]ग्रहे अनवस्था वा ॥ ४ ॥

किंच—

भावो भावान्तरं नो वा भावश्चेत्का भिदा स्वतः ।
न चेद्भावान्यते न स्तामेकोऽतो वस्त्विनामकः ॥ ५ ॥

[1] D (॰ग्रहोऽन॰) ।

किं भाव एव भावान्तरं नाम, उत न [1]भावः। भावश्चेत्, स्वतो भेदायोगान्नास्ति भावान्तरम्; न चेत् भावः—नतरां भावान्तरम्, अन्यताया अप्यभावात्। अन्यो हि भावो भावान्तरम्, न ते भावतेष्टा। न चासतोऽन्यता। अत एक एव भावभावान्तराभावनामा वस्त्स्यादिति सिद्धम् ॥ ५ ॥

तच्चाभावात्मना ख्यातिर्मृषेत्युक्त्योदितं भवेत् ।
भावात्मधीर्मृषा सर्वामृषानिर्वाच्यधीरिति ॥ ६ ॥

एकस्यैव त्रिनामत्वे सति—अभावात्मना ख्यातिर्मृषेत्यनया गिरा सर्वैव भावात्मना धीर्मृषा, अत एवानिर्वचनीयधीरमृषेत्युक्तं भवेत्। तदाप्यनिर्वाच्यसिद्धिः ॥ ६ ॥

भावान्तरमभावश्चेत्स्वतो नित्यास्त्वभावधीः ।
अपेक्षया चेन्नतें तां भ्रमो भावान्तरात्मधीः ॥ ७ ॥

यदि शुक्तेर्भावान्तरं रूप्यं तत्किं स्वत एव शुक्त्यभावः उत शुक्त्यपेक्षया। स्वतश्चेत्, सदा शुक्त्यभावधी रूप्ये स्यात्; अपेक्षया चेत्—तां विना शुक्तौ रूप्यधीर्भ्रमो न स्यात्, स्वाभावात्मनाप्रतीतेः ॥ ७ ॥

व्यज्यतेऽपेक्षया रूप्येऽभावात्मास्य स्वतस्स्थितः ।
नाक्षैर्भाति सदातश्चेद्भ्रमा नेन्द्रियजा धियः ॥ ८ ॥

शुक्त्यपेक्षया न रूप्यमभावो भवति, किं त्वभावात्मा अस्य स्थितस्स्वतो व्यज्यते अभावमानेन। अत एव सदा नाक्षैस्स भातीति चेत्, तर्हि नाक्षादिजा भ्रमाः। भावधियो न भ्रमास्स्युरित्यर्थः। स्युश्चेत्, अभावधिय एव स्युः। अतश्शुक्त्यादौ तदभावधियो भ्रमा एष्टव्याः। न तथेष्टं

[1] E (भावाभा॰)।

दृष्टं च। इदमेवावोचाम पूर्वश्लोकेऽपि—न त्वपेक्षया रूप्यमभावस्स्यादिति ॥ ८ ॥

शुक्तेर्भावान्तरं रूप्यं स्वतश्चेत्तन्मितिस्सदा।
नर्ते तां रूप्यधीर्भ्रान्तिर्यदि शुक्तिव्यपेक्षया ॥ ९ ॥

स्वाभावात्मना ख्यातिर्भ्रम इत्ययुक्तं चेत्—अस्तु भावान्तरात्मना ख्यातिर्भ्रम इति चेत्, तच्चायुक्तम्—यतः शुक्तेर्भावान्तरं स्वत एव चेद्रूप्यम्, शुक्तेर्भावान्तरमिति बुद्धिस्सदा रूप्ये स्यात्; शुक्त्यपेक्षया चेत्—तां विना शुक्तौ रूप्यधीर्भ्रमो न स्यात्, अभावान्तरबुद्धित्वात् ॥ ९ ॥

भावान्तरत्वं रूप्यस्य जन्यं चेच्छुक्त्यपेक्षया।
ऊर्ध्वं तद्धीस्सदा पुंसां जातं हेतुं विनास्त्यपि ॥ १० ॥
व्यज्यतेऽपेक्षया तच्चेद्रूप्ये भात्यपि तां विना।
न स्याद्भावान्तरज्ञानं न च रूप्यभ्रमेऽस्ति सा ॥ ११ ॥

न तावद्रूप्यस्य भावान्तरत्वं शुक्त्यपेक्षया जन्यं व्यङ्ग्यं च। न हि शुक्तेर्भावान्तरत्वं स्वतस्सिद्धम्, अन्यापेक्षत्वे चानवस्था अन्योन्याश्रयत्वं वा। न चाभावान्तरमपेक्ष्य रूप्यस्य भावान्त[1]रत्वं जन्यं व्यङ्ग्यं वा, स्वापेक्षयापि तत्प्रसङ्गात्। यदि जन्यम्, सकृज्जातं हेतुं विनापि तक्ष्णेव वेश्म तिष्ठेत्। अतो जनेरूर्ध्वं वि[2]ना ऽप्यपेक्षया भासेत। न च तथा। अतो न जन्यम्। यदि व्यङ्ग्यं अपेक्षया—तद्व्यक्तिं विना शुक्तौ रूप्यधीर्भ्रमो न स्यात्, अभावान्तरधीत्वात्। तद्व्यक्तौ नतराम्, स्फुटभेदप्रतीतेर्भ्रमायोगात् ॥ १०—११ ॥

[1] BCD (०रत्वज०)। [2] BCDE (०ना ऽयपे०)।

नातो भावान्तरज्ञानं रूप्यमात्रेक्षणादतः ।
भावान्तरात्मना ख्यातिर्न भ्रमोऽपि त्वसद्ग्रहः ॥ १२ ॥

अतो रूप्यमात्रस्फुरणात् भावान्तरत्वज्ञानाभावात् भावान्तरात्मना ख्यातिर्भ्रम इति चायुक्तम् । अतस्सद्ग्रहा-दन्या मायैव भ्रमः, सद्ग्रहहीनो मायाविलासो वा अस-द्ग्रहः ॥ १२ ॥

भावान्तरत्वं भावाच्चेद्भिन्नं सत्त्वे पृथग्ग्रहः ।
स्तम्भवत्स्यादसत्त्वेऽक्षैरग्र[1]हान्नाक्षजा भ्रमाः ॥ १३ ॥

भावान्तरत्वं नाम भावाद्भिन्नमभिन्नं वा । भिन्नं चेत्, सत् असद्वा । सच्चेद्भावान्तरत्वम्, रूप्यात्पृथक् स्तम्भव-द्गृह्येत । असच्चेत्, तस्याभावबुद्ध्या ग्र[2]हान्न भावधीर्भ्रम-स्स्यात् । दोषात् भावधीग्राह्यतेति चेत्, तथापि न रूप्यधीर्भ्रमस्स्यात् । कथं चासतो भेदोऽभेदो वा ॥ १३ ॥

अभेदे नान्यथाख्यातिस्सर्वा वा ख्यातिरन्यथा ।
व्यक्तिर्नापेक्षयाऽभावादपेक्ष्यस्याक्षसिद्धितः ॥ १४ ॥

अभेदे भावद्वयाभावात् स्वात्मनैव ख्यातेर्न काप्यन्यथा-ख्यातिः, अन्यथा अतिप्रसङ्गात् । न चापेक्षया भावा-न्तरत्वव्यक्तिः, अपेक्ष्यस्य भावान्तरस्याभावात् । अक्षैरेव च भावसिद्धौ तत्सिद्धेस्तदभेदात् । अतो भावान्तराभावात् भावान्तरात्मना ख्यातिर्भ्रमः, भावान्तरमेव चाभाव इति चायुक्तम् । भाव एवाभाव इति चापास्तम् । न चाभावो नाम नास्ति ॥ १४ ॥

[1] CD ( ०ह्रानाद्ध० ) । [2] BCD ( ०ह्रानभा० ) ।

यतः—

मेयाभावस्य चाभावे मेयं सर्वं [1]विभु ध्रुवम्।
मानाभावस्य चाभावे सर्वज्ञस्सर्वदा जनः॥ १५॥

उक्तोऽयमर्थस्तथापि प्राप्तावसरत्वात्पुनरुक्तम्॥ १५॥

अभावव्यवहारोऽतो भ्रमस्संश्चेत्स सर्वगः।
नाभावोऽस्तीति वाणीयं नाभावेऽसति शोभते॥१६॥

भावान्नान्योऽभाव इति वदतां मेयाद्यभावाभावात् सर्वं ध्रुवम्, अनन्तं चिधापि, सदाप्रकाशं च भवेत्। अतोऽभावव्यवहारो भ्रमस्स्यात्। सोऽपि भ्रमस्संश्चेत्, उक्तलक्षण एवेति सर्वव्यवहारलोपस्स्यात्। भावान्तरादन्योऽभावो नास्ति, तस्य प्र[2]माणाभावादिति च वाणी अभावाभावे अर्थशून्या। अतः अभावोऽमेयात्मा अभ्युपेयः, अन्यथा व्यवहारोच्छेदात्॥ १६॥

भावान्तरमभावश्चेत्तथाप्युक्तं स्थितं मया।
अन्यापोहा[3]नुविद्धं चेद्भावेऽपोहे स्थितं तु तत्॥ १७॥

भावान्तरस्याभावत्वात् मेऽपि नार्थशून्या अभाववाणीति चेत्, तथापि 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इत्यस्य भावान्तरादन्योऽभावो भावान्तरं प्रमाणान्तरभावादिति चेदर्थः, भावान्तरान्नान्योऽभावोऽपह्नुतः (?)। अपह्न[4]वे चाभावान्तराभावाभ्युपगमः। अथवा—अभावव्यवहारलोप इति यन्मयोक्तं तत्स्थितमेव।

[1] CD (विभुर्ध्रु०)। [2] BCD (०माणमभा०)।
[3] BCD (०नुसिद्धं)। [4] D (०वे वाभा०)।

अन्यापोहानुविद्धं भावान्तरमभावो न शुद्धमिति चेत्—तदुक्तम् 'अन्यापोहानुविद्धा तु सैवाभावः प्रतीयते' इति—सोऽपोहोऽपि भावश्चेत्, मयोक्तं स्थितमेव; अभावश्चेत्, स ए[1]वास्त्वभावः किं तदनुविद्धेन। मम तु सर्वो व्यवहारस्सिध्येत्, मायाश्रयत्वात्। अतो व्यवहाराश्रयत्वान्मायात्मा अभावस्सर्वैरेष्टव्यः ॥ १७ ॥

नन्विष्टश्चेन्न स मायात्मा, स्वमानगम्यत्वादिति चेत्—तन्न, तस्य अमानगम्यत्वात्। कथम्। शृणु—

सत्यप्यभावेऽप्रमितेऽनन्ते ह्यध्यक्षधीमिते।
नाभावधीर्वि[2]रोधात्स्यान्न चोर्ध्वं प्राक्संभवः ॥ १८ ॥

इष्टे सत्यप्यभावे तत्प्रसिद्ध्या वस्तुसिद्धेः प्रागप्रमिते। न ह्यसिद्धे भावे कस्यचिदभावः प्रमितः प्रमीयमाणः प्रमित्सितो वा संस्यात्, प्रतियोग्याद्यसिद्धेः। अतोऽमितेऽमित्सिते वा अभावेऽक्षजा भावधीर्भवेत्। अतस्तया अनन्ते देशा[3]दिचितयानवच्छिन्ने मिते तद्धीविरोधान्नाभावधीस्तत्र स्यात्। तद्बुद्ध्यभावे स्यादिति चेत्—न; भावबुद्ध्याक्रान्ते अभावधियोऽयोगादतिप्रसङ्गाच्च। प्राक्संभवस्स्पष्टः। उक्तं च मया। न च देशान्तरे कालान्तरे वा प्रागूर्ध्वं वा तस्याभावज्ञानम्, देशाद्यनवच्छिन्नतयैव तस्य मितत्वात्। पश्चात्तदवच्छेदो मेय इति चेत्—न, देशादीनामन्योन्यव्यावृत्तेरप्यध्यक्षतोऽसिद्धेरव[4]च्छेद्यावच्छेदकत्वासिद्धेः। अतो निर्विषयत्वान्न काप्यभावधीः प्रमा ॥ १८ ॥

[1] BD (॰वार्थस्वभा॰)।　　[2] D (॰रोधस्स्या॰)।
[3] B (॰दिचितयानव॰)।　　[4] BCDE (॰च्छेद्यत्वाव॰)।

मेयाभावव्यवहृतिर्माभूतेश्चेज्जिघृक्षिते।
सदासद्व्यवहारस्स्याज्जिघृक्षाप्यग्रहेऽफला ॥ १९ ॥

योऽपि मन्यते नाभावो नाम मेयोऽस्ति, अतो न मानं च; जिघृक्षितार्थे तदग्रहात्तदभावव्यवहारः; अतोऽभावो न मायात्माप्येष्टव्य इति—तस्य अर्थं विनापि तद्व्यवहारश्चेत्स्यात्, सदा स्यात्—अविशेषात्। भावव्यवहारोऽपि तथा अर्थं विना सदा च स्यात्। तदा नार्थेनार्थः। सार्थश्चेद्भावव्यवहारः, अन्योऽपि तथास्तु। न[1] च व्यवहारो धीशब्दौ विना। न च तौ, विना अर्थम्। अतस्तयोर्भाविऽर्थभावोऽभ्युपेयः। अधीशब्दश्चेदभावव्यवहारः, सुषुप्तिसमस्स्यात्। मानानुदयाच्चेन्मेयाभावव्यवहारः, सुषुप्तौ सर्वाभावव्यवहारस्स्यात्। ननु जिघृक्षिताग्रहे तदभावव्यवहारो नाग्रहमात्रे, जिघृक्षितशब्देन चोपलब्धिलक्षणप्राप्तिर्विवक्षिता—इति चेत्, अभावमनिच्छतोऽभावानामन्योन्यानात्मतया भेदासिद्धौ जिघृक्षाभावासिद्धौ च इदं जिघृक्षितं नेदमिति विभागो न युक्तः। जिघृक्षा च ग्रहेऽर्थवती नाग्रहे। न च तस्या अभावे भावे चाग्रहस्य ते विशेषस्स्वगतोऽस्ति। नाप्यौपाधिकः, अख्यातेः। न ह्यौपाधिको विशेषोऽख्याते भाति। न चाग्रहस्ते भाति, ग्रहाभावत्वात्। स चेन्न भाति, अग्रहेऽभावव्यवहार इति च कथं ह्यज्ञायि। ग्रहाभावश्चेद्भाति, भातितरां ग्राह्याभावः। तस्मान्नाभावापह्नवो न्याय्यः, तस्याप्यसिद्धिप्रसङ्गात्॥ अथवा—अभाववादिपक्ष एव अभावधियो विषया-

[1] CD ( च धीव्य० )।

भावादुक्तमप्रामाण्यम्। तदनेन श्लोकेन हेत्वभावादुच्यते। न तावदक्षादयस्तद्धेतव इष्टाः, भावधीहेतुत्वात्। अथ मुक्ता जिघृक्षादिसर्वग्रहणसामग्रीपरिपूर्तौ अग्रहादभावव्यवहारोऽभावधीर्भवतीति चेत्—तदयुक्तम्, जिघृक्षाद्यभाव इव तद्भावेऽप्यग्रहस्य स्वतो विशेषाभावात् अक्षादिवदज्ञातस्यैव स्वशक्त्या नियताभावधीहेतुत्वायोगात्। तर्हि ज्ञातोऽस्तु तद्धेतुः नान्तरीयकत्वेन। नान्तरेणार्थाभावमयमग्रहो भवेत् परिपूर्णे जिघृक्षादौ सति, असति तु तद्वैकल्यादपि स्यादिति। तदाप्यर्थविशेषासिद्धौ जिघृक्षादेरग्रहस्य च विशेषासिद्धेः नाभावविशेषधीस्स्यात्। नार्थविशेषश्च सिद्धो मानस्यानवच्छेदकत्वादित्युक्तम्। अतोऽग्रहाच्चेदभावधीः—सदा स्यात्, जिघृक्षादेरनियामकत्वात्। कश्चाग्रहोऽनन्ते वस्तुनि गृहीते ॥ १९ ॥

अपि च—

मानाभावे मिते चेत्स्यान्मेयाभावमतिस्तदा।
मानाभावमतिर्मानमानाभावेऽमिते कुतः ॥ २० ॥

मानाभावान्मिताच्चेन्मेयाभावधीः, तदा मानाभावधीरपि तन्मानाभावान्मितादित्यनवस्था ॥ २० ॥

मानाभा[1]वो विमानश्चेन्मानमप्येवमन्यथा।
तन्मा[2]नाद्धि जिघृक्षोस्तदज्ञानेऽभावधीर्भवेत् [?] ॥२१॥

मानाभावो विगतमानश्चेत्, मानमप्येवमस्तु; अन्यथा मानवत्त्वात् घटस्येव मानस्याप्यभावो मेयस्स्यात्। मेयस्याप्यभावोऽमेयश्चेत्, घटाद्यभावोऽप्यमेय एव स्यात्। अतो

[1] D (०वोऽपि मा०)। [2] CD (०नाद्विजि०)।

ना[1]भावो मानं स्यात्। मानस्य च विमानत्वे तस्य जडत्वेऽसिद्धे[?], स्वयंप्रभत्वेऽभावजन्माद्यसिद्धेर्नित्यत्वात्तन्मेयस्य च सदा[2]भानाज्जडत्वाभावाज्जन्मभेदाद्यसिद्धेरेकं स्वयंप्रकाशं वस्तु स्यात्। अतो मानाभावो न विमानः। त[3]स्य च स्वयंप्रभत्वे सदाभानात्ततोऽभावधीश्चेत्, सदा स्यात्। जिघृक्षाद्यभावे नेति चेत्—स एव तर्हि तद्धेतुः, तद्भावे भावात् तदभावे चाभावात्; न त्वग्रहः, व्यतिरेकाभावात्स्वयंप्रभस्य च नित्यत्वात्। यदि जिघृक्षादिभावेऽभावधीस्स्यात्, न भावधीस्स्यात्तद्भावे। यदि नाम[मा-?] स्वयंप्रभोऽप्यग्रहः अज्ञात एवाभावधीहेतुस्तदापि स वेद्यः कदाचित्, अन्यथा तस्य तद्धेतुत्वागतेः। न च तस्य मानं समस्ति। अतोऽग्रहान्नाभावधीः ॥ २१ ॥

फलभावेन धीभावो मेयोऽतस्तददर्शनात्।
माभावधीश्चेन्नै[न्नै ?]वं स्यान्मेयाभावो न माजनेः ॥२२॥

मानफलस्य भावेन मानस्य बुद्धेर्भावोऽनुमेयः, अतस्तस्य फलस्यादर्शनात् मानाभावधीश्चेत्, नैवं युक्तम्। न हि फलादर्शनं नाम किंचिन्मानाभावव्याप्तं गृहीतमस्ति, येन तल्लिङ्गान्मानाभावधीस्स्यात् अग्न्यभावलिङ्गेनेव धूमाभावधीः। फलादर्शने फललिङ्गाभावान्मानाभावधीर्न भवतीति चेत्, मा भूत्[?]; तथापि न मानाभावान्मेयाभावः, धूमानुमानाभावेऽप्यग्निभावेष्टेः ॥ २२ ॥

मानं क्रिया न सा स्यात्स्वी फलाभानेऽस्ति सा कुतः।
स्यात्सौ त्वर्थे प्रमाभावे नाभावश्चेत्सदा न धीः ॥ २३ ॥

[1] D (०भावमा०)। [2] DE (०भावा०)। [3] BCD (०स्य स्व०)।

मानं क्रियात्वादस्थास्नु, अप्रत्यक्षत्वाच्च नित्यानुमेयं फललिङ्गम्; अतोऽर्थानुभूतिफलाभानेऽन्यतोऽसिद्धेर्मानस्याभाव एव; अग्न्यादेस्तु स्थास्नुत्वादन्यतोऽपि सिद्धेश्च धूमाद्यनुमानाभावेऽपि नाभाव इति चेत्—कोऽभिप्रायः। न तावत्तत्फलमेव मानसिद्धिः, तस्यार्थसिद्धित्वात्। नापि फलाभावं बुद्ध्वा मानाभावं वेद्मीति ब्रूषे। फलाभाने तल्लिङ्गमानानुत्पत्तेरन्यतोऽसिद्धेरस्थास्नुत्वाच्च मानस्याभाव इति चेत्—न, मानानुदयेऽपि मेयभावस्येष्टत्वात्। अर्थाभावोऽप्यभावधियैवेष्टः, न तु तद्भावमानानुदयादेव। न चाचाभावधीहेतुः कश्चिदस्ति। मानभावज्ञानानुदयादेव चेन्मानाभावस्तद्धीर्वा भवेत्, तव सदा नास्त्येव धीः। यदा ह्यर्थविषया धीर्भवेत् तदा तत्फललिङ्गा तदनुमा नास्त्येव। अतस्तदा सा नास्ति। अन्यदा तु नेष्टा। अतस्सा न जात्वस्ति ते। अतो धीगम्योऽर्थः धीफलं च नास्त्येव ॥२३॥

फलाभावे मिते मानाभावधीश्चेत्स किंप्रमः।
स्ववित्तेर्नास्ति चेन्मानं नाभावोऽस्यापि सिध्यति ॥ २४ ॥

फलाभावे मिते ततो मानाभावधीरिति चेत्, स फलाभावः किंप्रमाणकः। स्वयंप्रभत्वात्फलस्य भावेऽभावे च प्रमा नास्तीति चेत्, फलस्यापि नाभावो मानस्येव सिध्येत् ॥ २४ ॥

भावो यस्य मितो मानात्तदभावोऽपि मीयताम्।
फलस्य स्वप्रकाशस्य भावाभावौ स्वतस्तु चेत् ॥ २५ ॥

यस्य भावो मेयस्तस्यैवाभावोऽपि मेयः। फलस्य तु स्वयंप्रभत्वात्तौ स्वत एव सिध्यत इति चेत्—

भावाभावप्रमैकैवं भावोऽभावस्सदा च सः ।
नानुमातस्सदाभावात्सदा वास्त्वनुमा न वा ॥ २६ ॥

फलस्य भावो येन सिध्यति [1]तेनैव चेदभावोऽपि—एवं सति भावप्रमैव अभावप्रमा । अतो भाव एवाभावः । अतस्सदा सोऽस्ति । अतो न तेन धियोऽनुमा, अकार्यत्वात्—सदाभावात् । सदा सतोऽपि चेदनुमा, सा सदा स्यात् । न चेत्, न जातु । सोऽभावोऽपीति चेत्, तथापि सदाभावान्न जातु धीभावानुमा । अभावानुमा [2]अस्ति चेत्—सापि सदा न वा जातु, अविशेषात् । यदि च भावप्रमैवाभावप्रमा, अन्यत्रापि तथा स्यात् । अतो भावान्नान्योऽभाव इ[3]ति भाव एव सर्वः । भावाभावयोरभेदेऽपि नाभाव एव भावः, भावं विना अभावानिष्टेः । अतोऽभावमानान्वेषणं ते व्यर्थं स्यात् ॥ २६ ॥

भावस्स्वतस्स्वयंभानादभावोऽभानतो यदि ।
नाभानेऽप्यर्थवन्नासज्ज्ञानमात्रं फलं न चेत् ॥ २७ ॥

तर्हि भावः स्वतः, फलस्य स्वयंप्रथनात्; अभावस्तु अभानात् । अतो नैका तत्प्रमेति चेत्, तथापि अभानोऽपि फलस्य नासत्त्वं यथा अर्थस्य, यदि भानमात्रमेव फलं न भवेत् ॥ २७ ॥

भानमात्रतनुत्वेऽस्य नाभावोऽभानतः पृथक् ।
नाभावस्सस्वतस्सिध्येन्न फलाच्च कुतोऽन्यतः ॥ २८ ॥

भानमात्रत्वेऽस्याभानमभावः । स च न स्वतो न फलान्नान्यतोऽपि सिध्येत् ॥ २८ ॥

[1] BCD (केनैव) । [2] D (अस्तु) । [3] C (०ति सर्वे भा०) ।

कथम्—

फलाभावे स्वतस्सिद्धे भावाभावभिदास्य का।
स्वाभावो न फलात्सिध्येत्तदाभावान्न च स्थितात्॥२९॥

फलस्याभावस्स्वयंप्रभश्चेत्, न भावाद्भिद्यते। न च स्वाभावः फलात्सिध्येत्, एकभावेऽन्याभावात्॥ २९॥

नान्यो वेत्त्यपि यो यस्य भावज्ञस्स त्वभाववित्।
पुंसा वेद्यं फलं चेन्न स्वप्रकाशं प्रमा च का॥ ३०॥

न चान्यो वेत्ति फलाभावम्, फलस्यावेद्यत्वात्। यो हि यद्भावज्ञस्स एव तदभावं विद्यात्। पुंसा वेद्यं फलम्, अन्यथा अफलत्वादिति चेत्—तर्हि [1]न स्वप्रकाशम्, वेद्यत्वात् रूपादिवत्। प्रमा चास्य वाच्या। अतोऽफलं स्यादित्यभिप्रायः॥ ३०॥

वेत्ति तच्चेद्विना मानं वेद्यं तन्न तु माफलम्।
वेद्यत्वे तेन कोऽर्थो [2]नु दीपेनेव न मेयदृक्॥ ३१॥

मानं विनैव पुमान्फलं वेत्तीति चेत्, तथैव बुद्ध्या[3]दिकमपि विद्यात्। अतोऽस्य फलेन अनुमा व्यर्था। वेद्यत्वे च धीरूपादिवन्न मानफलम्, जडत्वात्। तेन च कोऽर्थः पुंसः। न च दीपादिनेव तेन मेयदर्शनं पुंसः प्रयोजनम्, जडत्वात्सर्वस्य। न हि जडेनैव जडस्य सिद्धिः। दीपादिरपि व्यर्थौ जडे प्रमाणफले॥ ३१॥

किंच—

फलात्फलेऽनवस्था स्यान्न फलं चेन्न दीपवत्।
फले फले च तन्माला फलासिद्धिः फलेऽफले॥ ३२॥

[1] D (न प्र०)। [2] D (नुर्दीपे०)। [3] D (०दिमपि)।

यदि फलादपि फलमेव जडं भवेत्, ततस्तत्फला-त्फलान्तरमेव जडं भवेदित्यनवस्था। न चेत्फलात्फलान्तरं भवेत्, तदा दीपवत्करणमपि न स्यात्। किंच फलस्य मेयत्वे, अर्थ इव फले च अन्यत्फलमेष्टव्यम्। अतस्तत्र तत्र फलेऽन्यत्फलमित्यनवस्था। न चान्यत्फलं विना वेद्यं फलं सिध्येदर्थवत्; अन्यथा अर्थोऽपि फलं विनैव सिध्येत्॥ ३२॥

प्रध्वंसप्रागभावौ कौ फलस्य ब्रूहि कुम्भवत्।
फलं [1]गुणश्चेत्कस्यासौ तदभावौ च कौ गुणौ॥ ३३॥

यद्यनित्यं फलं तस्य प्रागूर्ध्वाभावौ घटस्येव वाच्यौ। फलं गुणो न घटवत् स्वतन्त्रं द्रव्यमिति चेत्, तर्हि गुण्यपि तस्य वाच्यः। अभावौ च कौचित् गुणावन्यौ वा अस्य। तौ वाच्यावेवोक्तन्यायैरेव। तत्स्वरूपोक्तिस्तेऽ-शक्या आसीत् बाह्येऽपि, किं पुनः फल इत्यभिप्रायः। न हि फलाभावयोः फलस्य वा आत्मा स्वरूपं [2]धर्मौ गुणौ वा, तेषां दृश्यत्वे अनित्यत्वे च द्रष्टुर्नित्यस्य स्वरूप-त्वाद्ययोगात्। न चानात्मा, जडत्वात्फलाश्रयत्वा-योगात्। फलस्यापि जडत्व उक्तो दोषः॥ ३३॥

गुणगुण्येकधीभावे सदसत्त्वे गुणस्य ते।
घटे चेत्संविदिष्टा ते भूतचैतन्यवादिता॥ ३४॥

गुणगुणिनोर्विशेषणविशेष्यतया शुक्लः पट इतिवत् तद्ग्राह्यैकधीसंभवे तस्मिन् गुणिनि गुणस्य सदसत्त्वे ते सिध्यतः, न त्वेकबुद्ध्ययोग्यत्वे तयोः। न च मातुर्मानस्य वा

[1] CDE (गुणं चे०)। [2] CE (धर्मौ वा गु०)।

गुणतया एकधीवेद्यं फलम्, तयोरवेद्यत्वादनवस्थानात् । घटस्य वेद्यत्वेऽपि फलस्यावेद्यत्वान्न तद्गुणोऽपि संवित् । घटगुणश्चेत्संविदिष्टा, भूतचैतन्यवादिता स्यात् । सा चायुक्ता अनिष्टा च । घटगुणश्चेत्संवित्, न तया घटो भासेत रूपादिनेव । न च जडगुणोऽजडो रूपादिवत् ॥ ३४ ॥

संविद्धियार्थे जाता चेद्धीनाशेऽप्यस्तु सान्नवत् ।
तन्नाशेऽपि क्रियाजं स्याद्धीनाशेऽप्यस्ति वासना ॥ ३५ ॥

संवित् धिया अर्थे जन्यते, न त्वर्थगुणो रूपादिवदिति चेत्—न, संविदोऽवेद्यत्वादर्थविक्रियात्वासिद्धेः । अर्थविक्रियात्वे न तया अर्थसिद्धिर्विक्रियान्तरेणेव । धीजन्या चेदर्थविक्रिया संवित् तण्डुलानामिवौदनता पचिजन्या हेतुनाशेऽपि तिष्ठेत् । क्रियाजं ह्योदनघटादि क्रियानाशेऽपि स्यात्, धीजन्यं धीनाशे नास्ति चेत्—न, धीनाशेऽपि धीजन्यसंस्कारस्य स्थितेः ॥ ३५ ॥

नोत्पन्नायास्स्वतो नाशो नानुत्पन्ना प्रकाशते ।
संविन्नार्थक्रियाजन्या न तयातो विनङ्क्ष्यति ॥ ३६ ॥

नोत्पत्त्या लब्धात्मिकायास्स्वतो नाशो युक्तः । न चालब्धात्मिका प्रकाशते प्रकाशयति वा अन्यम् । स्वरसभङ्गुरत्वे न लब्धात्मकतान्यप्रकाशकते संस्तः । नाशस्वभावस्य च कथं जन्म । अजातस्य असतो न नाश इति चेत्, असतोऽसद्रूपाहानात् न जन्म । न च सतो जन्मेच्छसि । कथं च सतो नाशस्सद्रूपात्यागे । त्यागे त्वसतो नाशस्स्यात् । तत्त्याग एव नाशश्चेत्, सोऽपि न सता शक्यः । अत्यागे नासत्त्वम् । न च त्यक्तृत्याज्यभाव

एकस्येत्युक्तम् । जन्मनाशयोरन्यत्वेऽनन्यत्वे च वस्तुनो न क्षणिकता । अवस्थात्वेऽपि तथा, अवस्थाद्वयेऽपि तस्य भावात् । तस्मात्स्वतो नाशायोगान्नाशश्चेदस्ति, तद्धेतुर्वाच्यः । न च घटवत् बाह्यार्थव्यापारजा संवित् । अतो न तेन नश्येत् । नापि धीस्तां हन्ति ॥ ३६ ॥

कथम्—

तन्माता धीर्न तां हन्ति नाप्यन्यान्यफला हि सा ।
नाजाता हन्ति संवित्तां न जाताप्यविरोधतः ॥ ३७ ॥

या तावत्तज्जननी धीस्सा तज्जननोपक्षयान्न तां हन्ति । नाप्यन्या, अन्यसंविज्जननोपक्षयात् । अन्या संवित्तां हन्तीति चेत्—सापि नाजाता, अजातत्वादेवाविरोधात् । नापि जाता, अविरोधेनैव जातत्वात् ॥ ३७ ॥

संविदं जनयन्त्यन्यां हन्ति धीः पूर्वसंविदम् ।
रुचकक्रियया ध्वंसस्स्वस्तिकस्य यथेति चेत् ॥ ३८ ॥

नैकहेम्नि विकारौ द्वौ सह स्यातां विरोधतः ।
स्याच्चेत्प्रकृतिरेकैवं[1] संविदां स्याद्विरोधिता ॥ ३९ ॥

सर्ववस्तुषु वा सैका प्रत्यर्थं वा प्रतिप्रमम् ।
प्रत्यक्षं प्रतिधीवृत्ति प्रतिज्ञं वा प्रमेयगा ॥ ४० ॥

सर्ववस्तुषु सैका चेद्यदि कृत्स्ना फलं भवेत् ।
सकृत्कृत्स्नप्रतीतिस्स्यात्फलमेकं हि सर्वगम् ॥ ४१ ॥

मेयांशस्थस्तदंशश्चेत्फलं स्यादणुमात्रदृक् ।
एकवस्तुसमोऽंशश्चेत्स्वादिबोधेऽखिलज्ञता ॥ ४२ ॥

[1] CD (०रेवैवं)।

प्रत्यर्थमेका चेदर्थदृष्ट्या तच्छक्तिवेदनम् ।
प्रत्येकमानमेका चेद्रूपदृष्ट्या रसेक्षणम् ॥ ४३ ॥
प्रत्येकेन्द्रियमेका चेत्सर्वरूपेक्षणं सकृत् ।
प्रत्येकधीप्रमेयं[1] चेन्न ध्वंसो जातसंविदः ॥ ४४ ॥
पूर्वेषु नान्यपुंसस्स्यात्तच्च संविद्विरोधतः ।
सदैकस्याविरोधात्स्युर्भिन्नप्रकृतिसंविदः ॥ ४५ ॥

पूर्वेषु चतुर्ष्वपि पक्षेषु एकस्मिन्विषय एकस्यैव संवित्स्यान्नान्यस्य, तदा विरोधात् । न ह्येकं हेम कृत्स्नं रुचकी भवत्तदेव स्वस्तिकं भवेत्तदैव। भिन्नप्रकृतयस्तु संविदोऽविरोधादनेका एकस्य युगपत्स्युः ॥ ४५ ॥

प्रतिज्ञमेका चेदुक्तं स्मर सा चेत्प्रमेयगा ।
सर्वथा न सुषुप्तं वस्संवित्काचित्सदास्ति हि ॥ ४६ ॥
ज्ञगतैका प्रतिज्ञं चेज्ज्ञेयता किं तया ज्ञता ।
ज्ञज्ञेयता तया चेत्का ज्ञेयतार्थे तया विना ॥ ४७ ॥
न पुंसां सं[2]विदेकज्ञे स्यात्सदा संविदात्मनि ।
ज्ञता तया चेत्तत्स्या चेत्संवित्कार्येऽपरोक्षता ॥ ४८ ॥

अस्मिन्पक्षेऽप्येकस्मिन्पुंसि एकस्यैव संवित् स्यान्नान्यस्य । अतो न ज्ञानं नान्यो वेद्यः, किंतु सुषुप्तसमा । सदा चात्मन्येका संवित्स्यात्, संविदन्तराभूतौ पूर्वसंविदनिवृत्तेः । न चात्मा ज्ञेय इत्युक्तम् । अतो न ज्ञेयत्वार्थापि सा । तर्हि ज्ञत्वमात्मनस्तयेति चेत्—न तावदात्मविषयं ज्ञत्वम्, तस्य अज्ञेयत्वात् । नाप्यनात्मविषयम्, आत्मासिद्धौ तद-

[1] CD (०मेयस्चे०) । [2] CE (०विदैक०) ।

सिद्धेः। स्वतस्सिद्धश्चेदात्मा, नास्यान्यापेक्षं ज्ञत्वं युक्तम्। किंच ज्ञस्था चेत्संवित्, तत्प्रकृतेर्ज्ञस्थत्वात् तदा तद्धीनेऽर्थे का अपरोक्षता ॥ ४६—४८ ॥

सैव चेत्सा समार्थानां सा येनाजनि तस्य चेत्।
किं तया तस्य भानं चेत्सैव चेद्भाति तस्य किम् ॥ ४९ ॥
सोऽपि भाति तयाप्तश्चेत्सैव व्याप्यापि भाति चेत्।
नार्थे किंचित्कृतोऽर्थेऽपि प्रकाशश्चेत्स किंप्रमः ॥ ५० ॥

या आत्मस्था संवित् सैवार्थस्यापरोक्षता इति चेत्, सा सर्वार्थानां समाना। अतस्तया सर्वोऽर्थस्सिध्येन्न वा एकोऽपि, अविशेषात्। अस्ति विशेषो यो यस्या उत्पत्तौ व्यापृतोऽर्थः तस्यैव सा नान्यस्येति चेत्, किं तया तस्यार्थस्य स्यात्। भानं चेत्—किं सैव भाति, उत सोऽपि स्वतो भाति। उभयथापि सा तस्य व्यर्था। न व्यर्था तया व्याप्तस्सोऽपि भाति न स्वत इति चेत्—सैव तं व्याप्यापि भाति चेत्, नार्थस्य किंचिद्भानम्। अर्थेऽपि प्रकाशः कृत इति चेत्—तेन चेदर्थ[1]सिद्धिः, व्यर्था उक्ता संवित्। तया स जन्यश्चेत्, तत्प्रमाणं वाच्यम्। किंचास्योपादानमर्थश्चेत्, नान्यमात्मानं च साधयेत्, घटवदन्यसाध्यश्च स्यात्। संविदुपादानश्चेत्, स नार्थे कृतस्स्यादतः[?]। सा चेदवेद्या, कथं तदुपादानता अस्य ज्ञायेत। वेद्या चेत्, रूपादिवदसंवित्स्यात्। कृ[2]तेऽप्यर्थे प्रकाशे स एव प्रकाशेत, नार्थो जडत्वात्। जडोऽपि प्रकाशते चेत्, किं प्रकाशेन कृतेन। न हि तस्मिन्कृतेऽपि जडोऽर्थः

[1] BD (०र्थेस्सिद्धिः)। [2] BCD (०ते व्यर्थे)।

प्रकाशो भवेत्। भवेच्चेत्, जडो नाम न सिध्येत्। तदा जडः प्रकाशीभवतीत्यपि न ज्ञायेत॥ ४९॥ ५०॥

साप्नोत्यर्थं कथं ज्ञस्था तज्जन्याप्ती च किंप्रमे।
ज्ञश्चेद्वेत्ति कथं ज्ञस्था प्रकृतिः का तया ज्ञता॥५१॥

ज्ञस्था चेत्संवित्, सा अर्थं कथमाप्नोति। ज्ञस्य विभुत्वात्सापि विभ्वीति चेत्—तया सर्वोऽर्थस्सिध्येत्, सर्वव्याप्तेस्सदा च जनिमत्त्वात्। न सदा व्याप्तिश्चेत्, तर्हि तज्जन्याप्ती किंप्रमे। सा चेत्स्वयंप्रभा स्यात्, जनिरर्थव्याप्तिश्च न तया अन्येन च मेया; अन्यथा असंवित्स्यात् रूपादिवत्। न सा मानमेया; ज्ञस्तु तां वेत्ति; अतो न रूपादिसमेति चेत्—तर्हि न तया आत्मनो ज्ञत्वम्, तज्ज्ञत्वस्यातद्धेतुत्वात् स्वतस्सिद्धेः। अतो न संवित्तत्प्रकृतिश्च ज्ञस्था, तद्वेद्यत्वात्तद्वेद्यान्तरबुद्ध्यादेरविशेषात्। न च जडस्य संवित्प्रकृतिता युक्ता मृद्वत्। अजडं च नात्मनोऽन्यत्किंचित् सिध्येत्, वेद्यत्वे जडत्वादवेद्यत्वे तस्यात्मानं प्रत्यसिद्धेः। अस्तु तर्ह्यात्मैवा[1]जडस्संवित्प्रकृतिरिति चेत्—न, अजडस्याविक्रियत्वात्प्रकृतिविकृतिभावायोगात्। आत्मविकार[2]त्वेऽपि संविदोऽन्यार्थासिद्धिस्ते समानैव। मम त्वजडात्मविवर्तत्वात् ज[3]डस्य सिद्धिः। अन्यत्वविषयत्वादिव्यवहारोऽप्यत्र दर्पणादौ मुखादिवदविद्यामहिम्नैव न विरुध्यते। अतस्संविदो वस्त्वन्तराभावाच्च न तस्याः कुतश्चित् जन्म भेदादयो वा संसन्ति, सर्वस्य तदात्मत्वात्॥५१॥

[1] C (०जस्सं०)। [2] CD (०त्वे सं०)।
[3] CD (०डस्यासि०)।

अतोऽपरोक्षता ज्ञस्था ज्ञेयस्था वापि भातु सा।
स्वस्थैव सर्वथैकाजामेयोपेया बुभुत्सुभिः ॥ ५२ ॥

अतोऽपरोक्षता ज्ञस्था ज्ञेयस्था ज्ञानस्था वाविशेषेण भातु, अनुभूतेस्सर्वात्मत्वात् विचित्रप्रज्ञत्वाच्च पुंसाम्; सर्वथा सा स्वमहिमस्था अभावविकारा एका अप्रमेया अन्यमेयरहिता चाभ्युपेया सर्वैः किंचिद्बोद्धुमिच्छद्भिः— अतोऽन्यथा बोधासिद्धिरुक्ता यतः ॥ ५२ ॥

तर्ह्यस्याः कथं फलत्वमिति चेत्, शृणु—

अनुभूतिरजात्मस्था मातृमानप्रमेयगा।
[1]व्यापारैरक्रियान्येषां सुषिवत्कल्प्यते फलम् ॥ ५३ ॥

अजा आत्मस्थाप्यनुभूतिः खमिव घटादिगं विभुत्वात्सर्वात्मत्वाच्च मात्रादिगा तद्व्यापारैरेव स्वगतविक्रियां विनैव तदभिव्यक्तेस्तदुपाधिस्सा फलायते खमिव सुषिकूपाकाशाद्यात्मना। अतोऽस्याः फलत्वं कल्पितमेव, जन्मतद्धेतुतन्मानाद्यसंभवात् ॥ ५३ ॥

फलस्य सदसत्त्वाभ्यां भावाभावौ मतेरतः।
नानुमेयौ फलादृष्टेर्नातोऽर्थस्यापि तौ तव ॥ ५४ ॥

अतोऽनुभूतेः कौटस्थ्याददृश्यत्वाच्च न तद्भावाभावौ दृश्यौ। अतो न ताभ्यां लिङ्गाभ्यां धीभावाभावावनुमेयौ। न चेत्तयोर्मानान्तरम्— तदसिद्धौ मेयस्यापि भावाभावौ न सिध्यतः, मानाभावे मेया[2]सिद्धेः। सिद्धेऽपि मानभावे मानाभावे असिद्धे, न मानप्रागभावो मेयाभावधीश्च सिध्येत्। अतो न मेयप्रागभावश्च। अतो न मान-

[1] BC (खमिवेहेहया)। [2] BCD (॰यासिद्धेऽपि)।

मेययोर्जन्मसिद्धिः, तत्प्रागभावासिद्धेः । अतोऽन्यस्यापि जन्मनाशौ न संस्तः । तौ कथं संवि[1]दस्स्ताम् ॥ ५४ ॥

ज्ञातेऽनुमार्थे ज्ञातत्वं ज्ञानेऽज्ञाते न वेद्यते ।
नार्थमात्रं धियो लिङ्गं कुतस्तत्रानुमा धियः ॥ ५५ ॥

ज्ञाते त्वर्थेऽनुमानादवगच्छतीति वदद्भिः ज्ञातेऽर्थे ततो धियोऽनुमा इष्टा । न चाज्ञाते ज्ञाने ज्ञातता अर्थस्य ज्ञायेत । ज्ञानसंबद्धं हि ज्ञातमुच्यते । न चार्थमात्रं धियो [2]लिङ्गमिष्टम् । अतोऽन्यतो ज्ञाने ज्ञाते तदनुमा व्यर्था, अज्ञाते त्वशक्या । अतो न ज्ञातोऽर्थोऽपि धीलिङ्गम् । फलसंबद्धो ज्ञातोऽर्थ उच्यत इति चेत्, न स ज्ञेयः केनापि । अतो न धीलिङ्गम् । न ह्यज्ञातं किंचिल्लिङ्गं दृष्टम् ॥ ५५ ॥

मातृमाने च मेये चेत्कार्ये ते कर्तृकर्मणी ।
तदानवस्था स्यान्मातृमानकर्तृक्रियादिषु ॥ ५६ ॥

यदि मानमपि मानमेयं प्रमाता च तदा कर्तृकर्मणी अपि ते क्रियाकार्ये स्याताम्, तुल्यत्वान्न्यायस्य । अतश्च मात्राद्यनवस्था स्यात् । ननु सिद्धं मे[3]यम्, असिद्धं कार्यम् ; कथं तुल्यन्यायता । उच्यते—यथा न कर्तृतद्व्यापारयोस्तद्व्यापारकर्म[4]ता, एकस्य युगपत्कर्मकर्तृत्वायोगात् ; व्यापारभेदेऽपि तद्वतोऽभेदात् ; नापि कर्त्रन्तरव्यापारकर्मता, तत्कर्तुरपि त[5]थैव कर्त्रन्तरव्यापारकर्मत्वस्यैष्टव्यत्वात् कर्तृतद्व्यापारकरणादिमालाप्रसङ्गात् । मातृमानयोरपि अयं न्यायस्तुल्यः । यथा क्रियासिद्धं न[6] कार्यम्, तथा

[1] B (०दस्स्ताम्) ।  [2] CD (लिङ्गं फलसंबद्ध०) ।
[3] DE (०यं न सि०)  [4] DE (०तैवकस्य) ।
[5] D (तदैव) ।  [6] CD (न तत्का०) ।

मानसिद्धमपि न मेयम् । अतोऽसिद्धता कार्यमेययोस्तुल्या प्राक्क्रियामानाभ्याम् । रूपान्तरसिद्धिस्तु कार्यस्यापि तुल्या, अत्यन्तासतोऽकार्यत्वात् । नन्वसिद्धो नास्ति कर्ता, मातात्वमितोऽपि माता ; अन्यथा न तज्ज्ञानमपि तज्ज्ञानं विनेत्यनवस्था आत्माश्रयता वा ; अतस्सोऽमितोऽपि माता, तथा मानमपीति चेत्—सत्यम्, अमिते अपि ते मातृमाने स्याताम्, यदि मानं विनैव भातः—अन्यथा तदभाने तद्भास्यं न भासेत आलोकाभान इव रूपम् । तयोरभानेऽन्यस्य भातोऽप्यन्यभास्यत्वासिद्धेस्स्वयंप्रभतैव नान्यभास्यता । अतस्स्वयं[1]प्रभं ज्ञानं तद्भास्यं त्वज्ञानमनिच्छतो न भाति किंचित् । भाद्वा सर्वं स्वयंप्रभं स्यात् । अतो न मातृमाने मेये ॥ ५६ ॥

भावान्तरस्याभावस्याप्यभावान्नान्यथामतिः ।
भ्रमोऽतस्सति रूप्ये न भ्रमबाधौ न चासति ॥ ५७ ॥

उक्तन्यायेन भावान्तरस्याभावस्य चाभावात् नान्यथाख्यातिरख्यातिरात्मख्यातिरसत्ख्यातिश्च भ्रमः । अतस्सति रूप्यादौ भ्रमबाधौ न युक्तौ, नाप्यसति ; किं त्वनिर्वचनीय एवेति सिद्धम् ॥ ५७ ॥

भिन्नाभिन्नं जगद्येषां का तेषां ख्यातिरन्यथा ।
तेषां चेदन्यथाख्यातिस्सर्वैव ख्यातिरन्यथा ॥ ५८ ॥

येषां सर्वं वस्तु भिन्नाभिन्नं तेषां शुक्ते रूप्यात्मता अस्तीति तथाख्यातिर्नान्यथाख्यातिः ; अन्यथा शुक्त्यात्मना ख्यातिरप्यन्यथाख्यातिस्स्यात् ॥ ५८ ॥

[1] BC ( ०भं ज्ञं त० ) ।

शुक्तेरभिन्नं रूप्यं तत्ततो भिन्नमिति स्थितौ ।
अभेदधीर्मृषा भेदधीस्तद्बाधेऽतिशोभते ॥ ५९ ॥
किंच बाधो भ्रमस्तेषां सोऽभिन्नं हि निषेधति ।
रूप्यधीरमृषा सा हि विधत्ते न निषेधति ॥ ६० ॥
येनात्मना यतोऽभिन्नं यत्तत्तेनात्मना ततः ।
भिन्नं चेत्स्यादयं दोषो भ्रान्तिबाधविपर्ययः ॥ ६१ ॥

न तु तथा । किंतु स्तः—

द्वे रूपे वस्तुनस्ताभ्यां भिन्नाभिन्नं तदन्यतः ।
भिन्नरूपेऽभिदाख्यातिर्मृषा चेत्तच भण्यते ॥ ६२ ॥
चित्रं तद्वस्तु याभ्यां ते रूपे भिन्ने मिथो यदि ।
नैकं चित्रमभेदेऽपि भेदाभेदेऽमृषा भ्रमः ॥ ६३ ॥

याभ्यां रूपाभ्यां वस्तु अन्यतो भिन्नाभिन्नमिष्टं ते रूपे भिन्ने चेन्मिथः, नैकं द्विरूपं वस्तु । किं [1]त्वेकैकरूपे द्वे । अभिन्ने चेत्, एकमेकरूपं वस्तु । भिन्नाभिन्ने चेत्—अमृषा भ्रमः, बाधश्च मृषा ॥ ६३ ॥

तत्कथम्—

भिन्नाभिन्ने स्वरूपाभ्यां रूपे चेदनवस्थितिः ।
न चेद्वस्त्वपि चित्रं स्यात्स्वतो बाधो मृषा भवेत् ॥ ६४ ॥

रूपे अपि स्वकीयाभ्यां रूपाभ्यां चेन्मिथो भिन्नाभिन्ने, तयोरपि भेदादि विकल्प्यम् । रूपरूपक्लृप्तौ चानवस्था । स्वतश्चेद्रूपे भिन्नाभिन्ने—वस्त्वेव तथा अस्तु, व्यर्थे रूपे । तदा भ्रान्तिबाधविपर्ययस्स्थित एव ॥ ६४ ॥

[1] D (०कैकं रू० ) ।

भिन्नाभिन्ने मृषाभेदधीश्चेदंशाग्रहो भ्रमः।
अब्रह्मधीस्तम[1]स्तैव भ्रमस्सर्वात्मनाग्रहात् ॥ ६५ ॥

भिन्नाभिन्ने वस्तुन्यभेदस्यैव ग्रहो भ्रमश्चेत्—भेदांशाग्रहो भ्रम इष्टस्स्यात्, न अन्यथाग्रहः। न चा[2]न्याग्रहेऽपि ग्रहो भ्रमः। अन्यथा अब्रह्मधीस्सर्वैव भ्रमस्स्यात्, सर्ववस्त्वग्रहात्। ब्रह्मणि तु ज्ञाते न किंचिदज्ञातं स्यात्—'येनाश्रुतम्', 'आत्मनि विज्ञाते' इत्यादिश्रुतेः तदज्ञानविजृम्भितत्वाच्चान्यस्य ॥ ६५ ॥

भिन्नाभिन्नेऽखिलेऽभीष्टे ज्ञाताज्ञातं सदाखिलम्।
सर्वज्ञस्सर्व एव स्यादकिंचिज्ज्ञोऽथवा जनः ॥ ६६ ॥

भिन्नाभिन्ने च सर्वस्मिन्, अभेदे च ज्ञाते—तदभेदात् भेदोऽपि ज्ञात एव। तौ चेद्भिन्नावेव त[3]द्वदेव भिन्नत्वादन्ययोरपि भिन्नयोर्नाभेदस्स्यात्। तदा न भिन्नाभिन्नता कस्यचित्। अतस्तयोरभेदोऽप्यस्ति; अभेद एव वा, भेदस्य भेदेऽनवस्थानात्। तच्चाभेदश्चेज्ज्ञातः, भेदोऽपि ज्ञात एव। अन्यथा भेदोऽपि न ज्ञातस्स्यात्। तदा न ज्ञाताज्ञातांशं वस्त्वेकं सर्वं वा जगत्। [4]ततस्सर्वज्ञो वा अकिंचिज्ज्ञो वा, न तु किंचिज्ज्ञः कश्चित्। अतोऽज्ञत्वधीरपि न भ्रमस्ते, तदसंभवात्। तवापि हि योंशो ज्ञात इष्टस्स ज्ञात एव, नाज्ञातः। तदा तदभिन्नं चेत्सर्वम्—तदपि तद्वज्ज्ञातमेव, नाज्ञातं भवेत्। अतोऽणुमात्रेऽपि ज्ञाते नाज्ञातं ते किंचित्स्यात्। न चेत्, नाभेदस्सर्वस्य ॥ ६६ ॥

[1] B (०स्तैवं)। [2] D (चान्यग्र०)।
[3] CD (०द्वदभि०)। [4] CD (तदा स०)।

नाणुमात्रमपि ज्ञातुं शक्यते त्रिदशैरपि ।
भिन्नाभिन्ने जगत्यस्मिन्नन्योन्याश्रयता यतः ॥ ६७ ॥

नन्वभेदे सत्यपि भेदस्यापि भावान्नैकज्ञाने सर्वज्ञानप्रसङ्गः। यदि नाम एकवस्तुज्ञाने सर्वस्या[1]भिन्नं रूपं भाति तथापि न भिन्नरूपं भाति। न च तयोरभेद एव, तज्ज्ञानसामग्रीभेदात्। प्रतियोग्यपेक्षं हि भेदज्ञानम्, न तथा इतरत्। न च तयोरन्यवस्तुत्वम्—अन्योन्यात्मत्वेन प्रतीतेः, अन्यथा अप्रतीतेश्च। भेदरूपं चानन्तम्, अनन्तप्रतियोग्यपेक्षत्वात्। अतो ज्ञाताज्ञातांशता न विरुध्यत इति चेत्—तर्हि सर्वस्य भिन्नाभिन्नरूपत्वात्, भेदस्य प्रतियोग्यपेक्षसिद्धित्वात्तत्सिद्धेश्च भेदसिद्धिपूर्वकत्वात्तत्सिद्ध्योरन्योन्याश्रयत्वात्, भिन्नाभिन्नरूपयोश्च अन्योन्यात्मत्वेनैव प्रतीतेरन्यथाप्रतीतेश्चेष्टत्वात्, अभिन्नरूपस्यैव शुद्धस्य भाने तस्यैव प्रामाणिकत्वात् स्वपक्षहानात्, न त्वत्पक्षे अणुमात्रमपि ज्ञातुं शक्यं देवैरपि। ननु भाति सर्वम्। न च तद्भिन्नमेव भाति नाप्यभिन्नमेव किंतु भिन्नाभिन्नम्। न च तस्य भानासंभवः, तद्दृष्टेः। न हि दृष्टेऽनुपपन्नं नाम। अतस्तथैव वस्तु। रूप्यादेस्त्वस्तीति भातोऽपि नास्तीति बाधादसत्त्वम्, तद्धियश्च भ्रमत्वं नान्यथेति चेत्—तर्हि रूप्यादेरपि स[2]त्त्वमसत्त्वं च, तथा भानात्। तद्धियोश्च प्रमाणत्वं ते युक्तम्, अन्यथा न भानमात्राद्वस्तु सिध्येत्तेऽपि ॥ ६७ ॥

[1] C (॰भिन्नरू॰)।　　[2] CD (॰त्त्वं स॰)।

किंच—

शुक्ते रूप्यात्मता शुक्तौ सती चेद्भाति किं भ्रमः।

शुक्तौ न सा चेन्न क्वापि ख्यातिबाधौ तदा कथम् ॥६८॥

शुक्ते रूप्यात्मता शुक्तौ सती चेद्भाति—न सा नास्तीति बाध्या, अतिप्रसङ्गात्। नातस्तद्धीर्भ्रमः। शुक्तौ सा नास्तीति चेत्, न क्वापि स्यात्। तथाहि—अन्यत्र रूप्ये सत्यपि शुक्ते रूप्यात्मता नाम न काचिदन्यत्र संस्यात्। अतस्सा सत्त्वेन ते न भाति। अतो न भ्रमबाधौ स्ताम् ॥ अथवा—भिन्नाभिन्नपक्षे शुक्ते रूप्यात्मता शुक्तावस्तीति न तद्धीर्भ्रमः। शुक्तौ नास्तीति चेत्, तद्वदन्यत्रापि जात्यादेरन्यस्य अन्यव्यक्त्यात्मता नास्तीति भिन्नाभिन्नपक्ष-हानिः। तदापि अन्ययोरैक्यस्य असतोऽख्यातेर्न भ्रान्ति-ख्यातिबाधौ ॥ ६८ ॥

न बाधश्शुक्तिधी रूप्यधियश्शुक्तिविधिक्षयात्।

निषेधति च रूप्यं चेच्छुक्तौ चेत्त[1]द्विधेः परम् ॥ ६९ ॥

न च कश्चित्ते बाधस्समस्ति। न हि शुक्तिधी रूप्य-धियो बाधः, शुक्तिविधावेवोपक्षयात्। शुक्तिधीरेव रूप्य-मपि निषेधति, न च तद्धियो बाध इति चेत्—तथापि शुक्तौ चेत् स निषेधो न शुक्तौ रूप्यमिति, तदा तां विधायैव—न पूर्वम्, न च सह। न चैकस्या बुद्धेः क्रमवद्व्यापारद्वययोगः, जन्ममात्रव्यापारत्वात्। तच्चेज्जन्म विधिरूपम्, न निषेधः। विहिते च शुक्तिस्वरूपे निषेधो व्यर्थः ॥ ६९ ॥

[1] E (०द्विधौ)।

कथम् । यतः—

शुक्तीदमंशविधितो निषेधश्चेद्भ्रमः कुतः ।
शुक्त्यात्मताविधाने तु निषेधो निष्फलः परः ॥७०॥

शुक्तीदमंशविधानादेव तस्या रूप्यधीसंभवे भ्रमो न स्यात् । [1]पूर्वं शुक्त्यात्मताविधाने तु नास्यां रूप्यत्वशङ्कापि । अतो द्विधापि निषेधो व्यर्थः ॥ ७० ॥

ननु रज्ज्वग्रहेऽपि स्यात्सर्पबाधोऽनुमादिना ।
सत्यं वस्त्वन्तरव्याप्तलिङ्गाद्यनहिताविधेः ॥ ७१ ॥

ननु रज्ज्वां सर्पभ्रमे जाते रज्ज्वदृष्टावप्यनुमानादिना सर्पबाधस्स्यात्, तत्र सर्पव्यवहारनिवृत्तिदृष्टेरिति चेत्— सत्यम्, सर्पाद्वस्त्वन्तरव्याप्तलिङ्गेन आप्तवाक्येन वा वस्त्वन्तरविधेस्सर्पव्यवहारो निवर्तते नत्वदृष्टायामेव रज्ज्वां तत्र सर्पनिषेधात् । न च रज्जुदृष्ट्या विना अन्येन वस्त्वन्तरत्वे विहितेऽपि सर्पावभासो निवर्तते । न ह्यपरोक्षभ्रमोऽपरोक्षग्रहं विना निवर्तते । अतश्शुक्त्यग्रहे न तत्र रूप्यनिषेधो युक्तः । ग्रहे तु स व्यर्थ इत्युक्तम् ॥ ७१ ॥

न व्यर्थः । यतः—

शुक्तिरूप्यविवेकस्स्यान्न निषेधं विनेति चेत् ।
अन्योन्याश्रयतैवं हि निषेधो नाविविक्तयोः ॥ ७२ ॥

तथाहि—

अविवेके कदा कुत्र किं वा केन निषिध्यते ।
द्वाभ्यां त्रिभिर्वातो ज्ञानैर्न वो रूप्यनिषेधनम् ॥७३॥

[1] D (पूर्वास्तु०) ।

विवेके हि कस्मिंश्चिद्देशे काले वा किंचित् केनचिज्ज्ञानादिना निषेद्धुं शक्यम्। अविवेके सुषुप्तादौ निर्भेदैकवस्तुग्रहे वा कदा कुत्र किं केन निषिध्येत। अतः पूर्वज्ञाने नाविविक्तयोश्शुक्तिरूप्ययोः द्वितीयेन तृतीयेनापि ज्ञानेन वश्शुक्तौ रूप्यनिषेधश्शक्यः। अतः प्रत्यक्षेण शुक्तिग्रहे अभावधी रूप्यबाधिकेत्येतदपि प्रत्युक्तम् ॥ ७३ ॥

विधिरेव निषेधश्चेन्निषेधश्शुक्तिधीस्सदा।
अविशेषनिषेधाच्च शुक्त्यद्वैतं प्रसज्यते ॥ ७४ ॥

निषेधस्य प्रसिद्धत्वात् प्रकारान्तराभावादेकविधिरेवान्यनिषेध इति चेत्—शुक्तिधीस्सदा अन्यनिषेधात्मैव स्यात्, न तु तथा। विधिस्वरूपस्यैव निषेधत्वे प्राप्ताप्राप्तादिविशेषाभावादविशेषेणैव सर्वनिषेधाच्छुक्त्यद्वैतप्रसङ्गश्च। कथं च भेदासिद्धौ शुक्तिविधिरन्यनिषेधः, शुक्तेरपि निषेधप्रसङ्गात्। सिद्धे च व्यर्थोऽसौ ॥ ७४ ॥

ननु तेऽपि निषेधोऽस्ति नान्यथा द्वैतबाधनम्।
अस्त्यपि व्यवहारे ते मैवास्मांश्चूचुदस्ततः ॥ ७५ ॥

'अविशेषनिषेधाच्च शुक्त्यद्वैतं प्रसज्यते' इति वदता द्वैतस्य निषेधेन बाधादद्वैतसिद्धिरिष्टेति मन्वानश्चोदयति—ननु तेऽपि निषेधोऽस्ति, अन्यथा द्वैतबाधायोगात्। नेदमिह नायमयमिति व्यवहारेष्टेश्च सोऽस्ति। अतो मा अस्मानेव चूचुदः, तुल्यत्वात्तेऽपि दोषस्य ॥ ७५ ॥

मैवं मंस्थाः मया ह्येष्टाविद्या संभावयत्यसौ।
असंभाव्यमपि भ्रान्तिर्बाधोऽपि घटते ततः ॥ ७६ ॥

मैवमावयोस्तुल्यदोषतां मंस्थाः, यतो मया अविद्यैव द्वैतहेतुरिष्टा। तां च सकार्यां विद्या दन्दहीति। अतोऽद्वैतसिद्धिर्मे, न तु द्वैतनिषेधात्। अदग्धा त्वविद्या असंभाव्यमपि संभाव[1]यति। अतस्सर्वो व्यवहारश्शुक्त्यादावात्मनि च [2]भ्रमस्तद्बाधश्च लौकिको वैदिकश्च मे घटते, न त्वन्येषां किंचिदपीति सिद्धम्॥ ७६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्यपादशिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ पञ्चमोऽध्यायः।

---

[1] CD (०यतस्स०)। [2] BCD (भ्रमं)।

# अथ षष्ठोऽध्यायः ।

अविद्याश्रयः पुमानित्युक्तम् । तस्य निर्भेदत्वं ब्रह्मत्वं च असकृदुक्तम् । तच्चायुक्तम् । यतः—

ब्रह्मैवाविद्ययैकं चेद्बध्यते मुच्यते धिया ।
एकमुक्तौ जगन्मुक्तेर्न मुक्तान्यव्यवस्थितिः ॥ १ ॥
अतोऽविद्यास्तु जीवानां कल्पितास्तेऽप्यविद्यया ।
नान्योन्याश्रयतादिश्च दोषोऽस्यां स हि वस्तुनि ॥२॥
तेषां भेदाच्च मूढान्य[1]बद्धमुक्तव्यवस्थितिः ।
गुरुशिष्यौ च ते न स्तां न ज्ञौ नाज्ञौ च तौ यतः ॥३॥

अत्रोच्यते—

जाड्यान्न कल्पितस्येष्टाविद्या प्रागुक्तहेतुभिः ।
नाजडं कल्प्यते सिद्धेर्नात एव जडाजडे ॥ ४ ॥

इतश्च—

न स्याद्ब्रह्मण्यविद्या सा नेष्टा चेद्ब्रह्मणस्तदा ।
न ब्रह्मधीर्न सा मुक्त्यै तन्मोहान्न हि संसृतिः ॥ ५ ॥

न चेद्ब्रह्माज्ञम्, नाज्ञातं च तत्स्यात्—तस्य अविद्यानिष्टेः, अन्यस्य चेतनस्याभावात् 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः, दृष्टियुक्तिभ्यां च चितो भेदासिद्धेः । तदा ब्रह्मास्मीति श्रौती ब्रह्मधीर्न स्यात्—ब्रह्मणोऽज्ञत्वाज्ञातत्वाभावात् ज्ञातृत्वज्ञेयत्वासिद्धेः, अन्यस्याज्ञस्य ज्ञातुरभावा-

[1] C (०बन्धमु०) ।

दस्मीति ज्ञानायोगाच्च । अतोऽभावान्न सा मुक्त्यर्था । ब्रह्माज्ञानाभावाच्च न तज्जस्संसारः । न चाज्ञानतत्कार्ये मुक्त्वा अन्यद्वस्तु नाशयेद्धीः । अ[1]तोऽपि न सा मुक्त्यर्था । न चान्यतोऽपि मुक्तिः, वस्तुनोऽनाशादात्मवत् । अतो ज्ञानान्मुक्तिश्रुतेर्बाधस्स्यात् । ब्रह्मण एव कल्पितभेदस्याविद्येष्टेर्नोक्तदोष इति चेत्, तर्हि ब्रह्मण एव भेदकल्पना अविद्या चेष्टा नान्यस्य । तदेव कल्पितभेदमन्यच्चेत्—तर्हि तस्यैवाविद्या, तदेव ह्यन्यत्, तस्यैवान्यता कल्पिता नान्यस्य । न चान्यस्यान्यता कल्प्या, स्वतस्सिद्धत्वात् । ब्रह्मणः कल्पितान्यत्वस्यैवान्यत्वं कल्प्यत इति चेत्—किं तस्मिन्नेव अन्यत्वे कल्पिते तत्कल्प्यम्, उत अन्यस्मिन् । तस्मिंश्चेत्, आत्माश्रयता ; अन्यस्मिंश्चेत्, अन्योन्याश्रयता अनवस्था वा । अनादित्वेऽप्यन्धपरम्परा, पूर्वपूर्वासिद्धावुत्तरोत्तरासिद्धेः । कल्पितेऽप्यन्यत्वे तत्कल्प्यं चेत्, पुनः पुनः कल्प्यत्वादनवस्थान्तरम् । नायं दोषोऽविद्यायाम्, न हि मायायां काचिदनुपपत्तिरिति चेत्—मुक्तानामपि पुनस्सा स्यात्, अनुपपत्त्यभावात् । [2]तथा ब्रह्मणश्च किं सा नेष्टा । न मुक्तानां सा भाति, न च कल्प्या—मुक्तत्वान्न्यायविरोधात् । तथा ब्रह्मणो विद्यात्मत्वात् । अतस्सा यत्र यस्य यथा भाति तत्र तस्य तथेष्यते, नोपपत्तिर्मृग्यते । अन्यत्र तु न सा न्यायविरोधेन कल्प्यत इति चेत्—तर्हि अविद्याकल्पितस्याविद्या कल्पितान्यत्वस्यान्यत्वकल्पनेति मा चीक्लृपः, अप्रतीतत्वान्न्यायविरोधाच्च । यच्चोक्तं विद्यात्मत्वं

[1] CD (०तो न सा) । [2] C (ते ब्र०) ।

ब्रह्मणः—न तद्वदज्[1]न्यविद्यात्मत्वम्, अनित्यत्वात्। चिदात्मत्वं चेत्—जीवानामपि तत्तुल्यम्, अन्यथा ज्ञत्वायोगात्। चिदचिदात्मत्वं चैकस्य निरस्तम्। निरविद्यत्वं चेत्, तदसिद्धम्। न चासिद्धेन तदेवासिद्धं साध्यम्। निरग्रहत्वं चेत्, तदप्यसिद्धम्। अग्रहाभावेऽपि ते भ्रमो न न स्यात्, अतज्जन्यत्वात्। तज्जन्यत्वे च स्वपक्षहानिः। अनाद्यग्रहस्य तत्कार्यभ्रमकल्पिताश्रयत्वायोगादनादिब्रह्माश्रयत्वसिद्धेः। न च सादिभ्रमकल्पितस्यानादित्वम्। सर्वे च भ्रमास्सादयः, कार्यत्वात्। तत्प्रवाहोऽपि भ्रमश्चेत्, कार्यः; अभ्रमश्चेत्, अकल्पकः। तस्मान्न कल्पितः कोऽप्यनादिः। अतो न सोऽज्ञानी। अतस्सूक्तं ब्रह्म चेन्नाज्ञानि अज्ञातमपि न स्यादित्यादि ॥ ५ ॥

इतश्च—

नाविद्या तद्वतोऽन्यच ज्ञातेऽज्ञातेऽपि सिध्यति।
न वेद्मीति त्वविद्यावा[2]न् जानंस्तां भाति हि स्वरुक् ॥६॥

न ह्यविद्यावतोऽन्यच अविद्या तस्मिन्नज्ञाते ज्ञाते च सिध्येत्। न हि तस्मिन्नज्ञायमान इदं न ज्ञायत इति ज्ञातुं शक्यम्, ज्ञायमाने तु नतराम्। ज्ञाते तस्य पूर्वमज्ञातता ज्ञेयेति चेत्—न, अज्ञातत्वासिद्धौ ज्ञातत्वासिद्धेः। अज्ञस्य त्वात्म[3]नस्स्वरुक्त्वात् तद्रुचैव तच्चाविद्यापि भातीति युक्ता। तथाहि—न वेद्मीत्यवि[4]द्यावांस्तामवभासयन् स्वयं प्रथते ॥ ६ ॥

[1] CDE (॰जन्यावि॰)। [2] B (॰वान् ज्ञानंस्तां)।
[3] B (॰त्वात्मरुक्त्वा॰)। [4] D (॰विद्यां भासयन्)।

स्वरुचोऽज्ञातताज्ञानं जानतोऽपि यथाज्ञता।
स्वरुक्तेनापि नाविद्याविषयो ब्रह्म भाति नः॥ ७॥

स्वरुचोऽप्यज्ञातता स्याद्यथा अज्ञानं जानतोऽप्यज्ञता।[1] न च स्वरुक्तेनाप्यज्ञानविषयतया अज्ञादन्यत् ब्रह्म भाति जनस्य॥ ७॥

स्वरुक् च भाति यत्तच्च नाज्ञाताज्ञविभागधीः।
अतोऽविद्या भवेद्यस्य भवेत्तद्विषयैव सा॥ ८॥

यच्च स्वयंप्रभं भाति न तत्रेदमज्ञमिदमज्ञातमिति विभागो भाति। न च स्वयंप्रभे विभागो युक्तिमान्। अतो यस्याविद्या तद्विषयैव सा युक्ता॥ ८॥

तच्चापरस्य विद्या चेत्सोऽज्ञातो नान्य इत्यतः।
स एव वेद्यो वेदैश्च तदा कोऽन्यः परोऽबुधात्॥ ९॥
अबुधश्चेत्परोऽबोधे नष्टे न स्यात्परो ननु।
नाबुधोऽबोधनाशे हि तस्मादन्यः परोऽबुधात्॥१०॥
उच्यतेऽबोधनाशे[2]ऽज्ञनाशश्चेत्कोऽत्र बुध्यते।
बुध्यते ह्यबुधो नो चे[3]द्धीमाला धीर्वृथैव वा॥ ११॥

अबोधनाशेऽज्ञनाशश्चेत्, कोऽत्र बुध्यते। अबुधो हि बुध्यते। बुध्वा चेद्बुध्यते, धीमाला। बुद्धवतश्च बुद्धिर्व्यर्था। सार्था चेन्न तदर्थः पूर्वसिद्धो विद्यया। अज्ञनाशे न विदुषो जीवन्मुक्तिः। ततो विद्याप्राप्तिश्चान्येषां न स्यात्। न चाजीवन्मुक्तोऽपि विद्वान् संस्यात्, विद्यया अविद्वन्नाशे। अतो न ज्ञाज्ञौ गुरुशिष्यौ स्ताम्। धीफलाभा[4]वाद्वा

[1] D ०तो ह्यज्ञ०)।
[2] B (०ज्ञानाज्ञ०)।
[3] D (०द्धीमान्वा धी०)।
[4] D (०वाच्च धी०)।

धीर्व्यर्था। न चाज्ञाननाशः फलं फलिनोऽभावे। न हि रोगनाशः फलं रोगिणो नाशे ॥ ११ ॥

धीजन्मन्यपि सोऽज्ञश्चेत्किं धिया ज्ञो न चेत्तदा।
नष्टोऽज्ञ इति चेन्नैवं ज्ञस्य जन्मप्रसङ्गतः ॥ १२ ॥

यदि धीजन्मन्यज्ञाननाशादज्ञो ज्ञो न भवेत्—[1]नतरां तन्नाशात्, उक्तदोषप्रसङ्गात्। ज्ञस्य जन्मप्रसङ्गाच्च ॥ १२ ॥

यतस्ते—

ज्ञोऽपि नासीत्पुरासीच्चेत्किं धिया कस्य वाज्ञता।
ज्ञत्वेऽप्यज्ञत्वमिष्टं चेत् त्वच्चोद्यं किं[2]बलादभूत् ॥ १३ ॥

धीजन्मन्यज्ञनाशे ज्ञातुर्जन्माभ्युपेयम्, अन्यथा ज्ञानायोगान्नाज्ञनाशोऽपि स्यात्। प्रागभावाच्च। ज्ञातुर्भावे तु धीर्व्यर्था। कस्य वा अज्ञत्वम्। ज्ञस्यैव चेत्, ज्ञाज्ञत्वे नैककाले युक्ते। भिन्नकाले चेत्, त्वच्चोद्यं त्वयैव निरस्तम् ॥ १३ ॥

ज्ञाने ज्ञाने जनिध्वंसौ चितश्चेत्क्षणिकैव सा।
चिज्जन्मनाशसंवित्तिर्न चितोऽन्यस्य सा कुतः ॥ १४ ॥

यदि धीजन्मन्यज्ञस्य नाशो ज्ञस्य च जन्म, तदा ज्ञाने ज्ञाने स्तां जनिध्वंसौ चितः। अतः क्षणिकैव सा इष्टा स्यात्। तच्चायुक्तम्। न हि चितो जन्मध्वंसौ स्वतोऽन्यतश्च सिध्यतः, स्वयंप्रभत्वात् ॥ १४ ॥

ज्ञाज्ञौ च सैव सातो ज्ञाज्ञा चाज्ञाने हतेऽहते।
कल्प्यते न स्वतो भेदश्चितो भेदे प्रमा न हि ॥ १५ ॥

चितोऽन्यस्य जडत्वाज्जडस्य च ज्ञत्वाद्ययोगाच्चिदेव ज्ञाज्ञौ नान्यौ। अतस्सैवाज्ञाने दग्धेऽदग्धे च ज्ञा[3] अज्ञा च

[1] D (न तु तन्ना०)। [2] DE (०फला०)। [3] C (ज्ञाज्ञौ च)।

कल्प्यते । न स्वतो भेदः, चितो भेदे प्रमाणाभावात् । अतोऽकल्पितस्यैवाविद्या । कल्पितस्य चेत्, स्वकार्याश्रया अविद्या इष्टा स्यात् । अविद्यायाश्चेदविद्या सैव तया बध्येत, नान्यः । न च तस्या मोक्षः, जडत्वाद्ब्रह्मज्ञानस्य तद्भावस्य चायोगात् । न च बन्धोऽपि जडस्य । अतो बन्धमोक्षौ न ते कस्यापि ॥ १५ ॥

तत्कल्पितस्याविद्या चेत्तन्निवृत्तिर्न विद्यया ।
नाज्ञबाधे हि विद्या स्यादज्ञोऽविद्यां विना न च ॥१६॥

अविद्याकल्पितस्य चेज्जीवस्याविद्या, नास्या विद्यया निवृत्तिः । न हि जडस्य अजडं ब्रह्मास्मीति धीः । स्याच्चेत्, भ्रान्तिस्सा । न चान्याविद्यामन्यविद्या हन्तीत्युक्तम् । न चाज्ञादन्यस्याविद्याहन्त्री विद्या अस्ति । अस्ति चेत्, तस्यास्सदा भावान्नाविद्या कस्यापि स्यात् । अज्ञबाधे च विद्यावदाचार्याभावात् नाज्ञानां विद्याप्राप्तिः । 'आचार्यवान्पुरुषो वेद' इति श्रुतिः धीश्च वृथा तत्फलाभावादिति चोक्तम् । अतोऽज्ञाबाधेनैवाविद्यां हन्ति । अतोऽज्ञस्याविद्यादेहत्वे नाविद्यां हन्ति ते विद्या, अज्ञबाधप्रसङ्गात् विद्यात्वहानात् । ननु कल्पितभेदानां जीवानामविद्यां ब्रूमः, न तु तत्कल्पितस्य । अकल्पितस्य चेदविद्या, परस्यैव सा । न ह्यन्योऽकल्पितोऽस्ति, अद्वैतहानात् । कल्पितभेदस्यैवाविद्या नान्यस्येति चेत्, तदापि कल्पितस्य भेदस्य नाविद्या इष्टा । अतो यस्य भेदः कल्प्यते तस्यैवाविद्या । सत्यम्, किंतु कल्पितभेदस्यैव भेदः कल्प्यते नान्यस्येति चेत्—अनवस्था, तस्यास्तस्या

भेदकल्पना[1] यास्तत्तत्कल्पनान्तरापेक्षणात् । तदापि न कल्पितस्याविद्या दृष्टा । कल्पितभेदस्य चेदविद्या—तस्यैव सा निवर्त्या, अन्नस्याबाध्यत्वोक्तेः । कुतश्च कल्पितभेदस्य भेदकल्पना—किं परात्, उत स्वतः, किं वा जीवान्तरेभ्यः । यदि परात् सोऽपि कल्पितभेदो न वा । आद्ये कल्पे तस्यापि भेदकल्पना अविद्या च न विरुध्यते । द्वितीयेऽपि न पराद्भेदकल्पना अस्य स्वत इव, अकल्पितभेदत्वात् । तर्हि स्वत इति चेत्, यास्य स्वतो भेदकल्पना सा परस्यैव स्वतस्स्यात् । परस्य अकल्पितभेदत्वे तयोर्भेदकल्पनायोगात्, अभेदस्य चेष्टत्वात् । अतो जीवस्य जीवान्तरेभ्यो भेदकल्पनापि तथैव स्यात् । कल्पितभेदस्य चेत्कल्पना, तस्यैव सा निवर्त्या । यत्र हि यत्कल्प्यते तस्मिन् सत्येव तन्निवर्त्यं शुक्ताविव रूप्यम् । अतो न जात्वस्य सर्वो भेदो निवर्त्यः, अन्यथा सर्वभेदकल्पना[2] अविद्या वा अकल्पितभेदस्याभ्युपेया । अविद्याकल्पितस्य अविद्यान्तराभ्युपगमेऽप्ययमेव न्यायः । अतोऽविद्याकल्पितस्य कल्पितभेदस्य वा अविद्याभेदकल्पना अयुक्ता ॥ १६ ॥

विद्ययाज्ञस्य बाधश्चेद्वीफलं कस्य मुक्तता ।

नानविद्यस्य बन्धस्स्यात्कुतोऽबन्धस्य मुक्तता ॥ १७ ॥

विद्यया यद्यविद्यादाहे तद्वतोपि दाहः, न तस्य विद्या[3]फलं मुक्तता ब्रह्मभावस्स्यात्; नाप्यन्यस्य । न ह्यनविद्यस्य बन्धः । न चाबन्धस्य मुक्तता । किं त्वविद्यया

[1] D (०यास्तत्क०) । [2] CD (०ना आद्या वा) ।
[3] BC (०फलमु०) ।

बद्धस्य विद्यया ब्रह्मभावो मुक्तिरिष्यते, तथा श्रुतेः। अन्यथा अपुमर्थत्वाच्च। अतोऽज्ञस्याबाध्यत्वात् तस्याविद्याकल्पितत्वे अविद्यायाश्चाबाध्यत्वम् ॥ १७ ॥

अतः—

स्वप्नविद्येव ते विद्या नाविद्यां हन्ति सा यतः।
अतोऽविद्याक्षतिं वाञ्छन्धियाज्ञं परमिच्छतु ॥ १८ ॥

स्वप्ने विद्या स्वप्नविद्या। सेव सैव वा तव विद्या, अविद्यानिवर्तकत्वात्। अविद्यावस्था स्वप्नः—'अनादिमायया,' 'स्वप्ननिद्रा[1]युतौ,' 'त्रय आवसथास्त्रयस्स्वप्नाः' इत्यादिप्रयोगदर्शनात्। अतो विद्यया अविद्यानिवृत्तिमिच्छता परस्यैव ते अभ्युपेये ॥ १८ ॥

सर्वाज्ञहेतुरेका चेदविद्या तत्क्षये धिया।
सर्वमुक्तिस्सक्तत्तेऽपि नैका चेद्बहुकल्पना ॥ १९ ॥

किं सर्वजीवभेदकल्पनाहेतुरेकैवाविद्या, उत प्रत्येकमेका। आद्ये कल्पे एकस्य धिया अविद्याक्षय एकमुक्तौ सर्वमुक्तिस्त्वत्पक्ष एव; मत्पक्षे तु एकमुक्तावेकमुक्तिरेव, अनेकाभावात्। सर्वबुद्धिभिस्तत्क्षयो नैकुपुंधियेति चेत्—एकामुक्तौ सर्वामुक्तिस्ते, सति ह्येकस्मिन्मूढेऽन्यस्य विदुषोऽप्यमुक्तेरविद्याक्षयात्तदा। न चास्ति विद्वान्, अविद्यावत्त्वात्। अत एकश्चेन्मूढः, सर्वो मूढः; एकश्चेद्विद्वान्, विद्वानेव सर्वः; अन्य[2]थास्य विद्वत्तायोगात्। नोभयथापि ते ज्ञाज्ञौ गुरुशिष्यौ संस्तः, कुतो मुक्तामुक्तौ। तर्ह्यस्तु प्रत्येकमेका, अतः कल्पितजीवभेदानन्त्यादनन्तास्तद्धेतवो-

[1] DE (०युक्तौ)। [2] CDE (०था स्ववि०)।

ऽविद्या इति चेत्, बहुकल्पना स्यात्। ननु सा युक्तैव, सति कल्पके। किं तत्कल्पकम्। मुक्तामुक्तविद्वदविद्वत्स्वर्गीतरादिभेदव्यवस्थेति चेत्—किं सा पारमार्थिकी, उत कल्पिता। आद्ये कल्पे सा स्वसिद्ध्यर्थं नाविद्यां कल्पयेत्, विरोधात्। भेदे मानाभावात् कल्पितैव सेति चेत्—तर्हि कल्पितभेदान्नाविद्याभेदः कल्प्यः, एकयापि सिद्धेः। अन्यथा एकस्यापि पुंसोऽनन्तास्ताः कल्प्याः, कल्पितानन्तभावभानात्। अथैकस्यापि ताः कल्प्याः, ताभिरेव सर्वकल्प्यसिद्धेर्नान्यस्य ताः कल्प्याः। एक इवान्येऽप्यज्ञा भान्ति, अतस्तेषामपि ता इष्टा इति चेत्—न तावत्ते मानतो भान्ति, अमानत्वात्ते भेदस्य। कल्पिताश्चेत्—एकाविद्याभिरेव तत्क्लृप्तेर्नान्येऽविद्यावन्तोऽविद्याश्च तेषां कल्प्याः, बहुकल्पनाप्राप्तेः। जीवस्य या स्वरूपकल्पिका अविद्या सैव तस्यान्यत्वकल्पिका च, उत अन्या। सैव चेत्—कल्प्यभेदान्नाविद्याभेदः; स्वाश्रया च सा स्यात्स्वकल्पिताश्रयत्वात्। अथ तदीयाविद्या अन्यं कल्पयति, अन्यदीया च तम्—तदविद्याकल्पितस्य चेदविद्या तं कल्पयति, अन्योन्याश्रयता; अन्याविद्याकल्पितस्य चेदविद्या तं कल्पयेत्, अनवस्था तस्य तस्यान्याविद्याकल्पितान्याविद्याकल्प्यत्वात्। अनादित्वाददोषो बीजाङ्कुरवदिति चेत्—तदापि एकैकस्य जीवस्य सादिता संतानस्यानादित्वेऽपि बीजादिवदेव। अतोऽन्तवत्ता च। साद्यविद्याकल्पितत्वे सुतरां सादिता। अतो न मुक्तिभाक्त्वम्। पूर्वपूर्वाज्ञानाक्षय उत्तरोत्तराज्ञानाक्षयाच्चा-

निर्मोक्षः; पूर्वक्षये वा उत्तरक्षयात् सर्वमोक्षो युगपत्; न चेत्, अनादौ पूर्वममुक्तिरुक्ता। आद्यस्याकल्पिताविद्याकल्पितत्वान्नानवस्थेति चेत्—अकल्पिताविद्याक्षयेऽन्याविद्याक्षयाद्युगपत्सर्वमुक्तिः, अक्षये चामुक्तिः। अतो नाज्ञान्तरहेतवस्तदीयाश्चानन्ता अविद्याः कल्प्याः ॥ १९ ॥

किंच—

ब्रह्मादिभेदजातं [1]चेत्त्वन्मोहेनैव भाति ते।
स्वप्नवत्किं न सिद्धं ते मोहोऽन्यो येन कल्प्यते ॥२०॥

यथा स्वप्ने ब्रह्मादिस्थावरान्तं चेतनाचेतनभेदजातं त्वन्मोहेनैव ते भाति नान्यमोहेन, न च वस्तुभूतम्, नाप्यन्येषां भाति त्वद्बोधेनैव बाधदृष्टेः; यैश्च सहासीत्संवाद[2]स्ते ते पृष्टा [3]न सोऽस्माभिः कृत इत्याहुः प्रबोधे; अतो नाज्ञा[4]न्तराविद्यान्तराणि स्वप्ने कल्प्यन्ते—तथा जागरितेऽपि त्वन्मोहेनैव सर्वस्य ते भानान्न तानि कल्प्यानि, तैर्विनापि सर्वभेदसिद्धेः। न चान्यमोहं तज्ज्ञं च वेत्सि, अन्यथा स्वमोहक्षयेऽपि तज्ज्ञानात्ते भूमलक्षणब्रह्मप्राप्त्यभावादमुक्तिः। मोहिनोऽन्यमोहादि भाति नामोहिन इति चेत्—न, स्वप्ने मोहिनोऽप्यन्यमोहाद्यभानात्। गुरोश्च शिष्यदृष्टेस्त्वया दृष्टत्वात् ॥ २० ॥

अन्यथा—

न स्यान्मोहान्तरेऽपीष्टे संगतिर्गुरुशिष्ययोः ॥
न पश्येद्धि गुरुश्शिष्यं तदविद्या हता यतः ॥ २१ ॥

[1] CD (चेत्तन्मो०)। [2] BD (०स्ते ते ते पृ०)। [3] C (नास्माभिः)। [4] C (०ज्ञानान्त०)।

यद्यमोहिनोऽन्यमोहिमो[1]हतज्जं न भाति, तस्मिन्निष्टेऽपि ते गुरुशिष्यसंगतिर्न स्यात्। न ह्यमोहित्वाद्गुरुश्शिष्यं मूढं दुःखिनं पश्येत्। न चाहष्टेन संगतिः। न चाविद्यावान् गुरुः। न चामोहनुद्विद्या। विद्वद्देहस्थितिश्च संस्कारमात्रात् ते, न त्वविद्यागन्धेन। शाब्दज्ञानी गुरुः न साक्षात्कृतिमान्, अमोही तु तद्वानिति चेत्—साक्षात्कृतिरपि विद्या चेत्, शाब्दीव ते न मोहं नुदेत्; अन्यथा शाब्द्यपि नुदेत्। तदा अन्या व्यर्था। शाब्दी चेन्मानजा न मोहनुत्, नतरामन्या। सा ह्यमानजत्वात् भ्रान्तिर्भावनादिर्वा, न तु विद्या। न ह्यक्षजादि अस्या मानं तेऽपीष्टम्। शब्दजा चेत्, शाब्द्येव नान्या। सा चेदात्मस्वरूपम्, तच्चेन्मोहनुत्—सदा नुदेत्। अतः शाब्द्येव मोहनुत्। न चेत्, सा व्यर्था। न व्यर्था, भ्रमानुत्त्वेऽप्यग्रहनुत्त्वात्तया विद्याभ्याससिद्धेश्च। स च भ्रमं नुदेत्। भ्रमो नाग्रहादभावाद्भवेत्, किंतु पूर्वभ्रमसंस्कारात्; तत्संस्काराच्चोत्तरो भ्रमः; ततो विक्षेपतत्संस्कारयोरन्योन्यहेतुतया भावोऽनादित्वात् बीजाङ्कुरादिवत्। तयोश्च ज्ञानाभ्यासात्क्षये तत्त्वं हष्टं स्यात्। अतोऽहष्टतत्त्वोऽप्यस्ति विद्वान्, स च गुरुर्न ध्वस्तसर्वाविद्य इति चेत्—तन्न, 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति तत्त्वदर्शिनामुपदेष्टृत्वस्मृतेः। अग्रहश्चानिर्वाच्योऽनादिः। तज्जो भ्रमः, नान्यजः। न च कार्यं कारणम्। विद्यैवाविद्यां नुदेत्, नान्या। विद्यापनोद्यै-

[1] C (०मोहं त०)।

वाविद्या, नान्या । सा च मानवस्तुतन्त्रा, न पुरुषतन्त्रा । पुंतन्त्रा चेत्, न विद्या कर्मवत् । न च विद्याभ्यासो मानं विना । न च विद्याफलं तदभ्यासात् घटज्ञान-फलवत् । विद्यार्थमन्यदभ्यस्यते, न तु विद्या साक्षात् । विद्या चाग्रहमेव नुदेत्[1], न तु तज्जं भ्रमादि साक्षात् । सर्वस्य च जनिमतोऽनाद्यग्रहं विना[2] नान्यज्जन्मस्थित्यादि-कारणम्, अन्यस्यानात्मनः कार्यत्वादात्मनश्चाविकारि-त्वादित्यादेरर्थस्योक्तत्वात्, जीवन्मुक्तेश्च दर्शितत्वात् । तत्र च जीवन्मुक्तस्याशेषाविद्यातत्कार्यक्षयात्संस्कारमात्र-स्फुरणात्; ततश्च भ्रमानिष्टेरन्यथा अमुक्तेः, अन्य-मोहतज्जादेरसंस्कारमात्रत्वात्, अन्यथा गुरोस्संस्कार-वेगक्षये तत्क्षयात् गुरुणा सह सर्वमुक्तेः, न गुरुर्विद्वान् मोहदुःखादिमन्तं शिष्यं पश्येत् । सोऽपि न गुरुम्, तस्याशेषाविद्यातत्कार्यदाहात् ब्रह्मभूतत्वात् । ब्रह्मणश्च गुरुं विना अदृष्टेः, दृष्टौ च मुक्तिविद्यासिद्धेः गुर्व-पेक्षाभावादशिष्यत्वात् । अतो नामोही अन्यमो[3]हि-मोहादि पश्यतीति तेऽयुक्तम्, गुरुशिष्यासंगतेर्विद्या-मुक्त्यप्राप्तेः । पश्येच्चेत्, मुक्तावपि तद्दृष्टेरमुक्तिरुक्ता । अतोऽन्यमोहादिकल्प[4]ना व्यर्था, व्यर्थेति च न सा कार्या ॥ २१ ॥

त्वन्मोहकल्पितं कृत्स्नेर्नान्यमोहेन कल्प्यते ।
नान्योऽन्यमोहजं विद्यान्मोहोऽन्योऽतोऽपि निर्भ्रमः ॥२२॥

[1] CDE (०हणमे०) ।  [2] C (०ना न जन्म०) ।
[3] CD (०मोही मो०) ।  [4] B (०ना न व्य०) ।

कथं [1]च सन्न[2]पि मोहस्तेऽन्यमोहतज्जादिभाने हेतुः। तस्य कल्पकश्चेत् त्वन्मोहः, तस्य अन्यमोहतज्जत्वहानिः। त्वन्मोहजत्वं च त्वन्मोहकल्पितत्वादितरत्वन्मोहकल्पितवत्। क्लृप्तत्वाच्च नान्यकल्प्यत्वम्, अन्यथा अनवस्थानात्। कल्पितं च नान्य[3]कल्पकमितरकल्पितवत्। न च त्वन्मोहोऽन्यमोहादिबोधकृत्, अमानत्वात्। अमेयश्चोक्तो मोहः। स मोहो मोहमेयश्चेत्—न, समत्वात्। अभातोऽमानत्वात्, अ[4]स्वरूपाच्च मोहस्य। स्वरूपेऽमेयत्वं च। मन्मोहो मन्मेयश्चेत्—अन्योऽपि त्वन्मेयस्त्वत्संबन्धी च, ते भानान्मोहत्वाच्च। तथा तत्कार्यमपि, त्वन्मोहकार्यवत् मोहकार्यत्वात्ते भानाच्च। अत एव त्वन्मोहकार्यं च तत् इतरवत्। न चान्यमोहजमन्यदृश्यं सिद्धं मे। स्वमोहकार्यं स्वदृश्यमिति तेऽपि सिद्धम्। अतस्सर्वमोहकार्यं स्वमोहकार्यं स्वदृश्यत्वान्मोहकार्यत्वा[5]च्च इतरवत्। जडत्वात् कार्यत्वाद्वा[6] मोहकार्यम्। अतः कार्येणाप्यन्यो मोहः तत्कारणं वस्त्वन्तरं वा नानुमेयम्। न च कारणेऽभाति कार्यं भाति मृदीव घटादि। न चान्यमोहाद्यसिद्धावन्यो मूढस्सिध्येत्। अतोऽन्यो मोहस्तद्वान् तत्कार्यं च निष्प्रमाणकम्। अतोऽन्यमोहादि भाति चेत्—स्वमोहे नष्टेऽपि तद्भानादमुक्तिः, स्वमोहस्य तद्भावभानहेतुत्वादिति सूक्तम् ॥ २२ ॥

[1] BCD ( च न स० ) ।
[2] E ( ०पि ते मो० ) ।
[3] CD ( ०कल्पित० ) ।
[4] BC ( अरूपा० ) ।
[5] C ( ०त्वाद्वा ) ।
[6] C ( ०द्वा त्वन्मो० ) ।

त्वन्मोहभातं तेऽन्येषां मोहैस्तेभ्यो विभाति चेत्।
त्वद्धिया सर्वमुक्तिस्स्यात्तन्नाशे तेऽपि नान्यथा ॥२३॥

यत् मोहकल्पितं मे भाति तदेवान्यमोहैः कल्प्यते तेभ्यश्च भाति, अतोऽसाधारणस्य मन्मोहकल्पितस्य मद्दृष्टस्य चाभावात् पूर्वश्लोकोक्तानुमानदृष्टान्ताभावः। बहुमोहकल्पितं बहुदृष्टं चैकमस्ति इन्द्रजालमरीच्युदकद्विचन्द्रादीति चेत्—तत्किं त्वन्मोहकल्पितं सर्वं त्वद्धिया नश्यति, उत न। नाशे त्वन्मुक्तौ सर्वमुक्तिः, त्वद्धियैव सर्वमोहतत्कार्यनाशात्; अन्यथा न तेऽपि मुक्तिः, सर्वस्यानाशात्प्रागिव। ननु बहुमोहकल्पितं द्विचन्द्रादि एकधिया नष्टं तदेवान्येषां तिष्ठति—तन्न, नष्टस्य स्थित्ययोगात्; अन्यथा यस्य नष्टं तस्यापि तत्तिष्ठेत्। न चैतद्दृष्टत्वेनोपपन्नम्। न हि मोह[1]भेदः तत्कार्यैक्यं तस्य युगपत्स्थितिनाशौ त[2]द्द्रष्टृभेदश्च मानदृष्टस्सन्। सत्यम्—तथापि लोकसिद्धः, मायादिदृशां सं[3]वादात्; लोकसिद्धश्च दृष्टान्त इति चेत्—तथाप्येकदृष्टौत्पातिकार्कसुप्त्यादावन्येषां[4] विवादात्तस्यैकमोहजत्वसिद्धेरन्यस्यापि तथात्वप्राप्तेर्मायादावप्येकस्यानेकमोहजत्वाद्यसिद्धिः। संवादस्तु तत्र सर्वेषामेकरूपभ्रमोत्पत्तेस्तन्निमित्तशोकमोहहर्षादिसंवादवत्। तत्र चैकमोहिकल्पितत्वासिद्धेरन्यमोहिमोहानां स्थितौ तत्कार्यस्थितिस्स्यात्। तेऽपि यत्र कल्पिताः स्वप्ने न तत्र ते तत्कार्यं वा तिष्ठेत्तद्धेतुमोहक्षये। अतो द्विचन्द्रादेरेक-

[1] CD (०भेदत०)। [2] B (०द्द्रष्टृभे०)।
[3] BC (संपादा०)। [4] D (०षां च वि०)।

स्यानेकमोहजत्वं स्थितिनाशौ च युगपदसिद्धौ। ततश्च सर्वपुंमोहजमेकं चेत्—एकस्य धिया सर्वमुक्तिर्वः, सर्वबन्धक्षयात्; नान्यथा एकस्यापि—तदक्षयात्, एकस्य युगपद्भावाभावायोगात्। योगेऽपि ज्ञानं वृथा, प्रागपि तद्योगादित्युक्तं युक्तमेव ॥ २३ ॥

किंच—

त्वन्मोहजाश्चेत्सर्वेऽज्ञास्त्वन्मोहे ज्ञानतो हते।
न स्युस्तेऽतो न तन्मोहास्सर्वमुक्तिस्तदा न किम् ॥२४॥

अन्यमोहितन्मोहानां भावे तत्कार्यभावश्शङ्क्येतापि। यदा तेऽपि त्वन्मोहजत्वात्त्वद्धिया त्वन्मोहे हते न स्युः, तदा कुतस्तत्कार्यस्थित्याशङ्का। अतस्त्वद्धिया सर्वमुक्तिरेव, अन्यथा न ते धीर्मोहनुत्स्यात्। सर्वस्यानात्मनस्सर्वात्मसाधारण्ये च साङ्ख्यादिपक्षदोषास्त्वत्पक्षेऽपि स्युः ॥ २४ ॥

नैकमोहक्षये मुक्तिर्यद्येकस्सर्वमोहजः।
अभावात्सर्वमोहानां मुक्तिश्चेत्सर्वमुक्तता ॥ २५ ॥

नैकमोहजमेवान्यमोहजं ब्रूमः, उक्तदोषप्रसङ्गात्; किं त्वेकैकं सर्वमोहजम्। बहूनां हि द्रव्यैः क्रीतं पक्वं च तेषां स्वं भोज्यं च, एकद्रव्यलोपे च तस्य न तत्त्वं भोज्यं च—एवमत्रापीति चेत्, तन्न; सर्वमोहजमेकमोहजमेव, मोहजत्वादेकस्य भानाच्च एकमोहजस्वप्नार्कसुष्यादिवदित्युक्तत्वात्; अन्यमोहजस्यान्यदृश्यस्य चासिद्धत्वादन्यमोहतज्ज्ञानां चान्यदृष्टानां तं प्रत्यसिद्धेः; जडस्य चामोहित्वादजडस्य चान्यादृश्यत्वादन्यत्वासिद्धेः। अन्यदृश्यत्वे च घटवज्जडत्वादन्यमोह्यसिद्धौ तन्मोहाद्यसिद्धेश्च। अपि चैकैकं

सर्वमोहजं चेत्—नैकमोहक्षयादेकोऽपि मोहजोऽणुमात्रो-ऽपि नश्येत्, तद्धेतुसर्वमोहाक्षयात्। अतस्सर्वामुक्तिरेक-मोहक्षयेऽपि। सर्वमोहात्मनो हेतोरभावान्नाशश्चेत्, सर्वनाशात्सहैव सर्वमुक्तिः। मोहोऽप्यन्यमोहकल्प्यश्चेत्, न तत्स्थितौ नश्येत्। अतः कल्पनायामिव नाशेऽपि अन्योन्याश्र[1]यत्वात् नैकोऽपि नश्येत्। अकल्प्यश्चेन्नान्य-मोहोऽन्यस्य भाति, तन्मोहाकल्पितत्वादतन्मोहत्वाच्च; अन्यथा स्वमोहक्षयेऽपि अन्यमोहतज्जभानादमुक्तिः, [2]बन्धात्मनैव तद्भानात्। अत उक्तन्यायेनैव त्वदुक्तदृष्टान्त-दार्ष्टान्तिकवैषम्यं सिद्धम् ॥ २५ ॥

एकस्य मोहे नष्टेऽन्यो मूढो न स्यात्तथाप्यतः।
कल्पिताज्ञत्वपक्षेऽपि गुरुशिष्यस्थितिः कुतः ॥ २६ ॥

उक्तन्यायेनैकस्य मोहे नष्टे अन्यमूढासंभवादविद्या-कल्पितानामविद्येत्यस्मिन्ननयेऽपि पक्ष आ[3]शिश्रयिषिते गुरु-शिष्यमुक्तामुक्तस्वर्गेतरादिव्यवस्था न स्युर्भवतोऽपि ॥ २६ ॥

अत उपसंहरति—

अतोऽविद्याकृतं बन्धं विद्यया हन्तुमिच्छता।
एष्टव्या ब्रह्मणोऽविद्या न तया कल्पितस्य सा ॥ २७ ॥

॥ इति श्री[4]मत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्यपाद-शिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ षष्ठोऽध्यायः ॥

---

[1] CD (॰यत्वं नै॰)। [2] CDE (बद्धात्म॰)।
[3] BC (॰शिश्रिषि॰)। [4] B (॰मदव्य॰)।

# अथ सप्तमोऽध्यायः।

अथेदानीं सर्वे द्वैतिन आहुः—

नन्वेक एव चेन्मोहाद्बध्यते मुच्यते धिया।
बोधे जातेऽस्य कश्शिष्यो मूढे जाते तु को गुरुः॥ १॥

ऐकात्म्यपक्ष आत्मानात्मविद्याविद्यागुरुशिष्य[1]मुक्तामुक्तस्वर्गान्तरादिव्यवस्था न स्युरित्यर्थः॥ १॥

नर्ते विद्या गुरुं तेऽपि श्रुतेराचार्यवानिति।
मोहाभावाद्गुरोस्सर्वं मोहादस्तीति नोत्तरम्॥ २॥

न चात्मज्ञं गुरुं विना श्रुतिन्यायादेरेवात्मविद्या तेऽपि स्यात्। कर्मविद्यापि ह्याचार्यापेक्षा, किं पुनरात्मविद्या। कश्चैकात्म्ये श्रुत्यादिः। स चेल्लोकप्रसिद्ध्या अस्ति, गुरुश्च तथा। 'आचार्यवान्पुरुषो वेद,' 'आचार्याद्धैव विद्या' इत्यादिश्रुतेश्च। मोहकल्पितं गुरुश्रुत्यादि सर्वं ममाप्यस्तीत्येतन्नोत्तरं मच्चोद्यस्य, गुरोर्मोहाभावाच्छिष्यश्रुत्याद्यसिद्धेस्तद्विद्यादित्सया अप्रवृत्तेः; अन्यथा सर्वं स[2]देव स्यात्॥ २॥

कथम्—

विद्वानेव गुरुस्सोऽपि पश्येचेन्मूढमस्त्यसौ।
न चेत्पश्यति कं शिष्यान्न चाभासमुपेक्ष्य[3] तम्॥ ३॥

[1] BCD (०ष्यमुक्तस्व०)। [2] CD (सदैव)।
[3] B (०च्यतः)।

तथाहि—

न ह्यब्धौ बहुभिस्सार्धं स्वप्ने मग्नः प्रबोधकः[1] ।
उत्तीर्णोऽमूढ उद्धर्तुं तान् स्मरन्नपि नेहते ॥ ४ ॥

ब्रह्मैवाहं न संसारी न चान्योऽस्तीति पश्यतः ।
चित्राभं शिष्यसंघं च न न्याय्यं शासनं तथा ॥ ५ ॥

न चात्मानं कल्पितभेदं शास्ति । कथम्—

निश्चिन्वन्नात्मनो मुक्तिं स्वमुक्त्या चान्यमुक्तताम् ।
अमुक्तमन्यमप्यन्यं कस्माच्छिष्याद्धितो गुरुः ॥ ६ ॥

अमुक्तभ्रान्तिनुत्त्यै चेच्छिष्टिस्सापीदृशी न किम् ।
मन्मुक्त्यैवासि मुक्तस्त्वं मा यत्नं कुरु मुक्तये ॥ ७ ॥

आत्मन एकत्वादनात्मनश्चामुक्तेः—

एकमुक्त्या जगन्मुक्तिं शृण्वन्मुक्तिं गुरोर्दृढाम् ।
किं शिष्योऽपीहते मुक्तेरदृष्ट्या चेत्तदापि किम् ॥ ८ ॥

गुरोर्मुक्तिं श्रुतवतोऽप्यात्मनो [2]मुक्त्यदृष्टेः तदर्था ईहेति चेत्, न सा युक्ता; आत्मनो मुक्त्यदृष्टेरेवात्मैक्याद्गुरोरप्यमुक्तिनिश्चयान्न कस्यापि मुक्तिरस्तीति तदर्थेहोपरमस्य युक्तत्वात् ॥ ८ ॥

किंच—

कस्य चिन्मुक्तिरासीच्चेदैकात्म्ये कस्य संसृतिः ।
न चेन्मुक्तौ भविष्यन्त्यां मतौ वा कस्य निश्चयः ॥९॥

इदं तावदैकात्म्यवादी प्रष्टव्यः—किमनादौ काले कस्यचिन्मुक्तिरासीन्न वा । न चेत्सा आसीत् नास्ति च,

[1] E (०धतः) ।        [2] CD (०मुक्तदृ०) ।

सा भविष्यतीत्यच का आशा। तद्वे[1]तुर्विद्यापि नासीच्चेत्, तस्यास्तत्सामग्र्या वा भावित्वे का आशा। नासीच्चेद्विद्या— न भविष्यत्येव सा, गुरुसंप्रदायाभावात् ॥ ९ ॥

तस्मादयुक्तमैकात्म्यं ज्ञानाज्ञानाव्यवस्थितेः।
गुरुशिष्याव्यवस्थानान्मुक्तामुक्ताव्यवस्थितेः ॥ १० ॥
अतः पुंभेद एष्टव्यो द्वैतं च परमार्थसत्।
तद्भावे गुरुशिष्यादिव्यवस्था युज्यते यतः ॥ ११ ॥
उच्यते दोषतो नास्मान्मुक्तिः [2]पुंसु बहुष्वपि।
इष्टेष्वैकात्म्यमेवातो न्याय्यत्वादभ्युपेयताम् ॥ १२ ॥

कथम्—

यद्येककल्प एकोऽपि ज्ञो मुच्येत तदा जगत्।
नाद्य स्याद्गतकल्पानामानन्त्याद्द्वैतिनामपि ॥ १३ ॥

तथाहि—

एकैकापचयो येषां बहूनामपि तत्क्षयः।
दृष्टः क्रमेण माषाणां भिन्नानां नाप्यनन्तता ॥१४॥

न तेषामज्ञातसंख्यत्वादानन्त्यम्। यतः—

यद्यपि ज्ञायते संख्या नास्माभिर्गणितज्ञवत्।
ईश्वरो वेत्ति तत्संख्यां न चेत्सर्वज्ञताहतिः ॥ १५ ॥

न चासङ्ख्यत्वं भिन्नत्वे घटादिवत् ॥ १५ ॥

किंच—

भेदे घटादिवज्जाड्यमनात्मत्वं च सज्यते।
पुंसां पत्युश्च जन्मैवं गुणानां च ततः क्षयः ॥ १६ ॥

[1] CD (०तु वि०)। [2] CD (पुंच्चु)।

भेदे न वस्तुत आनन्त्यम्। अत एव जनिमत्वान्न कालतोऽपि। तथा देशतोऽपि, भिन्नानामेकदेशत्वादृष्टेः। श्लोकार्थस्स्पष्टः ॥ १६ ॥

आद्यन्तवत्त्वान्मायैव ज्ञा[1]श्च वो रज्जुसर्पवत्।
बन्धमोक्षौ तदा कस्य पुंभेदोऽतो न युक्तिमान् ॥१७॥

अत्राहुर्बार्हस्पत्याः—

भेदेऽभेदेऽप्ययुक्तत्वान्मुक्तेः पुंसोऽप्यदर्शनात्।
देहाद्येवास्ति दृष्टत्वान्नात्मा मुक्तिश्च नेति चेत् ॥१८॥

भवद्भिरेवोक्तैर्न्यायैर्भेदेऽभेदेपि पुंसां मुक्तेरयोगात्, देहघटादेरेव प्रत्यक्षेण दृष्टत्वात्, देह एवाहं मनुष्य इत्यात्मधीदृष्टेः, ततोऽन्यस्यात्मनोऽदृष्टेः, तस्य च भेदे जनिमत्वाद्देहवदमुक्तिभाक्त्वादनात्मत्वाज्ज्ञत्वाद्यनिष्टप्रसङ्गात्, अभेदे देहस्यैवात्मत्वात्तत्रैवाहंधीदृष्टेः, तस्य च ज्ञत्वात्, ज्ञेयत्वेऽपि घटादिवदज्ञत्वानात्मत्वान्यज्ञेयत्व[2]ाप्रसङ्गात्, अन्यतज्ज्ञादृष्टेश्च, [3]तज्ज्ञस्य चान्यज्ञेयत्वे चानवस्थानात्, अज्ञेयत्वे तस्यासिद्धेः, ज्ञेयस्य च ज्ञत्वयोगाद्वैत्यात्मवत्, अद्वैतिनोऽपि अदृष्टैकात्म्यसिद्धाववविशेषादनन्तात्म[4]सिद्धिप्रसङ्गात्, आत्मनो द्रष्टव्यत्वात्, तस्य च देहादन्यस्यादृष्टत्वात्, देहस्य च दृष्टस्यापि द्रष्टृत्वाविरोधात्, तस्यैव च द्रष्टृत्वप्रतीतेस्तस्यैव द्रष्टुरात्मत्वात्, देहादेरेव च दृष्टत्वात् तस्यैव च सत्त्वाद्रज्जुसर्पवदबाधादमायात्मत्वात्, सर्पस्येवासर्परज्जुवन्निर्भेदाजन्मादृश्याभूतभौतिकस्याश्रयस्य

[1] BC ( ज्ञाश्वपो० )।  [2] C ( ०त्वादिप्र० )।
[3] D ( तस्य तस्यान्य० )।  [4] CD ( ०त्मप्रसि० )।

देहादेस्सर्वस्य मायात्मत्वे अभ्युपेयत्वात्तस्य चासिद्धत्वा-द्देहादेर्मायात्मकत्वासिद्धेः सत्त्वमेव। मायायाश्च सत्त्वे तदात्मना सत्त्वम्; असत्त्वे न तदात्मता देहादेः, सत्त्वेन भानात्। तस्माद्देहाद्येवास्ति, दृष्टत्वात्; नान्य आत्मा, तस्यादृष्टत्वात्। न च तस्य मुक्तिः, भवद्भिरेवान्योन्यपक्षं दूषयद्भिर्दूषितत्वात्। अतोऽस्मन्मतानुसारेण वेदोऽपि नेयः। स च कार्यार्थः। ध्वनेस्तत्रैव व्यु[1]त्पत्तिस्तज्ज्ञैरिष्टा न तु भूते। स चेत् कार्ये द्विजानां मानम्, किमन्येनात्मना। फलं च तेषाम्। न ह्यकर्तुः फलम्। तदुक्तम्—'अग्निहोत्रं त्रयो वेदाः' इत्यादि। अतो नेष्टसिद्धिर्व इति ॥ १८ ॥

अत्रोच्यते—

मैवं भेदस्य मायात्वान्माय्यात्मैकोऽस्त्यबोधदृक्।
बोधादज्ञाननाशेष्टेर्मुक्तिस्स्याद्वपुरादि न ॥ १९ ॥

देहाद्येवास्ति, दृष्टत्वात्; नात्मा मुक्तिश्च, अदृष्ट-त्वात्—इत्येवं मा [2]वोचत, सर्वस्य भिन्नस्याद्यन्तवत्त्वाद्रज्जु-सर्पवन्मायात्मत्वात् तन्मायाश्रयैकादृश्याजन्मानाद्यनन्ता-त्मनोऽभ्युपेयत्वात्। न च भेदोऽबाध्यः, अनुमया बाधित-त्वात् द्विचन्द्रादिभेदवत्। न च भानानिवृत्तेर्भेदस्याबाधिका अनुमा, अनुमाप्तोक्त्यादिबाधितभेदस्यापि द्विचन्द्रादे-र्भेदस्फुरणदृष्टेः। अनुमानादेरमानत्वाद्द्विचन्द्रदिङ्मोहादि अबाध्यं तेनेति चेत्, सिद्धमनुमानादेर्मानत्वम्। न ह्यनु-मानेनाबाध्यमित्येतत् प्रत्यक्षम्, अतोऽनुमानेन तत्साध्यम्। न चामानं साधकम्। अतस्तत् मानं तेऽपि। न मे तत्

[1] CD (०त्पत्तेः)। [2] CG (वोचः)।

मानम्, तव तु स्यात्; अतस्तेन तव प्रतिपत्तिरिति तेन त्वया व्यवहरामीति चेत्, एतच्च कुतोऽज्ञायि। त्वद्वाक्यादिति चेत्—तर्हि मद्वाक्यमपि ते मानम्, अज्ञातार्थबो[1]धकत्वादक्षजवत्। तदर्थश्च सत्यः प्रत्यक्षार्थवत्। अतोऽनुमानस्य मानत्वं सिद्धम्। मद्वाक्यमपि चेन्मानम्, सुतरां वेदो मानम्। अतो मत्पक्षस्सिद्धः, त्वत्पक्षश्च हतः। अथ अमानं ते मद्वाक्यम्—तच्चेत्ते न बोधकम्, न मया वादो युक्तः। बोधकं चेत्, बुद्धस्य उत अबुद्धस्य। बुद्धस्य चेत्, त्वया उत मया। त्वया चेत्, तेऽनक्षजमपि मानम्। न हि 'अनुमानं मे प्रमाणम्, तेन मम प्रतीतिर्भवति' इत्ययं मद्वाक्यार्थस्ते प्रत्यक्षः। स च त्वया ज्ञात उक्तः। न चेद्बुद्धस्त्वया किं तु मयैव—तदापि मद्वाक्यं ते मानम्, अबुद्धबोधकत्वाद्बाधासंभवाच्च मन्मानमूलत्वाच्च मद्वाक्यस्य। त्वद्भ्रान्तिमूलं त्वद्वाक्यम्, तदर्थे ते मानासंभवादिति चेत्—एवं चेज्जानीषे नानुमया मया वादस्ते युक्तः, तस्या मद्बोधकत्वस्यासिद्धेस्ते मद्वाक्यादन्यतश्चासिद्धेः। कथं चामानं ते मद्वाक्यं बोधकं चेत्। न चेत्, कथं तत् भ्रान्तिमूलं निश्चितम्। न हि तदर्थोऽन्यतस्ते सिद्धः। अतो न तत्र मानासंभवधीः, ययास्य भ्रान्तिमूलतां वेत्सि। सिद्धं चेत्, नतराम्। न हि मानसिद्धे तदसंभवः। भ्रान्त्या सिद्धश्चेत्—[2]त्वद्भ्रान्त्या चेत्, नासौ मद्वचोऽर्थः। अतस्तन्मानासंभवेऽपि न मद्वचो भ्रान्तिमूलं स्यात्। मद्भ्रान्त्या चेत्सिद्धः, स कथं ते सिद्धो मद्वचोऽनुमां वा विना। न हि मद्भ्रान्तिस्तदर्थो

[1] BCD (॰धत्वा॰)।  [2] CD (तद्भ्रा॰)।

वा ते प्रत्यक्षः । मद्गिरा चेत्तं वेत्सि—सोऽर्थस्सत्यः, सा च मानं ते । पुंगिरा—एवमयं पुरुषो वेद विवक्षति वा—इति धीस्स्यात्, न त्वेवमर्थ इति । अतस्तन्मानासंभवधिया तद्भ्रान्तिमूलता निश्चीयत इति चेत्—तर्हि सत्यमसत्यं च भूतं शब्दाद्वेत्सि । अतो भूते स व्युत्पन्नस्ते, अन्यथा [1]विवक्षादेरप्यबोधकत्वाच्छाब्दव्यवहारलोपः पुंसाम् । अतो मानमूलं स्वतन्त्रं वा अबुद्धबोधकं वचो मानमेव सर्वेषाम्, अन्यथा विवक्षाद्यपि अतस्ते न विदुः । तच्च ह्यनपेक्षश्शब्दो मानं तेषामपि । कथं च त्वया वक्तृविवक्षादिशब्दाज्ज्ञातं भ्रान्तिमूलत्वं वा तदर्थे मानासंभवे । न हि स्वविवक्षा-वेदनभ्रमाद्यपि तेऽक्षजगम्यम्, रूपादिहीनत्वाच्चक्षुराद्य-गोचरत्वात् । न च रूपादयो विवक्षादेस्स्वरूपम्, तद्विषय-त्वात् । न चैकस्य विषयविषयिभावो घटादिवत् । न च चक्षुरादेरन्यत् रूपादिहीनवस्तुबोधकं करणं तेऽस्ति, अदृष्टत्वादरूपादिमद्वस्त्वभावाच्च । भूतचतुष्टयतत्कार्यमात्र-वस्तुवादिनस्सर्वस्य भौतिकत्वाद्रूपादिमत्त्वाच्चक्षुरादिवेद्यं विवक्षाद्यपीति चेत्, अन्यविवक्षादेरपि तद्रूपादिवत्प्रत्यक्ष-त्वात्ते वाक्यं व्यर्थम् । अतः स्वविवक्षाद्यपि नाक्षवेद्यम् । उक्तं चासकृत् मातृतत्संबन्धिनां मानामेयत्वमनव-स्थादिदोषोक्त्या । अतो देहश्चेन्माता, न तेन तदीयेन वा स्वयं स्वकीया वा मेया । अतो न चैतन्यस्यापि तदीयत्वे अस्ति मानं रूपादिवत् । अतः स्व[2]देहा-सिद्धौ तद्वेद्यान्यदेहघटाद्यसिद्धिः । अन्यवेद्यत्वाच्चामातृत्वं

[1] BCD (विपत्त्या॰) । [2] CD (॰देहात्सि॰) ।

देहस्य घटवत्। अतो देहस्य मातृत्वे न किंचित्ते सिध्येत्। चैतन्येन सर्वं भातीति चेत्—तदपि देहस्य चेत्, न तेन स तदीया रूपादयोऽन्यदेहघटादयश्च भान्ति तद्रूपादिनेव। अतश्चैतन्येन चेत्सर्वं भाति, न तस्यान्यो धर्मो धर्मो वेत्यभ्युपेयम्। अतोऽस्य विक्रियान्यसंबन्धासिद्धेस्तत् कूटस्थमद्वितीयं च। अतोऽस्यान्यथाभावो [1]माययैव। मायासंबन्धोऽप्यस्योक्तन्यायेनैवामेयः। मायायाश्चामेयत्वात्। मानवत्त्वे च तयोस्सत्यत्वादात्मवत् मायातत्संबन्धत्वहानिः। अतो मायासंबन्धो मायासंबन्ध एव। प्रपञ्चितं चैतत्पुरस्तात्। अतो माय्यात्मैको मयेष्टस्सिद्धः। अतो देहादेराद्यन्तवत्त्वादिना उक्तस्य मायात्मत्वस्य नासिद्धिः। अनुमानादि च मानं तेऽपीति साधितं त्वत्प्रवृत्त्यैव। अपिच यदि नाम स्वविवक्षादि तेऽसिद्धम्, कथं ते अन्यविवक्षादि सिद्धम्। [2]दृष्टार्थं विवक्षन्नन्यस्मै वाक्यं प्रयुङ्क्ते[3]। अतोऽन्योऽप्येवमिति वाक्यप्रयोगादेव तदर्थज्ञान[4]विवक्षे, तन्मानासंभवे च भ्रान्तिमूलतां तद्वाक्यस्यापि मद्वाक्यस्येव जान इति चेत्—तर्हि अनुमानाद्यपि मानमिष्टम्, वाक्यलिङ्गेन तद्वक्तृज्ञानाद्यनुमानात्। न चैतत्प्रत्यक्षसिद्धम्। [5]अभुक्तपीतान्नपानादेः क्षुत्तृडादिनिवृत्तेरप्रत्यक्षत्वात्तदर्थप्रवृत्त्ययोगान्न ते जीवनमप्यनुमानाद्यनिच्छतो युक्तम्। यदुक्तमदर्शनादात्मनो मुक्तेश्चाभाव इति—अदर्शनाच्चे-

[1] E (मायैव।)।
[2] CE (दृष्टार्थं)।
[3] C (०ङ्क्तेतान्यो०)।
[4] BCD (०विपक्षे)।
[5] BCDE (भुक्तपी०)।

दभावः, देहादेरप्यभावस्सुषुप्त्यादौ। पश्चाद्दर्शनात् भावश्चेत्—न, असतो दर्शनायोगात्। दर्शनाच्चेद्भावस्स्यात्, दर्शनभावयोरन्योन्याश्रयता। अदर्शनमभावस्य बोधकं चेत्, मानान्तरमिष्टम्। कारकं चेत्, तन्मानं किम्। नादर्शनाभावतत्संबन्धानां प्रत्यक्षं मानम्, देहवत् सत्त्वप्रसङ्गात् अरूपादिमत्त्वादभौतिकत्वाच्च। तेषां भौतिकत्वे च सत्त्वं देहादिवदेव। अतस्तत्सत्त्वेऽपि नात्मनोऽसत्त्वं देहवत्, अन्यथैकमेव सत् स्यात्। अदर्शनमस्फुरणं भावानां तत्कथं भाव इति चेत्—नाभावोऽपि, अदर्शनादभाव इत्युक्तेः। अतो न भावाभावमानाभ्यां तन्मेयम्। प्रपञ्चितं चैतत्पुरस्तात्। कथं च ते अदर्शनं भावानां सिद्धम्। न हि जडानां सिद्धावसिद्धौ च तत् तेषां सिध्येत्। अतस्तच्चेत्सिद्धं ते, स्वयंप्रभस्यैव तत् तेनैव च सिद्धं त्वयाभ्युपेयम्। तस्य ज्ञानान्निवृत्तिश्च; अन्यथा ते शास्त्रकृतिर्व्यर्था, जीवनं च ते न स्यात्। तदेव च बन्धकारणम्। अत आत्मनो ज्ञानात्तन्निवृत्तेर्मोक्ष उपपन्नः। देहादिस्तु अज्ञानजत्वान्नाभूदस्ति भविष्यति चेति सिद्धम्॥ १९॥

सुखदुःखे तदीहे च स्वभावाद्यस्य वादिनः।
किं तस्य शास्त्रक्रियया स्वभावो हीयते न हि॥२०॥

कथं च प्राणिनां सुखदुःखादिवैचित्र्यं अदृष्टवदनेकदेहयोग्यनाद्यात्मानं विना। स्वभावेनैव चेत्सुखदुःखादि, सदा स्यात् अग्नेरिवौष्ण्यम्। अतस्तत्प्रेप्साजिहासाभ्यां प्रवृत्तिर्न स्यात्। सापि स्वभावश्चेत्, सदा स्यात्। यावद्द्रव्यं द्रव्यमपि भवनस्वभावं चेत्, सदा भवेत्। न चेत्,

न जातु स्यात्। उभयस्वभावं चेत्, सदा द्वैरूप्यम्। न चेत्, न जातु। स्वभाववादिनश्शास्त्रक्रिया च व्यर्था। नादृष्टोक्त्यर्थं मच्छास्त्रम्, किंतु तदभावात्क्लेशो न कार्यः पुंभिरिति—तदापि नार्थवत्। पुंसां क्लेशक्रिया स्वभावश्चेत्, अनिवृत्तेः। नतरामन्यथा न खं खादयेदितिवत्। मम स्वभावश्शास्त्रक्रियेति चेत्, सदा स्यात्। न चेत्, न स्वभावः। स्वो[1] हि भावः स्वभावः स्वरूपमित्यर्थः। न चागमापायि स्वरूपं पुंसः वस्त्रादिवत्, अन्यथा तदागमापायाभ्यां प्रागूर्ध्वं च सोऽपि न स्यात्। अस्ति चेत्पुमान्, नास्यान्यत्स्वरूपम्; अन्यथा तदपि नागमापायि स्यात्, पुंवत्तस्य स्थि[2]तत्वात्। अतस्ते शास्त्रक्रिया स्वभावश्चेत्—तस्यास्त्वया सहैव जन्मस्थितिनाशाः, नान्यथा। अतस्त्वत्पित्रैव सापि कार्या त्वत्स्वरूपत्वात्। त्वत्क्रियावत् [3]तत्क्रिया च तत्स्वभाव[4]श्चेत्, तत्पित्रैव कार्या। एवं तस्य तस्य तत्पित्रैव कार्यत्वात् तत्स्वभावत्वात्पितृभावे पुत्राभावात् त्वं चाद्य न स्याः। पितृभाव एव पुत्रभावात् पित्रादिवत् त्वं च पूर्वमेवासीः, नाद्य। पितृभेदे पुत्रस्य पितृपुत्रव्यवहारः तथा कार्यकारणव्यवहारश्च ते न स्यात्। त्वं चेदद्या[5]सि—त्वत्पित्रादयश्चाद्य सन्ति, अभेदात्। अतस्त्वमनादिरनन्तश्च। अतो देहात्मवादेऽप्यात्मा अनाद्यनन्तस्सिद्धः। कूटस्थोऽत एव च। तथा सर्वं वस्तु। अतो नात्मसंबन्धादन्यवस्तुसिद्धिः, नापि च स्वतः।

[1] BE (सो)। [2] CD (स्थितित्वात्)। [3] C (त्वत्क्रि॰)। [4] BCD (॰श्चेत्पि॰)। [5] BC (॰द्यासीः)।

असिद्धस्वभावस्य च सिद्ध्ययोगादात्मा एकः कूटस्थोऽद्वयस्सिद्धस्स्वभाववादिनोऽपि। अतो मयेष्ट आ[1]त्मा मुक्तिश्च सिद्धा ॥ २० ॥

बहुष्वपि पुं[2]स्विष्टे[3]ष्वेकस्मिन्कल्प एकस्य मुक्तावप्यतीतकल्पानन्त्यात् सर्वमुक्तेर्नाद्य गुर्वादिव्यवस्था वस्स्यादित्युक्तं 'उच्यते दोषतः' इत्यादिना। पुनः 'भेदे घटादिवत्' इत्यादिना पुंभेदस्यान्याय्यत्वात् ऐकात्म्यमेव न्याय्यमिति प्रपञ्चितम्। तदेवोभयं प्रकारान्तरेणाह उत्तरग्रन्थेन—

पुंसां विभुत्वे सर्वत्र सर्वेषां संनिधेस्सदा।
ज्ञानकर्मादि तुल्यं स्यात्तद्धेतुश्चाविशेषतः ॥ २१ ॥

पुंसां शरीरपरिमाणत्वे परिच्छेदादनित्यत्वादणुमात्रत्वे च सकलदेहव्यापिवेदनायोगात् विभुत्वमिष्टम्। अतस्सर्वत्र सर्वेषां संनिधानात् सर्वकार्यकरणसंघातेषु भवत् कर्मज्ञानसुखदुःखादि तद्धेतुश्च सर्वेषां तुल्यं स्यात्, अविशेषात्। न चेत्, न कस्यापि। ननु आत्मनो विक्रिया गु[4]णा वा ज्ञानप्रयत्नसुखादयो देहादिनिमित्ता अप्यात्मसमवायिन एव, ते कथं सर्वात्मसाधारणास्स्युरिति चेत्—तन्न, नित्यस्यानित्यगुणविक्रियायोगादनन्तरमपि निरूपितत्वात्। आत्मसमवेतत्वे च आत्मना अज्ञेयत्वं चोक्तम्। ज्ञेयाश्च त इष्टाः। आत्मसमवेतत्वेऽपि ते सर्वपुंसां पृथक्पृथक् तुल्याः सहैव स्युः, तद्धेतोस्सव्यापारस्य देहादेस्तुल्यत्वात् भानोरिव रूपदर्शनादिः ॥ २१ ॥

[1] BCDE (०त्मा सिद्धः)। [2] BCD (पुंद्वि०)।
[3] C (०ष्टेष्वप्येक०)। [4] CD (गुणो वा)।

कर्मादिहेतुर्देहादिस्तस्यैव स्यात्स यत्कृतः।
इति चेत्कर्मदेहाद्योः[1] स्वत्वे तेऽन्योन्यसंश्रयः॥ २२॥

यत्कर्मज्ञानजं यत्सुखादि तत्तस्यैवेति चेत्—न, कर्मादेस्तुल्यत्वात्। यत्कृतं यत्कर्मादि तत्तस्यैवेति चेत्—न। [2]तत्कर्तृत्वमपि तुल्यम्, विशेषाभावात्। यद्देहादिकृतं यत् तत् तत्कृतं कर्मादीति चेत्, देहादेश्च स्वत्वं तुल्यम्। यत्कर्मादिजो यो देहादिः स तस्यैवेति चेत्—कर्मादेर्देहादेश्च तुल्यत्वात् एकस्य स्वत्वे अन्यस्य स्वत्वमिति अन्योन्याश्रयता, पूर्वपूर्वस्वत्व उत्तरोत्तरस्वत्वमित्यनवस्था वा। स्वात्माश्रयप्रयत्नजत्वात् कर्मादेस्स्वत एव स्वत्वान्नोक्तदोष इति चेत्—न, सर्वप्रयत्नजत्वात्तस्य सर्वपुंसां स्वत्वात्। एकात्मप्रयत्नजमेवेदं कर्म, देहान्तरेषु प्रयत्नादर्शनाच्छिबिकोद्वहनवदिति चेत्—न, एकस्मिन्नेव देहे सर्वपुंप्रयत्नसंभवात् त्वत्पक्षे देहस्य च तुल्यत्वात्। देहाद्यनपेक्षाच्चेत्प्रयत्नात् कर्मादि स्यात्, सदा स्यादित्यमुक्तिः। देहसापेक्षत्वे च एकस्मिन्नेव देहादौ सर्वप्रयत्नसंभवात्तज्जं कर्मादि सर्वस्वं स्यात्। एकप्रयत्नोपेतादपि सर्वस्वदेहादेर्जातं सर्वस्वं स्यात्। अतः प्रयत्नस्य स्वत्वेऽपि देहादेः कर्मादेर्वा स्वत्वाभावात् स्यादेवोक्तदोषस्ते॥ २२॥

नैकस्य पुंसो [3]देहादिस्स्वतोऽद्य स्वं न कर्म च।
सर्वस्य [4]नान्यतस्स्वत्वं प्रामाण्यं नान्यतो यथा॥२३॥

ननु यत्कर्मादेर्यो देहादिर्न तत एव स कर्मादिः, किंतु

[1] E (॰हाद्याः)। [2] BC (तत्कृतत्व॰)।
[3] CE (देहादि स्व॰)। [4] CDE (नाप्यत॰)।

अन्यतो देहादेः, सोऽप्यन्यतः कर्मादेः। अतो नान्योन्याश्रयता ; नाप्यनवस्था, अनादित्वात् बीजाङ्कुरवदिति चेत्—अस्त्वेवं हेतुफलभावः कर्मादेर्देहादेश्च। न तावता स्वत्वं सिध्यति, एकस्या[1]पि स्वतः स्वत्वासिद्धावन्यस्यापि स्वत्वासिद्धेर्मरुपृष्ठगतानामिव बीजाङ्कुराणाम्। व्रीह्यादावप्येकस्य बीजस्याङ्कुरस्य वा अन्यतस्स्वत्वे सिद्धे अन्येषां तत्सिध्यति, न हेतुफलभावमात्रात् ; अन्यथा अतिप्रसङ्गात्। अत्र त्वेकस्यापि [2]नाद्य स्वतस्स्वत्वं निरूपितं हेतुफलभावं मुक्त्वा। अतस्सर्वस्यान्यतस्स्वत्वे अनवस्थानान्नैकस्यापि स्वत्वसिद्धिः यथा परतः प्रामाण्यवादिनां सर्वज्ञानानामेकस्यापि स्वतोऽनिश्चायकत्वान्न प्रामाण्यसिद्धिः। अन्योन्याश्रयता तु देहादिकर्मादिसंतानद्वयापेक्षया उक्ता ॥ २३ ॥

ननु व्यवस्थितं पुंसां देहादौ स्वत्वमीक्ष्यते ।
नान्यो वेत्त्यन्यदीयेन कर्मदुःखादिमान्न च ॥ २४ ॥
अस्त्येतद्यदि पुंभेदो दृश्येत न तु दृश्यते ।
पुंसामदृष्टेस्तद्भेदो नाक्षैर्दृश्यो न लिङ्गतः ॥ २५ ॥

ननु देहादौ स्वत्वं व्यवस्थितं पुंसां पश्यामः। न हि अन्यदीयेन देहादिना अन्यो वेत्ति करोति सुखी दुःखी वा भवति। अतस्तद्धेतौ च स्वत्वं व्यवस्थितमेवेति नोक्तदोष इति चेत्—स्यादेतदेवं यदि पुंभेदो दृश्येत। न तु स दृश्यते केनापि। पुंसां हि अक्षजादृश्यत्वात्तद्भेदो न तद्दृश्यः। पुंसां तद्दृश्यत्वे अनात्मताज्ञत्वे स्तां देहादिवत्। नापि लिङ्गगम्यः पुंभेदः ॥ २४ ॥ २५ ॥

[1] CDE (०पि स्वत्वा०)। [2] CD (नाद्यः)।

कथम्—

पुंभेदलिङ्गसंबन्धे दृष्टेऽदृष्टेऽपि नानुमा ।

व्यवस्थानुपपत्त्यापि न वेद्योऽन्योन्यसंश्रयात् ॥ २६ ॥

पुंभेदतल्लिङ्गयोस्संबन्धे दृष्टे पुंभेदस्य दृष्टत्वान्न सोऽनुमेयः । अदृष्टे नतराम्, लिङ्गासिद्धेः । न च देहादिस्वत्वसुखदुःखादिव्यवस्थानुपपत्त्या पुंभेदो वेद्यः, पुंभेदव्यवस्थासिद्ध्योरन्योन्याश्रयत्वात् । अत एव न श्रुत्यापि, पदपदार्थभेदतत्संबन्धसिद्धौ तत्प्रवृत्तेः । नाप्यभावेन, भेदासिद्धावितरेतराभावासिद्धेः ॥ २६ ॥

कर्मज्ञानव्यवस्थातो नेष्यते न च युज्यते ।

स्वर्गौतरौ ते तौ न स्तां गुरुशिष्यौ सितासितौ ॥२७॥

अतः पुंभेदासिद्धेः कर्मज्ञानसुखादिव्यवस्थाया मानयुक्तिहीनत्वात् स्वर्गौतरगुरुशिष्य[1]मुक्तामुक्तादिव्यवस्था भवतामेव न स्युः—मानं विना तदसिद्धेः, असतोऽभानाच्च न तास्स्वप्नेऽपि वो भान्ति यतः ॥ २७ ॥

नन्वव्यवस्था पुंभेदे त्वया संपाद्यते बलात् ।

नास्मन्मता सा त्वत्पक्षे त्वयैवोक्ताभिदागिरा ॥२८॥

नन्वस्मत्पक्षे स्वर्गौतरादेरव्यवस्था बलात्त्वयापाद्यते, न त्वस्म[2]दिष्टा । त्वत्पक्षे तु त्वयैवोक्ता सा आत्माभेदोक्त्या ॥ २८ ॥

अत्रोत्तरम्—

यथा भाति व्यवस्थेयं मयेष्टा निह्नुता कथम् ।

ऐकात्म्ये सा विरुद्धा चेत्पुंभेदेऽपि तथोदिता ॥२९॥

[1] CDE (॰मुक्तादि॰) । [2] BCDE (॰दिष्टार्थत्व॰) ।

यथा भातीयं स्वर्ग्यादिव्यवस्था तथैव सा मया इष्टैव । अतो नानिष्टा । न च निह्नुता । सा ऐकात्म्ये विरुद्धा, अतोऽनिष्टा निह्नुता च त्वयेति चेत्—द्वैतिनामपि सा विरुद्धा उक्ता । अतस्तैरप्यनिष्टा निह्नुता च । अतस्तत्कृतो दोषो गुणो[1] वा यो मम स तेषां च तुल्यः । स्वपक्षासिद्धिरेव तेषां विशेषः । अथवा—मयैवेष्टा सा, तस्या अनात्मगतत्वादात्मैक्येनाविरोधात् । न ह्याकाशैक्यं घटादिभेदेन विरुध्यते, अन्यथा द्वैतिनामपि एकैकस्यात्मन ऐक्यं घटादिभेदेन विरुध्येत । द्वैतिभिरेव सा अनिष्टा निह्नुता च, तस्या आत्मस्वेव तैरिष्टत्वात् विरोधस्य चोक्तत्वात्तद्भयात्तस्यास्त्याज्यत्वात् । अथवा—मयैव सा इष्टा नापह्नुता च, ममैव तत्सिद्धेः । पुंभेदव्यवस्थायास्ते मानासंभवात् सा ते विरुद्धेति चेत्—भवतामपि तन्मानासंभव उक्तो मया घटादिभेदे मानमभ्युपगम्यापि । अतस्सा वो विरुद्धा । अयं तु विशेषः । मम सा भ्रान्त्या स्वप्नवत्सिध्यति आ बोधात्; न तु वो भ्रान्त्यापि सा स्फुरति, सदसतो[2]र्भ्रान्त्या अभानादनिर्वाच्यस्यानिष्टत्वाच्च । अतो घटादिभेदोऽपि न वो भाति, मानाभावाद्भ्रान्त्यसंभवाच्च । अतो नैकात्म्ये व्यवस्थानुपपत्त्यादिदूषणं वः स्फुरति । अतो न मया परिहर्तव्यम् । किं बहुना—न जाग्रत्स्वप्नौ वो भातः, मानभ्रान्त्योरसंभवात्; न च सुषुप्तम्, अनिर्वाच्यतमोऽनिष्टेः; नापि तुरीयम्, तदनिष्टेः; नापि शून्यम्, भ्रान्त्यापि तदसिद्धेः । अतो

[1] BCD (॰णोपायः) । [2] CDE (॰भ्रान्त्यभा॰) ।

जाग्रदादि चेद्दो भाति—आत्मैकः कूटस्थोऽज्ञो बोधमात्रविग्रहोऽद्वयः, तदविद्याविलसितं सर्वमनात्मजातम्, आत्मनश्च बहुत्वम्, पुण्यपापस्वर्गेतरविद्वदविद्वद्गुरुशिष्यमुक्तामुक्तादिविभागव्यवहारश्च स्वप्न इवेत्याद्यभ्युपेयम् । न च तदसिद्धिः, दृष्टत्वात् स्वप्न इव आ बोधादप्रतिहतत्वाच्च । अतो निरस्तसमस्तज्ञात्रादिभेदं ब्रह्मात्मानमेव प्रतिपद्यते । तदुक्तं वार्तिककारैः—'नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन । इत्यजानन्विजानाति यस्स ब्रह्मविदुत्तमः ॥' इति ॥ २९ ॥

पुंभेदपक्षे तल्लक्षणशास्त्रतज्ज्ञाभ्यामात्मज्ञानान्न मुक्तता, नापि कर्मसु प्रवृत्तिरित्येतदर्थं उत्तरो ग्रन्थः—

मिथो विलक्षणास्सर्वे पुरुषा यदि वो मताः ।
त्वमेवंलक्षणोऽसीति नासर्वज्ञो वदेद्गुरुः ॥ ३० ॥

स्वलक्षणज्ञानेऽपि अन्यलक्षणाज्ञानात् ॥ ३० ॥

सर्वज्ञोऽपि पुमानन्त्यात्पृथग्लक्षणशास्त्रकृत् ।
न स्याच्छ्रोता कुतः पुंसां नामभेदेऽमिते न तौ ॥३१॥

नामभेदश्च नामनामिस्वरूपतत्संबन्धाज्ञाने न ज्ञातुं शक्यः । वेदेऽप्ययमेव न्यायः ॥ ३१ ॥

स्वात्मज्ञोऽप्यन्यमात्मानमज्ञानान्न वदेदतः ।
पुंभेदे शास्त्रतज्ज्ञाभ्यामात्मज्ञानान्न मुक्तता ॥ ३२ ॥
वैलक्षण्यं न चेदैक्यं प्राप्तं नो चेत्कुतो भिदा ।
एकस्यापि भिदाप्राप्तेरेकाभावे कुतो भिदा ॥ ३३ ॥

वैलक्षण्यं न चेत्पुंसाम्, ऐक्यं प्राप्तमेकस्येव[1]; अन्यथा

[1] E (०कस्यै०) ।

नाभेदस्तस्यापि, एकस्यापि भेदप्राप्तेः। तदा एकं न स्यात्। एकाभावे ततोऽन्याभावान्न भेदोऽपि वः स्यात् ॥ ३३ ॥

अस्ति नास्तीति चेन्नैवं विरोधादेकवस्तुनि ।
वैलक्षण्यं यतो यस्य सदास्ति स्यान्न तत्कथम् ॥ ३४ ॥
वैलक्षण्येतरे उक्ते अस्तिनास्तीति चेत्सती ।
वैलक्षण्यं तदाप्यस्ति नान्यपुंवित्पुमांस्तदा ॥ ३५ ॥

वैलक्षण्यमस्ति नास्ति चेति वैलक्षण्यावैलक्षण्ये भावरूपे एवोक्ते, भावान्तरस्याभावत्वात्। न तु वैलक्षण्यस्यैव भावाभावौ। अतो न विरोध इति चेत्—तदापि नान्यपुंवित् पुमान्, अन्यस्य वैलक्षण्यस्य भावात्। भावाभावोक्तावपि तथा ॥ ३५ ॥

अवैलक्षण्यतोऽन्यं चेद्गुरुर्वेत्ति स्वविद्यया ।
अवैलक्षण्यमिष्टं चेद्गुरुशिष्यभिदा कुतः ॥ ३६ ॥
वैलक्षण्यस्य चास्तित्वाद्भेदाभेदौ तयोरतः ।
अभेदाद्वेत्ति चेच्छिष्यं गुरुश्शिष्यो न किं गुरुम् ॥३७॥

अवैलक्षण्यमेवेष्टम्, उत अन्यदपि। आद्ये कल्पे न तयोर्भेदस्स्यात्। द्वितीयेऽपि तयोर्भेदेऽप्यभेदभावात् गुरुः शिष्यं वेत्ति चेत्—सोऽपि गुरुं विद्यात्, तदभेदात्। न हि स एव वेत्ति न वेत्ति च, अन्यथा गुरुरपि न विद्यात् ॥ ३६—३७ ॥

शिष्यस्य धीहेतुर्नास्तीति चेत्, तन्न—

गुरोर्धीहेतुरेवास्य धीहेतुस्तदभेदतः ।
तदभेदेऽपि चेद्धेतुर्न स्यात्स नतरां गुरोः ॥ ३८ ॥

स्वात्मनो न गुरोर्भेदो भेदाभेदश्च शिष्यतः।
धीहेतुस्स्याद्गुरोस्तस्मान्न शिष्यस्येति चेन्न हि॥ ३९॥
शिष्यादभिन्नाद्भिन्नश्चेत्स्वतोऽभिन्नान्न किं तथा।
स्वतोऽभिन्नान्न भिन्नश्चेत्किं भिन्नोऽभिन्नशिष्यतः॥४०॥

गुरोरभिन्नस्य धीहेतुस्ततो भिन्नाभिन्नस्य न भवतीति चेत्, गुरौ ज्ञातेऽपि नान्यो ज्ञेयस्स्यात्॥ ३९—४०॥

भेदः कथं स्वतस्स्याच्चेदभेदो वान्यतः कथम्।
स्वतोऽभेदे स्वयं कश्चेत्कोऽन्योऽभेदोऽन्यतोऽपि चेत्॥४१॥

किंच—

शिष्योऽभिन्नो गुरोश्चेत्स्याद्गुरुरेव तदा गुरोः।
शिष्याद्भेदे गुरोर्भेदो न गुरोरिति गीर्मृषा॥ ४२॥
नात्मा गुरोरभिन्नोऽपि शिष्यश्चेन्न गुरुर्गुरोः।
आत्मेत्युक्तं भवेदेवं भेद एव स्वतो गुरोः॥ ४३॥
किंच धीहेतुना वा किं गुर्वैक्यात्तद्धियैव हि।
शिष्यो विद्याद्गुरुं स्वं च यथा वेत्ति गुरुस्तथा॥ ४४॥
द्वावैक्यादेकबुद्धैव दृश्यौ चेत्किं न पश्यतः।
दृष्टे शिष्यस्य मूढत्वे स्यादैक्यात्तद्गुरोरपि॥ ४५॥

अतो भेदाभेदपक्षे यद्येक आत्मवित्, सर्वस्तथा। न चेत्, नैकोऽपि। अतो न गुरुशिष्यौ। तथा सर्वविद्यासु। किं बहुना—घटादिज्ञोऽपि तथा। अतः पापीयानयं पक्षः। अथ भेदाद्यवस्था तदा स्वात्मज्ञेनापि नान्यात्मा ज्ञेयः। अन्यज्ञेयत्वे चात्मनामज्ञत्वमनात्मत्वं च घटादिवत्। अतो नोभयथापि गुरुशिष्यौ त्वत्पक्षेऽपि भेदपक्ष

इव । स एव च त्वयाप्याश्रितो व्यवस्थोक्त्या, अन्यथा उक्तन्यायेन सर्वत्राव्यवस्थाप्राप्तेः ॥ ४५ ॥

कथम्—

तस्मात्पुंबन्धतद्धेतुमोक्षतद्धेतुषु स्वतः ।
मिथश्च भिन्नाभिन्नेषु व्यवस्था न क्वचिद्भवेत् ॥ ४६ ॥

यतोऽव्यवस्था उक्तन्यायेन आत्मसु स्वतोऽन्यतश्च भिन्नाभिन्नेषूक्ता, अतस्तेनैव पुंबन्धतद्धेतुमोक्षतद्धेतुषु सा स्यात् । अतस्सुखदुःखतत्प्राप्तिपरिहारतत्साधनतत्प्रवृत्ति-स्वरूपनियमासिद्धेरप्रवृत्तिनिवृत्ति सर्वं जगत्सर्वत्र स्यात् । अतोऽयं पक्षस्त्याज्यतमो दृष्टादृष्टार्थिभिः ॥ ४६ ॥

प्रधानवादिपक्षे अन्येऽपि दोषास्सन्तीत्याह—

विद्याविद्ये स्वतन्त्रैकाज्ञप्रधानस्य नात्मनाम् ।
बन्धमोक्षौ च यैरिष्टौ तेषां काशा व्यवस्थितौ ॥४७॥

जडस्य विद्याविद्ये निरस्ते । अतोऽस्य न ज्ञातत्वाज्ञातत्वे[1]च । अतो न बन्धमोक्षौ । अतो न स्वातन्त्र्यम्, अन्यथा आत्मवद्दृशित्वमगुणत्वमात्मत्वं चेति जडत्वहानिः कार्य-कारणतानेकात्मकत्वपरार्थत्वहानिश्च । किं बहुना— यथा प्रधानं तद्वादिभिरिष्टं न तथा तत्सिध्यति । अस्वातन्त्र्येऽपि तथा । अतो न प्रधानं युक्तिमत् । नापि श्रुतिमत्—'तदैक्षत', 'स आत्मा तत्त्वमसि', 'मायां तु प्रकृतिं विद्यात्' इत्यादीनि श्रुतिवचांसि ईक्षिता आत्मा एकोऽद्वयः कूटस्थचिन्मात्रविग्रहः स्वमायया सर्वस्य जगतः कारणम्, स एव च सर्वेषां नः प्रत्यगात्मेति

[1] CD (वा)।

वदन्ति तद्विरुद्धरूपस्य प्रधानादेर्जगत्कारणत्वात्मभेदाद्याशङ्कामुन्मूलयन्ति यतः, अतः प्रधानं नाम न किंचिद्वस्तु सिद्धम्। तथापि कैश्चित्कल्पितं तदचेतनं त्रिगुणमेकं[1] स्वतन्त्रम्, तस्यैव विद्याविद्ये बन्धमोक्षौ च; न पुंसाम्, निर्विशेषत्वात् स्वतो दृशिमात्रत्वादिति। अतोऽत्राव्यवस्था उच्यते—ऐकात्म्य उक्तानां दोषाणामत्र सावकाशत्वात्, कथंचिद्भेदे भेदाभेदपक्षोक्तदोषप्राप्तेः। एतेन द्वैताद्वैतपक्षो व्याख्यातः। ब्रह्मणश्चेतनत्वाज्जीवानां चौपाधिकभेदत्वात् परमार्थतश्चाभिन्नत्वान्नैवमिति चेत्, तथाप्यविद्याकल्पितजीवभेदपक्षेण व्याख्यातः। कथं च प्रपञ्चात्मकस्य चेतनता। प्रधानस्यैव चेद्विद्याविद्ये बन्धमोक्षौ च, पुरुषा व्यर्थाः। न व्यर्थाः, प्रधानस्य परार्थत्वादिति चेत्—अस्त्वेकः पुरुषः, तावता अस्य पारार्थ्यसिद्धेः ॥ ४७ ॥

किंच—

प्रधानविद्याविद्याभ्यां किं पुंसां मुक्तिबन्धने।
त्वार्थत्वाच्चेत्प्रधानस्य नार्थौ त्वो मुक्तितस्स्वतः ॥ ४८ ॥

कथं चास्य पुमर्थता, अस्यैव चेद्बन्धमोक्षौ तद्धेतू च विद्याविद्ये। प्रधानस्य पुमर्थत्वात्तदीयौ बन्धमोक्षौ सहेतू पुमर्थौ स्तामिति चेत्—पुमानर्थी, न वा। अर्थी चेत्—किं स्वत एव, उत अन्यतोऽस्यार्थित्वम्। स्वतश्चेत्—किं मुक्तौ, उत भुक्तौ। मुक्तौ चेत्, मुक्तिस्सदा। भोगे चेत्—अमुक्तिस्सदा, तदर्थत्वात्प्रधानप्रवृत्तेः। उभयार्थित्वे चोभयं सदा, स्वतोऽर्थित्वस्य स्वरूपत्वात्क्रमायोगात् ॥ ४८ ॥

[1] CD (०कं तत्स्व०)।

नातोऽन्यतोऽपि ध्रौव्याच्च न ज्ञार्थाज्ज्ञस्य चार्थिता।
ज्ञार्था चेदर्थिताज्ज्ञस्य तस्मिन्नन्योन्यसंश्रयः॥ ४९॥

न चान्यनिमित्तं तस्यार्थित्वम्। अन्यस्य सदा भावात् सदा अर्थित्वप्राप्तेस्सदा मुक्तिरमुक्तिरुभयं वा स्याद्यतः, अतो नान्यतोऽप्यस्यार्थित्वम्। कौटस्थ्याच्चानाधेयातिशयत्वात्। प्रधानस्यैवार्थिता पुंसस्स्यात्तस्य तदर्थत्वादिति चेत्—तदाप्युक्तदोषस्स्यात्, तस्य तदर्थित्वस्य च सदा भावात्। अज्ञस्य ज्ञार्थत्वे सति अज्ञस्यार्थित्वम्, ज्ञस्यार्थित्वसिद्धावज्ञस्य ज्ञार्थत्वमित्यन्योन्याश्रयता च। अतो न स्व[1]तो नान्यतोऽप्यर्थी ज्ञः॥ ४९॥

अनर्थी चेत्, तत्राह—

नानर्थित्वे पुमर्थोऽन्यो न सोऽर्थीहास्य तद्वृथा।
सार्था वा सर्वपुंसां स्यान्न विशेषो हि पुंकृतः॥ ५०॥

ज्ञस्य अनर्थित्वे न तदर्थस्स्यादज्ञोऽर्थः। न च सोऽर्थी, अज्ञत्वात्। अतोऽस्य प्रवृत्तिर्न स्वार्था नापि पुमर्थेति व्यर्थैव। अथापि सार्था सा, सर्वपुं[2]सां अज्ञस्य चार्थाय स्यात्। न हि पुंसां मिथोऽज्ञाच्च विशेषस्तां प्रति। पुंसां चेद्दृशित्वं विशेषः, अदृशित्वमितरस्य। अस्यैव च विशेषस्त्वयेष्टो न पुंसाम्। न तां प्रत्यपि विशेषोऽस्यास्ति, तस्यास्तदीयत्वात्। न च पुंभिः कृतो विशेषोऽस्ति प्रधाने येन तत्प्रवृत्तिः पुंसामेव एकैकस्य वा पुंसस्स्यान्नाज्ञस्य॥ ५०॥

प्रतिज्ञं नियतं चित्तं तदर्थं नैकमेव चेत्।
नियमः किमनादिश्चेत्कुतो नानियमस्तथा॥ ५१॥

[1] D (०तोऽप्यन्य०)। [2] CDE (०सां ज्ञस्य)।

नैकं प्रधानं सर्वार्थं नाप्येकं चित्तं तज्जम्, किंतु प्रतिपुरुषमेकैकं चित्तं तादर्थ्येन नियतम्; अतस्तत्प्रवृत्तिस्तदर्थैव नान्यत्रार्था स्वार्था वेति चेत्—कस्मादयं नियमः। अनादिश्चेत्, किं नानियमोऽनादिः। कथं च चित्तेन जनिमता संबन्धोऽनादिः। नियमप्रागभावस्य तु हेत्वनपेक्षत्वादनादिता युक्ता। चित्तं चानाद्येव, प्राक् सतोऽप्यस्याभिव्यक्तेः कार्यतेति चेत्—[1]साभिव्यक्तिरप्यनादिश्चेत्, नास्याः कार्यता सुषुप्तादौ च भासेत सा। सादिश्चेत्, नाभिव्यक्तेन संबन्धोऽनादिः। न चानभिव्यक्तेन संबन्धः, सुषुप्तादावदृष्टेः। अनादित्वेऽप्यनियमः [2]किं नानादिरित्युक्तम् ॥ ५१ ॥

अपिच—

दृष्टियुक्ती विनानादिगिरैवार्थो न सेत्स्यति।
अतिप्रसङ्गात्ते न स्त इति पूर्वमतिष्ठिपम् ॥ ५२ ॥

दृष्ट्या युक्त्या वा अद्य नियमस्सिद्धश्चेत्, अद्येव पुरापीति सोऽनादिस्स्यात्। न चानादित्ववचनादेवार्थसिद्धिः, सर्वार्थसिद्धिप्रसङ्गात्। न च नियमे दृष्टियुक्ती स्त इत्युक्तं 'अस्त्येतद्यदि पुंभेदो दृश्येत' इत्यादिना ॥ ५२ ॥

बद्धाबद्धौ विशिष्टौ चेन्निर्विशेषवचो मृषा।
न चेद्वृथा तदर्थेहा किं च दृष्ट्या निवर्तताम् ॥ ५३ ॥

बद्धाबद्धयोः पुंसोर्विशेषोऽस्ति चेत्, निर्विशेषाः पुरुषा इति ते वचो मृषा। न चेद्विशेषः—पुमर्था प्रधानस्य प्रवृत्तिर्न स्यात्, अकिंचित्करत्वात्। स्याच्चेत्—सदा

[1] CDE ( सादिश्च० )। [2] CDE ( किं नादिः )।

स्यात्, विशेषाभावात्। न चेत्, न [1]जातु। अत एव बन्धमोक्षार्थप्रवृत्त्योश्च विशेषो न स्यात् पुंसां विशेषाभावे। बन्धमोक्षयोश्च एकार्थप्रवृत्त्या अन्यो द्वौ वा किं न भवतः। विशेषाभावेऽपि चेद्बन्धमोक्षौ स्तः, सदैव स्तां विनाप्यन्न-प्रवृत्त्या। न चेत्—न जातु, तथाप्यविशेषात् ॥ ५३ ॥

बन्धमोक्षविभागाज्ञं तदर्थं कथमीहते ।
नासत्सतोर्जनिध्वंसौ यस्य तस्य किमीहया ॥ ५४ ॥
तया चेत्सदभिव्यक्तिर्बन्धमोक्षौ सदैव ते ।
नाभिव्यक्तीतराभ्यां च बन्धमुक्तिव्यवस्थितिः ॥ ५५ ॥

कथम्—

बन्धव्यक्तीतरे एव मोक्षाव्यक्तीतरे यदि ।
बन्धाव्यक्तेर्भ्रमाव्यक्तेस्सुषुप्तादौ च मुक्तता ॥ ५६ ॥
बन्धव्यक्तीतराभ्यां चेन्मोक्षाव्यक्तीतरे पृथक् ।
मोक्षे व्यक्तेऽपि बन्धस्यान्मुक्तिव्यङ्ग हि बन्धनुत् ॥ ५७ ॥
मुक्तिदो बन्धनुत्स्याच्चेद्बन्धनुन्मुक्तिदो न किम् ।
सुषुप्ते मुक्तिदो व्यर्थो नान्यश्चेन्नियमः कुतः ॥ ५८ ॥
अन्यथा मुक्त्ययोगाच्चेन्नायोगोऽचापि विद्यते ।
ज्ञानादज्ञानदाहेष्टेर्मुक्तिस्तेनापि योक्ष्यते ॥ ५९ ॥
व्यक्तीतरे चेद्भिन्ने ते सहापि स्तां तयोर्न ते ।
अभेदेनात्मभेदोऽतो मुक्तिबन्धौ सदा न वा ॥ ६० ॥

ये एकस्याभिव्यक्तीतरे ते भिन्ने मिथो न वा। भिन्ने चेद्घटपटवत्, सहापि स्ताम्। न हि तयोरन्ये व्यक्तीतरे, अनवस्थानात्। अतो मुक्तेस्ते सहापि स्ताम्, तथा बन्धस्य

[1] BCD (जातत्वत ए० )।

च । अथाभिन्ने ते तदा तयो[1]स्स्वरूपैक्याद्व्यक्तिरव्यक्तिरेव वा एका स्यात् बन्धस्य मोक्षस्य च, नान्या । अतस्तौ सदा स्ताम्, न वा जातु ॥ ६० ॥

व्यक्तीतरे भुक्तिमुक्त्योरहेतू चेत्सदा न किम् ।
सद्धेतुत्वे च तद्भावे सदा स्तामप्यसौ तथा ॥ ६१ ॥

भुक्तिमुक्तिव्यक्तीतरयोरहेतुत्वे सदाभावो न वा । सद्धेतुत्वेऽपि हेतो[2]र्भावे सदाभावः । न चेत्, न जातु । हेतोरप्यहेतुत्वे सदाभावो न वा । सद्धेतुत्वेऽपि तद्भावे पूर्ववत् । न चासतः कदाचिद्भावः । नापि सतो नाशस्ते । अतस्सत् सदेव सदा । अतः कूटस्थं वस्तु । अतो नान्यसंबन्धाद्भाति । अतो भाति चेत्, स्वयंप्रभमद्वैतं च । अतो जडं परिणामि द्वैतं चाविद्याविलसितमेव आ बोधात् स्वप्नवद्वस्त्विव भाति । उक्ता च व्यवस्था तत्रैव भाति, नात्मवस्तुनीति सिद्धम् ॥६१॥

अत उपसंहरति—

अतस्सद्वादिनां सर्वं सर्वदास्तीति न क्वचित् ।
व्यवस्था युज्यते तस्माद्द्वैतं न परमार्थसत् ॥ ६२ ॥

अतस्सतस्सदा सत्त्वे तस्योक्तकौटस्थ्यादिसिद्धेः तत्रोक्तव्यवस्थादिभेदव्यवहारायोगात् तस्यात्माविद्योत्थवस्त्वाभासाश्रयतया सिद्धेरैकात्म्यपक्ष एव सकलदृष्टादृष्टेष्टानिष्टप्राप्तिपरिहारसंभवात् तदर्थिभिस्स एवाश्रयणीयो नान्यः, अन्यत्र तदसंभवादिति सिद्धम् ॥ ६२ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्यपादशिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धौ सप्तमोऽध्यायः ॥

---

[1] BCD (०योस्स्वरू०) । [2] CDE (०भावो न चेत्) ।

# अथ अष्टमोऽध्यायः ।

अत्रामायावादिनस्सर्वे एवाहुः—

ननु तेऽज्ञाननाशोऽपि सत्यश्चेद्द्वैतसत्यता ।

मिथ्यात्वेऽज्ञानसद्भावान्मायावादिन्न मुच्यसे ॥ १ ॥

यस्तवाज्ञाननाशः स सत्यो मिथ्या वा । सत्यश्चेत्, तेन आत्मा सद्वितीयस्स्यात् । नाशस्य सत्यत्वेऽनाशिनोऽपि सत्यत्वात्तज्जद्वैतसत्यता । मिथ्या चेत्, स खात्मनाशवत्स्यात् । अतः खात्मवदेव तत् मिथ्यानाशान्न न स्यात्, किंतु स्यादेव; अन्यथा आत्मापि न स्यात् । अज्ञानं मिथ्यात्वात् मिथ्यानाशेनापि नश्यति, नत्वात्मा अमिथ्यात्वादिति चेत्—किं तदेवाज्ञानं स्वमिथ्यानाशोपादनम्, उत अन्यत् । उभयथाप्यज्ञानसंभवात् नात्मज्ञानात्ते मुक्तिः ॥ १ ॥

अत्रोत्तरम्—

उच्यते यादृगज्ञानभावोऽभावोऽपि तादृशः ।

मिथ्याभावेन भूतं किं मिथ्यानाशान्न नङ्क्ष्यति ॥२॥

पृच्छामस्त्वाम्—किं त्वया नाशस्य सत्यत्वं मिथ्यात्वं च विवक्षितमिति, याभ्यां द्वैतसत्यताज्ञानसद्भावौ स्याताम् । यद्यात्माज्ञानाभ्यामन्यवस्तुत्वं सत्यत्वम्, तन्मया नेष्टम् । अज्ञानभावेऽपि नात्मनोऽन्यद्वस्त्वस्ति, किं पुनस्तदभावे । अथ अमायात्मकत्वेन आत्मनाशवदबाध्यत्वम्, तत्त्विष्टम् । अतो मिथ्यात्वमपि मायात्मत्वं चेत्, नेष्टम् । अथ

नाशिनोऽवस्तुत्वान्नाशस्यावस्त्वन्तरजन्मत्वं मिथ्यात्वं तदिच्छामि। अतो नोक्तदोषो मत्पक्षे। न हि वस्त्वन्तरजन्मा अज्ञाननाशो युक्तः। न ह्यात्मा तज्जनिमद्वस्तु, अजनिमत्त्वात्। न चान्यत् सत् समस्ति—जडस्य स्वतोऽन्यतश्चासिद्धेः, अजडस्य चान्यत्वजनिमत्त्वायोगात्। कुतश्चास्य जनिः। नात्मनस्साक्षात्, कौटस्थ्यात्। जडत्वे च घटवदतज्जत्वात्। अजडस्य चाजनेः। नाप्यज्ञानात्—सत्त्वहानेः, तज्जस्यासत्त्वाद्रूप्यादेः। तज्जत्वे च तद्भाव एव भवेत्, प्रकृत्यभावे कार्याभावात्। न च सतस्सदात्मना तुच्छात्मना वा जन्म आत्मवत्। नाप्यसतः नृशृङ्गवत्। न चान्यदपि किंचिज्जन्मना तुच्छीभूतं दृष्टम्। अतोऽनिर्वाच्यस्यैव जन्म तदात्मनैव च रूप्यादिवत्। अतोऽज्ञानजमेव सर्वं जनिमत्। अतोऽज्ञाननाशोऽप्यज्ञानजश्चेत्, तदात्मा तच्चैव स्यादित्यज्ञानाहानिः। न चाहानिरेवास्य, तद्धानेस्सर्वैरेष्टव्यत्वात्; अन्यथा सर्वव्यवहारोच्छेदात्। अतो नाज्ञाननाशो वस्त्वन्तरस्य जन्म, नाप्यन्यस्य कस्यचित्। नापि तदेवाज्ञानम्, तन्नाशत्वहानात्। नाप्यन्यत्—तदपि तस्यैव चेत्, तद्धियैव नश्येत्। न चान्यो ज्ञ इत्युक्तम्। अतो न द्वैतसत्यताज्ञानसद्भावौ॥

यद्यात्मनोऽन्यज्जडमजडं नित्यमनित्यमसत्सदनिर्वाच्यं वा किंचिन्नाज्ञानहानिर्नामेष्यते अस्त्वात्मैव अज्ञानहानिरिति चेत्, अस्तु—एवमपि मयेष्टा सा सिद्धा। आत्मैव चेत्—सा सदास्तीति बन्धाभावस्सदैवेति चेत्, तर्हि अन्या

अस्तु। नान्यापि, अन्यवस्त्वभावादिति चेत्—तर्ह्यन्याभाव एव सा अस्तु। सोऽन्याभाव आत्मैव चेत्, उक्तो दोषः; अन्यश्चेत्, अद्वैतहानिरिति चेत्—किं तदद्वैतं यदन्याभावविरोधि। आत्मैव चेत्, सोऽज्ञानतत्कार्यैश्चाविरुद्धः। सुतरां तदभावेन। अस्यैव द्वैतरहितत्वमद्वैतमिति चेत्—तदप्यात्मैव चेत्, तन्न जातु विरुद्धम्; अन्यथा न जातु बन्धः। ज्ञानदग्धाविद्यातज्जद्वैतत्वमद्वैत[1]मिति चेत्—तद्दाहोऽप्यात्मैव चेत्, उक्तो दोषः। अन्यश्चेत्, तवाप्यद्वैतविरोधः। उक्तदोषप्रसङ्गान्नात्मैव तद्दाह इति तच्चान्यत्ववाचोयुक्तिः न पुनरन्यत्वविवक्षया, सर्वान्यदाहस्यान्यत्वायोगादिति चेत्—तर्हि स[2]र्वान्याभावेनापि नाद्वैतविरोधः। दाह एव मयाप्यभाव उक्तः। दाह[3]स्यानात्मत्वेऽपि नाद्वैतविरोधश्चेत्, न तद्विरोधश्शङ्क्यः॥

नन्वात्मवद्दाहोऽप्यनादिश्चेत्, त्वयैवोक्तो दोषः। सादिश्चेत्, सोऽज्ञानजत्वाद्द्वैतवन्नाज्ञानदाहस्स्यात्। दाहो नामोपमर्दमात्रः, ना[4]न्यस्य जन्म तैलादिदाहवदिति चेत्—न, तैलादिदाहस्यापि दीपादिजन्मत्वाद्विरोधिभावान्तरजन्मैव पूर्वभावध्वंसः; अन्यथा न ध्वंसो हेतुमान् स्यात्॥ मैवं चूचुदः यतोऽज्ञानदाहस्त्वयापीष्टः। सर्वं च जनिमदज्ञानजम्। अत एव न तज्जस्तद्दाहः। श्रुतिजा चात्मधीरात्माज्ञानदग्ध्रीति मया च साधितम्। अतोऽज्ञानदाहो यत्र यथा प्रसिद्धस्स तथैवाभ्युपेयो लोके

[1] C (०तत्वमि०)। [2] CD (०र्वस्याभावो नापि)।
[3] BC (०हस्य ना०)। [4] D (०न्यस्मज्ज०)।

वेदेऽपि, अन्यथा सर्वप्रमाणव्यवहारलोपस्स्यात् । अतो नाज्ञानदाहः कस्यचिज्जन्मेति युक्तम् । यत्तूक्तं भावान्तर-जन्मैव पूर्वभावध्वंस इति, अस्त्वेवं भावेषु । अज्ञानं तु न भावो नाप्यभाव इत्युक्तम् । अतो नास्य दाहो भावजन्म । न चास्य दाहस्सतोऽनिर्वाच्यस्य वा जन्मेति प्रसिद्धं युक्तं वा । न चाज्ञाननुदो मानस्यान्यकर्तृत्वं घटनुद इव कपालकर्तृत्वं दृष्टम् । नापि युक्तम्, अज्ञानत्वामानत्व-प्रसङ्गात् । नातोऽनिर्वाच्यं सच्च मानजन्यम् । संविद-श्चाजन्यता उक्ता । अतोऽज्ञानदाहो दाह एव, नान्य-जन्म । कथं च भावान्तरजन्मत्वे ध्वंसस्य हेतुमत्त्वं नान्यथा । अभावे हेतुकृत्याभावात् भाव एव तद्ध्वंस इति चेत्—तर्हि न प्रागसतो भावान्तरस्य जन्म, असति हेतुकृत्याभावात् । नापि सतः, सत्त्वादेव तत्र हेतुकृत्याभावात्; अन्यथा हेत्वनुपरमात् । अथान्यथैव हेतुव्यापारेऽन्यद्भवेत्, तथा उपमर्दोऽपि स्यात् । सोऽभावः कथं भवेत् । न ह्यसतो भवनकर्तृता । तर्हि भावान्तरमपि प्रागसन्न भवेत् । न हि तस्यापि भूतस्य भूतिरिष्यते । भावस्याभावेन असता न विरोधश्चेत्, प्रागसतोऽपि भावेनाविरोधादसत्त्वमेव सदेति नासतो जन्म । नापि सतस्सत्त्वादिति न भावान्तरजन्म स्यात् । भावेन चेत् भावस्य विरोधः, एकस्मिन्भावे भवति अन्ये सर्वे भावा न स्युः, अविशेषात् । सोऽपि न स्यात् स्वभावविरोधात् । अन्येनैव विरोधो नात्मनेति चेत्, तर्हि अन्यत्वाद्विरोधो न भावत्वादित्यभावेनापि विरोधस्स्यात्, अन्यत्वात् ।

नाभावस्यान्यत्वमसत्त्वादिति चेत्, नापि भावस्य स्वतोऽन्यत्वप्रसङ्गात्। अतो जन्म इष्टं चेत्—ध्वंसोऽप्यन्य एवैष्टव्यो न त्वेकजन्मैवान्यध्वंस इति, उभयोः प्रसिद्धेर्युक्तेश्च तुल्यत्वात्। अतो भावस्यापि ध्वंसो न भावान्तरम्। तथा प्रागभावोऽपि। अतोऽन्यजन्म विनाप्यन्यध्वंसस्स्यात्। अभावत्वात् न ध्वंसो जन्यः। तस्यापि जन्मध्वं[1]साभ्युपगमेऽनवस्थानाच्च। अतस्तन्नि[स नि?]रोध एव भावस्य। जन्म विनाप्यस्य हेतुमत्त्वं कादाचित्कत्वं च जन्मवत्। न हि जन्मनो जन्म अहेतुमत्त्वं वा। न च जन्मध्वंसावन्यावपि सहैव स्ताम्, तथादृष्टत्वादिति नियन्तुं शक्यम्—तयोरन्योन्यापेक्षत्वे हेत्वभावात् उक्तन्यायेन। यदि नाम जनिमतां घटादीनां ध्वंसोऽन्यजन्मना सह अन्यजन्मैव वा, तथापि नानादेर्ध्वंसस्तथा। घटादीनां ह्येक[2]मृद्विकाराणां तस्यां सहस्थित्ययोगात्तद्ध्वंसस्तथा स्यात्। तथा हेमादिविकाराणां च। अनादेस्त्वकारणत्वान्न ध्वंसस्य तथात्वं युक्तम्। सादीनामेव ध्वंसदृष्टेर्नानादेर्ध्वंस इति चेत्—सत्यम्, भावस्यानादेर्ध्वंसो न युक्तः आत्मवत्। नापि दृष्टः। तथाप्यज्ञानस्यानिर्वाच्यत्वादनादिनोऽपि ध्वंस इष्यते सर्वैः, अन्यथा मानवैफल्यात्। अतस्सादीनां दाहस्यान्यजन्मत्वेऽपि अनाद्यज्ञानदाहो नान्यजन्म, तेन वा सहेति सिद्धम्॥

तर्ह्यज्ञानदाहस्य स्वरूपं ब्रूहि तन्मानं च। आत्मा चेत् सः, उक्तो दोषः। अन्यश्चेत्, न स्वतस्सिध्येत्। अतस्त-

[1] BDE (०साद्युप०)। [2] C (ह्येकं मृ०)।

त्साधकं वाच्यम्। अद्वैतात्मज्ञानोदये सर्वव्यवहार-लोपान्नासौ दर्शयितुं शक्य इति चेत्, तथापि लोके तं दर्शयित्वा आत्मनि तं योजय। लोकेऽपि स त्वया दृष्टः, अन्यथा तदसिद्धेः। उच्यते—ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा तद-ज्ञानहानिः। न चाप्रसिद्धा सा। नापि मानसिद्धा, अनवस्थानात्। न च ज्ञातोऽर्थोऽज्ञातादन्यः। तथापि न मानोदयात्प्राक्सज्ञातो नाप्यूर्ध्वमज्ञातः, मानवैफल्यात्। न च ज्ञातत्वाज्ञातत्वे वस्तुनस्स्वरूपम्, व्यभिचारान्मान-वैफल्याच्च, अन्यथा मानादज्ञातत्वाहानात्। तद्धाने च वस्तुहानात्। ज्ञातत्वस्यापि मानादसिद्धेः, सिद्धत्वात्, अन्यथा वस्त्वसिद्धेः। न चासिद्धं वस्तु मानकार्यम्, सिद्धं माननाश्यं वा। मानमपि वस्तुजनिनाशकच्चेत्, प्रकाश-हेत्वभावादान्ध्यं जगतः। ज्ञप्तिस्वरूपस्याप्यात्मनो मानात् ज्ञातत्वं व्यभिचार्येव, मानोदयात्प्रागभावात्। अतो न स्वरूपम्। उक्तन्यायेन च। तथा अज्ञातत्वमपि, ज्ञाना-न्निवृत्तेः। ज्ञातत्वाज्ञातत्वे चेद्वस्तुनस्स्वरूपम्, तथैव तत् तन्मानेन मेयम्। न चाज्ञानस्यापि मेयेऽन्तर्भावः, अज्ञानान्तराभावात्। तद्भावे तस्यापि तथाभावादन्य-कल्पनेऽनवस्थानात्। अज्ञानाहाने च मानवैफल्या-त्तत्प्रवृत्त्या विशेषाभावात्। न च मानमितस्य मेयत्वम्, विशेषाभावात्; अन्यथा अनवस्थानात्। तस्य तस्य मानस्यापि मेयत्वान्मानमितत्वसिद्ध्यर्थम्॥

अतः 'इदं सर्वं यदयमात्मा,' 'आत्मनि विज्ञाते,' 'येनाश्रुतम्,' 'कस्मिन्नु भगवः' इत्यादावात्माज्ञानत-

त्कार्याण्यपि आत्मज्ञानेन ज्ञेयानि श्रूयन्त इत्याशङ्का न कार्या, अज्ञानतत्कार्याणाममेयत्वस्योक्तत्वात्। आत्मज्ञानज्ञेयं चेत्सर्वम्—नाज्ञानकार्यं स्यात् आत्मवत्। किं त्वात्मवत् सत्यं आत्मैव च स्यात्। नान्यथा आत्मज्ञानं तत्स्यात्। यद्यनात्मापि तेन ज्ञेयः, अनात्मज्ञानमात्मानात्मज्ञानं वा किं न स्यात्। अनात्मज्ञानमेव तद्युक्तम्, अनात्मनां बहुत्वात्तैर्व्यपदेशात् ब्राह्मणग्रामवत्। न चाचैकज्ञानेन सर्वज्ञानम्, किंतु सर्वज्ञानेनैव सर्वज्ञानं द्वैताद्वैतपक्षवत्। तत्तुल्यश्चायं पक्षस्स्यात्। कथं [1]तवैकस्यात्मनो ज्ञानेन सर्वं ज्ञातं स्यादिति चेत्, शृणु—'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति नाज्ञातं ज्ञेयं किंचिदवशिष्यत इत्यर्थः। आत्मन एवाज्ञातत्वात्, तस्यैव मानमेयत्वात्, अन्यस्यात्माज्ञानमात्रशरीरत्वादज्ञातत्वज्ञेयत्वायोगात्, व्यावहारिकस्य चाज्ञातत्वादेरप्रकाशात्मत्वस्य चात्मज्ञानेनाज्ञानतत्कार्यदाहे तस्यायोगात्। यथा घटादौ ज्ञातेऽन्यदज्ञातं ज्ञेयं लोके संस्यात्, नैवमात्मनीति 'आत्मनि विज्ञाते सर्वं[2] विज्ञातं भवति' इत्युक्तम्—यथा अस्मिन्नपवरके शतं हस्तिनो धावन्ति, [3]तान्विजानीहीत्युक्तो विज्ञाता मयेत्याह अज्ञातज्ञेयाभावं विवक्षन्। न ह्येकवस्तुज्ञानेनान्यैकवस्तुज्ञानमपि समस्ति, किं पुनस्सर्ववस्तुज्ञानम्। न चैकस्यानेकात्मकत्वमित्यसकृदुक्तम्॥

अथवा—आत्मनि विज्ञाते सर्वमिदं विज्ञातमात्मतत्त्वमेव

[1] BCD (तयैव क०)। [2] BCD (०र्वं सर्वं वि०)।
[3] BCDE (तावन्वि०)।

भवतीत्यर्थः। यथा लोके तत्सर्वमुदकं पद्मिन्यादि, सा च सेना तद्देशे[1] निरीक्षिते स देश एवाभूदिति वदन्ति— एवमत्रापि ज्ञानादज्ञानतत्कार्यनिवृत्तेर्देशवदात्मन एवावशिष्टत्वात् तथा व्यपदेशः॥ अथवा—आत्मनि विज्ञाते सर्वमिदं विज्ञातमात्मवस्त्वेव भवतीत्यात्मविज्ञानेन सर्वं दग्धं भवती[2]त्यर्थः। ज्ञातो ह्यात्मा अज्ञानदाह इत्युक्तम्। आत्माज्ञानजं च सर्वं 'इन्द्रो मायाभिः,' 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुत्योक्तम्। अतोऽज्ञानदाह एवास्यानेनोच्यते, न त्वात्मवन्मेयत्वम्। 'येनाश्रुतम्' इत्याद्यप्येवं योज्यम्। 'अश्रुतं श्रुतं भवति' इति वचो मयोक्तमेवार्थं स्पष्टयति। न हि वेदेनाप्युक्तेऽश्रुतं श्रुतं भवति मदुक्तप्रकारं मुक्त्वा। तज्जलसेनादि स देश एवेतिवत् 'इदं सर्वं यदयमात्मा,' 'ब्रह्मैवेदं सर्वम्' इत्यादि व्याख्येयम्॥

तस्मान्न ज्ञातत्वाज्ञातत्वे वस्तुनस्स्वरूपम्। अतो न तन्मानमेये। न च तयोरन्यत्वाशङ्कास्पदमपि, तथा अस्फुरणात्। अस्वरूपत्वं च तयोरुक्तम्, वस्तुनो ज्ञानोदयात्प्रागूर्ध्वं च ज्ञातत्वाज्ञातत्वाप्रसिद्धेः। तत्राज्ञातेऽर्थे स्थिते मानात्तदाकारतया ज्ञाने [3]जाते तस्य व्यवहारयोग्यता अर्थस्य ज्ञा[4]तता नाम। न च सा अप्रसिद्धा, अन्यथा व्यवहारासिद्धेः। न च साप्यर्थवन्मेया, अनवस्थानादर्थासिद्धेः। सा अज्ञाननिवृत्तिर्बाह्ये। एवमपरोक्षस्वभावस्याप्यात्मनोऽनादिजडानिर्वाच्याज्ञानाच्छन्नतया-

[1] DE (०देशेनि०)। [2] CD (०त्यर्थज्ञा०)।
[3] BC (ज्ञाते)। [4] E (०तत्वा ना०)।

स्फुरणमज्ञातत्वम् । तस्य च वेदान्तजन्मनोऽपूर्वादिलक्षणौपनिषदपुरुषाकारतयैव समाप्तज्ञानात् या अपरोक्षता सा तस्य ज्ञातता । सा चाविद्यानिवृत्तिरेव । अविद्या चानादित्वान्निर्हेतुः । अतो नष्टा सा नोद्भवेत्, हेत्वभावात् । प्रागसतो हेतुं विना अनुद्भवाच्च । अजनिमत्त्वाच्चास्याः । न च जनिमतोऽविद्यात्वम्, तद्धेतुत्वात्तस्याः । न च तां विना अन्यस्यापि जन्म । अतो निवृत्तेर्न सा अन्यद्वा किंचिज्जायते । अकार्यत्वादेवास्या निवृत्तिर्न कस्यचिज्जन्म । नापि कारणभावः, कार्याणामेव तथा दृष्टत्वादिष्टत्वाच्च महाप्रलयादौ । न ह्यकार्यस्य कारणस्य निवृत्तिस्तथा दृष्टा इष्टा वा केनचित् । अज्ञानस्य चाकार्यत्वं कारणत्वं ज्ञानान्निवृत्तिश्च सर्वैरेष्टव्येत्यसकृदवोचाम । अतोऽज्ञाननिवृत्तिरात्मनः श्रुतिजज्ञानादपरोक्षब्रह्मात्मनोऽपरोक्षानुभव एव । स यद्यपि नात्मनोऽन्यः तथापि न ज्ञानोदयात्प्रागिति न सदा अज्ञाननिवृत्त्यादिदोषप्रसङ्गः ॥

तत्रैषा अक्षरयोजना—यादृगज्ञानस्य भावस्तदनुरूप एव तदभावो युक्तः । सर्वस्य जडस्याज्ञानशरीरत्वान्न जडस्तन्नाशः । न हि तदेव तन्नाशः, तथा अप्रसिद्धेर्मानवैफल्याच्च । नाप्यजड आत्मा तन्नाशः, तद्भावेऽपि तस्य भावात् । न हि नाशनाशिनोस्सहभावः, सदा नाशप्राप्तेर्हेतुवैफल्यात् । अत एव न सत्यस्तन्नाशः । न ह्यात्मनोऽन्यत्सत्यमस्ति । अतो यद्यपि सत्यस्सः, तथाप्यात्मैवेति न द्वैतसत्यताशा । न चासत्यस्य सत्यो नाशो दृष्टः रूप्यादेः ।

न [1]शुक्तिस्तन्नाशः, तेन सह भावात्प्राक् च तद्भा[2]वात्। यदि रूप्यादिनाशः सत्यं वस्तु, न ज्ञानात् स्यात्। न हि ज्ञानाद्वस्तु भवेत्, किंतु भाति। अतो नासत्यस्य सत्यो नाशः। न च सत्यं [3]नश्येत् आत्मवत्। अतो नाशस्सत्यश्चेति विप्रतिषिद्धम्। अतो न तत्सत्यत्वेन नाशिसत्यत्वसिद्धिः, असत्यस्यैव नाशात्॥

ननु माभूद्रूप्यादिनाशो वस्तु तज्ज्ञप्तिस्तु भवेत्, ज्ञानहेतुत्वात्। सा च अजडत्वात् सत्या। नित्यापि सा शुक्त्यादिज्ञप्त्यात्मना न रूप्यादिना सह भवेत्। न च प्राक्। तदात्मनैव च सा मानफलम्। तद्भावे चाज्ञानं मे नष्टं भ्रान्तिस्संशयो वेति लोके व्यवहारः। अतो वस्तुज्ञप्तिरेव तदज्ञानादिनाशो लोके। तथा वेदेऽपीति चेत्—अस्त्वेवम्। उक्तं च ज्ञप्तिर्वा अज्ञाननाश इति। एवमात्मन एवाजडस्य फलत्वात्तस्यैव सत्यतेति न द्वैतसत्यत्वाशङ्का। आत्मैवाजडत्वात् कूटस्थोऽपि मानमेयसंबन्धात् फलायत इत्युक्तम्। तस्य नित्यत्वेऽपि फलात्मनैवाज्ञाननाशत्वम्। मानोदये च फलात्मतेति न सदा अज्ञाननाशप्रसङ्गदोषः। न च घटादेरिवात्मनः तज्ज्ञानोपरमेऽप्यफलत्वम्, मेयस्यैवात्मनः फलत्वात् मानसंबन्धे मितत्ववत्। यथात्मनस्सतोऽपि मान[4]योग एव मितत्वं न प्राक्—एवं फलत्वमपि। घटादेस्तु मानयोगेऽपि मितत्वमेव स्यान्न फलत्वं, जडत्वात्। अतस्तत्राप्यात्मैव तदवच्छिन्नः

[1] CD (शाक्ति०)। [2] CD (०वाद्यष्टिरू०)।
[3] CD (न दृश्येत्)। [4] CD (०योग्य ए०)।

फलमिति गीयते खमिव घटावच्छिन्नं घटाकाश इति। तच्च ज्ञानस्यैव ज्ञेययोगिनो जन्मादि, न तु दृशः। तथापि तत् दृशीव भात्यविवेकिनां व्योम्नीव घटजन्मादि। अतोऽन्यत्रापि न स्वतः फलस्य कादाचित्कता, किं पुनरात्मनि स्वयंफले। तर्हि नित्य आत्मैव फलम्। सत्यम्, तथाप्यात्मैव तन्मा[1]नसंबद्धः त[2]दज्ञाननिवृत्तिरिति नोक्तदोषस्स्यात्। न चात्मनो मानसंब[3]न्धः, विक्रियमाणस्यैव तदाकारतयोत्पत्तेः। तस्य चानात्मत्वाज्जडत्वाद्वेद्यत्वात्। तस्मान्मानयोगिन एवाज्ञाननाशत्वात् ज्ञात एवात्मा—फलभूतो वा उदितमान एव वा आत्मैव—अज्ञाननाशः नान्यः, न चातिप्रसङ्ग इति सिद्धम्। अतो नाद्वैतहान्याशङ्का॥

ननु ज्ञानोदयेऽप्यात्मा अविशेषश्चेत्, सदा अज्ञाननाशस्स्यान्न वा। तन्न, ज्ञानादज्ञाननाशेष्टेः; अन्यथा शास्त्रानर्थक्यात्। न च शास्त्रानर्थक्यं युक्तम्, तत्कारणाभावात्; अन्यथा सर्वप्रमाणानर्थक्यप्रसङ्गात्। सर्वथा शास्त्रप्रामाण्यादेव तदर्थाद्वैताविरोधेन आत्माज्ञाननाशोऽभ्युपेयः। यथा जीवस्य सदा ब्रह्मता तदज्ञानं तन्निमित्तश्च संसारो द्वैतप्रपञ्चश्च ज्ञानान्मोक्षः जीवन्मुक्तिश्चेत्याद्यभ्युपेयते शास्त्रप्रामाण्यादेव, अन्यथा तदप्रामाण्यादर्थान्तराप्रतीतेः—तथा। यथा वा अज्ञानोपादानमप्यात्मज्ञानं घटादिज्ञानवन्नासम्यग्ज्ञानं किंतु श्रौतस[4]त्यात्ममेयं परमार्थसम्यग्ज्ञानमेव तदज्ञानं च हन्ति, तद्वा मेयं स्वमान-

[1] C (०नसंबन्धः)।
[2] CD (तज्ज्ञान०)।
[3] BC (०न्धोऽपि क्रियामानस्यै०)।
[4] CD (०सत्योर्थमे०)।

फलकारूढं[1] न तु स्वत एव सदात्मप्रकाशमपि ; अन्यथा शास्त्रानारम्भप्रसङ्गात्—एवमुदितश्रौतज्ञान एवात्मा स्वाज्ञाननिवृत्तिरिति निरवद्यम्। वाय्वारूढ [2]इवाग्नि-स्तृणादिकं मानारूढ आत्मा स्वाज्ञानं दहति। तद्दह्ं-स्तदुत्थत्वान्मानमपि दग्ध्वा निरिन्धन इवाग्निः प्रसन्न आत्मैकलोऽवतिष्ठते। भावाभावविभागस्य अविद्याश्रय-त्वात्तन्नाशोऽतद्रूपो न्याय्यः। स चात्मैव। तदुक्तम्—'स्वयमेव त्ववस्तुत्वादविद्यायाः परात्मधीः। मृतमारणा-ल्लज्जन्ती साभावमपि निर्दहेत्॥ भावाभावविभागं सा नेति नेत्यात्मवह्निना। लुष्ट्वापास्ततमस्तज्जविकल्पात्मा-नलं विशेत्॥' इति वार्तिककारैः। उक्तं श्रीवेदव्यास-भट्टारकेणापि—'अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते' इति। अतोऽज्ञानस्यानुरूपो नाशः सत्य आत्मैव; न तु मिथ्या अनात्मा, तस्य तदात्मत्वात्। नातोऽद्वैतहानि-रज्ञानानाशश्च॥

यत्पुनरुक्तमविद्यानाशाभ्युपगमे अविद्यासद्भावान्नाशा-दिद्वैतसद्भावाद्वा संसार इति तन्न, हेत्वभावात्। अनि-र्वाच्याज्ञानजो हि संसारः। अतस्तस्य तदनुरूपमिथ्या-नाशे सति कुतस्संभवः॥ अथ मतम्—अविद्यान्तरकार्य-स्तन्नाशः, तन्निमित्तस्संसार इति चेत्—तच्च न, तस्याप्यात्म-विषयविज्ञानेनैव दग्धत्वात्। अथ नैकज्ञानेनैव कृत्स्नात्म-विषयाविद्यादाहोऽनात्मनि [नौ?] वेति चेत्—यथा-नात्मनि घटादावेकविषये नैकज्ञानेनैव भिन्नाज्ञानध्वंसः,

[1] BC (०रूढेन स्व० )। [2] BCDE (एवाग्निः)।

एवमात्मन्यपीति चेत्, तदयुक्तम्। विषयभेदाद्भिन्नानामप्यज्ञानानां नैकज्ञानेन ध्वंसः [?]। आत्मनि त्वविद्याविषयभेदाभावादेकयैव धिया कृत्स्नाविद्याध्वंसोपपत्तेः, यथा तमसो ह्यभिन्नविषयस्य एकेनैव प्रकाशेन ध्वंसो दृश्यते [?]। एवमपि नाविद्यान्तरकार्या[यो ऽ ?]विद्यानाशः, शुक्त्यादिष्वदर्शनात्। भाववत्। न ह्यविद्यासद्भावोऽविद्यान्तरात्। किंच—अज्ञानान्तरकार्यश्चेदज्ञाननाशः, तन्नाशेनापि घटादेरावृतत्वादसिद्धिः रूप्यादिनेव शुक्त्यादेरिति मानवैफल्यप्रसङ्गः। तस्मान्नाज्ञानान्तरकार्योऽज्ञाननाशः ॥ २ ॥

तन्मिथ्याभावजं दुःखं तन्मिथ्योष्टौ कुतो भवेत्।
नाविद्यान्तरतोऽविद्या मिथ्यानाशोऽपि भाववत् ॥३॥

अनिर्वाच्योऽप्यबोधस्स्रक्सर्पवद्दह्यते धिया।
अनिर्वाच्येऽपि तद्दाहे नोष्टोऽहिस्स्या[1]त्तथाग्रहः ॥४॥

अनिर्वाच्यो हि दाहोऽहेस्तथात्वान्नाहिवर्तनात्।
तथा[2]त्माज्ञानदाहोऽपि नात्माज्ञानानुवर्तनात् ॥५॥

अनिर्वाच्योऽहिदाहस्स्यान्ननु स्रङ्मोहवर्तनात्।
स्रङ्मोहस्स्रग्धियोष्टश्चेन्नाहिदृष्टेः पुनस्स्रजि ॥ ६ ॥

मोहान्तराच्चेदानन्त्यं मोहानां स्यादतोऽक्षयः।
यदि दग्धोऽपि मोहस्स्यादनिर्मोक्षः प्रसज्यते ॥ ७ ॥

ऐकात्म्यमोहजोऽहिश्चेत्तथाप्यैकात्म्यबोधतः।
प्राङ्मोहभावात्सर्पोष्टिरनिर्वाच्यास्त्वविद्यया ॥ ८ ॥

यद्यात्ममोहजोऽहिस्स्यान्नान्यबुद्ध्या स दह्यते।
तद्दाहो नात्ममोहोष्टेर्दृष्टान्तो युज्यते ततः ॥ ९ ॥

[1] CD (०त्तदग्र०)। [2] BCD (०थाज्ञाज्ञा०)।

भ्रान्तिस्सर्वात्ममोहोत्थानात्मधीरिति ते स्थितिः।
ज्ञानादज्ञानतत्कार्यदाहे नान्यन्निदर्शनम् ॥ १० ॥
आत्मैवाज्ञानहानिश्चेत्सा सदा स्यान्नवा स्वयम्।
पूर्वञ्च संसृतिर्न स्यात्संसारी नोत्तरञ्च तु ॥ ११ ॥
नाविद्यायां विचारश्चेत्तन्निवृत्तौ क्व निश्चयः।
नाप्रवृत्तेर्निवृत्तिश्चेद्बन्धमोक्षौ कुतस्तव ॥ १२ ॥
नैष दोषः प्रसिद्धत्वाद्विद्याविद्याद्वयस्य तु।
आबालपण्डितं विद्या यथावस्त्वन्यथेतरा ॥ १३ ॥
विद्ययेतरहानिश्च प्रसिद्धैवाविचारतः।
न ह्यन्यथा विचारोऽपि तत्तत्त्वं तु विचार्यते ॥१४॥
सदसत्किमनिर्वाच्यं तदनात्मन्युतात्मनि।
इति तच्च नयाव्यत्वादन्त्यं पक्षमतिष्ठिपम् ॥ १५ ॥
आत्मैवाज्ञानहानिर्वा तदाप्यात्मैव शिष्यते।
आत्मनैवात्मवत्त्वाच्च मोहस्याहेस्स्रजा यथा ॥ १६ ॥
मो[1]हाभावोऽपि चात्मेति मोहहानिस्सदा न हि।
घटभावलयौ मृत्तु तथापि न सदैव तौ ॥ १७ ॥
जह्यादविद्याविद्यात्वं विचारं सहते यदि।
न्यायाघातासहिष्णुत्वमविद्यालक्षणं यतः ॥ १८ ॥
निवृत्तिर्निश्चिता लोके प्रवृत्तिर्न तु वस्तुतः।
कल्पितौ बन्धमोक्षौ च वस्तुवृत्त्या न तौ मम ॥१९॥
तस्मादज्ञानहानेन मोक्षयोगादुपेयताम्।
ऐकात्म्यमेव न द्वैतं पुंभेदस्योक्तदोषतः ॥ २० ॥

[1] B (०हभा०)।

तच्च व्यवस्था दृष्टत्वादुपपन्ना त्वविद्यया ।
नेष्यतेऽवस्तुतो दृष्टेर्व्यवस्था न क्वचिन्मया ॥ २१ ॥
प्रत्यक्षादिप्रमाणानां कर्मविज्ञानकाण्डयोः ।
प्रामाण्यमविरोध[1]श्च नर्तेऽविद्यां यथोदिताम् ॥२२॥
धर्मार्थकाममोक्षाख्याश्चत्वार इतरेऽपि च ।
इष्टानिष्टाः प्रसिध्यन्ति सर्वतीर्थदृशां तथा ॥ २३ ॥
दर्शनानि विरुद्धानि जगद्वैचित्र्यमेव च ।
तस्मात्सर्वस्य सिद्ध्यर्थं विचार्य निरधारि सा ॥ २४ ॥
अस्ति मुक्तिरसौ बोधाद्बोधोऽबोधनुदेकलः ।
आत्मन्यबोधस्तस्यैव तन्नाशोऽप्यात्मशे[2]षतः ॥ २५ ॥
आत्मैको निष्क्रियोऽनन्तोऽद्वयोऽनुभवविग्रहः ।
अतमस्तज्ज आत्मस्थो ज्योतिषां ज्योतिरात्मभाः ॥२६॥
सर्वेष्टः परमानन्दो वेदान्तात्मप्रमाणकः ।
इत्येषोऽर्थो विशेषेण मयेष्टो वेदविन्मतः ॥ २७ ॥
अर्थश्चायमनिर्वाच्या यद्यविद्या प्रसिध्यति ।
व्यचीचरमविद्यां तामत इष्टार्थसिद्धये ॥ २८ ॥

---

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमदव्ययात्मभगवत्पूज्य-पादशिष्यस्य विमुक्तात्मभगवतः कृताविष्टसिद्धावष्टमोऽध्यायः ॥

---

॥ समाप्ता चेयमिष्टसिद्धिः ॥

[1] CE (०धश्चेन्न०) । [2] E (०षता) ।

श्रीः

# इष्टसिद्धिविवरणम् ।

## प्रथमोऽध्यायः ।

यश्चिन्वयन् मुनीनाद्यानास्ते वटतरोरधः ।
तस्मै तेजस्विनेचाय कस्मैचिद्गुरवे नमः ॥ १ ॥
तर्कोद्ग्रनखोद्भिन्नवावदूकमहासुरः ।
श्रुतीः प्रह्लादयन् जीयाद्विमुक्तात्मा नृकेसरी ॥ २ ॥
चोलेषु मङ्गलमिति प्रथितार्थनाम्नि
ग्रामे वसन् पितृगुरोरभिधां दधानः ।
ज्ञानोत्तमस्सकलदर्शनपारदृश्वा
व्याख्यामिमां वितनुते स्फुटमिष्टसिद्धेः ॥ ३ ॥

प्रारिप्सितस्य प्रकरणस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय चेष्टदेवतां नमस्यन्नर्थाद्विषयादिकं दर्शयति यानुभूतिरिति । महदादिजगत्कारणेन ब्रह्मणा प्रत्यगात्मन एकत्वाभिधानाद्विषयसूचनं [?] प्रतिपाद्य अस्यानन्दस्वभावत्वाभिधानात्प्रकरणश्रवणजनितज्ञानेन तत्साक्षात्कृतवतस्तदाविर्भावः प्रयोजनमिति सूचितम् । इदानीं श्लोकात्मकं प्रकरणं व्याख्यास्यन्नाचार्यस्तद्गताविघ्नादिसिद्ध्यर्थमिष्टदेवतां प्रणमति इष्टानिष्टेति । इष्टं मे भूयादनिष्टं मे मा भूदिति निरतिशयेष्टप्राप्तिनिश्शेषानिष्टपरिहारकामस्य तयोस्सिद्धिर्यद्दर्शनेन भवतीति तरति शोकमात्मविद्ब्रह्मविदाप्नोति परमित्यादिश्रुतिप्रमाणादवगम्यते तं परमात्मानं मामस्मदर्थं प्रत्यगात्मानं नमस्कृत्य इष्टसिद्धिप्रकरणार्थं विवृणोमि । आत्मसंदृशे आत्मदर्शनप्रतिबन्धकसकलयौक्तिकासंभावना-

निरासेन मुमुक्षोरात्मदर्शनायेत्यर्थः। यद्वा। प्रथमेन प्रत्यग्ब्रह्मणो-रेकत्वलक्षणो विषयः प्राधान्येनोच्यते द्वितीयेनाशेषानर्थनिवृत्तिनिरति-शयानन्दाविर्भावलक्षणं प्रयोजनं प्राधान्येनोच्यत इति विभागः। ननु यच्छब्दस्य प्रकृतपरामर्शकत्वादनुभूतेश्चाप्रकृतत्वादसमञ्जसो यानु-भूतिरिति परामर्श इत्याशङ्कामपनुदन्नाद्यं पदं व्युत्पादयति येतीति। ... ननु यद्वस्तु तत्स्वातिरिक्तवेद्यमिति व्याप्तिदर्शनात्संविदोऽपि वस्तुत्वात् घटवदितरवेद्यतानुमीयत इत्याशङ्क्य बाधकतर्कमाह अनुभूतेरिति। ... एवं तावन्नैयायिकादिसमारोपितमस्वयंप्रकाशत्वमपाकृत्य यत्प्राभा-करादिना संविदस्स्वप्रकाशत्वेऽपि जन्मादि समारोपितं तदपाकरोति न च स्वतस्सिद्धस्येति। अत्रादिशब्देन तज्जन्मव्यापकीभूतकारणवत्वोत्तरकाल-संबन्धादयो गृह्यन्ते। न (च) प्रध्वंसः तद्राहित्यस्य नान्ते भावविकारा इति जन्माभावेन साध्यमानत्वात्। ते तु संवेदनस्य प्रकाशा[प्राग?]-भावादयस्स्वतः स्वप्रकाशतया न सिध्यन्ति संवित्त्वापत्तेः। यद्वा स्वतस्तेनैव संवेदनेन न सिध्यन्ति स्वाग्रहणे स्वविशेषितप्रागभावादिग्रहणा-योगात् स्वप्रागभावादिकाले स्वस्य सद्भावापत्तेः[?]। नापि संविदन्तरेण प्रागभावादिधर्मिभूतसंवेदनस्य स्वप्रकाशतया संविदन्तराग्राह्यत्वात्। एवं जन्मव्यापकानां प्रागभावादीनां प्रमाणतोऽसिद्धत्वात्तद्व्याप्यस्य जन्मनोऽपि प्रमाणतोऽसिद्धिः। संविज्जन्मप्रसिद्धिश्च घटाकाशजन्मप्रसिद्धिवदुपपद्यते। ... ततस्स्वतस्सिद्धत्वादजैवानुभूतिरित्यर्थः। ... देहपरिमाणादिना चैतन्यस्यापि परिमाणादिरस्तीति चार्वाका मन्यन्ते। तदपा-करोति अतोऽस्या इति। ... स्वप्रकाशत्वमजत्वं चाभ्युपेत्यापि दिगम्बरेण सततोर्ध्वगमनादयो धर्मास्संवित्स्वभावस्य जीवस्य वेद्यास्समारोपिताः। तान्व्यावर्तयति चेत्यानां चेति। विमता न चिद्धर्माश्चेत्यत्वात् रूपादिवत्। विपक्षे चात्मनोऽपि चेत्यत्वप्रसङ्ग इति भावः। ननु येतिपदेन स्वतस्सिद्धत्वद्योतिना पूर्वमेवानुभूतेरमेयत्वमुक्तम्। अतः पुन-रुक्तिरित्याशङ्क्य व्याचष्टे नास्या इति। तेनामेयत्वं द्योतितमनेन मेय-

धर्मराहित्यमुच्यते । ततो न पौनरुक्त्यमित्यर्थः । स्वप्रकाशत्वेन सिद्धमवेद्यत्वं अपिशब्देन सूचयति । स्वप्रकाशत्वमजत्वं मेयधर्मवैधुर्यं चाङ्गीकृत्यापि साङ्ख्यास्संविदः परिच्छेदमाहुः । तान्व्यावर्तयति अतोऽनन्तेति । अत इति हेतुत्रयपरामर्शः । स्वप्रकाशत्वादजभावत्वान्मेयधर्मरहितत्वाद्वा देशतो वस्तुतश्च सा अनन्तानुभूतिरित्यर्थः । तत्र तावत्स्वप्रकाशत्वेनानन्त्यं वितनोति अन्तस्यापीति । अन्तः किं मेयोऽमेयो वा । आद्ये नानुभूतिधर्मत्वं मेयत्वाद्घटवत् । अन्त्ये स्वप्रकाशोऽस्वप्रकाशो वा । आद्येऽनुभूतेरपृथक्त्वादन्त्ये स्वरूपेणान्यत्वेन वासिद्धेर्नान्तवत्ता चित इत्यर्थः । ननु देशतो वस्तुतश्च परिच्छिन्नानामप्यजत्वाभ्युपगमात्कथमजत्वेनानन्त्यं सिध्यतीत्याशङ्क्याह कालत इति । यद्यप्यजत्वेन देशतो वस्तुतश्चानन्त्यं न सिध्यति तथापि कालतस्तावत्सिध्यति जनिमत एव भावस्य पूर्वापरकालावच्छेददर्शनादित्युक्तम् । इदानीमितरदपि सिध्यतीत्याह अत एवेति । अनुभूतिर्देशतो वस्तुतश्चानन्ता अजभावत्वात् । न यदेवं न तदेवं यथा घटादीत्यर्थः । विपक्षे बाधकाभावादप्रयोजकत्वमित्याशङ्क्याह अन्यथेति । ननु जीवस्याजत्वेऽपि वस्तुपरिच्छेदो दृश्यते । ततो व्याप्त्यभावात्प्रशिथिलमूलस्तर्काभासोऽयमित्याशङ्क्य मूलभूतां व्याप्तिमाह न ह्यजमिति । निरुपाधिकचैतन्यस्याजस्य विभागित्वं वस्तुपरिच्छेदो नास्ति । उपाधिविशिष्टस्य तु वस्तुपरिच्छेदिनो नाजत्वम् । ततश्च वस्तुपरिच्छेदिनोऽजत्वाभावात्सिद्धा व्याप्तिरित्यर्थः । ननु तर्हि परमाणुषु व्यभिचार इत्याशङ्क्याह नाणूनां चेति । ... ननु परमाणवोऽजाः निरंशद्रव्यत्वादात्मवदित्याशङ्क्य विशेषणासिद्धिमाह न चानंशत्वमिति । परमाणवस्सांशाः सर्वदिक्संबन्धित्वाद्घटवत् । अन्यथा एकदिक्संबन्धेऽपि परमाण्वपेक्षया प्राचीप्रतीचीविभागाभावादाकाशवद्व्यापकत्वप्रसङ्ग इति भावः[?] । इतश्च सांशा इत्याह संयोगेति । परमाणवस्सांशास्संयोगित्वात् पटवत् । अन्यथा

संयोगस्याव्याप्यवृत्तित्वाद्युगपदेकोपाधौ भावाभावप्रसङ्ग इति भावः। [Page 2] ननु संयोगस्यांशवृत्तितायामंशयोरपि संयोगोऽंशवृत्ति-रेवेत्यनवस्थायां परमाणुवृत्तिसंयोगोऽप्रत्यक्षस्स्यात् [?]। अतस्स्वरूपेणैव परमाण्वोस्संयोग इति न तद्बलात्सांशत्वसिद्धिरित्याशङ्क्याह न ह्यनंशस्येति। प्रत्यक्षसिद्धा संयोगस्यांशवृत्तिता न तर्केण पराकर्तुं शक्या निरूपणा-सहत्वं तु न दूषणमित्यर्थः। स्वरूपेण संयोगे दूषणमाह अनंशस्यापि चेदिति। परमाणोर्घटस्य वा यदेकेन संयोगस्तदैव नान्येन स्यात् संयुक्तरूपातिरिक्तरूपान्तराभावादित्यर्थः। ननु यदवादि अनंशस्य संयोगो न दृष्ट इति तदसत् खमनसोरात्ममनसोश्च दर्शनादित्याशङ्क्याह एतेनेति। द्वितीयसंयोगासंभवतर्केणाकाशादेरपि संयोगो निरस्तो द्रष्टव्यः। ... ननु परमाणवस्सांशा इत्येतत्सिद्धसाधनं कल्पितांशा-भ्युपगमादित्याशङ्क्याह कल्पिताश्चेदिति। असमवायिकारणस्यावस्तुत्व-प्रसङ्ग इत्यर्थः। यस्मान्निरंशस्य संयोगो न प्रतीतियुक्तिसिद्धस्तस्मा-त्संयोगे सांशत्वं परमाणूनां सिद्धमिति विशेषणासिद्धिस्तुस्थैवेत्याह तस्मादिति। ननु भिद्यमानेष्ववयवेषु यतः परं विभागो नास्ति स परमाणुः। ततो निरंशः परमाणुस्तारतम्यविश्रमाधिकरणत्वादाकाश-वदित्याशङ्क्याह अनंशत्वेऽसंयोगादिति। संयोगासंभवप्रतिकूलतर्कपरा-हतत्वेनाप्रयोजको हेतुरित्यर्थः। यस्मात्परमाणुषु न व्यभिचारस्तस्मा-द्विभक्तानां जन्मवत्त्वमिति सिद्धा व्याप्तिरित्याह तस्मादिति। ... ननु विभागाख्यान्ताभावेऽपीतरेतराभावाख्योऽन्तो भविष्यतीत्यत आह अविभागे चेति। एवं तावदानन्त्यानुमानस्य विपक्षे बाधकसद्भावा-दप्रयोजकत्वे परिहृते प्रत्यक्षविरोधमिदानीमुद्भावयति नन्विति। ननु चेत्यस्य चैतन्यात्पृथक्सत्ताप्रतीती एव न स्तः। तत्र कुतो भेदसिद्धिरित्या-शङ्क्याह त्वं चेति। विपक्षे बाधकमाह अन्यथेति। चिच्चेत्ययोरभेदे सत्येकस्याश्चितोऽभेदाद्घटादीनामपि परस्परभेदो न स्यादित्यर्थः।

किंच विभक्तत्वादिहेतुना कार्यत्वानुमानादिव्यवहारसिद्धेरन्यथानुपपत्त्यापि भेदो वक्तव्य इत्याह अन्यथेति। किंच यन्न प्रकाशते तन्नास्तीत्युच्यते। भेदस्य तु प्रसिद्धत्वादपह्नवोऽशक्य एवेत्याह प्रसिद्धेरिति। प्रसिद्धत्वान्नात्यन्ताभाव एव भेदस्येत्येतदनुजानाति सत्यमिति। अत एव विभक्तत्वात्कार्यतानुमानादिव्यवहारोऽपि संभवतीत्याह अत एवेति। ननु तर्हि भेदस्य प्रसिद्धत्वादानन्त्यानुमानस्य बाधितविषयत्वं तदवस्थमेवेत्यत आह किंतु नास्या इति। प्रत्यक्षादिमूलत्वमुपन्यस्तमित्यभिप्रेत्याह कथमिति। [यद्यपि ?] अन्योन्याश्रयत्वेन दृश्ययोरपि भेदो न दृश्येतैव तथाप्यनुभूत्यानन्त्यहान्यभावात् तमभ्युपगम्यानुभूतेस्तावद्भेदः प्रत्यक्षो न भवतीत्याह उच्यत इत्यादिना। दृग्दृश्यभेदो न प्रत्यक्षः प्रत्यक्षाप्रत्यक्षभेदत्वात् नीलनृशृङ्गभेदवदित्यर्थः। धर्मिप्रतियोग्यपेक्षत्वात् धर्मिप्रतियोगिदृश्यपेक्षत्वादित्यर्थः। ननु सत्तयैव धर्मित्वं प्रतियोगित्वं वा स्यात्। नृशृङ्गे तु सत्तैव नास्तीति तद्भेदस्याप्रत्यक्षत्वम्। तस्मात्प्रत्यक्षाप्रत्यक्षभेदत्वादित्यप्रयोजको हेतुरित्याशङ्क्याह न चादृष्ट इति। अदृष्टस्य धर्मित्वे सर्वस्य भेददृष्टिप्रसङ्गात् अदृष्टस्य प्रतियोगित्वे सर्वतो भेददृष्टिप्रसङ्गात् संशयविपर्ययानुदयप्रसङ्ग इति भावः। **[Page 3]** ननु भेदस्य प्रत्यक्षत्वे धर्मिप्रतियोगिस्फुरणमेवापेक्ष्यते न तु दृश्यतया स्फुरणं केवलस्य व्यतिरेकाभावात् [?]। अतोऽप्रयोजक इति शङ्कते नन्वदृश्यापीति। ... स्वरूपदृष्टिरपि चेत्प्रतियोगिसापेक्षा तर्हि प्रतियोगिनोऽपि स्वरूपदर्शने प्रतियोग्यन्तरापेक्षा वा पूर्वस्वरूपापेक्षा वा। आद्ये अनवस्था द्वितीये परस्पराश्रयत्वमित्युक्तम्। तत्रानवस्थां परिहरन् शङ्कते दृष्टमेवेति। सर्वत्रैव स्वरूपदर्शने प्रतियोग्यपेक्षायां भवेदनवस्था। न तु तथा। किंतु निरपेक्षदृष्टमेव स्वरूपं प्रतियोग्याद्यपेक्षया भिन्नमिति दृश्यत इत्यर्थः। ... तत्र किं स्वरूपदृश्यर्थैव प्रतियोग्यपेक्षा किं वा दृश्यन्तरार्था। नाद्य इत्याह न दृश्यार्थेति। द्वितीयं

पराकरोति नापीति। दृष्टान्तरस्य किं पूर्वदृष्टस्वरूपमेव गोचरः किं वा स्वाधिकम्। आद्ये न प्रतियोग्यपेक्षा पूर्वसामग्रीत एव संभवात् अन्त्ये भेदस्य न स्वरूपत्वसिद्धिरित्यर्थः। इदानीं धर्मपक्षमनुवदति अथ धर्म इति। तत्रापि धर्मस्य धर्मिस्वरूपाद्भिन्नत्वे प्रतियोग्यनपेक्षत्वप्राप्तेः परिशेषात् भिन्नो भेदोऽभ्युपेय इत्यनुजानाति सोऽपीत्यादिना। अत्यन्तभिन्नत्वे धर्मत्वासंभवं सूचयति कथंचिदिति। भिन्नत्वे च रूपरसादिवज्ज्ञानान्तरगम्योऽभ्युपेयः। तथा सति तस्मिन् ज्ञानान्तरे दृङ्न भाति चेत्तदा भेद इत्येव भायान्न तु दृग्धर्मत्वेन। अतस्स्फुरणमात्रस्यानुपयोगान्नाप्रयोजको हेतुरिति भावः। भेदस्य भिन्नत्वानुज्ञामाक्षिपति नन्विति। भेदो न वस्तुनो भिन्नस्ततो भेदेनानुपलभ्यमानत्वात् स्वरूपवदित्यर्थः। विपक्षे बाधकसद्भावाच्च न भिन्न इत्याह न चेति। भेदभेदिनोर्यो भेदस्स तावन्न स्वातन्त्र्येण गृह्यते किंतु विशेषणविशेष्यभावेनायमनयोर्भेद इति वा भेदो भिन्न इति वा। विशेषणविशेष्यभावश्च दण्डादौ भेदग्रहपूर्वको दृष्ट इति प्रागेव भेदान्तरं ग्राह्यम्। तदपि तथेति ग्रहणकारणस्य पूर्वस्यासिद्धौ विशिष्टभेदग्रहणासिद्धेर्मूलक्षतिरित्यर्थः। भेदो वस्तुनो न भिन्न इति कोऽर्थः। किं वस्त्वतिरेकेण नास्त्येव किं वा वस्तुस्वभाव इति विकल्प्य दूषयति किं सर्वत्रेति। सर्वत्र दृग्दृश्ययोर्भेदभेदिनोश्चेत्यर्थः। उक्तदोषप्रसङ्ग इति। भेदस्य प्रतियोग्यपेक्षा न स्यादित्यर्थः। अन्यथेति। वस्त्वभिन्नत्वे सति भेदाभावप्रसङ्गाद्वस्तुमात्रं स्यादित्यर्थः। यदवादि पूर्वपक्षदशायामितरेतराभावश्च चित्त्चेत्ययोः प्रसिद्ध इति तत्र भेदोक्तं दोषमतिदिशति एवमिति। यद्यन्योन्याभावो नाम भेदादन्योऽस्ति तदा सोऽपि वस्तुनो भिन्नो वक्तव्यः। इतरथा प्रतियोग्यपेक्षा न स्यादित्यतिदेशः कार्यः। भेदप्रयुक्तव्यवहारातिरेकेणान्योन्याभावप्रयुक्तव्यवहारादर्शनादन्योन्याभावो भेदादन्यो न चेत्तदा अतिदेशोऽपि न

कार्यस्तन्निराकरणेनैव निराकृतत्वादित्यर्थः । [Page 4] फलितमाह एवं च सतीति । भेदेतरेतराभावग्राहकज्ञानान्तराविषयत्वाद्दृग इत्यर्थः । ननु दृशो निरुपाधिकरूपं स्वप्रकाशं सोपाधिकं तु परप्रकाश्यम् । ततो भेदेतरेतराभावग्रहणसिद्धिरित्याशङ्क्याह न हीति । यत्सोपाधिकं दृश्यं रूपं न तत् दृशो रूपं कल्पनामात्रत्वादित्यर्थः । किंच यदि दृशो दृश्यरूपं स्यात्तदा स्वप्रकाशत्वमेव हीयेत रूपिदृश्यतामन्तरेण रूपदृश्यतानुपपत्तेरित्याह स्वयंदृष्टित्वेति । किंच यत्स्वसत्तायां प्रकाशव्यभिचारि तस्यैवादृश्यता निश्चेतुं शक्यते । दृशस्तु सदा दृष्टेर्न स्वसत्तायां प्रकाशव्यभिचार इति न दृष्ट्यन्तरं दृश्यत इत्याह न च स्वयंदृष्टेरिति । स्वरूपस्यैवान्यापेक्षत्वे को दोष इत्यत आह अन्यापेक्षत्व इति । स्वरूपभूतभानस्यान्यापेक्षत्वे सत्त्वस्यैव कारणापेक्षत्वात्पूर्वोक्तनित्यत्वानुमानभङ्ग इत्यर्थः । एवं दृक्स्वभावपर्यालोचनया भेदाभावयोस्तत्संबन्धं निरस्य भेदाभावस्वभावपर्यालोचनया तयोस्तद्धर्मत्वं निरस्यन्ननयोर्दृश्यत्वमदृश्यत्वं वेति विकल्प्याद्ये दोषमाह दृश्यत्वे चेति । द्वितीयेऽपि किं जडौ स्वप्रकाशौ वेति विकल्प्य प्रथमे दोषमाह अदृश्यत्वे चेति । चरमे दोषमाह स्वयंप्रभत्वे इति । स्वयंप्रभत्वे दोषान्तरमाह सदाभानाच्चेति । ... उक्तं स्वरूपपक्षदूषणमुपसंहारे दोषान्तराभिधित्सया परामृशति नापीति । दोषान्तरमभिदधाति न चैकस्या इति । एकलक्षणं ह्येकं भिन्नलक्षणं च भिन्नं प्रसिद्धमित्यर्थः । किं चैकस्या दृशो यदि भेदाभावाख्ये द्वे रूपे तदा किं दृक् ताभ्यामभिन्ना ते वा दृशोऽभिन्ने । प्रथमे दृशो नैकत्वं द्वाभ्यामभिन्नत्वात् । चरमे तयोः परस्परभेदो न स्यादेकाभिन्नत्वादित्याह न च तयोरपीति । किंच दृगभिन्नत्वे रूपयोरपि स्वप्रभत्वं वाच्यम् । तदा च प्रतियोग्यनपेक्षसिद्धित्वाद्भेदाभावत्वहानिः । अतो भेदाभावौ दृशो रूपे इत्यपि न सिध्यतीत्याह स्वयंप्रभत्व इति । दृगभिन्नत्वे भेदा-

भावयोः परस्परभेदो न स्यादित्युक्तमजानानश्शङ्कते अथाभेद एवेति । स्वरूपत्वेन वर्तमानयोर्भेदाभावयोर्दृशि परस्परमभेद इष्यत एवेत्यर्थः । तत्र दूषणमाह दृश्येऽपि तथा स्यादिति । दृश्यभेदाभावावप्यभिन्नौ भेदाभावत्वात् दृग्भेदाभाववदित्यर्थः । पूर्वं दृशि भेदाभावयोरैक्यमङ्गीकृत्य दृश्येऽप्यापादितम् । इदानीं तदपि नास्तीत्याह तत्राभेदेऽपीति । ... भेददृशोरभेदोक्तन्यायं भेददृश्ययोरभेदेऽप्यतिदिशति एवं दृश्यस्येति । भेदाभावयोरैक्ये भेदमात्रावशेषे भेदस्य दृश्यमात्रत्वे च दृश्यस्य भेदो न स्यादित्यर्थः । ... एवमभावदृश्ययोरभेदेऽपि दूषणमूह्यम् । भेदस्याभावमात्रत्वे दोषान्तरमाह किं चेत्यादिना । [Page 5] ननु वस्त्वन्तरस्य भेदस्याभावे कथमभावस्यासिद्धिरित्यत आह भिन्नयोर्ह्यसाविति । ननु भेदाभावमात्रेणैक्यप्राप्त्यसंभवात्किमितौतरेतराभावासिद्धिरित्याशङ्क्य भेदाभावे केनाप्याकारेण अभेदावभासहीनयोर्भावाभावयोरप्यभेदस्स्यात् किं पुनस्सत्त्वद्रव्यत्वादिरूपेणाभेदावभासवतां भावानामित्याह भेदाभाव इति । इदानीमभावस्य भेदमात्रत्वमिति आद्यविकल्पे दोषान्तरमाह यदि चेत्यादिना । ततः किमित्याशङ्क्य भेदस्याप्यसिद्धिरित्याह तदा कस्येति । ननु यत्रैकत्वं तत्रैव भेदोऽप्यस्तु इत्याशङ्क्य तदा भिन्नस्यैकत्वायोगादेकमेव न सिध्येदित्याह न चैकस्यैवेति । नन्वेकाभावप्रसङ्गस्त्वद्वैतवादिनो दोषो नास्माकमित्यत आह एकाभाव इति । ततः किमित्याशङ्क्य शून्यवादः प्राप्त इत्याह तदा नैकमिति । ... पूर्वं दृश्यत्वमदृश्यत्वं वेति विकल्प्य दूषणमुक्तम् । इदानीं तयोर्दृग्रूपत्वमदृग्रूपत्वं वेति विकल्प्य धर्मपक्षे दोषान्तरमाह तयोश्चेति । भेदाभावयोरदृग्रूपत्वे दोषान्तरमाह न च दृग्दृश्ययोरिति । यत्र धर्मधर्मिभावस्तत्रैकज्ञानगम्यत्वं दृष्टम् । तत् व्यापकं व्यावर्तमानं स्वव्याप्यं धर्मधर्मिभावमपि व्यावर्तयतीत्यर्थः । ननु शब्दाकाशादिष्वेकज्ञानागम्यत्वेऽपि धर्मधर्मिभावो दृष्टस्तथात्रापि स्यादित्या-

शङ्कयाह न चैकेति । नियामकाभावेन सर्वत्र प्रसङ्गादित्यर्थः । शब्दाकाशयोस्तु वाच्यवाचकयोर्नास्ति धर्मिधर्मभावः । सुरभिचन्दनमित्यादौ विद्यत एवैकसाक्षिप्रत्ययविषयत्वमेकैकग्रहणसंस्कारसध्रीचीनमनोजनितैकप्रत्ययविषयत्वं वेति द्रष्टव्यम् । एवं दृश्यप्रतियोगिकौ दृशो भेदाभावौ न स्त इत्युपपाद्येदानीं दृक्प्रतियोगिकौ दृश्यस्यापि तौ न स्त इत्याह अत एवेत्यादिना । दृङ्न दृश्यभेदाभावप्रतियोगिनी ततो भेदाभावविधुरत्वात् यदेवं तदेवं यथा दृश्यस्वरूपमित्युक्त्वा विपक्षे बाधकमाह एकस्मिन्नपीति । यदि दृश्याद्भेदाभावविधुरदृगपेक्षया दृश्यस्य तौ भेदाभावौ स्यातां तदा दृश्यस्य स्वस्मादपि भेदाभावप्रसङ्ग इत्यर्थः । स्वप्रतियोगिकौ भेदाभावौ स्यातां को दोष इत्याशङ्कयाह न च स्वत इति । स्वस्माद्भेदस्तथा स्वस्याभावस्स्वयं च वर्तत इति न शक्यं वक्तुम् । तयोर्भेदाभावयोस्स्थितौ भावस्य वस्तुनो वा वस्तुनस्स्थितौ तयोर्वा अभावप्रसङ्गात् वस्तुतद्भेदाभावानां परस्परविरुद्धत्वादित्यर्थः । तयोर्भावस्य चेति पाठे वस्तुतत्प्रतियोगिकभेदाभावानां विरोधान्मिथस्संबन्धाभावः ततश्चाविशेषात्त्रयाणामप्यभाव इत्यर्थः । ... दृशो भेदाभावविधुरत्वाद्दृश्यगतभेदाभावप्रतियोगित्वं न संभवतीत्युक्तम् । तदयुक्तम् स्वभावविशेषाद्दृशस्स्फुरणमात्रेण प्रतियोगित्वादित्याशङ्कयाह न चेति । भेदाभावासंस्पृष्टस्य दृग्रूपस्य स्वभावविशेषात् स्फुरणमात्रेण प्रतियोगित्वं चेत्स्वस्मादपि भेदाभावज्ञाने स्वस्य प्रतियोगित्वप्रसङ्ग इत्यर्थः । **[Page 6]** दृश्यस्य दृक्प्रतियोगिकभेदाभावासंभवे हेत्वन्तरमाह मानासंभवाच्चेति । ... स्वयंमानत्वे तयोर्दृश्येन सहैकज्ञानागम्यत्वान्न दृश्यधर्मत्वं यथा दृशस्स्वयंमानाया न दृश्यधर्मत्वं तद्वदित्यर्थः । दूषणान्तरमाह स्वयंमानत्वे चेति । तयोस्स्वयंमानत्वादेव दृग्वद्दृक्प्रतियोगिकतया तयोर्भेदो न सिध्येत् दृश्यादपि तयोर्भेदो न सिध्येत्प्रत्यक्षाप्रत्यक्षभेदस्याप्रत्यक्षत्वात् तयोः परस्परमपि भेदो न सिध्येत् स्वयंमानत्वाविशेषादिति । पूर्वोक्तेन न्यायेन भेदेन सहैक-

ज्ञानागम्यत्वादिति न्यायेनेत्यर्थः । ... भेदादेर्दृक्प्रतियोगिकत्वे प्रयोगान्तरमाह भेदाभावत्वाच्चेति । विमतो भेदो न दृक्संबन्धी भेदत्वात् घटादिभेदवत् । तथा अभावोऽपि न दृक्संबन्धी अभावत्वात् घटाद्यभाववदिति पृथक् प्रयोक्तव्यमन्यथा भागासिद्धिप्रसङ्गात् । ... पूर्वमन्यमानमभ्युपगम्य दूषणमुक्तम् । इदानीं तदपि नास्तीत्याह स्वयेदित्यादिना । ... यदि भेदाभावज्ञानलोभेन दृशो गोचरत्वमिच्छसि तदा घटवदृक्त्वं स्यादित्याह गोचरत्वे चेति । ननु तर्हि दृक्प्रतियोगिकभेदाभावयोर्दृगेव मानमस्त्वित्याशङ्क्याह नापीति । दृग्ग्रहणमन्तरेण तत्प्रतियोगिकभेदाभावग्रहणं न संभवति । न च स्वयं स्वस्य गोचरः कर्मकर्तृविरोधादित्यर्थः । ननु दृशस्स्वतस्स्फुरणात्स्वप्रतियोगिकभेदाभावमानत्वं भविष्यतीत्याशङ्क्याह आत्ममानापीति । प्रतियोगित्वेन प्रतियोगिमद्भेदाभावमानत्वेन च वर्तनं किं युगपत् कार्त्स्न्येन किं वा अंशाभ्याम् । नाद्यः प्रतियोगिकत्वेन वर्तमानायास्तथैव समाप्तत्वेन तन्मानत्वायोगादित्यर्थः । द्वितीयं प्रत्याख्याति अंशाभ्यां चेति । दृशस्सांशत्वे दोषमाह अनित्यत्वप्राप्तेरदृक्त्वप्रसङ्गाच्चान्यथेति । ... **[Page 7]** पूर्वं भेदाभावौ साधारण्येन निरस्येदानीमभावनिरासे युक्त्यन्तरमाह अभावज्ञानं चेत्यादिना । उपलब्धेर्लक्षणं कारणं तत्प्राप्तस्यानुपलब्धौ विषयव्यतिरिक्तकारणसंनिधानेऽप्यनुपलब्धावभावज्ञानमिष्यत इत्यर्थः । अथवा । उपलब्धिर्लक्षणं गमकं यस्योपलब्धियोग्यत्वस्य तदुपलब्धिलक्षणम् । तेन रूपेण प्राप्तस्य प्रतीतस्य वस्तुनोऽनुपलब्धावभावज्ञानमिष्यत इत्यर्थः । ततः किमित्यत आह न चेति । ननु तार्किकसमये योग्यानुपलब्धिर्नाभावज्ञानहेतुः । किंतु विशेषणविशेष्यभावेनाक्षसंयोगादेव तज्ज्ञानमित्याशङ्क्याह न च प्राप्तेति । तार्किकसमये नियतपूर्वक्षणभाविनः कारणत्वनियमादनुपलब्धेश्च कारणत्वाभावे कदाचिद्भावोपलब्धौ विद्यमानायामेवाभावज्ञानं स्यात् अनुपलब्धेः प्राग्भावनियामकाभावादित्यर्थः । नन्वनुपलब्धेरभावज्ञानकारणत्वाभावेऽ-

प्युपलब्धेस्तत्प्रतिबन्धकत्वेन तदभावतया अनुपलब्धेः प्राग्भावनियम इति शङ्कते प्राप्तानुपलब्धाविति। प्रतिबन्धकाभावतयाप्यनुपलब्धेरभावज्ञानं प्रत्युपयोगो विद्यते न वेति विकल्प्याद्यं प्रत्याह तथापीति। अनुपलब्धेरभावज्ञानकारणत्वाभावेऽपि प्रतिबन्धकाभावत्वेनाभावज्ञानं प्रत्युपयोगित्वादृशस्यानुपलब्ध्यभावान्न दृक्प्रतियोगिकाभावज्ञानं संभवतीत्यर्थः। द्वितीयमुत्थापयति अथेति। यस्योपलब्धिस्स्वव्यतिरिक्तास्ति तदभावज्ञानेऽनुपलब्धेरुपयोगेऽपि दृशस्त्वनन्योपलब्धित्वात्तदभावज्ञाने तदुपयोगो नास्तीत्यर्थः। तर्हि स्फुरन्त्यामपि दृशि दृक्प्रतियोगिकाभावज्ञानं स्यादिति परिहरति स्फुरन्त्यामपीति। किंच दृगभावज्ञानवद्दृश्याभावज्ञानमप्यनुपलब्धिं विनापि स्यादभावज्ञानत्वाविशेषादित्याह दृश्येऽपीति। ननु दृग्दृश्ययोर्विशेषसद्भावाद्दृगभावज्ञानवद्दृश्याभावज्ञानमनुपलब्धिं विना न स्यादित्याशङ्क्याह न चेति। दृग्दृश्ययोस्स्वरूपतो विशेषेऽप्यभावज्ञानप्रतियोगितायां न विशेषोऽस्ति येन दृश्ये विनाप्यनुपलब्धिमभावज्ञानं न स्याद्येन च दृशि तु विनापि स्यात्। तस्मादनुपलब्धेस्सर्वत्राभावज्ञानहेतुत्वमेष्टव्यमित्यर्थः। सर्वत्रानुपलब्धेरभावज्ञानहेतुत्वमभ्युपेत्यापि विशेषं शङ्कते ननु दृशस्त्वेवेति। यद्यपि सर्वत्रानुपलब्धिरभावज्ञानकारणमिष्यते तथापि दृशोऽनन्योपलब्धित्वाद्दृगभावात्मिकाया एवानुपलब्धेः दृक्प्रतियोगिकाभावज्ञानं नातिरिक्तानुपलब्धिरिष्यते दृश्यस्यान्योपलब्धित्वादभावोऽतिरिक्तानुपलब्धिगम्य इति विशेष इत्यर्थः। तत्र दृग्भावस्यैव दृग्ज्ञानत्ववद्दृगभावस्यैवाभावज्ञानत्वमङ्गीकृत्य किं व्यतिरिक्तानुपलब्ध्यनपेक्षा उच्यते किं वा अभावविषयं ज्ञानं पृथगङ्गीकृत्येति विकल्पयति किं दृश इति। तत्राद्ये सप्रतियोगिकस्याभावस्य स्वप्रकाशत्वासंभवः संभवे चाभावत्वव्याघात इत्यादिदोषं विशदं मन्वानश्चरमं प्रत्याह यद्यस्तीत्यादिना। ननु दृगभावस्यानुभवसिद्धत्वात्तदनुभवहेतोश्चानिरूपणादस्तु तस्य निर्हेतुकतेति [?] तत्राह न च तद्धेत्विति। ··· कुत

इत्यत आह अन्याभावेति । दृश्याभावज्ञानस्याप्यहेतुजन्मप्रसङ्गादित्यर्थः । तर्हि कार्यानुरूपं किंचित्कारणमस्य कल्प्यतामित्याशङ्क्याह न च प्राप्तेति । तर्हि सत्त्वयैवोपलब्धिकारणप्राप्तस्यानुपलब्ध्यावभावज्ञानमस्त्वित्याशङ्क्याह सत्त्वे चेति । आदिशब्दसूचितं हेत्वन्तरं निराचष्टे नापीति । दृगनुपलब्धिमात्रस्य न दृगभावादन्यत्वम् । अतो न तावन्मात्रमभावज्ञानहेतुरित्यर्थः । नन्वस्तु स्वाभाव एवानुपलब्धिस्सैव च दृगभावज्ञानहेतुस्स्यादित्याशङ्क्याह स्वाभाव एव चेदिति । दृगभावस्य मानत्वे तन्मेयमभावान्तरं वाच्यं तच्च न संभवतीत्यर्थः । दृगभावमनुपलब्धिशब्दार्थमङ्गीकृत्य तयान्यदृगभावान्तरं मेयं नास्तीत्युक्तम् । इदानीं साप्यनुपलब्धिस्तव न सिध्यतीत्याह नाप्यस्या इति । अनुपलब्ध्यन्तरवेद्यत्वेऽनवस्थाप्रसङ्गादसतो नृशृङ्गवद्वायोग्यत्वाच्चानुपलब्धेरसिद्धिरित्यर्थः । ननु तर्हि कर्मतया घटस्य स्वज्ञानहेतुत्ववत् दृगभावस्यैव स्वज्ञानहेतुत्वमतो न हेत्वन्तरापेक्षेत्याशङ्क्याह न च मेय एवेति । अनिष्टं च परोक्षाभाववादिनामभावज्ञानस्य विषयजन्यत्वमित्याह अनिष्टत्वाच्चेति । प्रत्यक्षाभाववादिपक्षेऽपि प्रमेयप्रतियोगिकाभावस्य ज्ञानहेतुत्वदर्शनादृशश्चामेयत्वात्तत्प्रतियोगिकाभावस्य ज्ञानहेतुत्वमनिष्टमिति द्रष्टव्यम् । तर्हि प्रतियोगिस्मरणादिकं कारणमस्त्वित्याशङ्क्याह न चात्रेति । अत्र आदिशब्देन प्रतियोगिग्रहणमुच्यते अयमयं न भवतीति प्रतियोगिग्रहणस्याप्यभावज्ञाननिदानत्वदर्शनात् । ननु दृश्ये दृङ्नास्तीति सांशमिदं ज्ञानं तत्र दृक् स्वप्रकाशत्वात् प्रतियोगिस्फुरणांशतया भासते सर्वत्रापि प्रतियोगिस्फुरणमेवाभावप्रत्ययेषु कारणं न तु दृश्यत्वमित्यत आह स्वात्ममानापीति । एकमेव हि निरंशमभावज्ञानं तदत्र प्रतियोग्यंशवदभावविषयत्वादंशवत्त्वेनोपचर्यते [?] । ततो नित्या संवित्प्रतियोगिस्फुरणत्वेनानित्यस्याभावज्ञानस्य नांशस्संभवेन्नित्यानित्ययोरेकत्वासंभवादिति भावः । **[Page 8]** अंशस्याभ्युपगमे बाधमाह सर्वज्ञानांशत्वेति । बाधमेवोपपादयति यद्येकस्येति । तत

इदमनिष्टमापन्नमित्याह इति सर्वे भावाभावा इति। यथा दृश-स्त्वाभावज्ञानेऽंशतया स्फुरणाद्दृगभाव इति दृशा अभावो विशेष्यते तथा दृङ्नीलं दृक्पीतं दृग्घटाभाव इति सर्वे भावाभावा दृग्विशेषणतां प्राप्नुयुः। ... यदि दृगभावज्ञानस्य कारणं नास्ति तर्हि तद्दृगभावज्ञानं मा भूत्कारणशून्यत्वाच्छशविषाणवदिति परिहरति मा भूत्तर्हि तदिति। घटोऽचेतन इत्यनुभवबाधं शङ्कते भवत्येवेति चेदिति। तर्हि दृगभावज्ञानं भ्रान्तिः कादाचित्कत्वे सति क्लृप्तकारणशून्यत्वात्संप्रतिपन्नभ्रान्तिवदित्याह तथापीति। ननु रूप्यभ्रान्तिः प्रमाणकारणाच्चक्षुस्संप्रयोगाद्दृष्टा। तथा दृगभावज्ञानस्य भ्रान्तित्वेऽपि प्रमाणकारणमन्वेषणीयमित्याशङ्क्याह न च भ्रान्तेरिति। गतिः प्रमाणकारणम्। नान्वेषणीयं भ्रमकारणत्वेनाविद्यायाः प्रसिद्धत्वादित्यर्थः। विपक्षे दोषमाह गतिश्चेदिति। यस्माद्दृगभावज्ञानस्य भ्रान्तित्वे गतिरस्ति तस्मादनन्यगतित्वेन स्वाभावज्ञानांशत्वं दृशो न कल्पनीय-मित्युपसंहरति तस्मान्नात्ममानापीति। यदवाच्यग्राह्यत्वाद्दृश इति तदसिद्ध-मित्याह नन्वेवमिति। ननु दृक् स्वप्रकाशा मेयधर्मविधुरा चेत्यादि-निरूपणापि ज्ञानत्वात्स्वरूपस्फुरणमेव। अतो नासिद्धिरित्याशङ्क्याह न चेति। नित्यानित्ययोरेकत्वायोगादित्यर्थः। तर्ह्यविषयत्वेऽपि दृशो विषयत्वभ्रमनिवारणाय निरूपणास्त्वित्याशङ्क्याह न चात्यन्तमिति। ... अस्तु तर्हि घटादिलक्षणविषयविषयेत्यत आह न चान्यविषयेति। निरूपणान्तरनिवारणरूपा सा त्वदीया निरूपणा न घटादिलक्षण-विषयविषया घटादौ निरूपणानिवारणस्यानिष्टत्वादशक्यत्वाच्च तद्गोचर-प्रमाणविरोधादित्यर्थः। **[Page 9]** ननु तर्हि निर्विषयास्त्वित्यत आह न चाविषयैवेति। निरूपणास्वरूपहानप्रसङ्गादित्यर्थः। अतः परिशेषा-दविषयविषयैव त्वदीया निरूपणा। तथा सति मन्निरूपणापि तथा स्यादविशेषादित्याह अत एवेति। पूर्ववादी स्वनिरूपणाया विशेषमाह अथ नेयमिति। ... यथा नृशृङ्गं प्रमेयं न भवतीत्यप्रमेयेऽपि प्रमेयत्वप्रति-

षेधः परेषामन्यथा मूकतापातात्तथा ममापीति साम्यमुक्त्वाधुना सिद्धान्तिनिरूपणस्य [?] युक्त्युपेतत्वं विशेष इत्याह इयांस्त्विति। ... ननु यदि दृगात्मा निरूपणाज्ञानेन (न) विषयीक्रियते तर्ह्यस्याविषयत्वं न सिध्येद्विषयत्वनिरूपणायामस्फुरणात्। अविषयत्वसिद्धये हि निरूपणा क्रियते। तस्माद्विषयत्वसिद्धये निरूपणाज्ञानविषयत्वं दृगात्मनि स्वीकार्यमित्यत आह अन्यथेति। दृगात्मनो निरूपणाज्ञानाविषयत्वेऽप्यविषयत्वं सिध्यति। तथाहि—दृगात्मनि स्वप्रकाशत्वेन प्रकाशमाने लोकप्रसिद्धाविषयत्वगोचरव्यतिरेकव्याप्तिबलात्संविदविषयत्वाकारा बुद्धिवृत्तिरुत्पद्यते [?]। अस्यां चाभिव्यक्तो दृगात्मा स्वात्मन्यध्यस्तस्य विषयत्वावच्छिन्नरूपस्य व्यवहारहेतुस्संपद्यते। ततश्चाविषयत्वं सिध्यति। तस्मान्नाविषयत्वसिद्धये निरूपणाज्ञानेन विषयीक्रियते। तथा सति अविषयत्वनिरूपणताहानिप्रसङ्गादित्यर्थः। ... धर्मी चेत्प्रतियोगी तर्हि तथैव समाप्तत्वाद्धर्मी न स्यादित्युक्ते सिद्धान्त्याह मा भूदिति। मा भूद्धर्मी किं तेन। न हि धर्मिसमर्थनायाहं प्रवृत्त इत्यर्थः। **[Page 10]** ननु सर्वस्यैव सर्वत्रैव चाभावज्ञानं स्यादिति नास्माकं प्रसङ्गस्सर्वस्य सर्वत्रेतरेतराभावस्य विद्यमानत्वेन तज्ज्ञानस्येष्टत्वादिति शङ्कते नन्विति। इष्टत्वमस्तु तथापि प्रतियोग्याद्यविशेषितत्वे सति इतरेतराभाव इति विशिष्टज्ञानं न स्यादिति परिहरति शृण्विति। ततः किमित्यत आह अत इति। तथापि किमायातमित्यत आह शून्यतेति। नञस्संकोचकाभावादविशेषितनिषेधे शून्यतायां प्रमा प्राप्तेत्यर्थः। अप्रमेति वा पदच्छेदः। तदा निस्स्वभावत्वाच्छून्यता अप्रमा प्रमाणशून्या प्रसज्यत इत्यर्थः। ननु क्वचित्किंचिदेव निषेद्धुं शक्यते न तु सर्वं सर्वत्राशक्यत्वादित्याशङ्क्यात एव प्रसङ्ग इति परिहरति तथेत्यादिना। ननु नायं प्रसङ्गश्शून्यवादिनामस्माकमिष्टत्वादित्यत आह अशक्यत्वादिति। ... उक्तप्रकारेण यदि प्रामाणिकाभावो न घटते चेत्तर्ह्यप्रमेयोऽस्त्वित्यत आह न चास्वयंप्रभ इति। नन्वस्वयंप्रकाशा-

भावस्यास्वयंप्रकाशत्ववत् स्वयंप्रकाशाभावस्य स्वयंप्रकाशत्वमित्यत आह स्वयं-प्रभत्वे चेति । ननु दृश्ये दृगभावे मानाभावात्तयोरितरेतराभावो मा भूत् तथापि तयोर्भेदोऽस्त्वित्यत आह इतरेतराभावमिति । न विद्येते भेदाभावौ यस्यास्सा तथोक्ता । तद्भावोऽभेदाभावत्वम् । तस्मात् प्रामाणिकभेदाभावविधुरत्वाद्दृश आनन्त्यं सिद्धमित्याह तस्माद्दृशोऽभेदा-भावत्वादिति । इदानीं दृग्दृश्याभेदवादिना बौद्धेन यदन्तवत्त्वमवादि तदपवादेनानन्त्योपपादनाय चोद्यमुद्भावयति नन्वेवमिति । भेदेतरे-तराभावयोरभावे सति ऐक्यं तादात्म्यं च स्यादित्यर्थः । ··· **[Page 11]** प्रसिद्धिविरोधो न दोष इति शङ्कते भेदनिराकृताविति । नेह नानास्ति किंचनेत्यादिबलवद्भेदाभावमानावष्टम्भेन भेदप्रसिद्धिबाधे तद्विरोधो न भवेत् । तथा न किमप्यभेदे मानमस्तीति परिहरति सत्यमिति । प्रमाणं विनाप्येवमेव [?] चेद्बाधस्तदा बाधनिश्चयोऽपि न स्यादित्यत आह तस्य तस्येति । पूर्वं स्वस्य प्रसिद्धिबाधकत्वमभ्युपगम्योक्तम् । इदानीं तदपि नास्तीत्याह नाहमपीति । तत्त्वापरोक्ष्यादर्वाक् प्रतिभाससंभवादित्यर्थः । अभेदे प्रमाणाभावः कुतो निश्चीयत इति पृच्छति ननु कथमिति । किमभेदतत्प्रतिभासौ प्रातीतिकौ नैयायिकौ वा । नाद्योऽनुपलब्धेः । न द्वितीयस्तमःप्रकाशयोरिव दृग्दृश्ययोर्विरुद्धत्वाद्भेदप्रसिद्धिविरोधाच्च । ततः कथमभेदे प्रमाणाभाव इति प्रश्नो न कर्तव्य इति परि-हरति किमत्र पृच्छ्यत इत्यादिना । तत्प्रतिभासो (वा) तयोरभेद-प्रतिभासनम् । न प्रतिभाति नापि न्यायतस्संभवतीत्यन्वयः । यद्वा । पटोऽपरोक्ष इति सामानाधिकरण्यप्रत्ययात् नित्यदृक्संनिधानाद्दृश्यसिद्धौ सदासिद्धिप्रसङ्गात्प्रतिनियताभेदसंबन्धो वक्तव्य इति न्यायात् इदं सर्वं यदयमात्मेत्यागमाच्चाभेदो भाति तत्कथमभेदे प्रमाणाभाव इति । कथंशब्दस्य प्रश्नाक्षेपयोस्समत्वात् किमत्र-पृच्छ्यत-इतिबलात् किं वाक्षिप्यत इत्यप्यायाति । तत्र न तावत्प्रत्यक्षनिमित्त आक्षेप इत्याह न

त्वभेद इति। सविकल्पकाशाद्घटः प्रकाशत इतिवदापरोक्ष्यसंसर्गादपि सामानाधिकरण्योपपत्तेरिति भावः। व्यञ्जकान्तःकरणपरिणामप्रति-नियमादपि प्रतिनियतदृश्यसिद्ध्युपपत्तेर्न्यायतोऽपि नाभेदस्संभवतीत्याह नापीति। प्रसिद्धानुवादेनात्मातिरिक्तवस्त्वभावप्रतिपादनपरत्वान्नागमतो वा तत्प्रतिभास इत्याह तत्प्रतिभासो वेति। आक्षेपासंभवमुक्त्वा प्रश्नासंभवमाह तमःप्रकाशयोरिवेति। एवं भेदभङ्गवादिनः प्रश्ना-नर्हतामुपपाद्येदानीमभेदवादिन एव प्रष्टव्यतामाह यदीति। प्रतीति-न्यायविरुद्धत्वमेव प्रश्नपूर्वकं दर्शयति कथमित्यादिना। **[Page 12]** अर्थस्यासंभावितत्वात्तज्ज्ञानमपि न संभवतीत्याह अत एवेति। इतश्च नाभेदतज्ज्ञाने संभवत इत्याह कथं चेति। दृग्दृश्ययोरभेदे किं दृश्यस्य दृङ्मात्रत्वमुत दृशो दृश्यमात्रत्वमिति विकल्प्य दूषयति यदि चेत्यादिना। अभेदासंभवमुक्त्वा तज्ज्ञानासंभवमाह यदि च दृश्यो दृगात्मनेति। दृश्यस्य दृगात्मना ज्ञेयत्वे तस्य दृग्गोचरज्ञानज्ञेयत्वं स्वप्रकाशत्वं स्यात्। तथा च तस्य दृक्त्वादि प्रसज्येत। दृशो दृश्यात्मना ज्ञेयत्वे तस्या दृश्यगोचरज्ञानज्ञेयत्वं स्यात्। ततश्चादृक्त्वादि प्रसज्येतेत्यर्थः। ननु शुक्लो घट इतिवद्घटो दृष्ट इति विशेषणविशेष्यभावादवश्यं धर्म-धर्मित्वं वक्तव्यम्। तच्च नात्यन्तभेद इत्यभेदो वक्तव्य इत्याशङ्क्याह नापीति। किमिति धर्मधर्मित्वं न संभवतीत्यत आह न हीति। दृग्दृश्ययोर्धर्मधर्मित्वे एकज्ञानगम्यत्वावश्यंभावाद्दृश एकस्या एव साकल्येन दृश्यस्य धर्मत्वेन धर्मित्वेन वा दृश्यत्वं दृगन्तराभावात्तदानीमेव तद्दृक्त्वं च प्रसज्येत। तच्चायुक्तं विरोधादित्यर्थः। तर्ह्येकेनांशेन दृश्यस्य धर्मत्वेन धर्मित्वेन वा दृश्यत्वमंशान्तरेण तद्दृक्त्वं चास्त्वित्याशङ्क्याह नाप्यंशाभ्यामिति। किंच दृश्यस्य धर्मत्वेन धर्मित्वेन वा दृश्यतया प्रविष्टभागस्य दृश्यत्वादेवादृक्त्वा-द्दृग्दृश्ययोर्धर्मधर्मित्वमित्येतन्न सिध्यति। दृशोऽंशाभ्यां दृश्यत्वं दृक्त्वं चेत्यपि न सिध्यति दृश्यभागस्यादृक्त्वादेवेत्याह दृश्यांशस्य चेति। किंच धर्म-

धर्मित्वमपि स्वप्रकाशं दृश्यं वेति विकल्प्य नाद्य इत्याह न च धर्मधर्मित्वमपीति । स्वयंप्रकाशत्वे तस्य दृगभेदाद्धर्मधर्मित्वहानिरित्यर्थः । किंच धर्मधर्मिभावस्य दृश्यद्वयधर्मत्वं वाच्यम् । तच्च न सिध्यति स्वयंप्रकाशत्वेन दृश्यसंबन्धायोगादित्याह दृश्यासंबन्धाच्चेति । द्वितीयं प्रत्याह नापीति । दृश्यत्वे तस्य दृग्धर्मत्वं नोपपद्यते दृश्यस्य स्वयंप्रकाशदृक्संबन्धायोगादित्यर्थः । पुनरप्यभेददूषणाय यथासंभवं विकल्पयति किंच ये एते इत्यादिना । ... [Page 13] ननु जीवे भाति तदभिन्नं यथा ब्रह्म न भाति तथा किं न स्यादित्याशङ्क्याह न ह्येकस्यैवेति । ब्रह्म न भातीत्ययं भ्रम एव स्वरूपभानस्यानपायात् । तत्त्वतः पुनर्नैकस्य भानाभाने संभवतः विरोधादित्यर्थः । ... एकस्यैवांशिनो दृग्दृश्याख्यांशाभ्यां व्यवस्थेति तृतीयविकल्पस्याभिप्रायमाह एकस्यैवेति । तर्हि तस्मिन्नपि पक्षेऽंशयोर्व्यवस्थितत्वात्तद्व्यतिरिक्तस्यांशिनोऽभावान्नैकस्यैव भानाभाने सिध्यत इत्याह तदापीति । नन्वंशातिरिक्तोऽंशी विद्यत इत्याशङ्क्य तदाप्येकरूपस्यांशिनो न भानाभाने स्यातामुक्तविरोधलक्षणदोषप्राप्तेरित्याह नांशिनोऽपीति । तर्ह्यविरोधायांशान्तराभ्यां स्यातामित्याशङ्क्य तदा उक्तरांशसंबन्धोऽंशान्तरसंबन्धपुरस्सर इत्यंशान्तरसंबन्धोऽपि तथैवेत्यनवस्था स्यादित्याह अंशान्तराभ्यां चेदिति । अनन्तांशभानाभानाधीनत्वादंशिभानाभानयोरसिद्धेर्मूलक्षतिरिति भावः । ननु भादभातोर्नाभेद इति वदता सहोपलम्भनियमादभेदो नीलतद्धियोरित्येतदेव साधितं स्यात् । तच्चास्मत्सिद्धान्त एवेत्याह नन्वेवमिति । ... [Page 14] ननु यथा चन्द्रभेदज्ञानस्यैक एव चन्द्र आलम्बनं तथा मम भेदज्ञानमभेदालम्बनं ततो न विरोध इत्याशङ्क्याह न च भेदज्ञानस्येति । संवेदनानामपि भेदभानस्याभेदालम्बनत्वप्रसङ्गादेकैव संवित्स्यादित्यर्थः । ... नन्वनुमानादिकमभेदे मानं मा भूदाप्तवचनमेव विद्यत इत्याशङ्क्य दूषयति नन्वित्यादिना । पूर्वं सहोपलम्भलिङ्गस्य यथाशब्दं

दूषणमुक्तम्। इदानीमर्थविशेषनिरूपणेन दूषणं वक्तुमुपक्रमते कश्चायमित्यादिना। पक्षत्रयेऽप्यसिद्धिरित्यर्थः। सहोपलम्भशब्दस्य बहुव्रीहित्वावलम्बनेन सहोपलम्भ्यार्थत्व[भ्यत्वार्थ ?]संभवाद्विकल्पोपपत्तिर्द्रष्टव्या। नियमशब्दार्थोऽपि नास्तीत्याह यद्यपीति। ··· **[Page 15]** अभानादभावसिद्ध इत्याह विद्युदिति। अभानमसिद्धमित्यभिप्रेत्याह किं विद्युदिति। घटसंवित्काले विद्युदुपरागाभानेऽपि संविन्मात्रं भातीति नाभावसिद्धिरित्यर्थः। अन्या सा संविद्युक्तिरिति न वाच्यमित्याह न हीति। ननु घटसंवित् विद्युत्संविन्न भवति विद्युदविशेषितत्वाद्रजतभ्रमवदिति प्रमाणमाह नन्विति। सुगतेन धर्मत्वानङ्गीकारात्स्वरूपपक्षमादाय विकल्पयति किं विद्युदिति। तत्र प्रथमे हेत्वसिद्धिश्चरमेऽप्रयोजक इत्युक्तम्। इदानीं दूषणान्तरमाह किंचेति। न संविदस्स्वरूपमिति। वेद्यत्वाद्घटवन्न संवित्स्वरूपं स्यात्। अतो विद्युद्विशेषितत्वस्याभानेऽपि संविद्भानसिद्धिरिति भावः। किंच विद्युद्ग्रहणं विना संविदो विद्युद्विषयत्वस्य ग्रहणायोगाद्विद्युद्विषयसंविदन्तरं वक्तव्यम्। तस्यापि विद्युद्विषयत्वं संवेद्यमेवेत्यपरं विद्युद्विषयं संवेदनं वक्तव्यमित्यनवस्था स्यादित्याह अनवस्था चेति। प्रमाणान्तरमाशङ्कते ननु घटसंविदिति। भेदप्रसिद्धिर्जन्मविनाशादिविरुद्धधर्माध्यासश्च भेदे प्रमाणमित्यर्थः। तत्र प्रत्यक्षं तावन्न संविद्भेदे मानमित्याह तन्नेति। क्षणिकत्वादिति। प्रत्यक्षात्मकसंविदो वर्तमानविषयत्वनियमात् क्षणिकत्वादेव विषयत्वासिद्धेर्न प्रतियोगिसंविदां ग्रहणसिद्धिरित्यर्थः। ननु भेदस्य स्वरूपत्वान्न प्रतियोगिसंविदां ग्रहणापेक्षा किंतु संविदेव स्वात्मानं व्यावृत्तरूपेण गोचरयतीत्याशङ्क्याह न चैकस्मिन्नेवेति। पूर्वं संविदां संविदन्तरविषयत्वं नोपपद्यत इत्युक्तम्। इदानीं भेदग्रहणलोभेन तासां संविदन्तरविषयत्वाङ्गीकारे दोषमाह यद्येकस्या इति। ननु भेदग्राहकलक्षणविषयिसंविदो विषयसंविदन्यत्वेऽपि तासां विषयसंविदां परस्परभेदोऽस्त्वित्याशङ्क्याह एकस्या इति। विषयि-

संविदोऽनेकरूपत्वप्रसङ्गात्तासां परस्परभेदो नास्तीत्यर्थः । यद्युक्तदोषभीत्या विषयत्वं नेष्यते तत्राह संविदामिति । ग्राह्यग्राहकसंविदां विषय-विषयिभावादनन्यत्वं युक्तम् । तत्र विपक्षे बाधकमाह अथ तासामिति । अस्तु घटतत्संविदोरपि भेदस्ततः किमित्यत आह ततश्चेति । पूर्वं विषयत्वमङ्गीकृत्य भेदासिद्धिरुक्ता । संप्रति तदेव न सिध्येदित्याह संविदामपीति । साध्यविकलो दृष्टान्त इति शङ्कते घटादयोऽपीति । [Page 16] घटतत्संविदोरपि भेद एष्टव्य इति विषयविषयिभेदस्य साधितत्वात्तेषां संविदोऽन्यत्वे सिद्धे संवित्त्वे प्रमाणं नास्तीति परिहरति तन्नेति । संवित्त्वे दोषमाह यदि तेऽपीति । यद्वा । घटादयोऽपि संविद एवेति वदता किं तेषां स्वसंविदोऽन्यत्वे सति संविदन्तरात्मत्वमुच्यते किं वा स्वसंविन्मात्रत्वमिति विकल्प्याद्यं प्रत्याह तन्नेति । संविदन्तरा-त्मत्वे प्रमाणादर्शनात्तन्न सिध्यतीत्यर्थः । द्वितीयं प्रत्याह यदि तेऽपीति । स्वसंविन्मात्रत्वे विषयत्वं न स्यात्तत्संविदो विषयत्वाभावादित्यर्थः । अथ घटसंविदपि विषयस्तर्हि किं स्वोत्पत्तिकाले कालान्तरे वा । प्रथमे किं घटस्य किं वा संविदन्तरस्य स्वस्यैव वेति विकल्प्याद्यद्वितीयौ निराचष्टे न हि घटसंविदिति । घटं जानामीति हि प्रत्ययो न संविदं जानामीति भावः । तृतीयं प्रत्याह न चात्मनोऽपीति । न केवलं विषयत्वेनाभानमेव किंतु विरोधश्चास्तीत्याह एकस्या इति । संविन्न स्वविषयः वस्तुत्वादसिधारावदित्यर्थः । किंच प्रकाशविषयस्य घटस्यान्यत्वदर्शनान्न स्वविषयत्वमित्याह विषयस्य चेति । संविदन्तर-विषयत्वे दोषमाह यदि संवित्संविदन्तरस्येत्यादिना । कालान्तरे वेति द्वितीयमनूद्य दूषयति घटसंविदोऽप्यन्यदेत्यादिना । घटसंविद्घटसंविदिति विशिष्टरूपस्य कदाचिद्विषयत्वदर्शनेऽपि केवलसंविदः कदाचिदपि विषय-त्वादर्शनान्न कालान्तरेऽपि विषयत्वं संविद इत्यर्थः । किंच पूर्वं विषयि-त्वादपि संविन्न कालान्तरे विषयस्स्यात् कदाचिद्विषयस्य घटादेरन्यदा

विषयित्वाद्दर्शनादित्याह सद्वदिति । विपक्षे दोषमाह कालभेदेन चेति । कालान्तरेऽपि प्रत्यक्षविषयत्वे विषयसंविदस्स्थायित्वं प्रत्यक्षस्य वर्तमानग्राहित्वनियमात् अनुमितिविषयत्वेऽनुमातुस्स्थायित्वं स्मृतिविषयत्वे स्मर्तुस्स्थायित्वमित्यर्थः । यदुक्तं स्वकाले कालान्तरे वा संविदोऽन्यविषयत्वं न संभवतीति तत्सत्यम् । स्वसंवेद्यत्वमवश्यं वक्तव्यमिति शङ्कते कथमसंविन्नेति । असंविन्ना संवित् स्वविषयतामनापन्ना कथं स्वयं सिध्येत् । न कथंचित् । यथा वा घटान्तर्वर्तिनि दीपेऽनवभासमाने तदवभास्यं न बहिस्सिध्यति तथा स्वयमसिद्धा कथमन्यं साधयेत् । अतस्संविदुदयानन्तरक्षणे घटो मया विदित इति विशिष्टपरामर्शानुपपत्त्या अनुमानमपबाध्य स्वसंवेद्यता वक्तव्येत्यर्थः । यथा (तर्हि) अनुपपत्तिदर्शनादन्यसंवेद्यता नेष्यते तथा स्वसंवेद्यतापि न वक्तव्येति परिहरति यद्यसिद्धेत्यादिना । निवृत्तेरिति । साध्यतायाः प्रथमत एव निवृत्तत्वान्न सिद्धायास्साध्यत्वमित्यर्थः । साध्यता—अनिवृत्तेरिति पदच्छेदे साध्यताया अनिवृत्तेः पुनः पुनः प्रसङ्गादित्यर्थः । **[Page 17]** घटसुखादेरिति । बाह्याभ्यन्तरसंवेद्यवस्तूपलक्षणम् । संवित्संवेद्ययोरभेदाभावादेव न संविदि संवेद्यभेदप्राप्तिरित्याह अत एवेति । संवित् तत्त्वत एका घटाद्यवच्छेदं विनानवभासमानभेदत्वादाकाशवदिति प्रयोगः । इतश्च भेदो न संविद्धर्म इत्याह संवेद्यत्वाच्चेति । तर्हि संविद्धर्मत्वाभावेऽपि संवित्स्वरूपत्वं स्यादित्यत आह न वस्तुन इति । किंच यो हि बहून्कल्पयति कल्पयत्यसावेकमिति न्यायेन भेदवादिनोऽप्येका संवित्तावत्सिद्धा । तत्र संविदन्तराण्यभ्युपगम्यमानानि पुनस्संवेद्यान्यासंवेद्यानि स्वप्रकाशानि वेति विकल्प्य दूषणमाह संविदन्तरेति । अवैलक्षण्यादिरुद्धधर्माध्यासासंभवात्संविदन्तरासिद्धिरित्यर्थः । इतश्च संविदन्तरासिद्धिरित्याह भेदासंभवाच्चेति । भेदग्राहकमानासंभवादित्यर्थः । यद्वा । संविदन्तरशब्दोक्तभेदस्य संवेद्यत्वासंवेद्यत्वस्वप्रकाशत्वविकल्पेन दूषणसंभवान्न संविदन्तरसिद्धिरित्यर्थः । संवित् भिन्ना जन्मनाशादिविरुद्धधर्माक्रान्तत्वाद्घटादिवदिति परिशिष्टं चोद्यांशमवसरप्राप्तमुद्भावयति

नन्वित्यादिना । वैलक्षण्यं विरुद्धधर्माध्यासस्ततो भेद इत्यर्थः । तत्रासिद्धो हेतुरित्याह । तन्नेति । कथमसिद्धिरित्यत आह भेदव्यवस्थेति । इतश्च हेत्वसिद्धिरित्याह जन्मनाशावपीति । असंवेद्यत्व इति । जन्मनाशयोरवेद्यत्वेऽसत्त्वान्न ताभ्यां संविद्भेदसिद्धिरित्यर्थः । स्वप्रकाशत्वेनावेद्यत्वे तयोर्मिथस्संविदश्च भेदासिद्धेर्न ताभ्यां संविद्भेदसिद्धिरित्यर्थः । एवं सहोपलम्भनियमदूषणप्रसङ्गेन संविदैक्यं प्रसाध्योपसंहरति तस्मादिति । तस्माद्दृश्यं दृशो नाभिन्नं तद्भानेऽप्यनवभासमानत्वाद्यथा अवभासमाने घटे अनवभासमानो मेरुरित्यनुमानं सुष्ठूक्तमित्याह अत एकस्मिन्निति । अतोऽनुमानस्य स्थितत्वात्तृतीयविकल्पोऽनुपपन्न इत्याह इति द्वयोरिति । चतुर्थं दूषयति अन्त्य इत्यादिना । ··· [Page 18] पूर्वमेकस्मिन् द्वयभानं न संभवतीत्युक्तम् । इदानीमेकमेवास्तीति वक्तुं न शक्यत इत्याह कथं च दृश्येति । अस्मत्पक्षे तु मायामयत्वेन सद्विलक्षणत्वादसत्त्वोक्तिरुपपद्यते । त्वया तु मायामयत्वानभ्युपगमान्नास्त्येवेति वाच्यम् । तन्न संभवत्यनन्यथासिद्धापरोक्षावभासविषयस्यानुपाख्यत्वानुपपत्तेरित्यर्थः । एवमत्यन्ताभेदे निरस्ते भेदाभेदवादी प्रत्यवतिष्ठते अथोच्यत इत्यादिना । दृग्दृश्याकारेण तयोर्भेदाभावेऽपि सद्रूपब्रह्माकारेणाभेद इत्यर्थः । ··· मिथो भिन्नयोरपि घटपटयोस्सत्त्वादिरूपेण यथा स्तम्भादभेदो विद्यते तथा ब्रह्मणोऽपि दृग्दृश्ययोर्भविष्यतीति शङ्कते येन रूपेणेति । तयोर्दृग्दृश्ययोः कल्पिते ये अभेदरूपे ते किं ब्रह्मणा सहाभिन्ने भिन्ने वा । प्रथमे किं ब्रह्मणो रूपमात्रत्वं रूपयोर्वा ब्रह्ममात्रत्वमिति विकल्प्य दोषमाह ब्रह्मणोऽपि पूर्ववदिति । द्वितीयं प्रत्याह भिन्ने चेदिति । रूपयोर्ब्रह्मणा सहाभेदो नास्तीति तद्द्वारको दृग्दृश्ययोरपि ब्रह्माभेदो न स्यादित्यर्थः । ··· पूर्वं रूपद्वयमङ्गीकृत्योक्तं तदपि नास्तीत्याह न चानयोरिति । किमिति नास्तीत्याशङ्क्य दृग्दृश्यविलक्षणतृतीयरूपस्यासंभवात् संभवतश्च दृग्दृश्यलक्षणरूपद्वयस्यैकैकस्मिन्नेव व्यवस्थितत्वादित्याह न हीति । ननु स्वरूपेणैव

तर्हि भिन्नत्वमभिन्नत्वं चास्त्वित्याशङ्क्याह न चैकरूप एवेति । रूपभेदे दोषान्तरमाह एकमिति । विप्रतिषेधमेव विवृणोति एकस्माच्चेति । परस्परभिन्ने रूपे यथान्योन्यस्वरूपे न भवतो यथा च तदेकं वस्तु ताभ्यां भिन्नं न तयो रूपयो रूपं भवति तद्वदेकस्माद्दृश्याद्दृशो वा भिन्ने ते रूपे न तस्य तस्य रूपे भवत इत्यर्थः । रूपित्वं रूपत्वं वा रूपत्वाभावे प्रयोजकं न भिन्नत्वमिति शङ्कापनोदनायोदाहरणद्वयमुक्तम् । ··· ननु पुरुषमृगादिकमेकं द्विरूपं दृश्यत इत्याशङ्क्य तदपि न मनुष्यत्वादिजातिमत् किंतु जात्यन्तरमेव । तस्मान्नैकस्य द्वैरूप्यं तत्रेत्याह नाप्यन्यदिति । एकस्य द्वैरूप्यविरोधाद्दृशि दृश्ये वा रूपद्वयं न संभवतीति यतोऽतः ब्रह्मात्मना तयोर्नाभेद इत्याह अत इति । **[Page 19]** अत्र दृष्टविरोधं शङ्कते नन्विदमिति । ननु सुवर्णात्मनैकत्वं कुण्डलाद्यात्मना च नानात्वं यद्यपि दृश्यते तथापि तदनुपपन्नमित्युपपद्यत [?] इत्याशङ्क्याह न च दृष्ट इति । दर्शनस्य स्वतःप्रामाण्यात्तदनुगुणत्वाच्च तर्कस्येत्यर्थः । किंच त्वयाप्यवश्यं दर्शनबलमभ्युपेयमित्याह एकरूपं चेति । दृष्टेऽनुपपन्नं नास्तीति वदतां विचारानारम्भप्रसङ्गोऽर्थापत्तिविपत्तिर्देहाद्यात्मवादापत्तिश्च स्यात् । अतो दर्शनस्य सत्यासत्यसाधारण्यात्तत्त्वबुभुत्सुना निरूपणं कार्यं निरूपणासहस्य सत्त्वव्याघातादित्यभिप्रेत्य परिहरति दर्शनं परामृश्येति । प्रथमविकल्प एव विशेषं शङ्कते अथोच्येतानेकानीति । ··· अस्मिन् पक्षेऽनेकरूपाभिन्नस्य रूपिणो दर्शनमेवाशक्यमित्याह तदापीति । द्वितीयं दूषयति अथ भिन्नान्येवेति । तत्र प्रथमं रूपरूपिभावमङ्गीकृत्यानेकरूपसामानाधिकरण्यमेकस्य न सिध्यतीत्याह तदेति । इदानीं भिन्नत्वे रूपरूपिभावोऽपि न सिध्यतीत्याह कथं चेति । तृतीयं दूषयति अथेति । तयोश्च रूपयोर्भेदाभेद इति प्रथमरूपगतरूपयोस्स्वरूपिणा प्रथमरूपेण भेदाभेदसिद्ध्यर्थं प्रथमरूपगतरूपयोः प्रत्येकं रूपद्वयमेष्टव्यमिति रूपरूपाणामनवस्था स्यादित्यर्थः । तथा रूपिणोऽपि रूपैरिति । प्रथमरूपिणः प्रथमरूपे-

भेदाभेदे तैरस्य भेदाभेदसिद्ध्यर्थं प्रतिरूपं रूपिणि द्वे द्वे रूपे स्वीकार्ये। ताभ्यां प्रथमरूपिगतरूपाभ्यां रूपिणो भेदाभेदे तत्सिद्ध्यर्थमन्येऽन्ये द्वे द्वे रूपे स्वीकार्ये इति रूपिरूपाणामप्यनवस्था स्यादित्यर्थः। [Page 20] अनवस्थायां दोषमाह ततश्चेति। यद्वा। सत्तानवस्थात्वाद्व्यवहाराविरोध-माशङ्क्य प्रतीत्यनवस्थाप्यस्तीत्याह ततश्चेति। उक्तमर्थमुपपादयति तथा हीति। रूपयोस्ते ते रूपे रूपतद्रूपे। तयोरपि भेदाभेददृष्ट्यर्थं ये ते रूपे ते तद्रूपतद्रूपे तयोरिति विग्रहः। कस्माद्रूपे द्रष्टव्ये इत्याशङ्क्याह न हीति। अतो रूपपरम्परादर्शनमवश्यंभावीत्याह तस्मादिति। अनन्तानि रूपाणि द्रष्टव्यानि प्रसज्यन्ते तेषां च रूपाणां प्रत्येकमनन्तानि रूपाणि द्रष्टव्यानि प्रसज्यन्त इत्यर्थः। तर्हि दृश्यन्तामित्याशङ्क्य शुक्लो घट इति प्रतीतिकाले तथादर्शनान्नैवमित्याह न च तथेति। प्रौढवादेनानन्तरूप-दर्शनमङ्गीकृत्यापि भेदाभेदौ न कयोश्चिदपि पदार्थयोस्साक्षात्प्रतीयेते इत्याह दृष्टेष्वपीति। किमिति न प्रतीयेते इत्याशङ्क्याह तथाहीति। समानाधिकृतयोरपि रूपरूपिणोस्साक्षाद्भेदाभेदौ न प्रतीयेते किंतु रूपद्वारेणैव। किं पुनरसमानाधिकृतयोरितरपदार्थयोरित्यर्थः। द्वार-भूतरूपयोरपि भेदोऽभेदश्च व्यवस्थितावेव। अतो नैकस्य भेदाभेदावित्याह रूपयोरपीति। रूपयोर्भेदाभेदव्यवस्थितावपि रूपवति द्वावपि धर्मौ भवत इति शङ्कते तद्वत इति। अस्मिन्प्रकरणे तद्वच्छब्देन रूपिणः प्रथमरूपमुच्यते। तस्य स्वात्मीयरूपाभ्यां रूपवत्त्वादनयोर्नैकोऽपि तद्वतो-धर्मस्स्यात्। किं पुनस्तौ द्वावपि तद्व्यतिरिक्तधर्मत्वादिति परिहरति नैकोऽपीति। गुणस्य यथा स्वाश्रयभूतघटादिसमवायिमृदादिगतत्वा-भावस्तद्वद्रूपाश्रितयोर्न रूपवता संबन्ध इत्यर्थः। किंधर्मौ तर्हि तावित्यत आह रूपयोर्हीति। प्रथमरूपे रूपवति कल्पिते ये रूपे तयोर्हि तौ भेदाभेदौ धर्मौ। तयोश्च घटत्वजातेर्मृद्धर्मत्वाभाववत्तद्धर्मत्वं न भवतीत्यर्थः। एवं साक्षाद्भिन्नाभिन्नत्वं निराकृत्य रूपधर्मौ भेदाभेदौ रूपवत्युपचर्येते रूपतद्वतोरभेदादित्याशङ्क्य परिहरति रूपधर्मावपी-

त्यादिना । रूपयो रूपवन्मात्रलाभावादुपचार इत्याह भेदस्यापीति । एवं तर्हि रूपवति भेदाभेदयोरुपचाराद्रूपद्वये च व्यवस्थितत्वान्न क्वापि मुख्यं भिन्नाभिन्नत्वमिति दूषयति नास्ति तर्हीति । सर्वत्र भेदाभेदयोरेवंभूतत्वादिदमेव मुख्यं भिन्नाभिन्नत्वमिति चोदयति अथोच्येतेति । अत्यन्तभिन्नगतस्यान्यत्र प्राप्तिरुपचारः । इह तु तथाविधत्वाभावान्मुख्यत्वमित्याह अथवेति । यत्त्वया हेतुत्वेनोपात्तं भिन्नाभिन्नत्वमिदमेव कथं सिद्धम् । किं साक्षादुपचारतो वेति परिहरति इदमेव तर्हीति । रूपान्तराभ्यामिति । रूपान्तराभ्यां भेदाभेदावित्यन्वयः । ··· [Page 21] प्रथमपक्षे दोषमाह न तावद्रूपयोरिति । मुख्यरूपरूपिणोरपि साक्षाद्भेदाभेदप्रसङ्गात्तस्य च त्वयानिष्टत्वाद्रूपभेदं कल्पयतेत्यर्थः । द्वितीयं पक्षं दूषयति न चान्यगाविति । साक्षात्क्वाप्यदर्शनादित्यर्थः । पूर्वोक्तौ रूपगौ भेदाभेदौ रूपतद्धर्मतया किमिति नोपचार्याविति पृच्छति कथमिति । उत्तरमाह न तावदिति । तत्र रूपवतीत्यर्थः । पूर्वमुपचाराद्भेदाभेदसिद्धिमभ्युपगम्येतरेतराश्रयत्वमुक्तमुपचारसिद्धौ हेतुसिद्धिर्हेतुसिद्धौ चोपचारसिद्धिरिति । इदानीमुपचारतोऽपि न द्वितीयरूपतद्वद्भिन्नाभिन्नत्वसिद्धिरित्याह रूपान्तराभ्यामिति । प्रथमरूपिरूपान्तराभ्यां द्वितीयरूपिरूपान्तराभ्यां वा सकाशाद्रूपयोर्भेदाभेदौ धर्मौ । ततस्तयोर्भेदाभेदयो रूपवत्युपचारेऽपि साक्षाद्भावेऽपि वा न रूपतद्वतोर्भिन्नाभिन्नत्वमन्योन्यं सिध्येत् । किंतु यदि सिध्येत्प्रथमरूपिरूपान्तराभ्यामेव सिध्येत् न स्वात्मीयरूपाभ्यां सह रूपवत इत्यर्थः । प्रतियोगिरूपिरूपान्तराभ्यां भिन्नाभिन्नत्वमङ्गीकारमात्रेणोक्तं न तु घटत इत्याह तदपि नेति । रूपतद्वद्भिन्नाभिन्नत्वाधीनत्वात्तस्योपचारस्येत्यर्थः । ननु भेदाभेदशब्दयोर्निरालम्बनत्वपरिहारायावश्यं कथंचिद्भेदाभेदसिद्धिर्वक्तव्येत्याशङ्क्याह यदि नामेति । रूपिणः प्रथमरूपिण इत्यर्थः । रूपस्य प्रथमरूपस्येत्यर्थः । द्वितीयपक्षे दोषमाह अथेत्यादिना । दोष उक्त

इति । रूपरूपिभावासिद्धिलक्षणो दोष उक्त इत्यर्थः । यस्मादेकस्यानेकरूपत्वं निरूपणसहं न संभवति तस्माद्विरोधदर्शनं नास्तीत्युपसंहरति तस्मादिति । एवं ब्रह्मण एकस्यानेकरूपत्वायोगाद्दृग्दृश्ययोर्ब्रह्मरूपेणाभेदस्स्वरूपेण भेद इत्युक्तमयुक्तमित्याह अतो ब्रह्मात्मनेति । एवं ब्रह्मस्वरूपपर्यालोचनया दृग्दृश्ययोर्भेदाभेदासंभवमुक्त्वा अधुना दृग्दृश्यस्वभावपर्यालोचनयापि तयोर्भेदाभेदासंभवमाह तथा दृग्दृश्ययोरिति । [Page 22] ननु यद्युक्तनीत्या दृग्दृश्ययोर्ब्रह्मरूपता न घटते तर्हि अब्रह्मरूपतैवास्त्वित्याशङ्क्याह दृग्दृश्ययोश्चाब्रह्मरूपत्व इति । ब्रह्मण उभाभ्यां भिन्नत्वे साधारणदूषणमुक्त्वा दृशस्सकाशाद्भिन्नत्वेऽधिकमाह अदृक्त्वे चेति । शशविषाणवद्ब्रह्म न सिध्येदित्यर्थः । दृक्संबन्धात्सिद्धिमाशङ्क्याह यदि सिध्येदिति । दृक्संबन्धितया सिद्धत्वे दृश्याद्वैलक्षण्यासिद्धेर्दृश्यस्य [अ ?] ब्रह्मरूपत्वं न सिध्येदित्यर्थः । दृश्यत्वे चेति । ब्रह्मणो दृश्यत्वे दृश्यान्तरस्येव दृशस्सकाशाद्भेदोऽभेदश्च न सिध्यति । दृश्यान्तरस्य च तयोरसिद्धिः प्रागेवोपपादितेत्यर्थः । यदि भेदपक्षोक्तदोषपरिजिहीर्षया ब्रह्माभिन्नमेवेष्यते तदा किं द्वाभ्यामभिन्नं किं वा एकस्मात् । यदि द्वाभ्यां तदा ब्रह्मणो द्विरूपत्वं स्यात् । यद्येकस्मात्तत्रापि दृश्याच्चेदभिन्नं दृशस्सकाशाद्भेदोऽभेदश्च न सिध्यतीत्युक्तदोषप्राप्तिः । दृशश्चेदभिन्नं तत्र न कश्चिदपि दोष इत्याह अथेत्यादिना । नान्यथेति । दृगेव यदि ब्रह्म न भवति किंतु रूपभेदोऽप्यस्ति तदा न दोषाभावः । एकस्यानेकरूपत्वानुपपत्तिलक्षणदोषस्य विद्यमानत्वादित्यर्थः । ··· इदानीमभेदमङ्गीकृत्यापि दोषं परिहरति कथं चेति । दृग्दृश्ययोरभेदाङ्गीकारेऽपि तादात्म्यस्य निरस्तत्वाद्दृग्वा दृश्यं वा अवशिष्येतेति वाच्यम् । तत्र दृश्यावशेषे दृगभावाद्दृश्यावभासायोगाच्च दृगवशेषे दृश्याभावाच्च दृशि दृश्यगतदोषप्राप्तिर्न स्यादित्यर्थः । इदानीं भेदाङ्गीकारेऽपि नास्तीत्याह दृश्याद्भेदेऽपीति । सङ्गाभावादित्यर्थः । इतश्च निर्दोषैव दृगित्याह दोषोऽपीति । [Page

23] दृश्ये दोषसद्भावमङ्गीकृत्य परिहृतम् । इदानीं तदपि नास्तीत्याह किंच दृश्येऽपीति । दृश्ये दोषाभावमुपपादयति तथाहीति । अन्यानन्यत्वादिविकल्पेन धर्मधर्मिभावानुपपत्तेरधर्मकत्वाद्दृश्यस्य वस्तुनः परमार्थतो गुणदोषसंस्पर्शासंभवाद्भेदजन्मादिसंस्पर्शो नास्तीत्यर्थः । भेदजन्मादीनां साधारणेन दुर्निरूपत्वमुक्त्वा प्रत्येकमाह किंच भेदस्येति । ... ननु दृशोऽप्येकत्वं धर्म इति नाद्वितीयत्वसिद्धिरित्याशङ्क्याह न चास्या इति । भेदाभेदादिविकल्पासहत्वात्संबन्धासंभवाच्चेत्यर्थः । नन्वितरेतराभावादिधर्मान्तरसंभवात्कथमधर्मकत्वमित्याशङ्क्याह भेदधर्माभाव इति । तदधीनत्वमेवोपपादयति भिन्नयोर्हीति । ननु भावाभावरूपेण वस्त्वसंकरस्य वैलक्षण्यस्य विद्यमानत्वान्नैकं वस्त्वित्याशङ्क्याह भावाभावानामिति । इतरेतरभावस्येतरेतरभावाभ्युपगमे स्वपरनिर्वाहकत्वस्यापि दुर्निरूपत्वादितरेतराभावान्तरमभ्युपेयम् [?] । तस्याप्यन्यदित्यनवस्था स्यात् । अनभ्युपगमे च वस्त्ववस्तुवैलक्षण्यासिद्धिः । विश्वं तत्त्वतो न विलक्षणमितरेतराभावविधुरत्वात् वस्तुस्वरूपवदित्यर्थः । जन्माद्यभावेऽधिकमाह न चाभावं विनेति । इतरेतराभावाभावात्प्रागभावादिविभागासिद्धेर्न जन्मादिसिद्धिरित्यर्थः । तत्र प्रागभावाभावे जन्माभावं तावद्दर्शयति न ह्यज्ञात इति । प्रागभावशून्यत्वान्नरविषाणवन्न कस्यचिज्जन्मेत्यर्थः । नन्वदृष्टदर्शनाज्जन्मसिद्धिरित्याशङ्क्याह न ह्यदृष्टस्येति । समाध्यादिषु देवतादिजन्मप्रसङ्गादित्यर्थः । दर्शनप्रागभावस्यासिद्धौ नादृष्टदृष्टिरपि सिध्यतीत्याह न चेति । [Page 24] कूटस्थमित्यस्यार्थमाह सदैकरूपमिति । यद्वा । कूटस्थं विकाररहितं प्रागभावाद्यभावात्सदातनं अन्योन्याभावाभावादेकरूपमद्वितीयमित्यर्थः । कूटस्थं सदैकरूपं चेति यतोऽतस्सिद्धस्वभावमसिद्धस्वभावमेव वा न सिद्धासिद्धस्वभावमित्याह द्वैरूप्यायोगाच्चेति । ... इदानीं प्रागभावमङ्गीकृत्य जन्म निषेधति सत्यपि प्रागभाव इति । विमतं न जन्मार्हमसत्त्वान्नृशृङ्गवदित्यर्थः । किंच

जायमानः पदार्थ एव जनेः कर्ता वक्तव्यः । तस्यासत्त्वे जनिरकर्तृका स्यात् । तच्च न घटत इत्याह न चेति । ननु प्रागभाववतो जन्म प्रत्यक्षसिद्धम् । अतस्तद्विरुद्धमनुमानमित्यत आह न चासिद्धेति । आश्रयस्यासतः पूर्वकालस्य च प्रत्यक्षेणादृष्टेर्नासज्जन्म प्रत्यक्षमित्यर्थः । ननु प्रागसतो घटस्योत्तरकालसंयोगस्स्वाश्रयातिशयपूर्वकः कादाचित्कत्वाच्चैत्रग्रामसंयोगवदित्यनुमीयत इत्याशङ्क्याह अनुमेया चेदिति । संयोगविभागहेतोरतिशयस्य नमनादेस्सिद्धाश्रयत्वदर्शननियमादनुमेयापि क्रिया सिद्धाश्रयैवानुमेयेत्यर्थः । अस्तु तर्हि सिद्धाश्रया जनिरित्याशङ्क्याह सिद्धेति । सिद्धस्य सिद्धौ पूर्वापि सिद्धिस्सिद्धस्यैवेत्यनवस्थेत्यर्थः । प्रागसतो जन्मनि दोषान्तरमाह प्रागिति । अन्यथेति । जनिमतः प्राक्सत्त्वाभावे जनेस्स्वातन्त्र्यं स्यादाश्रयाभावादित्यर्थः । ... नाशादयोऽपि पूर्वरूपेण सतोऽसतो वा । नाद्यस्तद्रूपविरोधात् न द्वितीयो नैष्फल्यादित्याह एवमिति । ... आत्मपदव्यावर्त्यां शङ्कामाह नन्वनुभवश्चेति । अनुभूतिरात्मनो भिन्ना तदाश्रितत्वादज्ञानवदित्यनुमानविरोधात्साधितमप्यानन्त्यं न प्रतिष्ठां लभत इत्यर्थः । ... पूर्वं शङ्कोत्तरत्वेन व्याख्यायेदानीं हेतुहेतुमद्भावेन व्याचष्टे अनन्तत्वाच्चेति । अनन्तत्वादनुभूतेरात्मत्वमपि सिद्धमित्यर्थः । पूर्वं त्वंपदार्थतया व्याख्यायेदानीं तत्पदार्थतया व्याचष्टे अथवेति । यद्वा । श्रुतिप्रतिपाद्ये परमात्मनि विद्यमाने कथमनन्तत्वमित्याशङ्क्याह अथवेति । सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणस्यानुभूतौ विद्यमानत्वाद्ब्रह्मान्यत्वे चानन्त्यायोगादित्यर्थः । ... [Page 25] विज्ञानानन्दशब्दौ भिन्नार्थावपर्यायानेकशब्दत्वाद्घटपटादिशब्दवदिति शङ्कते नन्वपर्यायेति । यद्यखण्डे तव महान् स्नेहस्तर्हि दुःखनिवृत्त्यर्थत्वमानन्दशब्दस्य वक्तव्यमित्याह अमुख्यार्थता वेति । स्वरूपभेदवादिनां तावद्भिन्नो घट इत्यत्रानैकान्तिकत्वमाह न भेदेति । ननु स्वरूपभेदवादे भिन्नघटयोः पर्यायत्वमेवेत्याशङ्क्याह न हि भिन्न इति । धर्मभेदवादेऽपि भेदो भिन्न इत्येतौ शब्दाव-

भिन्नार्थाविति तत्रानैकान्तिकत्वमाह न च भिन्नार्थाविति । भेदाभेदवादिनामनैकान्तिकत्वमाह अत एवेति । भेदस्य भेदेऽनवस्थाभयादेव भेदाभेदयोर्व्यावहारिकभेदेऽपि तत्त्वतोऽनन्यत्वमित्यनैकान्तिकत्वमित्यर्थः । ननु नेदमुदाहरणं ज्ञानानन्दशब्दयोर्भाववाचकयोरभेदशब्दस्य भेदनिवृत्त्यर्थत्वादित्याशङ्क्याह न चात्रेति । व्यवहारे भावरूपधर्मद्वयपरतया प्रयोगादित्यर्थः । अन्यथेति । यदि भेदशब्देन भेदमभिधायाभेदशब्देन च तन्निवृत्तिमुक्त्वा घटसमर्पणे तात्पर्यं तदा घटशब्द एव वाच्यो लाघवादित्यर्थः । अनैकान्तिकोदाहरणान्तरमाह तथा तत्रैवेति । तदेव विवृणोति अभेदश्चेदिति । अनवस्थेति । भिन्नाभिन्न इत्यत्र योऽभेदस्सोऽप्यभेदो धर्मिणो भिन्नाभिन्नश्चेत्तत्राप्यभेदो भिन्नाभिन्न इत्यनवस्थेत्यर्थः । उक्तव्यभिचारपरिहाराय विशिनष्टि भेदाभेदेति । तत्रापि व्यभिचारमाह तत्रेति । ननु प्रकर्षो गुणः प्रकाशस्सामान्यमुभयविशिष्टा व्यक्तिर्वाक्यार्थः । कथमत्र व्यभिचार इत्याशङ्क्याह न हीति । सवितरि सवितृप्रातिपदिकार्थे पृष्टे सति तावन्मात्रस्यैव प्रतिपाद्यत्वादन्यथा प्रश्नाननुरूपत्वप्रसङ्गात्प्रकाशव्यक्तिरेवैका लक्ष्यत इत्यर्थः । ... ननु प्रकर्षविशिष्टस्याभिधानं चेत्तर्ह्यप्रकृष्टप्रकाशस्सविता स्यादित्याशङ्क्याह तथापीति । अप्रकृष्टस्य प्रकर्षगुणाधिकरणत्वविरोधाद्येन स्वभावविशेषेण प्रकर्षगुणाधिकरणत्वं तस्यैवाप्रकर्षव्यावृत्तिद्वारेण प्रकर्षशब्दलक्ष्यत्वान्नाप्रकृष्टप्रकाश इत्यर्थः । ननु प्रकर्षशब्देन प्रकर्षत्वाधारभूता गुणव्यक्तिर्लक्ष्यते प्रकाशशब्देन प्रकाशत्वसामान्यव्यञ्जिका द्रव्यव्यक्तिरतो लक्ष्यांशभेदान्नाखण्डार्थत्वमित्याशङ्क्याह भिन्नौ चेदित्यादिना । लक्ष्यौ प्रकर्षप्रकाशौ भिन्नौ चेत्तर्हि प्रकर्षोऽप्रकाशस्स्यात्प्रकाशाभिन्नो न स्यात् । तथा च दोषो वक्ष्यत इति भावः । ननु तर्हि प्रकर्षोऽपि प्रकाश एवास्त्वित्याशङ्क्य तदानीं प्रकाशाभिन्नत्वान्न लक्ष्यांशभेद इत्याह प्रकाशश्चेदिति । अप्रकाशत्वे दोषमाह अप्रकाशश्चेदिति । अप्रकाशत्वे सवितृस्वरूपत्वाभावादविवक्षित-

लक्षणं स्यादिति भावः । प्रकाशैकरूपत्वमसिद्धमित्याह नन्विति । असिद्धे च प्रकाशैकरूपत्वे तद्देवौष्ण्यं प्रकर्षशब्दार्थ इति वा तद्वदप्रकाशोऽपि प्रकर्षस्वरूपं स्यादिति वाभिप्रायः । तत्र न तावदौष्ण्यं सवितृरूपं सवितृदर्शनविकलेनान्धेनाप्युपलभ्यमानत्वात् । तथा च न तस्य तत्स्वरूपत्वमित्यभिप्रेत्य परिहरति सत्यमिति । औष्ण्यं प्रकर्षशब्दार्थ इति यद्ब्रवीषि तत्सत्यं ब्रवीषि । तन्न मुख्यवृत्त्या घटते शीतले चन्द्रे प्रयोगदर्शनात् । न लक्षणयाप्यविवक्षितलक्षणाप्रसङ्गादित्यर्थः । यस्मात्सवितुः प्रकाशैकरूपत्वान्न लक्ष्यांशे भेदस्तस्मादखण्डार्थत्वमित्युपसंहरति तस्मान्नेति । सवितरि प्रतिपाद्ये सतीति शेषः । [Page 26] नन्वेकार्थत्वे प्रकृष्टप्रकाशशब्दयोः पर्यायत्वप्रसङ्ग इत्याशङ्क्याह तथापीति । प्रवृत्तिनिमित्तभेदादित्यर्थः । नन्वर्थभेदेऽनुपपत्तिदर्शनाद्यथा न भिन्नार्थत्वमिष्यते तथा प्रकृष्टप्रकाशशब्दयोरभिन्नार्थत्वेऽप्यनुपपत्तिरस्तीत्याह नन्विति । नैवमनुपपत्तिरित्याह तन्नेति । ननु भेदभेदिनोर्भेदे बाधकसद्भावाच्चेत्तदभिन्नार्थत्वमित्याशङ्क्याह भेदभेदिनोरिवेति । ननु भेदे बाधकसद्भावाच्चेत्प्रकृष्टप्रकाशयोरभिन्नत्वं तर्हि नीलोत्पलादेरभेदसामानाधिकरण्यानुपपत्तेरभिन्नार्थत्वं स्यादित्याह नन्वेवमिति । नास्माकं क्षतिरित्याह सिद्धान्ती संभवन्त्विति । किं बहुना । अन्यान्युदाहरणानि संभवन्तु मा वा । सर्वथापि नाप्रकाशरूपः प्रकर्षः प्रकाशविशेषणमिति भवत्येवात्र व्यभिचार इत्याह सर्वथेति । न केवलमनैकान्तिकत्वमेव कृत्स्नः प्रज्ञानघन एवेत्याद्येकरसत्वप्रतिपादकागमविरोधात्कालात्ययापदिष्टत्वमपीत्याह आगमविरोधाच्चेति । ... आगमविरोधमाक्षिप्य समाधत्ते नन्वित्यादिना । उपक्रमोपसंहारैकरूप्यादितात्पर्यलिङ्गदर्शनादनन्तादितीयादिशब्दानां तत्परत्वात्सिद्धमभिन्नं वस्त्वित्यर्थः । परिशिष्टं चोद्यांशमुद्भावयति तर्हीति । दुःखाभावस्य व्युत्पत्तिसिद्धार्थत्वाभावान्नैवमिति परिहरति तन्नेति । अदुःखत्वं चेति । न लिप्यते लोकदुःखेन बाह्य इत्यादिशब्दैरेवा-

दुःखत्वं सिद्धम्। तत् स्ववाचकतया नानन्दशब्दमपेक्षत इत्यर्थः। अनन्तादिशब्दैश्चेति। वस्तुपरिच्छेदव्यावर्तकानन्तादिशब्दैरप्यदुःखत्वं सिद्धम्। अतस्तन्नानन्दशब्दमपेक्षत इत्यर्थः। किं चापर्यायाणां भिन्नार्थत्वे ब्रह्मवाक्यगतानां सत्यज्ञानानन्तादिशब्दानामपर्यायत्वेन भिन्नार्थत्वाद्वक्ष्यभेदयुक्तं ब्रह्म स्यादित्याह यद्यपर्यायाणामिति। किं चानन्दशब्दस्य दुःखाभावार्थत्वेनाभेदाविरोधित्वमुक्तमपि न सिध्यतीत्याह आनन्दशब्दस्येति। ननु सत्यज्ञानानन्तशब्दानामनृतजडपरिच्छेदव्यावृत्त्यर्थत्वान्नाभेदविरोधित्वमित्याह अर्थोच्येतेति। तत्र पुनरनिवृत्त्यर्था आनन्दादिशब्दा इति भवन्त्येवाभेदविरोधिन इत्यर्थः। अन्यनिवृत्त्यर्थत्वं चेदभेदाविरोधे प्रयोजकं तदस्मत्पक्षेऽप्यविशिष्टं सत्यादिशब्दवदानन्दशब्दस्याप्यन्यनिवृत्त्यर्थत्वोपपत्तेरित्याह तर्हीति। तत्र मुख्यार्थत्वं न रूढ्यभिप्रायेण किंतु भावरूपे वस्तुनि तात्पर्यवृत्त्या। अर्थाच्च निवृत्त्यर्थतेति द्रष्टव्यम्। कथं भावरूपवस्तुपरत्वेन मुख्यार्थत्वमानन्दशब्दस्येत्याकाङ्क्षायामाह तथाहीति। ब्रह्मादिशब्देन सहैकार्थतावगमादानन्दशब्दस्य मुख्यार्थत्वमित्यर्थः। यद्वा। आत्मानन्दादेरभिन्नार्थत्वे सिद्धे तदविरोधः प्रतिपाद्यः। तदेव कुत इत्यत आह तथाहीति। सामानाधिकरण्यश्रुत्या अवगम्यत इत्यर्थः। **[Page 27]** पूर्वापरपर्यालोचनया तदेकत्वमेव विशदयति तथाहीति। यदि वाक्यतात्पर्यपर्यालोचनया ब्रह्मात्मानन्दानामेकतैव कथं तर्हि पृथग्व्यपदेश इत्याशङ्क्याह तत्र यथेति। भ्रमसिद्धभेदानुवादेनाभेद एव तात्पर्यं वाक्यस्येत्यत्र लौकिकमुदाहरणमाह यथा चेति। ... **[Page 28]** नन्वन्तःकरणपरिणामो व्यञ्जकश्चेत्सर्वोऽपि किं न व्यञ्जक इत्यत आह अतस्तस्मिन्निति। ... नन्वानन्दो नात्मस्वभावस्तस्मिन् भात्यप्यभासमानत्वाद्वस्त्वन्तरवदित्याशङ्क्याह रूपे भात्यपीति। मणिकृपाणादौ प्रतिबिम्बितं मुखं सरूपं चाक्षुषत्वात्। रूपस्य च शुद्धिर्न मलविलयः धौतेऽपि मृतशरीरे स्वच्छताया अदर्शनात्। न गुणो निर्गुणत्वात् रूपस्य। न

जातिरुत्कर्षादिमत्त्वात्। अतो गौरश्यामादिवद्रूपविशेषस्य शुद्धिस्स्वभाव एव। [सा?] न भात्युपाधिमहिम्नेत्यनैकान्तिकत्वमित्यर्थः। ··· [Page 29] ननु तर्हि पुमपुमर्थमिश्रोऽस्त्वित्याशङ्क्य तथा सति मोक्ष एव न स्यादित्याह निरवद्य इति। ··· इतश्च नात्मनोऽन्यशेषत्वमित्याह अन्यस्य चेति। शेषस्य शेषित्वादर्शनादित्यर्थः। ननु पुरुषशेषस्यापि घटस्य मृदं प्रति शेषित्वं दृश्यते घटार्था मृदिति। ततश्शेषस्य न शेषित्वमित्युक्तं न सिध्यतीत्याशङ्क्याह घटार्थेति। घटेन स्वप्रयोजनं साधयन्मृदुपादानेन साधयेदिति पुरुषार्थस्य घटस्य द्वारप्रदर्शनमेव क्रियते न तु शेषित्वं प्रदर्श्यत इत्यर्थः। ··· नान्यदिति। अन्यच्चन्दन-वनितादिकमन्यार्थत्वेन प्रियत्वान्न सुखमित्यर्थः। यद्वा। सुखतत्साधन-व्यतिरेकेण साधनसाधनस्यापि प्रियत्वं दृष्टम्। अतस्सुखं तदर्थं च मुक्त्वा अन्यत्प्रियं नास्तीति न वाच्यमित्याशङ्क्याह नान्यदिति। तस्यापि प्रणाड्या सुखशेषत्वेन प्रियत्वम्। तस्मात्सुखतत्साधनव्यतिरेकेण प्रियं नास्तीत्यर्थः। ··· [Page 30] यच्च नान्यार्थमुपादीयते तत्सुखमित्ये-तावदस्तु लक्षणमित्याशङ्क्याह दुःखमपीति। दुःखेऽतिव्याप्तिपरिहाराय यदर्थं सर्वमुपादीयत इति विशेषणमित्यर्थः। ननु शत्रोः दुःखार्थं शस्त्रमुपादीयते विधीयते च श्येनादिरित्याशङ्क्याह शस्त्रश्येनाद्यपीति। दुःखपरिहारे ऽतिव्याप्तिमाह दुःखपरिहारोऽपीति। निरस्यति नेति। दुःखाभावेऽतिव्याप्तिपरिहाराय यच्च नान्यार्थमिति विशेषणमित्यर्थः। मूर्ताभावस्याकाशाभिव्यक्त्यर्थतावद्वाराद्यभावस्यात्मसुखाभिव्यक्त्यर्थता यतोऽत एव वृद्धवैशेषिका भ्रान्ता इत्याह अत एवेति। इदानीमव्याप्तिं शङ्कते नन्वात्मार्थमिति। न तदर्थं न स्वप्रधानमित्यर्थः। ··· [Page 31] उक्त-मर्थं संक्षिप्य कथयन्नुपसंहरति तस्मादित्यादिना। आत्मनोऽन्यार्थता-प्रसिद्धेरिति। स्त्रीभृत्यादिष्वात्मनोऽन्यार्थत्वाप्रसिद्धेरित्यर्थः। यद्वा। सुखायाहं स्यास्यामीति प्रसिद्धेरन्तःकरणविशिष्टात्मविषयत्वादित्यर्थः।

इतश्चात्मार्थं सुखमिति प्रसिद्धिर्भ्रममूलैवेत्याह यदि त्वात्मन इति । आत्माधिकरणत्वात्सुखं नात्मविलक्षणमित्यर्थः । मुख्यस्य सुखस्यात्मान्यत्वेऽप्यात्माश्रयत्वप्रतिभासस्संभवतीत्याह अथोच्येतेति । अमुख्यसुखदुःखादेरप्यन्तःकरणपरिणामस्य न भ्रमं विना आत्माश्रयत्वम् । तथा मुख्यसुखस्याप्यात्माश्रयत्वेन वेद्यत्वं चेन्मयोक्तं सिद्धमिति परिहरति तर्हीति । कल्पितभेदानुवादेनाभेदनिष्ठसामानाधिकरण्यादखण्डवाक्यार्थे सिद्धे सति विज्ञानादिपदानां परस्परविरुद्धार्थत्वात्सामानाधिकरण्यं न संभवतीति चोद्यं निरस्तमित्याह एवं च सतीति । वाच्यांशभेदेऽपि लक्षणया एकरसपरता सर्वज्ञादिशब्दानामपि द्रष्टव्येत्याह एवं सर्वत्रेति । ननु मुख्येष्वर्थेषु व्युत्पन्नाश्शब्दाश्शब्दान्तरवाच्यं प्रमेयं मुख्यार्थसंबन्धि चानुपपत्त्या लक्षयन्ति । न तथा ब्रह्म अवाच्यत्वादप्रमेयत्वादसङ्गत्वाच्च । ततो लक्षणा न संभवतीति न शब्दप्रमाणकं ब्रह्म । शब्दप्रमाणकत्वे वा तस्य विशिष्टसंसर्गात्मकवाक्यार्थत्वं वाच्यमित्याशङ्क्याह मुख्येष्विति । शब्दवाच्यत्वेन मुख्येष्वित्यर्थः । अमुख्येष्विति वा पदच्छेदः । तत्र स्वरूपसुखमपेक्ष्यामुख्यत्वं न त्वनभिधेयत्वेनेत्यर्थः । नियम्यनियामकभावेनेति । अनृतजडदुःखपरिच्छेदव्यावर्तनद्वारेणान्योन्यं विशेषणविशेष्यभावेनावस्थितानामर्थानां ज्ञानेन विशेषणाज्जडव्यावृत्तिरानन्देन विशेषणाद्दुःखस्य व्यावृत्तिस्सत्येन विशेषणादनृतस्य व्यावृत्तिरनन्तेन विशेषणात्परिच्छेदव्यावृत्तिः । एवं जडदुःखानृतपरिच्छेदव्यावृत्तेस्सर्वप्रमाणागोचरं यदेकरसं ब्रह्म ततोऽन्यत्र पर्यवसानासंभवात्तच्छब्दा अपि तदेव ब्रह्म शबलपदार्थानामधिष्ठानतया मुख्यार्थसंबन्धिनं लक्षयन्ति सिद्धिमात्रेण । तावन्मात्रमेव लक्ष्यत्वायापेक्षितं न तु शब्दान्तरवाच्यत्वादिकं केवलव्यतिरेकाभावेनाग्निपैङ्गल्यादिवदविवक्षितत्वादिति भावः[?] । [Page 32] अभेदसंसर्गात्मकेति। भेदो गवानयनादिवत्क्रियाकारकसंसर्गः। संसर्गो नीलोत्पलवद्विशिष्टः । तदात्मकवाक्यार्थत्वं नास्तीत्यर्थः । लक्षणया शब्दप्रमाणकत्वं

मुख्यवृत्त्या पदार्थत्ववाक्यार्थत्वाभावाच्चाप्रमेयत्वमित्येवमङ्गीक्रियमाणे यतो वाचो निवर्तन्ते औपनिषदं पुरुषं पृच्छामीति वाक्यद्वयमुपपन्नं भविष्यतीत्याह यतो वाच इति । पूर्वार्धव्याख्यानमुपसंहरति तस्मादिति । उक्तार्थभञ्जकत्वेनोत्तरार्धव्यावर्त्यामाशङ्कामाह नन्वित्यादिना । सत्तया प्रपञ्चस्य संबन्धानिरूपणान्नास्तित्वमेव गतिरिति सिद्धान्तिनो मतमादत्ते अथायमिति । तदानीं प्रत्यक्षादेः कर्मोपासनादिवाक्यानां च विषयाभावादप्रामाण्यं प्रसज्यत इत्याह तदेति । आश्रय आलम्बनं विषय इति यावत् । न केवलं विषयाभावादप्रामाण्यमेव किंतु स्वरूपसिद्धिरपि न स्यादित्याह स्वरूपासिद्धेश्चेति । ननु कथं प्रत्यक्षादेः कर्मोपासनावाक्यानां च स्वरूपासिद्धिरित्यत आह प्रत्यक्षादेश्चेति । ननु प्रत्यक्षादेरप्रामाण्यं प्रपञ्चान्तःपातित्वेन स्वरूपासिद्धिश्चास्तु । तथाप्यद्वैतश्रुतिस्मृत्यादेर्ब्रह्मविषयत्वेन सविषयत्वात्प्रामाण्यं संभवति । ततश्च तदवष्टम्भाद्यथोक्तब्रह्मसिद्धिर्भविष्यतीत्याशङ्क्याह श्रुतिस्मृतीति । स्वरूपसिद्धौ सविषयत्वेन प्रामाण्यं संभवेत्तदेव प्रपञ्चान्तःपातित्वेन न सिध्यतीत्यर्थः । ... उत्तरार्धस्य तात्पर्यमाचक्षाणः परिहरति अत्रोच्यत इत्यादिना । [Page 33] प्रपञ्चस्यानिर्वाच्यमायात्वाभ्युपगमेन ब्रह्मासिद्धिः परिहृता । तत्र प्रमाणाभावं मत्वा आह नन्विति । ... स्वप्नदृष्टपदार्थस्य परोक्षस्यैवापरोक्षतया भासमानत्वान्मिथ्यात्वं वस्तुत्वं चास्तीत्याशङ्कते तन्मिथ्यावस्त्विति । मिथ्यात्वं वस्तुत्वं चैकस्य न संभवतीत्याह तदपि वस्त्ववस्तु वेति । उभयथापि—स्वप्नस्य वस्तुत्वे सति न व्याप्तिग्रहणस्यानत्वमवस्तुत्वे त्ववस्तुविषयत्वादप्रामाण्यम् । प्रपञ्चस्य तु तद्विलक्षणस्यानुभवत एव सिद्धेर्न तथाप्रामाण्यमित्यर्थः । अख्यात्यन्यथाख्यातिपक्षद्वयमवलम्ब्याह स्यान्मतमिति । तर्हि तथाविधत्वाभावात्प्रत्यक्षादीनां नाप्रामाण्यमिति परिहरति न तर्हीति । सिद्धान्तिमतानुसारेण चोद्यमुद्भावयति अथोच्येतेति । सति प्रमातरि बाधात् स्वप्नज्ञानस्याप्रामाण्यम् ।

तथाविधबाधाभावान्न जाग्रज्ज्ञानमप्रमाणमित्याह तन्न बाधाभावादिति । एतदेव परमुखेन विवृणोति किमिति वेति । इदानीं जाग्रज्ज्ञानानां साध्यमानमप्रामाण्यं विकल्प्य सिद्धसाधनत्वं साध्यवैकल्यं चाह किंचेति । विषयभूतप्रपञ्चस्वरूपस्य तत्कार्यस्य चार्थक्रियादेरभाव इत्यर्थः । [Page 34] ननु द्विचन्द्रदिङ्मोहादिष्विव सर्वदा प्रतीतिदशायामप्रतीतिदशायां च बाधकप्रमाणज्ञानोदयो वा बाधकज्ञानोदयात्प्रागेव काचादिनिमित्त-निवृत्त्या तन्निवृत्तिवद्बाधकबोधात्प्रागेव बाध्यत्वं वा अत्राप्रामाण्यमिति शङ्कते अथ सर्वदेति । तत्त्वावेदकत्वाभावेऽपि व्यावहारिकं प्रामाण्यं न हीयते यस्मात्तस्मादप्रामाण्यप्रसञ्जनं प्रशिथिलमूलमित्युपसंहरति तस्मादिति । ... तिक्तादिप्रतिभासो हेतुः येषां धूत्कारादिप्रवृत्तिनिवृत्तिविशेषाणामिति बहुव्रीहिः । ... [Page 35] महदादिजगत् तच्च मायाचित्रं चेति विग्रह-शङ्कायां मायाया अपि कार्यवर्गान्तर्भावः प्रसज्येतेत्याशङ्क्याह तयेति । चायृ पूजानिशामनयोरितिधातोर्निशामनार्थत्वानुसारेण चित्रशब्दार्थत्व-माह चित्रमिति । चित्रभित्तिरिति समासेन विवक्षितार्थमाह दृश्य-मनुभूत्याश्रयमिति । इदानीं चित्रशब्दस्य रूढ्यर्थमाह अथवेति । ... [Page 36] मायेति विशेषणांशस्य व्यावर्त्यमाह चित्रस्येति । यथा चित्रस्य भित्त्या तुल्यसत्यं द्रव्यान्तरमुपादानं नैवमनुभूत्या तुल्यसत्यं द्रव्यान्तरं जगच्चित्रस्योपादानमित्यर्थः । कुत इत्यत आह माया हीति । दृष्टान्तच्छलेनानुभूतेस्स्वप्रकाशत्वाजत्वादौ शास्त्रं प्रमाणयति यथा सत्यं ज्ञानमित्यादिना । ब्रह्मैवैकं परमार्थसत्तदितरन्मिथ्येत्यागमावष्टम्भेन प्रति-ष्ठितम् । तदाक्षिपति ननु सिद्ध इति । ... [Page 37] विग्रहसमये भित्तिसाम्यमुक्तमनूद्य प्रपञ्चयति भित्तिरिवेत्यादिना । ननु श्रोतृप्रवृत्त्यर्थं विषयादिकमेव दर्शनीयं न तु नमस्कारः कर्तव्यः प्रमाणप्रयोजनयो-रभावादित्यत आह देवतानमस्कारस्येति । शिष्टाचारानुमितवैदिक-विधिः प्रमाणं प्रत्यूहनिवृत्तिः प्रयोजनमित्यर्थः । तर्हि बहिरेव

क्रियतां किमिति ग्रन्थे निबध्यत इत्यत आह देवतागुरुभक्त्योर्वेति। तत्र प्रमाणमाह यस्य देव इति। तर्हि गुरुभक्तिरपि दर्शनीया तदभावे संप्रदायरहितत्वशङ्कया अनादेयवचनत्वप्रसङ्ग इत्यत आह गुरो-श्चेति। अथाप्युपाधितो भेदात्पृथक्कर्तव्य इत्यत आह प्रदर्शनार्थेति। उपलक्षणत्वादित्यर्थः। तर्हि गुरुनमस्कार एवोपलक्षणार्थत्वेन कर्तव्यः। तस्मिन् कृते कैमुतिकन्यायेन देवतानमस्कारस्सिध्येदित्यत आह अत्र यथेति। गुरुदेवतयोरविशेषेण नमस्कार्यत्वोक्तेरुभयनमस्कारोऽपि तन्त्रेण कृत इत्यर्थः। ननु नमस्कार्यदेवताविशेषणस्य गुरावसंभवात्कथं तन्त्रेण कृत इत्यत आह अविरोधादिति। गुरोरप्यनुभूत्यादिस्वभावत्वादेकेनैव श्लोकेन तन्त्रेणोभयनमस्कारे विरोधो नास्तीत्यर्थः। श्लोके गुरुसूचक-पदस्याभावाद्गुरुनमस्कारो न भातीत्यत आह बहिरेव वेति। देवता-नमस्कारोऽपि तर्हि बहिरेव करणीय इत्यत आह देवतानमस्कार-स्त्विति। ननूत्तरत्रापि प्रकरणार्थो ज्ञातुं शक्यते। ततः प्रकरणार्थ-प्रदर्शनार्थमपि निवेशो न कार्य इत्यत आह सुखाववबोधार्थमिति। तर्ह्यादावेव किमिति निवेश इत्यत आह तत्रैवेति। अधिकारिणां प्रवृत्त्यङ्गत्वाय आदावेव निवेश इत्यर्थः। ··· [Page 38] ननु तर्हीतः-पूर्वतनग्रन्थश्रवणप्रवृत्तये प्रयोजनादिकमादौ वक्तव्यमित्याह नन्विदमिति। श्लोकेन निर्दिष्टमेवावसरे व्याख्यायत इति परिहरति सत्यमिति। व्याख्यानमपि किमिति तत्रैव न कृतमित्यत आह मुक्तिबन्धयोरिति॥ १॥

प्रत्यक्षादिविरोधविध्वस्तये द्वितीयार्धेन प्रपञ्चस्यानिर्वचनीयता सूचिता। सा न तावत्प्रत्यक्षसिद्धा। अत एव नानुमानगम्या दृष्टान्ताभावा-दित्याह ननु सदसत्त्वाभ्यामित्यादिना। अनिर्वचनीयाया अविद्यायाः कार्यमनिर्वचनीयं नाम न किंचित्प्रसिद्धमित्यर्थः। ··· रूप्यादि-विषयत्वादपि भ्रान्तेर्न रूप्यादिकारणत्वमित्याह तद्विषयत्वादिति। ··· पूर्वमविद्याया अनिर्वाच्यत्वमभ्युपगम्य कारणत्वं न संभवतीत्युक्तमिदानीं

तदपि न संभवतीत्याह भ्रान्तेश्चेति । नेदं ज्ञानमिति बाधाभावात्प्रसिद्ध्यभावाच्चेत्यर्थः । ... ॥ २ ॥

... [Page 39] नृशृङ्गमपि स्ववाचकभूतासाधारणशब्दस्मारकतया भातीति शङ्कते यदि कश्चिदिति । अपरोक्षप्रतिभासस्य हेतुत्वान्न तत्र व्यभिचार इति परिहरति तस्यापीति । पूर्वं नृशृङ्गादेर्भानमभ्युपगम्य वैषम्यमुक्तम् । इदानीं तदपि नास्तीत्याह न च भात्यपीति । ख्यातिमात्रस्य हेतुत्वस्वीकारेऽपि न व्यभिचार इत्यर्थः । इदानीमसत्पक्षयुक्त्यभिधायकश्लोकभागं व्याचष्टे सतो बाधायोगादिति । [Page 40] तृतीयपक्षयुक्त्यभिधायकश्लोकभागं व्याचक्षाणः श्लोकगतातच्छब्दार्थमाह असतः ख्यात्ययोगात्सतो बाधायोगादित्याभ्यामिति ॥ ३ ॥ ... [Page 41] ॥ ४ ॥ ५ ॥

परिशेषेणाख्यातिमुपपादयितुं पक्षान्तरं प्रतिषेधति नेयं रूप्यख्यातिरिति । संविद्विरोधमेव स्पष्टयति यथा रूप्ये ख्यातीति । नन्वसदप्यविद्यावशात्सत्त्वेन भातीति न संविद्विरोध इत्याशङ्क्याह असतोऽपीति । अन्यथाख्यातिपक्षमप्यसत्ख्यातिपक्षोक्तैरेव दोषैः प्रतिषेधति नान्यथाख्यातिरप्यसाविति । आत्मख्यातिपक्षमपि तैरेव दोषैः प्रतिषेधति नात्मख्यातिरिति । ... [Page 42] सर्वत्रेति । पीतशङ्खादिप्रतिभासेष्वित्यर्थः । एवं पक्षान्तरनिरासकत्वेन प्रथमश्लोकं व्याख्याय द्वितीयश्लोकमवतार्य व्याचष्टे का तर्हीति । तत्राक्षजत्वे हेतुमाह पुरोऽवस्थितेति । ... विमता रूप्यधीस्स्मृतिः संस्कारमात्रजत्वात्संप्रतिपन्नस्मृतिवदित्युक्तम् । तत्रासिद्धो हेतुर्दोषाणामपि हेतुत्वादित्यत आह कारणान्तरेति । कार्यप्रतिबन्धकत्वमेव दोषाणां न हेतुत्वमित्यर्थः । ... ननु द्वयोरपि ज्ञानयोर्यथार्थत्वे कथं भ्रान्तित्वप्रसिद्धिरित्याशङ्क्याह तेनेदं रूप्यज्ञाने इति । उत्पन्न इव व्यवहरति येन तेनायथार्थव्यवहारप्रवर्तकोपाधौ भ्रान्तित्वप्रसिद्धिरित्यर्थः । ननु ख्यातौ एव चेद्भ्रान्तिस्तर्ह्यख्यातिपक्षक्षतिरित्याशङ्क्याह अख्यातिरपीति । ... ॥ ६ ॥ ७ ॥

**[Page 43]** एकान्तसत्त्व इति । प्रतिपन्नस्य कार्त्स्न्येन सत्त्वनियम इत्यर्थः । असत्त्व इति । एकान्तासत्त्व इत्यर्थः । इदानीमख्यातिं प्रतिक्षिपन्नेकमतावलम्बनेनान्याख्यातिमुपक्षिपति यद्यथैवेत्यादिना । ज्ञानसमवायिभ्रान्तित्वप्रसिद्ध्यन्यथानुपपत्त्या अर्थापत्तिबाधितमनुमानमित्यर्थः । अतिप्रसङ्गलक्षणप्रतिकूलतर्कपराहतत्वेनाप्रयोजकत्वं चाह अन्यथातिप्रसङ्गादिति । परोक्तमनूद्य दूषयति नन्वित्यादिना । किं साक्षादयथाव्यवहारहेतुत्वमयथार्थसंसर्गज्ञानहितसाधनत्वानुमानतदुपादानेच्छोत्पादनद्वारेण परम्परया वा । आद्ये विमते ख्याती न साक्षादयथाव्यवहारे हेतू भवतो यथार्थत्वात्संप्रतिपन्नवदित्युक्तम् । द्वितीयं प्रत्याह पारम्पर्येण चेदिति । कान्ताकरादिगतरजतख्यातीनामपि संस्कारपरम्परया अयथार्थव्यवहारहेतुत्वसंभवाद्भ्रमत्वं स्यादित्यर्थः । ननु यथार्थव्यवहारहेतुत्वाभावे सति अयथार्थव्यवहारप्रवर्तकत्वं भ्रमशब्दप्रवृत्त्युपाधिरित्याह अन्यासामिति । यथार्थत्वे परम्परया चायथार्थव्यवहारहेतुत्वे समानेऽप्यन्यासां यथार्थव्यवहारहेतुत्वं नानयोरित्येषैव व्यवस्था कथं सिध्येत् । अतोऽस्या व्यवस्थायास्सिद्धये तयोरयथार्थत्वं वाच्यमित्याह तर्ह्ययथार्थेति । व्यवस्थापकान्तरं शङ्कते स्मृतीति । स्मृतिग्रहणयोस्स्वप्रकाशत्वेन भासमानयोस्तत्स्वभावभूतो विवेकोऽपि भासेतैव । अतो ग्रहणात्मकाशात्स्मृतेस्तया: कोऽविवेको न कोऽपीति परिहरति स्मृतेस्तया इति । ... प्रकारान्तरेणाविवेकं शङ्कते अयोच्येतेति । अर्थयोरविवेको नाम भेदाग्रहः असंसर्गाग्रहो वा । प्राभाकराणां च भेदासंसर्गयोर्वस्तुमात्रत्वादर्थयोर्भासमानयोस्तयोरपि भासमानत्वादभासमानयोस्त्वतिप्रसङ्गित्वात् सामान्यग्रहे सति प्रवृत्तिविरोधिविशेषग्रहणानुदयलक्षणस्यानध्यवसायेऽतिव्यापकत्वाच्च न कोऽप्यविवेकस्संभवतीत्याह कोऽर्थयोरिति । ... इदंरजतयोस्सामानाधिकरण्ययोग्यरूपेण प्रतीतत्वात्सामानाधिकरण्यज्ञानमुत्पन्नमित्यभिमानो भवति । तद्बलात्तयोः ख्यात्योरयथार्थव्यवहारहेतुत्व-

मिति शङ्कते अथोच्येतेति । [Page 44] अनुत्पन्नेऽप्युत्पन्नाभिमानो नामोत्पन्नज्ञानमुताविवेकः । प्रथमेऽन्यथाख्यात्यापातश्चरमोऽविवेकनिरासान्निरस्त इत्यभिप्रेत्य चिरंतनाख्यातिमतमुत्थापयति तृतीयं वेति । तर्ह्यनाश्वासादिदोषास्ते स्युरित्याह तर्हीति । यद्वा । अभिमानशब्दस्य ज्ञानातिरेकेणार्थानिरूपणात्पक्षद्वयस्यापि साधारण्येन दूषणमाह तर्हीति । किं चान्ततोऽप्ययथार्थज्ञानं चेदिच्छसि तर्ह्याद्यं[द्ये?] किमिति नेच्छसीत्युक्ते पर आह अस्त्वेति । ननु मानसमपि नायथार्थं ज्ञानत्वादक्षजवदित्यापद्यत इत्याशङ्क्याह मानसस्येति । मनोरथज्ञानानामयथार्थत्वं प्रसिद्धमित्यर्थः । किमित्यक्षजस्य यथार्थत्वाग्रह इत्याशङ्क्याह यद्यक्षजादीनामिति । ननु संभावनामात्रेण यथा लोकप्रवृत्तिर्भवति तद्वद्वेदप्रवृत्तिरपि संभावनामात्रेण किं न स्यादित्याशङ्क्याह वेदे यथार्थत्वेति । लौकिकप्रवृत्तेर्दृष्टफलत्वेन क्वचित्फलपर्यवसायित्वदर्शनात्संभावनामात्रेणान्यत्रापि प्रवृत्तिस्संभवेत् । तद्वद्यदि यागादिप्रवृत्तेरपि स्वर्गादिसिद्धिः फलं दृश्येत अन्यत्रापि संभावनामात्रेण प्रवृत्तिरुपपद्येत । तथा न दृश्यते । तस्माद्यागाद्यनुष्ठानसिद्धये ज्ञानानां यथार्थत्वनियम इत्यर्थः । ··· ननु प्रमाणकारणेभ्यश्चक्षुरादिभ्यो यदि यथार्थमेव ज्ञानं तर्हि मनसोऽपि यथार्थायथार्थज्ञानसाधारण्यं न स्यात्सुखादिप्रमाणज्ञानकारणत्वादित्याशङ्क्याह मनसस्त्विति । चिरंतनाख्यातिमते सुखादेस्स्वप्रकाशत्वान्नासाधारणकारणं मन इति भावः । यद्वा । मनोव्यतिरेकेण ज्ञानोदयासंभवात्तस्यान्यथाज्ञानजनकत्वे सर्वं दुष्टं स्यादित्याशङ्क्याह मनसस्त्विति । असाधारणप्रमाणकारणजन्यस्य यथार्थत्वनियमेऽपि नाद्ययोर्यथार्थत्वं सिध्यतीति मन्वानस्तावत्स्मृतेर्न यथार्थत्वमित्याह एवमपीति । तत्र हेतुमाह अप्रमाणेति । संस्कारमात्रजन्यत्वेन प्रमाणसामग्रीभूतचक्षुरादिजन्यत्वाभावादित्यर्थः । इदानीं ग्रहणस्य न यथार्थत्वमित्याह तथेति । भ्रान्तेर्ग्रहणस्यायथार्थत्वेऽपि न कश्चिद्विरोधोऽप्रमाणसामग्रीजन्यत्वाविशेषादित्यर्थः ।

ननु ग्रहणस्य स्मृतिवत्संस्कारमात्रजन्यत्वमसिद्धमित्याशङ्क्य तस्य संस्कारमात्रजन्यत्वाभावेऽप्यप्रमाणज्ञानत्वात्प्रमाणसामग्रीजन्यत्वं न युज्यते । ततो नासिद्धमित्याह न हीति । ननु प्रमाणसामग्रीभूतचक्षुरादेरेव भ्रमकारणत्वमप्यन्वयव्यतिरेकाभ्यामवसीयते । ततः कथं प्रमाणाप्रमाणसामग्र्योस्तुल्यत्वं न युज्यत इत्युच्यत इत्याशङ्क्य प्रमाणसामग्रीभूतचक्षुरादेरेव न तत्कारणत्वं दोषोपेतत्वेन सामग्र्यन्तरत्वादित्याह चक्षुरादीनामिति ।

... [Page 45] एवमख्यातिपक्षं प्रतिक्षिप्यान्यथाख्यातिस्थदोषं परिहरति भ्रान्तौ दृष्टस्येत्यादिना । अरूप्यमपि रूप्याकारेण भातीति भ्रान्तौ यद्दृष्टं तस्य परमार्थस्थले योजनादनाश्वासोऽख्यातिमतेऽपि तुल्यः स्मृत्यविवेकस्य वक्तुं शक्यत्वात् । ज्ञानानालम्बनतावद्व्यवहारानालम्बनतापि स्यादिति भावः । ननु यत्र दोषस्तत्र विवेकाग्रहो दोषाभावे तु सम्यग्ज्ञानमेव । अतोऽनाश्वासशङ्का नास्तीत्याशङ्क्याह दोषेति । ननु दोषस्य कार्यविघातकत्वमेव न पुनराधिक्यहेतुत्वम् । अतस्सति दोषे विपर्यय इति न शक्यते वक्तुमित्याशङ्क्याह दोषो हीति । ज्वरादिदोषो हि निजभोजनादिसामर्थ्यं निरुन्धन् विपरीतं च कार्श्यादिकं कुर्वन् दृश्यत इत्यर्थः । पूर्वं साम्यमभ्युपगम्योक्तम् । इदानीं तदपि नास्तीत्याह न चेति । व्यापकाभावाद्व्याप्याभावोऽवगम्यते । न च दोषोऽग्रहस्य व्यापकतया अवगतः ग्रहणप्रागभावस्यानादित्वादित्यर्थः । ... न हीति । न हि निर्दुष्टा मृदित्येव घटं जनयति किंतु सहकारिसंनिधाने । ततस्सम्यग्ज्ञानोत्पत्तेः प्राग्दोषाभावेऽपि नाग्रहाशङ्काव्यावृत्तिरित्यर्थः । अस्त्वेवं तथापि सम्यग्ज्ञाने जाते निर्दुष्टकरणजन्यत्वात्केवलग्रहणात्मकत्वं निश्चीयत इत्याशङ्क्याह दोषाभावेति । स्वतोऽपरोक्षत्वाभ्युपगमभङ्गः प्राभाकरस्य प्रसज्यत इत्यर्थः । स्वपक्षे पुनर्व्यापकाभावाद्व्याप्यानुमानं युक्तमित्याह विपर्ययेति । किंच क्वचिदर्थानिश्चयादन्यत्राप्यनाश्वासोऽनुमीयत इति वदतोऽनाश्वासः किमनध्यवसायोऽभिमतः किं वा प्रामाण्यहानिः आहोस्वित्संशय इति विकल्प्याद्यं

प्रत्याह न चानाश्वास इति । इट्टादिषु रूप्यादौ ज्ञायमाने रूप्यमेवेदमितिनिश्चयविरोधात् किंसंज्ञकोऽयमितिवत्किमिदमित्यनध्यवसायानुमानायोगादित्यर्थः । ननु रूपकपरीक्षादौ संवादापेक्षादर्शनान्न प्रथमज्ञानोदयादर्थनिश्चयः किंतु संवादादित्याशङ्क्याह अन्यतोऽपीति । संवादो ज्ञानमज्ञानं वा । न तावदज्ञानादर्थनिश्चयस्संभवति । ज्ञानं चेत्तदस्त्वेव किं द्वितीयज्ञानेन । रूपकपरीक्षादावपि संशयादिलक्षणप्रतिबन्धकविगमाय ज्ञानान्तरापेक्षा न निश्चयायेति भावः । अथ प्रथमज्ञानमापातजमस्फुटं पश्चात्सविशेषज्ञानान्निश्चय इत्याशङ्क्याह न चान्यस्येति । ··· द्वितीयं कल्पं दूषयति न च व्यभिचारादप्रामाण्यमिति । ··· नन्ववभास्याव्यभिचारः प्रमाणलक्षणम् । तदुक्तम्—अर्थे सत्येव भवनं प्रामाण्यमिति । तत्राह तद्भावादेवेति । प्रमितिसाधनं प्रमाणमिति लक्षणम् । अतः फलभावादेव प्रामाण्यं नावभास्याव्यभिचारात् सितव्यभिचारिणोऽपि चक्षुषः प्रामाण्यात् अग्न्यव्यभिचारिणोऽपि धूमस्य व्याप्तिसंस्कारानुद्बोधेन तद्बोधकत्वाभावे सति अप्रामाण्यादित्यर्थः । किंच केवलव्यतिरेकाभावादव्यभिचारस्य न प्रामाण्यप्रयोजकत्वमित्याह न च फलभावेऽपीति । ननु नित्यश्शब्दः प्रमेयत्वान्नभोवदित्यादौ व्यभिचारादप्रामाण्यं दृष्टमित्याशङ्क्याह प्रमेयत्वादेस्त्वेति । ननु तर्हि व्यभिचारः फलाभावे हेतुः । अतः परम्परया व्यभिचारोऽप्रामाण्यहेतुस्स्यादित्यत आह फलाभावस्त्विति । प्रमेयत्वादेस्तत्त्वे कथं हेत्वभाव इत्यत आह अव्यभिचाराद्धीति । ननु व्यभिचारिणो लिङ्गाभासत्वमिष्टं चेत्तर्हि तद्वज्ज्ञानस्याप्याभासत्वं भविष्यतीत्याशङ्क्याह ज्ञानं चाक्षवदेवेति । ज्ञानं व्यभिचार्यपि प्रमाणं सत्तया बोधकत्वाच्चक्षुर्वत् । न लिङ्गवत् ज्ञानमव्यभिचारेण प्रमाणं प्रमातृव्यापारलक्षणस्य ज्ञानस्य नित्यानुमेयत्वेनाव्यभिचारग्रहणासंभवादित्यर्थः । तृतीयं दूषयति न च निश्चित इति । ··· [Page 46]

ननु स्थाणुर्वा पुरुषो वेत्यादिज्ञानमुत्पत्त्यैवानिश्चयात्मकं दृश्यत इत्याशङ्क्याह

अनिश्चयात्मकं त्विति । अनिश्चयात्मकं तु संशयज्ञानं नेह विचार्यत्वेन प्रस्तुतम् । ··· श्लोकाद्यपादव्याख्यानमुपसंहरति अत इति । इदानीं द्वितीयपादं व्याचष्टे तर्हीत्यादिना । ननु यदि सत्त्वमसत्त्वं च न संभवति तर्ह्यनिर्वचनीयत्वमित्याशङ्क्य तदुत्तरत्वेनोत्तरार्धं व्याख्याति तस्माच्छुक्तिरिति। ननु शुक्तिरूप्ययोरपि सत्त्वे ख्यातेरभ्रान्तित्वं स्यादित्याशङ्क्याह न चैवमिति । ननु येन प्रकारेण ख्यातिस्तेन प्रकारेण नास्ति चेत्तर्हि शून्यख्यातिप्रसङ्ग इत्याशङ्क्याह नापि शून्येति । सामान्यस्य भेदको विशेषः प्रकारः । तस्यातुच्छत्वान्न शून्यख्यातिप्रसङ्ग इत्यर्थः । प्रकारस्यातुच्छत्वं कुत इत्याशङ्क्याह रूप्यस्य सत्त्वादिति । ननु प्रकारस्यातुच्छत्वमस्तु । कथमेतावता न शून्यख्यातित्वमित्यत आह रूप्यप्रकारा चेति । ··· रूप्यप्रकारस्य सत्त्वेऽपि रूप्यस्य शुक्त्यभावत्वाच्छुक्तौ रूप्यप्रकारत्वं नास्त्येव । ततो यथा ख्याति तथा नास्त्येवेति वक्तुं शक्यत इत्याह शुक्तित्विति । भावान्तरस्यैवाभावत्वे स्वाचार्यवचनमुब्वे[म्बे?]कः प्रमाणयति उक्तं हीति । अन्योऽभावो नाम न कश्चिदस्ति नास्तिबुद्धेर्भावान्तरगोचरत्वेनातिरिक्ताभावसद्भावे प्रमाणाभावादित्यर्थः । **[Page 47]** एवमन्यथाख्यातिवादी स्वपक्षे भ्रान्तिसिद्धिमुपपाद्य बाधोऽपि स्वपक्षे सिध्यतीत्याह अस्मत्पक्षे बाधोऽपीति । आत्मख्यातिरख्यातिरन्यथाख्यातिर्वास्तु भ्रान्तिः सर्वथापि नासत्ख्यातिरनिर्वचनीयख्यातिर्वेति पूर्वपक्षसंक्षेपमाह सर्वथापीति ॥ ८ ॥

सदसद्भ्यामनिर्वाच्येति । सविषया भ्रमास्मदसद्भ्यामनिर्वाच्याविद्येवेत्यर्थः । ··· समस्ततत्त्वोपप्लववादिनो वैतण्डिकस्य शङ्कामाह यदि कश्चिदिति । यद्वा । अख्यातिवादी शङ्कते यदीति । निरस्यति तस्येति । प्रसिद्धिविषयौ भ्रान्तिबाधावेष्टव्यावित्यर्थः । पूर्वं भ्रान्तिबाधप्रसिद्धिबाधकयुक्तिमभ्युपगम्यावचनीयत्वमुक्तम् । इदानीं युक्तिरपि नास्तीत्याह का चेति । यो हि यदिच्छति स तत्साधिकामेव युक्तिमभ्यस्यन् प्रसिद्ध इत्यर्थः । यद्वा । ज्ञानस्य यथार्थत्वनियमाद्भ्रान्ति-

बाधप्रसिद्धेरपि ज्ञानत्वेन यथार्थत्वान्न तद्बाधिका युक्तिः संभवतीत्यर्थः । ... ननु ख्यातिबाधान्यथानुपपत्त्या अनिर्वाच्यत्वं साध्यते । तत्रेदं रजतमिति-वदिदं ज्ञानमिति ज्ञानविषयख्यात्यदर्शनान्नेदं रजतमितिवत् नेदं ज्ञान-मिति बाधाभावाच्च कथं रजतज्ञानस्यानिर्वचनीयत्वं सिद्धमित्याशङ्क्याह अत एवेति । यत् निर्वाच्यं ज्ञानं तत् निर्वाच्यार्थं प्रसिद्धं यथा सद्विषयं ज्ञानम् । अत्र च निर्वाच्यार्थत्वं व्यापकं व्यावर्तमानं स्वव्याप्यं ज्ञान-निर्वाच्यत्वमपि व्यावर्तयतीत्यर्थः । ... **[Page 48]** सत्यत्वे मानगम्यत्वं प्रयोजकं न सत्योपादानत्वमित्यत आह मानगम्यत्वं चेति । अस्त्वेवमित्यत आह तच्चेति । असत्पक्षे तयोस्साक्षिसिद्धत्वान्न मानगम्यत्वमित्यर्थः । ... न च सादेरिति । कार्यान्वयिनो हि मृत्सुवर्णादेरुपादानत्वं दृष्टम् । न च कार्यस्य कार्यान्तरेऽन्वयः । ... किंच कार्यं चेत्कार्या-न्तरोपादानं तस्य तस्यान्यदुपादानं वाच्यमिति निराकाङ्क्षकार्यकारण-भावप्रतिपत्तिरपि न स्यादित्याह अनवस्थानाच्चेति । ... अत्राप्रसिद्ध-विशेषणत्वं शङ्कते नन्विति । नन्ववभासात्मकभ्रान्तेः कथमावरणात्मका-ज्ञानत्वमित्याशङ्क्याह तस्या इति । ज्ञानापनोद्यत्वेन भ्रान्तेरेवाज्ञानत्वं प्रसिद्धम् । तथा चायथावभासकत्वेन यथात्वतिरोधायकत्वादावरणा-त्मकत्वमित्यर्थः । ... सुषुप्तिप्रलयव्यवधानान्न पूर्वभ्रान्तेः कारणत्वमित्यत आह भ्रान्तितत्संस्काराणां वेति । उत्तरभ्रान्तेः पूर्वभ्रान्तिसंस्कारः कारणं तस्य पूर्वभ्रान्तिः तस्यास्तत्पूर्वभ्रान्तिसंस्कार इति भ्रान्तितत्संस्काराणां वा कारणत्वमित्यर्थः । ... ननु यथा तत्र मृत् अन्विता दृश्यते तद्व-द्भ्रान्त्यादिष्वन्वितं किंचिन्न दृश्यत इत्याशङ्क्याह यत्तु तेष्विति । यत्तु तेष्वन्वितं मिथ्याजाड्यरूपं दृश्यते तदज्ञानमुपादानमित्यर्थः । तस्यो-पादानत्वं साधयति तस्येति । नन्वज्ञानमनादि यदि भ्रमकारणं तस्य सदा भावात्सदा कार्यप्रसङ्ग इत्याशङ्क्याह कारणभावेऽपीति । ... **[Page 49]** उभयथापीति । कार्यस्य नित्यत्वे कारणस्यानित्यत्वे च

समकालत्वाद्युगपदुत्पन्नयोः पुंसोः शृङ्गयोरिव च न कार्यकारणभाव इत्यर्थः। नियतपूर्वक्षणभावि कारणम्। तस्मिन् सति कार्यमपि भवत्येवेत्यस्य कारणभावानन्तरं कार्यं भवति। तथा च नानयोरेककालतेति बौद्धः प्रत्यवतिष्ठते नन्विति। ... ननु बीजावमर्दनं विना अङ्कुरोत्पत्तेरदर्शनाद्बीजाभावोऽङ्कुरस्य कारणम्। ततः कारणाभाव एव कार्यं भवतीति शङ्कते अथेति। बीजं तर्हि न कारणं भवतीत्यङ्कुरार्थिनां बीजसंचयो न स्यादिति परिहरति तदकारणमिति। यद्वा। तत्कार्यं कारणशून्यं स्यादित्यर्थः। किंचाङ्कुरभावेऽपि बीजप्रध्वंसाभावस्याङ्कुरकारणस्यानिवृत्तेः कार्यकारणे सहापि स्याम्। तदा पूर्वक्षण एव कारणस्य निवृत्तिरिति नियमभङ्ग इत्यभिप्रेत्याह तत्कार्यभावेऽपीति। किंच नित्यत्वेन प्रध्वंसस्य कार्यनाशेऽपि विद्यमानत्वात् तस्मिन् विद्यमानेऽपि कार्याभावात् कारणभावे कार्यं भवत्येवेति नियमो न स्यादित्याह कार्याभावेऽपीति। अभावकारणपक्षे कारणे सति कार्यं भवत्येवेति नियमाभाव उक्तः। संप्रति भावकारणपक्षेऽपि [तं?] अतिदिशति तथा सदपीति। ... कारणं पूर्वोत्तरकालव्यापि कार्यं तु न तथा। अतो न सति भवत्येवेत्यर्थः। पूर्वोक्तविकल्पद्वयमध्येऽन्त्ये नियमाभावमुक्त्वा आद्येऽपि कारणे सति कार्यस्य भावनियमो नास्तीत्याह अथ पूर्वक्षण एवेत्यादिना। [Page 50] उक्तमपि दूषणं चोद्यान्तरनिराचिकीर्षया स्मारयति अतद्भावभावित्वाच्चेति। चोद्यान्तरमुद्भावयति नन्वित्यादिना। ... विवादस्य शाब्दव्यवहारत्वाद्यथाशब्दं व्यवहर्तव्यं न संकेतवशात् तस्याप्रमाणत्वादतिप्रसङ्गित्वाच्चेत्यभिप्रेत्याह शब्दार्थप्रसिद्धिविरोधश्चेति। प्रत्यभिज्ञाप्रसिद्धिविरुद्धं च क्षणिकत्वानुमानमित्याह क्षणिकत्वं चेति। अप्रसिद्धविशेषणश्च पक्ष इत्याह न हीति। ननु यद्यपि स्थायित्वप्रसिद्धिर्लोके तथापि क्षणिकत्वं मया तत्त्वं ज्ञाप्यत इत्याशङ्क्याह न च सर्वेति। असौ कार्यकारणभावः क्षणिकस्यैवेति शिष्यो नियम्यो न भवतीत्यर्थः। प्रत्यभिज्ञाप्रसिद्धे-

भ्रान्तित्वं शङ्कते नित्यस्येति । विमता प्रत्यभिज्ञा न भ्रान्तिरबाध्यार्थत्वात् अभिज्ञावत् । ... किंच क्षणिकस्यैव कारणत्वमित्यनेनावष्टम्भेन त्वया स्थायिकारणप्रत्यभिज्ञाया भ्रान्तित्वमुच्यते । तदेव न घटत इत्याह क्षणिकस्यैवेति । कुतो न घटत इत्यत आह तथाहीति । क्षणिकस्य कारणस्य स्वक्षणे पूर्वोत्तरक्षणयोश्च विशेषाभावात्तत्क्षणे तस्य कार्योत्पादकत्वे पूर्वोत्तरक्षणयोरपि तदुत्पादकत्वं स्यादित्यर्थः । स्वक्षणस्य पूर्वोत्तरक्षणाभ्यां वैषम्यं दर्शयन् शङ्कते नन्विति । तत्र किं मध्यक्षण एव कार्यं किं वोत्तरक्षण इति विकल्पाद्यं प्रत्याह तर्हीति । [Page 51] दूषणान्तरमाह उत्तरक्षणोऽपीति । ... अत्रातिव्याप्तिपरिहाराय कार्यकारणभावं शिक्षयन् शङ्कते ननु नेति । यदि पूर्वोत्तरक्षणयोर्न पूर्वोत्तरक्षणवर्तित्वं तदा पौर्वापर्यमेव न स्यादित्याह तर्हि न कालस्येति । नापि देशतः पौर्वापर्यमेकदेशेऽपि पौर्वापर्यदर्शनात् । न च स्वतः पौर्वापर्यदर्शनं चैत्रस्य पूर्वकाले मैत्रस्यापरप्रत्ययदर्शनात् ... । मा भूत्तर्हि कालस्य पौर्वापर्यं ततः किमित्याशङ्क्याह इत्यपूर्वापरत्वादिति । कालपौर्वापर्याधीनं वस्तुनः पौर्वापर्यम् । तदभावे वस्तुपौर्वापर्याद्युक्तेरयुक्तत्वात्सदैकरूपं वस्तु स्यादित्यर्थः । ननु भवन्मतेऽपि कालस्य कालान्तरवर्तित्वाभावात्पौर्वापर्यासंभवचोद्यं समानमित्याशङ्क्य परिहरति नन्वित्यादिना । तर्कासहं कालस्य कालान्तरवर्तित्वमिष्टं मया । अतोऽस्मत्पक्षे न चोद्यसाम्यमित्यर्थः । इदानीं द्वितीयविकल्पमनुवदति नत्वेककालत्वे सतीति । यद्यपि प्रथमविकल्पोक्तसकलकार्ययौगपद्यलक्षणो दोषो न स्यात्तथापि दोषान्तरं स्यादित्याह सत्यमिति । ननु पूर्वं कारणस्य प्रागभावः ऊर्ध्वं प्रध्वंस इति विद्यते विशेष इत्याशङ्क्याह न चेति । विशेषोऽपीति । प्रागभावादिगतविशेषस्याभावत्वे प्रागभावादिस्वरूपानतिरेकस्स्यादभावस्याभावान्तरानभ्युपगमात् । ततस्तद्विशेषत्वं तस्य न स्यादित्यर्थः । कथमिति । गुणादिधर्मिणो द्रव्यस्य गुणाद्यधर्मत्ववदभाव-

धर्मिणो भावस्याभावधर्मत्वं न स्यादित्यर्थः। यद्वा। यस्य धर्मित्वमेव नास्ति तस्य कथं भावधर्मापेक्षया धर्मित्वमित्यर्थः। तर्कसहविशेषाभावेऽपि व्यावहारिकं विशेषमभ्युपगम्याह विशेषवत्त्वेऽपीति। प्रागभावप्रध्वंसाभावयोर्विशेषवत्त्वेऽपि मध्यक्षणवर्तिनः कारणस्य विशेषोपेतप्रागभावप्रध्वंसाभावाभ्यामस्पृष्टत्वेन पूर्वोत्तरकालयोर्विशेषाभावात् कारणाभावा(द्न)वच्छेदकाले कार्यं चेत्तदैव स्यादित्यर्थः। अस्त्वेवमित्यत आह अतस्येति। तेन मूलकारणकार्येणाव्याप्तकालाभावान्न तस्य कार्यस्य किंचित्कार्यं स्यात्। ततश्चार्थक्रियाकारित्वाभावादसत्त्वं स्यादित्यर्थः। ··· **[Page 52]** यतः क्षणिकत्वेनाभिमतकारणस्य यत्कार्यं तस्य कार्यं न संभाव्यते अतोऽनाद्येव कारणमित्यभ्युपेयमित्याह अतस्तत्कार्यमिति। अनादित्वनिरूपणस्य फलं दर्शयन्नद्वैतपक्षमाश्रित्य तावदाह अत एकस्यैवेति। मीमांसकादिपक्षमाश्रित्य मृत्सुवर्णक्षीरादीन्यनेकानि कारणानीत्याह यावन्ति वेति। अकार्यत्वेऽपि परमाणुश्यामत्ववदनित्यत्वं स्यादित्यत आह नित्यानीति। अर्थक्रियाकारित्वं सल्लक्षणमित्यपि न वाच्यमित्याह कार्यस्येति। क्षणिकवादे दोषान्तरमाह किंच क्षणिकयोश्चेदिति। ··· किंच कार्यस्य कारणासंबन्धे कार्यत्वायोगात्तेन संबन्धो वाच्यः। स च संबन्धः किमसिद्धस्य सिद्धस्य वा। प्रथमं निराचष्टे कथं चेति। सतोरेव संबन्धदर्शनादित्यर्थः। ··· द्वितीये दोषमाह सिद्धस्य चेति। ··· **[Page 53]** पूर्वं कार्यस्वभावपर्यालोचनया असतः कारणसंबन्धो निरूपयितुं न शक्यत इत्युक्तम्। इदानीं कारणस्वभावपर्यालोचनयापि स निरूपयितुं न शक्यत इत्याह कार्यसंबन्धाच्चेदिति। ··· न केवलं कार्यस्यैव क्षणिकत्वहानिः किंतु कारणस्यापि क्षणिकत्वं न स्यात्क्रमेणाव्यक्तव्यक्तकार्ययोगित्वादित्याह कारणं चेति। ··· ननु यद्युक्तनीत्या कारणसंबन्धो न घटते तर्ह्यकारणेन वस्तुमात्रेण प्रागुत्पत्तेः कार्यसंबन्धोऽस्त्विति शङ्कते अथेति। तर्हि कार्यनियमो न स्यादिति परिहरति सोऽन्यदापीति। यस्याङ्कुरक्षणस्य

येन कारणभूतबीजक्षणेन प्रागुत्पत्तेस्संबन्धितया तत्रोत्पत्तिरिष्यते तस्याङ्कुरक्षणस्य ततः प्राक्तनाकारणबीजक्षणैरपि संबन्धात्तेभ्योऽपि जन्म स्यादित्यर्थः। सहकारिवशात्कार्यनियमं शङ्कते यत्संबद्धमिति। येन क्षितिजलादिना संबद्धं सत् बीजमकारणमेव कारणीभवेत्तेन सहकारिणा संयोगे कार्यं भवतीत्यर्थः। अकारणमपि बीजमन्यसंबन्धाद्यदि कारणीभवति तर्हि ततः पूर्वक्षणवर्त्यपि बीजमकारणभूतमेवान्यसंबन्धात्कारणीभवेदित्यनियमस्तदवस्थ इति परिहरति सर्वमेवेति। विशेषाभावमेव विशदयति न ह्युत्पन्नेति। संबन्धविशेषेऽपि कारणत्वनियामकं विशेषं शङ्कते पूर्वापरेति। यद्यप्ययं विशेषो भवति तथाप्ययमिह न संभवति यस्मात्कस्माच्चिद्बीजक्षणादङ्कुरक्षणस्यापरत्वसंभवादिति परिहरति तथापीति। ननु पूर्वापरभावनियमो मा भूत् पूर्वोत्तरत्वमात्रेण कार्यकारणनियमोऽस्त्वित्याशङ्क्याह पूर्वोत्तरक्षणेति। ··· [Page 54] अनन्वयादनवस्थानाच्चेति सूचितयोर्हेत्वोरनवस्थानादिति हेतुं विवृणोति किंच क्षणिकं चेदिति। प्रवाहरूपेणानादित्वान्नानवस्थेति शङ्कते स्वतस्सिद्ध्यभावेऽपीति। तत्रानादिप्रवाहो नाम एकैकक्षणमात्रोऽतिरिक्तो वेति विकल्प्याद्यं दूषयति तन्नेति। द्वितीयं दूषयति न चान्यदिति। ··· इतश्च क्षणिकत्वमसिद्धमित्याह प्रसाधकेति। प्रसाधयतीति प्रसाधकं प्रमाणं तदभावाच्च। यत्सत्तत्क्षणिकं यथा प्रदीपस्सन्तश्चामी भावा इत्यादेर्दृष्टान्ताभावेनाप्रमाणत्वान्न क्षणिकं कार्यमित्यर्थः। यद्वा। क्षणिकत्वानुसंधातुस्स्थैर्यात्माभावात् [?] क्षणिकत्वं न सिध्यतीत्यर्थः। यतो न मानमूलः क्षणिकवादस्तस्मान्मन्मार्गस्समाश्रयणीय इत्याह अत इत्यादिना। कार्यकारणादीत्यत्र आदिशब्देन कर्तुरेव भोक्तृत्वं प्रमातुरेव कर्तृत्वमिति नियमस्संगृह्यते। विनङ्क्ष्यसि असन्नेव स भवतीति श्रुतेरित्यर्थः। महाप्रकरणमुपसंहरति तस्मात्कार्यस्येति। क्षणिकपक्षोक्तदोषं नित्यपक्षेऽपि शङ्कते नित्यं चेदिति। कार्यत्वादेव न सदा भाव इति सिद्धान्त्याह सदा चेदिति। ···

[Page 55] विच्छेदमभ्युपगम्य कारणस्य विशेषाभावात्कार्योत्पत्तेरव्यवस्थां चोदयति अस्तु विच्छेद इति। कालविशेषस्य सहकारित्वाद्विशेषाभावादित्यसिद्धो हेतुरिति परिहरति कालनियमादेवेति। ननु कालविशेषोऽपि तदैव कस्मादित्याशङ्क्याह कालस्य त्विति। ननु कालस्य कालान्तरे वृत्तिर्नास्तीति चेत्तस्य पौर्वापर्यं न स्यादित्याह कालस्येति। तत्र किं पौर्वापर्यसिद्ध्यनुपपत्त्या कालान्तरे वृत्तिर्वक्तव्या उताघटमानत्वात्कालगतपौर्वापर्यस्य कालस्य वा अपलापोऽभिप्रेत इति विकल्प्याद्यं निरस्यति कालान्तरमिति। द्वितीयमुत्थाप्य निरस्यति अथ कालस्येति। पूर्वमपलापमङ्गीकृत्य चोद्यासंभव उक्तः। संप्रति सोऽप्यशक्य इत्याह कस्य काल इति। प्रातःकालोऽयमित्याद्यनुभवविरोधादित्यर्थः। परमुखेन कालमापादयति ब्रवीमीत्यादिना। ननु ब्रवीमीति वर्तमानादिप्रयोगस्यावश्यंभावित्वादिष्यते व्यावहारिकः कालः तर्कतस्तु खण्ड्यत इत्याशङ्क्याह कथं चेच्छन्निति। ननु यथा त्वं सदिति प्रतिपन्नस्य प्रपञ्चस्य सत्यत्वं दूषयसि तद्वदहमप्यङ्गीकृतकालस्य सत्यत्वं दूषयामीति शङ्कते तस्य सत्यत्वमिति। … इतश्च कालो न दूष्य इत्याह कालस्येदिति। स्वप्नकालस्यासत्यत्वे तदवच्छिन्नपदार्थानामसत्यत्ववदिहापि कालस्य दुष्टत्वे तदवच्छिन्नवस्तूनामपि दुष्टत्वं प्रसज्येत। अतः कालावच्छिन्नानां सत्यत्वमिच्छता कालो न दूष्य इत्यर्थः। … [Page 56] इदानीमनादित्वमाक्षिप्य समाधत्ते ननु शुक्तेरित्यादिना। … कुतो न शुक्त्याश्रयत्वमज्ञानस्येत्यत आह तस्या जडत्वादिति। तस्याश्शुक्तेर्जडत्वादिति। तस्य ज्ञानस्याजडत्वादित्यर्थः। नन्वज्ञानस्य ज्ञात्राश्रयत्वेऽहमज्ञ इतिवदहं रूप्यमिति स्यादिदं रूप्यमिति न स्यादिति शङ्कते ननु ज्ञाश्रयत्व इति। अन्तःकरणावच्छिन्नस्य चैतन्यस्य ज्ञातृत्वं मन्वानस्येदं चोद्यं विभुचैतन्यस्य शुक्त्याद्यवच्छिन्नत्वेन तदाश्रिताज्ञानजरूप्यस्य शुक्तिसंसर्गस्यापि विद्यमानत्वेन शुक्तिसामानाधिकरण्योपपत्तेश्चोद्यानुदयादिति द्रष्टव्यम्।

... ननु शुक्त्युपादानस्याप्यज्ञानत्वान्न सत्यत्वप्रसङ्ग इत्याशङ्क्य रूप्यस्याज्ञानजन्यत्वे सिद्धे तेनैव दृष्टान्तेन शुक्त्यादेरज्ञानजन्यत्वस्य सिषाधयिषितत्वान्नेदानीं तत्सिद्धमिति परिहरति शुक्तिकारणमपीत्यादिना। नन्वज्ञानविषयस्य तज्जनितप्रकाशावरणलक्षणातिशयशालित्वेन तद्विषयत्वाङ्गीकाराज्जडस्याप्रकाशस्वभावत्वेन तदसंभवाच्छुक्तेस्तद्विषयत्वोक्तिस्सिद्धान्तविरुद्धेति चोदयति नन्वज्ञानमिति। बाधात्पूर्वमर्थक्रियासामर्थ्यलक्षणसत्त्वविशिष्टत्वेन शुक्तितदज्ञानयोस्स्थितत्वात् तदानीं स्थितशुक्तेरज्ञानजनितावरणलक्षणातिशयशालित्वमन्तरेण तज्जनितविपर्यासलक्षणातिशयशालित्वेन [?] तद्विषयत्वाङ्गीकारात्सिद्धान्ततत्त्वापरिज्ञानविजृम्भितं तदेवंचोद्यमिति परिहरति मन्द मैवमिति। यद्वा। जडस्य शुक्तिरूप्यादिवदध्यासात्मकत्वेन प्रातिभासिकत्वाङ्गीकारात्तत्र च शुक्तिरूप्यवदज्ञानानुपपत्तेश्शुक्तेरज्ञानविषयत्वाभिधानं सिद्धान्तविरुद्धमिति शङ्कते नन्वज्ञानमिति। जडस्य शुक्त्यादिकस्याध्यासात्मकत्वेऽपि प्रातिभासिकसत्त्वव्यतिरिक्तार्थक्रियासामर्थ्यलक्षणसत्त्वाङ्गीकारेण शुक्तिरूप्यवैषम्याभ्युपगमादस्मदभ्युपगमापरिज्ञानविलसितेयं तव शङ्केति परिहरति मन्देति। नन्वर्थक्रियासामर्थ्यसत्त्वव्यतिरेके नास्त्यज्ञानमिति कुतोऽवगम्यत इत्याशङ्क्य तथा शुक्तिरूप्ये दृष्टत्वादित्याह न हीति। सत्यत्वप्रसङ्गात् सति प्रमातर्यबाध्यत्वप्रसङ्गादित्यर्थः। ननु नायं प्रसङ्गोऽत्यन्तासत्त्वस्यासंप्रतिपन्नत्वेन सत्यस्येष्टत्वादित्यत आह न च तदिति। सति प्रमातरि बाधादित्यर्थः। ... ज्ञाश्रयेति। ज्ञात्राश्रयमेवाज्ञानं दीर्घप्रभान्यायेन शुक्तिपर्यन्तं प्रसृत्य रूप्याकारेण परिणमते। अतोऽहं रूप्यमिति सामानाधिकरण्यं न भवतीत्यर्थः। यद्वा। आत्मचैतन्याश्रिताज्ञानस्यैव रूप्यस्यात्मचैतन्यावच्छेदकशुक्त्याध्याभाससंसर्गो विद्यत इति इदं रूप्यमिति सामानाधिकरण्यमित्यर्थः। ...

**[Page 57]** अत्र न हि शुक्तिरूप्ये कस्यचिज्ज्ञानाज्ञाने स्त इत्येतदसहमानोऽन्यथाख्यातिवादी भाट्टदेशीयः प्रत्यवतिष्ठते नन्ववोच इति।

न केवलं पूर्वापरविरोधादसामञ्जस्यं व्यवहारान्यथानुपपत्त्यापि रूप्यज्ञानमाश्रयणीयमित्याह किं चाज्ञातं चेदिति । … रूप्यविषयं प्रमाणज्ञानमेव मया नेष्यते अज्ञानजस्य तु रूप्यस्याज्ञानवृत्तिरेव साधिकेत्याशङ्क्याह न च तन्मानमिति । … किंच रूप्यस्याज्ञानजत्वे पारोक्ष्यं स्यात् । तच्च न घटत इत्याह न चेत्तदिति । पूर्वं परोक्षज्ञानाभावत्वात्परोक्षत्वमुक्तम् । तन्नास्तीति शङ्कते अथ संविदभाव इति । क्रियात्वपक्षे हि ज्ञानमनुमेयं भवति । क्रियातोऽन्या संवित् फलरूपा । सा त्वपरोक्षा । ततस्तदभावोऽप्यपरोक्ष इत्यर्थः । यद्यप्यपरोक्षसंविदभावत्वेनापरोक्षमज्ञानं तथापि तस्य रूप्योपादानत्वयोग्यभावरूपेणापरोक्षत्वं भावरूपं वा कार्यं न समस्ति अभावत्वादेवेति परिहरति तस्यापीति । यच्चानाद्यनिर्वचनीयाज्ञानजन्यत्वमुक्तं तन्निराचष्टे अज्ञानं चेत्यादिना । अज्ञानमिति नञ्समासः । तदभावतदन्यतद्विरुद्धाश्च नञोऽर्थाः । तत्राभावो नाम भावान्तराभाववादिपक्षे तावद्भाव एवेति तस्य नानिर्वचनीयता कार्यत्वाच्च नानादितेत्यर्थः । ननु ज्ञानप्रागभावप्रध्वंसाभावयोर्ज्ञानान्तरत्वे सुषुप्तिमूर्च्छादौ ज्ञानान्तराभावादतीतज्ञानस्य प्रध्वंसोऽनागतज्ञानस्य प्रागभावश्च न सिध्यतीत्याशङ्क्याह अन्यदेति । आत्मनोऽपरिणतं रूपं पूर्वज्ञानजन्यसंस्कारो वा ज्ञानाभाव इत्यर्थः । ननु भावान्तरत्वेऽपि ज्ञानकारणमेव ज्ञानाभावोऽस्तु तथा च कारणत्वेनानादित्वसिद्धेरज्ञानमपि तावदनादि सेत्स्यतीत्याशङ्क्याह न हि कारणमेवेति । ननु न कारणभावे कार्यनिवृत्तिप्रसङ्गः [?] प्रध्वंसस्य कारणत्वाभ्युपगमादित्यत आह नापि प्रध्वंस इति । यद्वा । प्रागभावप्रध्वंसाभावयोर्ज्ञानकारणसमवेतत्वेन कार्यत्वमुक्तं तदयुक्तं तयोरेव ज्ञानकारणत्वादित्याशङ्क्य तयोः कारणत्वं क्रमेण निराकरोति न हि कारणमेव प्रागभाव इत्यादिना । [Page 58] रूप्यादेश्च सत्यत्वमिति । भावरूपकारणकत्वेनानिर्वचनीयकार्यत्वाभावादित्यर्थः । भाट्टदेश्य एव

नैयायिकादिमतमुत्थापयति यदि कश्चिदित्यादिना । ... प्रध्वंसोऽपीति । प्रध्वंससद्भावे हि नष्टत्वव्यवहारः । तस्याभावेऽसौ न स्यादित्यर्थः । प्रागभावस्य कार्यत्वं भावत्वं चोक्तम् । तत्र कार्यत्वं तावन्निरस्यति प्रागभावस्य चेति । इदानीं तस्य भावत्वं निरस्यति प्राग्भाव एवेति । शब्दार्थप्रसिद्धिविरोध इत्यर्थः । ... ननु तर्ह्युक्तदोषपरिहाराय प्रध्वंसस्यैव प्रागभावत्वमस्त्वित्याशङ्क्य तर्हि भावत्वं न सिध्यतीति परिहरति तर्हि प्रध्वंस एवेत्यादिना । किंच पिण्डप्रध्वंस एव चेद्घटप्रागभावस्तदा प्रागभावप्रध्वंसाभावयोर्वैलक्षण्यमपि न स्यादित्याह इयोश्चेति । ततश्च प्रसिद्धिविरोध इति भावः । ... अतोऽनाद्यनन्त इति । भाट्टानिष्टानाद्यनन्तं ज्ञानं प्रसज्यत इति यतोऽतः प्रागभावस्य भावत्वं कार्यत्वं प्रध्वंसस्य कार्यत्वेऽपि भावत्वं च न वक्तव्यमित्युत्थापितं मतं निगमयति अतो न भाव इति । उत्थापितं मतं प्रत्याख्याति असौ प्रष्टव्य इति । ... **[Page 59]** नन्वत्यन्ताभावस्य नित्यत्वमभावत्वेऽपि दृश्यत इत्याशङ्क्य तत्राकार्यत्वं नित्यत्वोपाधिरित्याह न हीति । प्रागभावस्य कार्यत्वं साधयति अभावोऽपि प्रध्वंस इत्यादिना । ... इदानीं तस्य भावत्वं साधयति आद्यन्तवत्त्वाच्चेति । आदिमत्त्वादन्तवत्त्वाच्च घटादिवदित्यर्थः । नन्वभावोऽपि भाव एवेति वचनमेव विरुद्धार्थत्वादन्याय्यमित्याशङ्क्याह इतरेतराभाववच्चेति । ... इतश्च तार्किकमतमसंगतमित्याह ज्ञानप्रागभावनिवृत्तिश्चेत्यादिना । ज्ञानप्रागभावनिवृत्तेर्ज्ञानादन्यत्वेऽपि भावत्वमभावत्वं वेति विकल्प्य अभावपक्षे दोषमाह यदीति । अभावस्य निवृत्तिरभाव इति त्वदनङ्गीकारादित्यर्थः । यथा तव भावस्य भाव एव निवृत्तिस्तथा ममाप्यभावस्याभाव एव निवृत्तिरस्त्वित्यत आह स्याच्चेदिति । तेन निवृत्तिलक्षणाभावेन व्यवधानात्तस्य निवृत्तिमतो न ज्ञानप्रागभावत्वं सिध्यतीत्यर्थः । इदानीं निवृत्तेर्भावत्वपक्षेऽपि तदाह भावत्वेऽपि तथेति । निवृत्तेर्भावत्वेऽपि तेन भावेन व्यवधानान्निवृत्तिमतो

न ज्ञानप्रागभावत्वमित्यर्थः। अत्र प्रध्वंसस्य भावत्वप्रसङ्गः स्फुटत्वादनुक्ताविति इति द्रष्टव्यम्। इममेव भावपक्षमनूद्य दूषणान्तरमाह अथ निवृत्तिरिति। ... उक्तदोषप्रसङ्ग इति। प्रागभावानवस्था निवृत्त्यनवस्था च त्वयोक्ता तवैव प्रसज्यत इत्यर्थः। ... [Page 60] ननु तर्हि ज्ञानप्रागभावस्य प्रध्वंसो नाङ्गीक्रियत इत्यत आह तस्य चाप्रध्वंस इति। ज्ञानप्रागभावस्यानिवृत्तौ न ज्ञानजन्म स्यादित्यर्थः। यद्वा। ज्ञानप्रागभावप्रध्वंसभूतस्य ज्ञानस्य ध्वंस एव मा भूदुक्तभीत्येत्यत आह तस्य चेति। ज्ञानस्योत्तरकार्यं प्रति प्रागभावत्वाङ्गीकारात्तद्ध्वंसे सति उत्तरकार्यं न स्यादित्यानन्त्यं ज्ञानस्य स्यादित्यर्थः। यस्मान्नष्टानष्टत्वादिदूषणं परस्यापि समानं भावप्रध्वंसस्य नित्यत्वमभावप्रध्वंसस्यानित्यत्वं भावप्रागभावोऽनादिरभावप्रागभावस्यादिरित्यादिकल्पनागौरवं चाधिकं तस्माज्ज्ञानप्रध्वंसप्रागभावयोर्भावत्वं कार्यत्वं चाङ्गीकर्तव्यमित्युपसंहरति तस्मादिति। अङ्गीकृतेऽपि तार्किकमते नानिर्वाच्यसिद्धिरित्याह यदि नामेति। प्रध्वंसस्य प्रागसतस्सत्तासमवायित्वलक्षणकार्यत्वाभावाभिप्रायेणाकार्यत्वमुक्तं न तु प्रागभाववदनादित्वाभिप्रायेणेति द्रष्टव्यम्। इदानीं तदन्यं नञर्थमाशङ्क्यानिर्वाच्यासिद्धिमाह अथेत्यादिना। ज्ञानादन्यद्धि ज्ञेयज्ञात्रादि। तत्सर्वमस्तीति वा नास्तीति वा प्रतीयत इति तथैव निरूप्यते। तस्मान्नानिर्वचनीयं ज्ञानादन्यलक्षणमप्यज्ञानमित्यर्थः। इदानीं नञो विरुद्धार्थत्वपक्षमुत्थापयति अथास्तीति। ननु यद्यस्ति नास्तीति वा न प्रतीयते तथाविधप्रतीत्यभावादेव निर्वचनानर्हं च स्यात्तर्हि शून्यमज्ञानं स्यादित्याशङ्क्याह प्रतिभासते चेति। प्रतिभासश्च मनोरथकल्पितप्रतिभासवत्किं न स्यादित्याशङ्क्यार्थक्रियासमर्थरूपेण भासमानत्वान्नैवमित्यभिप्रेत्याह सर्वेति। ... निरस्यति तदयुक्तमिति। प्रमारहितत्वेन प्रमाणस्मृत्यनुवादज्ञानैस्सिद्ध्यभावेऽप्यात्मवत्प्रतिभासस्स्यादित्यत उक्तं जडमिति। भावान्तराभावपक्षे अस्तीतिप्रमाणेन तार्किकमताभावपक्षे

नास्तीतिप्रमाणेन वा जडरूपमपि प्रतीयत इति नानिर्वचनीय-मित्युपसंहरति तस्मान्मदुक्तेति । अज्ञोऽहमित्यनुभवस्य सार्वजनीनत्वादप-ह्नवस्तावदशक्यः । तस्य च ज्ञानविरोधिनो भावाभावप्रमाणागम्यत्वात्सद-सद्वैलक्षण्यमनिर्वचनीयत्वमेवेत्यभिप्रेत्याह अत्रोच्यत इति । यश्च दोषः अप्रमाणं जडः प्रकाशते चेति विप्रतिषेधलक्षणस्तत्राह नायं दोष इति । अनिर्वाच्यत्वादविद्यापि भ्रान्तिगम्यैव रूप्यादिवदित्याशङ्क्योक्तं तत्कार्येति । रूप्यस्याप्यनुभवमात्रगम्यत्वेन भ्रान्तिगम्यत्वानङ्गीकारात्साध्यवैकल्यमित्यर्थः । ननु नित्यमनुभवं न जानामि ज्ञानानां सर्वेषामनित्यत्वाभ्युपगमेन अस्यापि तदन्यतमत्वावश्यंभावादित्याशङ्क्याह अनुभवस्य चेति । ननु विषयोल्लेखेन चक्षुरादिजन्य एवानुभवस्साधको दृष्टः । तव तु नित्योऽनुभवस्तथा न जन्य इति आकाशवन्न साधक इत्याशङ्क्याह तथापीति । यद्यपि नित्य-स्तथापि तदैक्याध्यासलक्षणसंसर्गादेव जडसिद्धिः । प्रकाशसंसर्गो हि जडसिद्धौ प्रयोजको न तु जन्यता केवलव्यतिरेकाभावादित्यर्थः । प्रकाश-संसर्गस्याप्रयोजकत्वे दोषमाह अन्यथेति । ननु नित्यानुभवसंसर्गात्सिद्धौ सर्वस्य सर्वदा सिद्धिस्स्याच्चक्षुरादिवैयर्थ्यं चेत्याशङ्क्याह रूपादीनां त्विति । रूपादीनामनुभवसंसर्गस्य चक्षुरादिजनितान्तःकरणवृत्तिसापेक्षत्वान्न चक्षु-राद्यानर्थक्यं वृत्तेः कादाचित्कत्वान्न सदासिद्धिप्रसङ्गश्चेत्यर्थः । **[Page 61]** ननु भवदभिमतानुभवस्य कूटस्थत्वान्न प्रकाशयतीति कर्तृत्वव्यपदेश उप-पद्यते असङ्गत्वाद्विषयसंसर्गोऽपि न संगच्छत इत्याह यथा नित्योऽपीति । ... प्रमाणागम्यत्वं साधयति न हि प्रमाणमपीति । प्रमाणानिवर्त्यमपि प्रमाणमनवस्थाप्रसङ्गान्न प्रमाणगम्यं किं पुनः प्रमाणनिवर्त्यस्याज्ञानादे-र्निवर्तकेन तज्जातीयेन वा प्रमाणान्तरेण न गम्यत्वमित्यर्थः । प्रमाण-गम्यत्वेऽप्यनुमानगम्यत्वं प्रत्यक्षगम्यत्वं वेति विकल्प्याद्यं प्रत्याह प्रमाणत-दभावाविति । किंच फलं नामार्थावच्छिन्नं प्राकट्यं भाट्टस्य । स्मृत्यादीनां तु यथार्थत्वनियमाभावान्नास्ति फलम् । अस्ति चेद्यथार्थत्वनियमात्प्रामाण्य-

प्रसङ्गः । ततो नानुमेयतेत्याह स्मृतिभ्रान्तीति । द्वितीयं दूषयति न च ज्ञानमिति । तर्हि तद्विक्रिया (गुणो वा) स्वात्मानमेव विषयीकुर्यादित्यत आह नाप्यात्मानमिति । ज्ञानं न स्वात्मानं स्वाश्रयं तद्धर्मान्वा विषयीकरोति क्रियात्वाद्गुणत्वाद्वा संप्रतिपन्नवदित्येतद्विषयत्वसिद्ध्यनुपपत्तिबाधितमिति शङ्कते मृदादीत्यादिना विषयीक्रियन्ते चेदित्यन्तेन । निरस्यति तद्वदिति । ननु सुखादीनां तदभावानां च समानाश्रयज्ञानविषयतावत् ज्ञानस्यापि स्यादित्याशङ्क्य न तेषामपि समानाश्रयज्ञानविषयत्वमित्याचक्षाणस्साक्षिवेद्यत्वमज्ञानस्योक्तमुपसंहरति तस्मादित्यादिना । सुखादयो न समानाश्रयविषया अपरोक्षत्वाज्ज्ञानवदित्यर्थः । अन्वयव्यतिरेकयोस्तूत्पत्तिहेतुत्वं न प्रतीतिहेतुत्वमित्यन्यथासिद्धिर्द्रष्टव्या[?] । **[Page 62]** नन्वस्तु साक्षिवेद्यत्वं ततः किमित्यत आह अतो भावाभावेति । अत्रातिप्रसङ्गं शङ्कते नन्विति । भावप्रमाणगम्यत्वादात्मनो नास्त्यतिप्रसङ्ग इति परिहरति नेति । ननु येन यस्यातिशयः क्रियते स तस्य विषयः । आत्मनस्स्वतस्सिद्धत्वात्तत्रातिशयाजनकस्यागमस्य कथंकारं तद्गोचरतेति शङ्कते सोऽजडत्वादिति । यद्यपि स्वप्रकाशत्वादागमजनितप्रकाशातिशयशालित्वं कर्मत्वं नास्तीत्येतत्सत्यं तथापि स्वप्रकाशत्वादेवान्याविषयत्वादागमैकगम्यत्वम् । आगमस्य चाध्यस्ताप्रकाशव्यावृत्तिलक्षणातिशयहेतुत्वात्तद्विषयत्वमित्यभिप्रेत्य परिहरति सत्यमिति । ··· प्रासङ्गिकमतिप्रसङ्गपरिहारमुपसंहरति तस्मादित्यादिना । **[Page 63]** ब्रह्मज्ञानस्य सत्यविषयत्वं कथमित्याशङ्क्य ब्रह्मणस्सत्यत्वे विप्रतिपत्त्यभावादित्याह सत्यविषयत्वं चेति । प्रकृतमुपसंहरति इत्यतिप्रसङ्गेति । पूर्वं भावाभावप्रमाणागम्यत्वादनिर्वाच्यत्वं प्रौढिवादेनोक्त्वा रहस्यमिदानीमाह न च वयमिति । यद्वा । पञ्चमप्रकाराविद्यानिवृत्तौ व्यभिचारमाशङ्क्याह न चेति । ··· ननु ज्ञानापनोद्यत्वेऽप्यनिर्वाच्यशब्दार्थत्वं तस्य कथमित्यत आह तदेकमिति । नैकमज्ञानं सकृन्निवृत्ते तस्मिन् भ्रमाभावप्रसङ्गात् । नाप्यनेकं प्रमाणत-

स्तद्ग्राह्यत्वात् । न वस्तु बाधात् । नाप्यवस्तु कारणत्वात् । नात्मनो भिन्नं स्वातन्त्र्येणाग्रहणात् । नाप्यभिन्नं जडत्वात् । न सावयवं कार्यत्वप्रसङ्गात् । न निरवयवं कृत्स्ननिवृत्तिप्रसङ्गात् । एवं निश्चित्य वक्तुमशक्यत्वादनिर्वाच्यशब्दार्थत्वमित्यर्थः । आद्यश्चकारस्सदसत्त्वाभ्यां सह एकमित्यादिप्रकाराणां समुच्चयद्योतनाय द्वितीयस्त्वनिर्वचनीयस्वरूपोपपत्त्या सह शब्दार्थत्वोपपत्तेस्समुच्चयार्थद्योतनायेति द्रष्टव्यम् । यद्वा । भवतु ज्ञानमात्रापनोद्यत्वाच्छुक्त्याद्यज्ञानस्यानिर्वचनीयत्वं मायादेस्तु कथमनिर्वचनीयतेत्याशङ्क्याह तदेकमिति । अज्ञानस्येव मायादेरप्येकत्वादीनां निश्चित्य वक्तुमशक्यत्वान्निरूपणायोग्यत्वमवगम्यत इत्यर्थः । ननु तर्हि भावाभावप्रमाणागम्यत्वं किमर्थमुक्तमित्यत आह भावाभावेति । नन्वद्वैतवादे ज्ञानसुखादीनामप्यनिर्वाच्यत्वाभ्युपगमात्कथं भावाभावप्रमाणागम्यत्वस्य निर्वचनीयेष्वपि भाव इत्याशङ्क्याह न हि तेषामिति । सपक्षभूतरूप्यस्यानिर्वाच्यत्वनिश्चयात्पूर्वं ज्ञानादिषु नानिर्वचनीयत्वं सिद्धम् । ततो निर्वचनीयेष्वपि भाव इत्यर्थः । रजतस्यानिर्वाच्यत्वसाधनावस्थायां ज्ञानादेः पक्षत्वमपि नास्तीत्याह साध्यते वेति । अज्ञानाभावे रजताद्यभावलक्षणव्यतिरेकासिद्धिं शङ्कते ननु शुक्त्यज्ञान इति । आद्येन शुक्तिज्ञानेन तद्देशकालावच्छिन्नशुक्त्यज्ञानरूपमेव निवर्त्यते न तु कृत्स्नं वर्तमानमात्रग्राहित्वात्प्रत्यक्षस्य । अतश्शुक्त्यज्ञानरूपान्तराणां सद्भावान्न व्यतिरेकासिद्धिरिति परिहरति तन्न पुनरपि हीति । ननु तर्ह्येकाज्ञानवादहानिरिति शङ्कते किमनन्तानीति । पुनःपुनः प्रवृत्तसामग्रीद्वारेणोत्पद्यमानानां ज्ञानानामज्ञाननिवर्तनेनैवोत्पत्तिरिति नियमादेकस्यैव मूलाज्ञानस्यावस्थाभेदा एव वा कल्पितावयवभेदा एव वा व्यवहारकाले प्रतिज्ञानं निवर्त्यत्वाय स्वीक्रियन्ते । ततो नैकाज्ञानवादहानिरिति परिहरति बाढमनन्तान्येवेति । शुक्तिज्ञानान्यनन्तानि चेत् तन्निवर्त्याज्ञानरूपाण्यप्यनन्तान्येवेत्यर्थः । अनन्तत्वमेव विपर्यये बाधकथनेन

विवृणोति यदि ह्रीति । ननूत्तरज्ञानान्यात्ममनस्संयोगादिपुष्कलकारण-लाभाज्जायन्ते न पुनरज्ञाननिवर्तकानीत्याशङ्क्य तर्हि तेषां नैष्फल्यमिति परिहरति अथ तानीत्यादिना । नन्वज्ञानानिवर्तकत्वेऽपि विषये प्रकाश-द्वारेण व्यवहारफलत्वान्न नैष्फल्यमिति शङ्कित्वा तर्हि पूर्वज्ञानस्यापि तदेव प्रयोजनमित्यज्ञानानिवृत्तेरज्ञातैव शुक्तिस्स्यात् । ततश्च भ्रमस्याज्ञान-व्यतिरेको[?] न सिध्यतीति परिहरति अथाज्ञानानिवर्तकान्यपीत्यादीना । [Page 64] उक्तदोषपरिहाराय यदि पूर्वज्ञानस्य निवर्तकत्वमिष्येत तर्ह्युत्तरेषामपि ज्ञानानां निवर्तकत्वं प्रसज्येत ज्ञानानां सर्वेषामपि पृथक्-पृथक्प्रवृत्तसामग्रीजन्यत्वाविशेषादित्याह अथ पूर्वमित्यादिना । ननु सामग्रीजन्यत्वाविशेषेऽपि निवृत्ताज्ञानं प्रति तेषामुत्पत्तेरनिवर्तकत्वमिति विशेषान्तरं शङ्कते अथ तानि निवृत्ताज्ञानस्येति । एवं तर्हि जात-मात्रस्य जन्तोर्यं कंचिदर्थमवलम्ब्योत्पन्नेन ज्ञानेनाज्ञाने निवृत्ते सर्व-विषयाज्ञानस्यापि निवृत्तत्वादुत्तराणि सर्वविषयाण्यपि ज्ञानान्यनिवर्त-कानि प्रसज्येरन्निति परिहरति तर्हीति । ननु सर्वेष्वेव कुड्यादिष्वेके-न्द्रियजन्यज्ञानज्ञेयेषु भिन्नेन्द्रियजन्यज्ञानेष्वपि शब्दगन्धादिषु पृथक्पृथक् ज्ञाननिवर्त्यमज्ञानमस्ति ततो नैकेनैव ज्ञानेन सर्वविषयाज्ञाननिवृत्ति-रिति शङ्कते अथ सर्वेष्वपीति । विषयभेदेनैकस्य पुरुषस्यानन्ताज्ञानानि तत्तज्ज्ञाननिवर्त्यत्वात्संभवन्ति चेत् एकस्मिन् विषये तत्तज्ज्ञाननिवर्त्यत्वाय अनन्ताज्ञानान्यभ्युपगन्तव्यानीत्यज्ञाननिवर्तकान्येवोत्तराण्यपि ज्ञानानि स्यु-रिति परिहरति तर्ह्यनन्तानीति । ··· यतो नाज्ञाननिबन्धनमभान-मतो जडस्य स्वाभाविकमभानमित्याह अत इति । स्वाभाविकमभान-मस्तु किमत इत्यत आह अतोऽस्या इति । अज्ञानाभावे शुक्ते-रज्ञाततायाः अभावात्प्रमाणज्ञानमपि शुक्तौ न स्यात् । अतः प्रमाण-प्रवृत्त्यन्यथानुपपत्त्या शुक्त्यज्ञानं वक्तव्यमिति परिहरति तन्न अज्ञानाभाव इति । यच्च प्रकाशकमेव ज्ञानमित्युक्तं तद्दूषयति यद्यपीति । यच्चुक्ते-

स्वाभाविकमज्ञानं तत्तावन्न हेयं स्वरूपहानिप्रसङ्गात् किंत्वतिरिक्त एव ज्ञानाभावो हेय इति प्रकाशकमेवेत्यवधारणमयुक्तमित्यर्थः। [Page 65] द्वितीयस्य तवापिशब्दस्य निवर्त्यं न नास्तीत्यनेन संबन्धः। ज्ञानाभावस्य निवर्त्यत्वं व्यतिरेकमुखेन साधयति अनिवृत्तेऽपि चेदित्यादिना। ननु ज्ञानभानयोर्हेतुफलभावाज्ज्ञानभावे भानं भवति ज्ञानाभावभानाभावयो-रनादित्वेन हेतुफलभावाभावात् ज्ञानाभावानिवृत्तावपि भानमुपपद्यत एवेति शङ्कते अथोच्येतेति। ज्ञानाभावस्याभानहेतुत्वाभावेऽपि भान-हेतुभूतज्ञानस्य स्वाभावानिवृत्तावसंभवादनिवृत्तावपि भानमुपपद्यत इत्य-युक्तमिति परिहरति तच्चायुक्तमिति। नन्वभावानिवृत्तावपि ज्ञानसंभवे को दोष इत्यत आह अभावेऽपि चेदिति। सदा भाने का हानि-रित्यत आह सदा भाने चेति। शुक्तेस्सदाभानवत्त्वे भानस्यानादित्वेन निर्हेतुकत्वात्तद्धेतुतया न ज्ञानसिद्धिरित्यर्थः। ननु न ज्ञानप्रागभावा-निवृत्तौ ज्ञानभाव इष्यते येन तस्य सदा भावाच्छुक्तेस्सदाभानं प्रसज्येत किंतु निवृत्त एव तस्मिन्निति चोदयति अथ मतमिति। ननु प्राग-भावानिवृत्तौ शुक्तिभानं चेन्न स्यात्तर्ह्येकप्रागभावनिवृत्तावपि प्रागभावा-न्तराणां विद्यमानत्वाद्भानं न स्यात्तेषामप्यभावत्वाविशेषादित्यत आह अन्येषु त्विति। विरोधिविधुराणामेव ज्ञानाभावानामभानहेतुत्वं सति त्वेकस्मिन् ज्ञाने विरोधिसद्भावान्नाभानहेतुत्वमित्यर्थः। एवं तर्ह्यज्ञानाना-मपि विरोधिविधुराणामेवाभानहेतुत्वं सति त्वेकस्मिन् ज्ञाने विरोधि-सद्भावान्न तेषामप्यज्ञानानामभानहेतुत्वमिति साम्येन समाधत्ते तर्ह्य-ज्ञानेष्वपीति। अभावप्रमाणगम्यत्वेन उक्तमप्यभाववैलक्षण्यं स्फुटीकर्तुं चोद्य-मुद्भावयति ज्ञानाभावव्यतिरेकेणेति। शुक्तौ विपर्ययज्ञानस्य दोषेन्द्रियसह-कृतात्मोपादानत्वेनान्यथा सिद्धत्वाच्छुक्तावावरणातिशयस्याप्यनङ्गीकारा-ज्ज्ञानाभावव्यतिरेकेण भावरूपमज्ञानं नास्तीत्यर्थः। ··· अज्ञानभेदस्यानु-भवमाह पुनर्न जानामीति। अभावस्य प्रत्यक्षं प्रमाणमिति तार्किकाः।

अभाव इति भाट्टाः । ··· भाट्टपक्षेऽधिकमाह अपरोक्षत्वाच्चेति । ··· तार्किकपक्षेऽधिकमाह प्रत्यक्षेति । धर्मिणि प्रत्यक्षे तद्विशेषणत्वेनाभावः प्रत्यक्षो भवति । आत्मनश्चाप्रत्यक्षत्वात्तस्मिन् धर्मिण्यभावो न प्रत्यक्ष इत्यर्थः । **[Page 66]** भाट्टपक्षेऽप्येतदतिदिशति अत एवात्मन इति । ननु अस्वयंप्रकाशस्य प्रमाणमन्तरेण भानमनुपपन्नमित्याशङ्क्य शुक्तिरूप्या-दिवन्नित्यानुभवेनैवोपपन्नमिति परिहरति कथमप्रमाणमित्यादिना । ··· ननु यद्यपि ज्ञानप्रागभावप्रध्वंसौ शुक्त्यादौ न संभवतः तथापि इतरेतराभाव-स्तत्र संभवति । अन्यथा ज्ञानज्ञेययोरैक्यप्रसङ्गादित्याशङ्क्य सत्यं संभवति तथापि प्रतियोगिभूतज्ञानस्याप्रमेयात्मसंबन्धिनस्तत्प्रतीतिमन्तरेण प्रतीत्य-भावान्न प्रमेय इति परिहरति इतरेतराभाव इत्यादिना । तत्र तावत्प्रौढिवादेनाभावस्यैवाज्ञानत्वमङ्गीकृत्य परिहरति अस्तु एवमिति । पराभिमतं प्रामाणिकासत्त्वं निराचिकीर्षितं तन्निराकरणं सिद्धमित्यर्थः । इदानीं प्रौढिवादं त्यक्त्वा ज्ञानप्रागभावो नाज्ञानं अभावत्वादभावान्तर-वदिति दर्शयितुमभावान्तरस्य तावदज्ञानादन्यत्वं साधयति न चाज्ञान-मेवेत्यादिना । विषयाश्रितत्वाद्विषयेऽप्याश्रितत्वादित्यर्थः । अज्ञानस्य प्रध्वंसे-ऽन्तर्भावे दोषमाह प्रध्वंसस्य चेति । ··· ननु प्रध्वंसस्यापि निवृत्तिरस्ति अतो न वैलक्षण्यमिति भावान्तराभाववादी भाट्टश्चोदयति अथोच्येतेति । ननु उत्पन्नत्वेऽप्यभावत्वान्नित्यत्वमित्यत आह न हि भावादन्यस्येति । भावादन्य-स्योत्पत्त्यसंभवात्प्रध्वंसस्याप्युत्पन्नत्वे घटवद्भावत्वं विनाशित्वं च न्याय्यमित्यर्थः । ननु यद्युत्तरोत्तरं ज्ञानं स्वप्रागभावस्य प्रध्वंसस्तत्र कथं पूर्वज्ञानस्य प्रध्वंसो भवेदित्यत आह पूर्वः पूर्व इति । यद्यपि विनाशित्वाविनाशित्ववैलक्षण्यं नास्ति तथापि जनिमत्त्वाजनिमत्त्ववैलक्षण्यभावान्न ज्ञानप्रागभावप्रध्वंसाभावयो-रज्ञानत्वमिति परिहरति तदापीति । ··· **[Page 67]** जनिमत्त्वा-जनिमत्त्ववैलक्षण्यमपि नास्तीति शङ्कते नन्विति । यथा नाशजन्म भाति तथा पुनरज्ञानं मे जातमित्यनुभवादज्ञानजन्माप्यस्तीति भावः । यद्वा ।

प्रध्वंसमात्रत्वाङ्गीकाराद्ज्ञानस्य तज्जन्मनैव जन्मेति तज्जन्मापि भात्वेवेति भावः । अर्धाङ्गीकारेण परिहरति भात्विति । ··· यस्माद्भावान्तराभाववादिदूषणं पञ्चमे करिष्यते तस्मादुक्तवैलक्षण्यसंभवान्नाज्ञानं ज्ञानप्रध्वंस इत्याह तस्मान्नाज्ञानमिति । इदानीं प्रध्वंसादन्यस्याज्ञानत्वं [?] उपपादितमनूद्य प्रागभावस्याज्ञानादन्यत्वे हेत्वन्तरमाह प्रध्वंसस्येत्यादिना । ज्ञानप्रागभावो नाज्ञानं अज्ञानत्वेनाप्रतीयमानत्वात्प्रध्वंसवदिति प्रयोगः । अज्ञानत्वेनाप्रतीयमानत्वादित्यसिद्धमित्यत आह ज्ञानाभावत्वे सतीति । प्रागभावो हि परस्य अभावमानग्राह्यत्वाद्भावतया ज्ञायते न पुनरज्ञानतया । ततो नासिद्धिरित्यर्थः । अत्रानुपलब्धिबाधं शङ्कते ननु नेति । परमुखेनानुपलब्धिबाधं परिहर्तुं विकल्पयति किं प्रध्वंसमिति । तत्रान्त्यं प्रत्याह न चेदिति । भेदेन प्रध्वंसं न पश्यसि चेत् तर्हि भेदेनानुपलब्धोऽपि ज्ञानप्रध्वंसो यथा युक्तिबलादन्यः तथा प्रागभावोऽपि भविष्यति । अयोग्यत्वादप्यनुपलम्भसंभवादिति भावः । आद्यविकल्पमुत्थाप्य साम्यमाह नन्वासीदित्यादिना । अज्ञोऽहं मूढोऽहमिति निष्प्रतियोगिकमज्ञानमनुभूयते । सप्रतियोगिकस्तु ज्ञानाभाव इति सिद्धो भेदोपलम्भः प्रध्वंसवत्प्रागभावस्येत्युक्तम् । तत्र शङ्कते स्पष्टमिति । स्पष्टं साक्षान्न ज्ञायते प्रागभावस्याज्ञानाद्भेदो लोके त्वया तु परोक्ष एव युक्त्या प्रतिपाद्यत इत्यर्थः । सिद्धान्त्याह प्रध्वंसोऽपीति । प्रध्वंसोऽपि तथा साक्षाद्भेदेन नोपलभ्यते यस्य भाट्टस्य ज्ञानं तदभावश्च परोक्षः । तथाप्यज्ञानादन्योऽसौ । ततः प्रत्यक्षेण भेदोपलम्भाभावो न दोषायेति भावः । पक्षान्तरे तु प्रत्यक्षभेदोपलम्भोऽप्यस्तीत्याह यस्य त्विति । ··· किंच परोक्षत्वापरोक्षत्वरूपेणापि स्फुटो भेद इत्याह परोक्षज्ञानवादिनश्चेति । एवमनुपलब्धिविरोधे परिहृते अर्थापत्तिविरोधं शङ्कते ज्ञानप्रागभाव एवेति । ··· ननु यद्यपि भाट्टस्य सिद्धो दृष्टान्तस्तथापि तार्किकस्यासिद्ध इति शङ्कते नन्विति । **[Page 68]** स्वोदयकाल एव निवृत्तप्रागभावेनापि निवर्त्यत्वात्तमसो

न प्रागभावत्वमिति परिहरति तन्न जातेनेति। ननु प्रदीपस्य क्षणिकत्वात्तत्र तत्र देशे स्वप्रागभावलक्षणतमोनिवर्तनेनैवोत्पत्तिः तस्मान्निवृत्तप्रागभावेन निवर्त्यत्वमसिद्धमिति शङ्कते क्षणिकत्वादिति। एवं तर्ह्येकत्र तिष्ठतः प्रदीपस्य तत्र प्रागभावाभावादनुत्पत्तिस्स्यात्। ततश्च प्रागभावसत्त्वस्यैवोत्पत्तिप्रयोजकत्वात् प्रदीपप्रवाहोच्छेदप्रसङ्ग इति परिहरति तर्ह्येकत्रेति। ननु पूर्वक्षणस्योत्तरक्षणजननसमर्थत्वादनुच्छेद इत्याशङ्क्याह अनुच्छेदे वेति। प्रासङ्गिकं प्रध्वंसत्वमपि तमसो निरस्यति नापीति। यद्वा। विनष्टेऽपि प्रदीपे तमःप्रतीतिदर्शनात्तत्प्रध्वंसस्तम इत्यत्राह[?] नापीति। अविद्यमानेऽपि तमसि प्रदीपज्वालानां प्रध्वंसादित्यर्थः। किंच देशाद्देशान्तरं गच्छतः मण्यादेस्स्थिरत्वादेव जन्मविनाशाभावाद्देशान्तरे तन्निवर्त्यस्य तमसो न प्रागभावत्वं त्यक्तदेशप्राप्तस्य च तमसो न प्रध्वंसत्वम्। अतो न प्रागभावप्रध्वंसयोस्तमस्त्वमित्याह कथं चेति। परिशेषाद्भावत्वं वक्तुमभावान्तरमपि निषेधति नापीति। ... अप्रकाशेति। तत्र किं सर्वप्रकाशाभावस्य तमस्त्वं किं वा एकप्रकाशाभावस्य उत एकैकाभावस्य एकैकतमस्त्वमिति विकल्प्य आद्यं प्रतिक्षिपति सर्वेति। सवितर्युदितेऽपि तमस्स्यादित्यर्थः। आद्यपक्ष एव दोषान्तरमाह सर्वास्मरणे चेति। नो खल्वभाव इत्येव ज्ञायते किंतु प्रतियोग्याश्रयावच्छिन्न एव। ततोऽवच्छेदकाभाने नावभासेतेत्यर्थः। अस्तु तर्ह्याश्रयाद्यवभास इत्याशङ्क्याह न च तम इति। चाक्षुषे ह्यभावज्ञाने चाक्षुष एवाश्रयोऽभिमतः। तमसा कुण्ठितस्यापवरकादिदेशो न चक्षुषा गृह्यते। न च स्मर्यते सर्वप्रकाशप्रतियोगी पूर्वानुभवासंभवात् असर्वज्ञस्यानन्तव्यक्तिष्वित्यर्थः। ननु तमोदृष्टिकाले मा भूदाश्रयाद्यवभासः पूर्वसिद्धप्रतियोगिस्मरणादिपूर्वकत्वं प्रकाशजातीयाभावतमोदृष्टेर्भविष्यतीत्याशङ्क्याह न च प्रतियोगीति। अन्धकारावष्टब्धापवरकेषु सुषुप्तस्योत्थानकाल एव साक्षिसिद्धतमोबुद्धिदर्शनान्न पूर्वक्षणभाविप्रतियोगिस्मरणादिपूर्वकत्वं तमोबुद्धेरित्यर्थः। यद्वा। प्रतियोगिस्मरण-

जिघृक्षाभ्यां विना भासमानत्वान्नाभावस्तम इत्याह न च प्रतियोगीति। तमो न प्रकाशजातीयसंसर्गाभावः तदुपलम्भसामग्र्यसंभवेऽप्युपलभ्यमानत्वात् पटवदिति प्रयोगः। ··· द्वितीयमनूद्य दूषयति अथैकस्यैवेति। ··· तृतीयमनूद्य तर्हि प्रकाशसंपादनं न व्यवहारोपयोगीति निरस्यति अथैकैकस्येति। नन्वेकप्रकाशसद्भावस्थले बहूनां तमसां विद्यमानत्वेऽपि तेषां तत्तत्प्रतियोगिनिवर्त्यत्वमेवास्तु न त्वर्थप्रकाशविरोधित्वमिति सदृष्टान्तं चोदयति एकप्रकाशभाव इति। ज्ञानान्तराभाववत्तमसामप्रतीयमानत्वान्नैवमिति परिहरति न तथेति। वैषम्यमेवोपपादयति यथेति। [Page 69] प्रासङ्गिकमुपसंहृत्य प्रकृते योजयति अतो न प्रकाशाभाव इत्यादिना। नन्वज्ञानं चेन्न ज्ञानाभावः कस्तर्हि नञर्थ इत्याशङ्क्याह तच्चेति। ननु यत् पर्युदासेनान्यव्यावृत्त्या उच्यते तत् विधिमुखेनापि शब्दान्तरेणोच्यमानं दृश्यते यथा शूद्रादिशब्देन अब्राह्मण इत्याशङ्क्याह तदेवेति। यद्वा। तत् अज्ञानं ज्ञानविरोधित्वेन हेतुना तत्पर्युदासेनाज्ञानमित्युच्यत इत्येक एव पक्षः। तत्र वाशब्दः पर्युदासेन निर्देशस्य पाक्षिकत्वद्योतक इति द्रष्टव्यम्। तदेव पाक्षिकत्वमाह तदेवेति। ज्ञानविरुद्धमज्ञानं ज्ञानादन्यदपि वेत्युक्तम्। तत्र ज्ञानशब्देन किमुच्यत इत्याशङ्क्याह तत्र ज्ञानमिति। यथायोगमिति। ज्ञानादन्यत्वपक्षेऽजडो बोधः तद्विरुद्धत्वपक्षे चैतन्याभासितान्तःकरणवृत्तिरित्यर्थः। यद्वा। नैकस्मिन्नेव प्रयोगे बुद्धिबोधयोरस्वीकारः किंतु प्रयोगभेद इत्यर्थः। कुत इत्यत आह उभयत्रेति। विज्ञानमानन्दं ब्रह्म वेदान्तविज्ञानसुनिश्चितार्था इति च बोधबुद्धिवृत्त्योर्ज्ञानशब्दप्रयोगादित्यर्थः। नन्वेकस्य शब्दस्य उभयत्र शक्तौ गौरवं स्यादित्याशङ्क्याह एक इति। अजडो बोधश्शब्दतात्पर्यलभ्यत्वादर्थतो मुख्यः शब्दतस्तु लक्ष्य एव प्रज्ञानं ब्रह्मेत्यादौ सचितिकान्तःकरणपरिणामस्तु लौकिकशक्तिगोचरत्वाद्वाच्य इति न शक्तिद्वयकल्पनमित्यर्थः। स्वप्रक्रियामुदाहरणतस्स्फुटयति तत्रेत्यादिना

ननु शुक्तिज्ञानादज्ञाननिवृत्तौ ब्रह्मज्ञानं व्यर्थमित्याशङ्क्य तेन ब्रह्माज्ञानांशस्यैव निवर्त्यत्वान्नैवमित्याह अज्ञानं च स्यादिति। ननु ब्रह्मज्ञानस्यान्तःकरणवृत्तित्वेऽज्ञानशरीरत्वात् कथं ज्ञानत्वं मिथ्यात्वाविशेषान्निवर्तकत्वं वा कथमित्याशङ्क्याह अज्ञानशरीरत्वेऽपीति। सत्यार्थत्वेन ज्ञानत्वं ब्रह्मैकाभासत्वेन चाज्ञाननिवर्तकत्वमित्यर्थः। ननु कार्यस्य कारणनिवर्तकत्वादर्शनात् ज्ञानस्याज्ञानकार्यस्य तन्निवर्तकत्वं न संभवति संभवेऽपि तन्निवर्तकान्तरं वाच्यमित्यनवस्थेत्याशङ्क्याह यथा वेणुज इति। यथा विनश्यदाश्रया विनाशक्रिया स्वाश्रयं नाशयति यथा च दाह्यसंयोगोऽपि स्वाश्रयस्योपादानस्य दाहहेतुस्तथा स्वोपादानमप्यज्ञानं ज्ञानं नाशयति स्वयं च शाम्यतीति नानवस्थेत्यर्थः। निर्हेतुनाशप्रसङ्गभयात्पक्षान्तरमाह ब्रह्मैव वेति। कथं बाध्योपेतस्य बाधकत्वमित्यत आह यथा राजेति। ...

[Page 70] एवं तावदज्ञानात्मत्वेऽप्यन्तःकरणवृत्तेरज्ञाननिवर्तकत्वसंभवात् अज्ञाननिवर्तकत्वानुपपत्तिबाधोऽनिर्वाच्याज्ञानपक्षे नास्तीत्युक्तम्। इदानीमनिर्मोक्षप्रसङ्गबाधं शङ्कते ननु ब्रह्माज्ञानस्यापीति। ब्रह्माज्ञानं नाशादूर्ध्वमपि भवितुमर्हति अज्ञाननाशत्वात् शुक्त्यज्ञाननाशवदिति। अनेन किं यदेव नष्टं तदेव वर्तत इति साध्यते किं वा अन्यज्जायत इति विकल्प्य आद्यं निरस्यति तन्न दग्धस्येति। द्वितीयं निरस्यति अन्यस्य चेति। अज्ञानस्य सादित्वाभावादेव अज्ञानान्तरोत्पत्तिर्न संभवतीत्यर्थः। दृष्टान्तोऽपि साध्यविकल इत्याह न हि शुक्त्यज्ञानमपीति। अस्त्वदग्धत्वमित्यत आह प्रतीतिविरोधादिति। दग्धत्वप्रतीतिविरोधादित्यर्थः। ननु यदि दग्धो न पुनर्भवति नाप्यपूर्वमुत्पद्यते कथं तर्हि पुनःपुनः अज्ञानव्यवहार इत्यत आह किंत्विति। ननु शुक्तेर्यच्च यावच्च रूपं विद्यते तत्सर्वं प्रत्यक्षेण प्रकाशमानमुपलभ्यते तत्कथं कार्त्स्न्येनाप्रकाशितत्वमित्याशङ्क्य वर्तमानकालक्षणविशिष्टरूपग्राहिणः प्रत्यक्षस्यानागतानेककालक्षणविशिष्टानेकरूपग्राहकत्वायोगात् कार्त्स्न्येनाप्रकाशितत्वमित्याह शुक्तेरिति। कार्त्स्न्येनानिवृत्तिं

श्रुत्वानिष्टं प्रसञ्जयति नन्वज्ञानं चेदिति। सत्यं सांशत्वानंशत्वयोर्दोषो विद्यते। अत एव सांशत्वादिभिर्निरूपयितुं न शक्यत इत्युक्तवन्तो वयमिति परिहरति सत्यमत एवेति। **[Page 71]** सांशत्वे कार्यत्वं स्यादित्युक्तम्। तथात्वे वा को दोषः फलतीत्याशङ्क्याह तथाहीति। प्रागज्ञानोत्पत्तेः पुंसां मुक्तत्वाद्बन्धाभावस्स्यात्। अज्ञाने चोत्पन्ने मुक्तानां बन्धेऽनिर्मोक्षप्रसङ्ग इत्यर्थः। निरंशत्वपक्षे कृत्स्ननिवृत्तिरनिवृत्तिर्वा स्यादित्युक्तम्। तदा फलितमाह कृत्स्नेति। येन केन चिज्ज्ञानेनाज्ञानस्य साकल्येन निवृत्तेस्सदा मुक्तत्वमित्यर्थः। ⋯ स्वयंप्रकाशत्वाच्च ब्रह्मणो नाप्रकाशमानं रूपान्तरमस्तीत्याह स्वयंप्रकाशत्वाच्चेति। ⋯ स्वयंप्रकाशत्वाच्च ब्रह्मणोऽप्रकाशमानं रूपमेव नास्तीत्युक्तम्। तत्र ब्रह्मज्ञानमेव न स्यादित्यनिष्टं शङ्कते प्रकाशकमेवेति। ब्रह्मण्यप्रकाशताध्यासात् प्रकाशकं ज्ञानं भविष्यतीत्यभिप्रेत्य परिहरति अस्तु तथेति। ब्रह्मण्यध्यासादप्रकाशत्वमित्युक्ताभिप्रायमजानानो ब्रह्मणोऽपि जडत्वं सांशत्वं च स्यादिति शङ्कते तर्हि शुक्तिवदिति। निरस्यति तन्नेति। शङ्कते तर्हि विप्रतिषेध इति। अप्रकाशस्य कल्पितत्वान्न विप्रतिषेध इत्यभिप्रेत्य दृष्टान्तमाह स्वयंप्रकाशापीति। परव्यामोहार्थं ते तथा वदन्तीत्यत आह श्रेयोऽर्थिनोऽपीति। वदन्ति चेत्तथैव सा अस्त्वित्याशङ्क्याह न च सेति। ⋯ ननु संवित्तेस्स्वप्रकाशत्वात् नास्त्यप्रकाशः तस्मान्नास्ति न प्रकाशत इति तेषां वचनमर्थवन्न भवतीति शङ्कते संवित्तेरसत्त्वादिवचनमिति। यथावद्वस्तुप्रकाशे भ्रमायोगात् भ्रमकार्यमेवाप्रकाशं कल्पयति। अप्रकाशारोपस्य च स्वपरनिर्वाहकत्वान्नानवस्थापीति परिहरति भ्रान्तिरपीति। **[Page 72]** यद्यपि स्वप्रकाशस्य कल्पितोऽनवभासः स्वाभाविकस्तु जडस्येति वैषम्यमस्ति तथाप्यनवभासमात्रे न विशेष इत्याह तस्मादिति। अनवभासमात्रे न विशेष इति यतोऽत एव अविशेषेण जडाजडयोर्लौकायतिकानां नास्तीति व्यवहार इत्याह अत एवेति। ⋯ नन्वज्ञाननिवर्तनेनापि प्रमाणं बोधकं

चेत् विषयीकरणेनैव वाच्यं सर्वत्रैकरूप्यसिद्ध्यर्थमित्याशङ्क्याह अत एव न तदिति। उक्तवक्ष्यमाणदृष्टान्तवशेन वस्तुस्वभाववैचित्र्यात् नैकरूप्यं सर्वत्रेत्यर्थः। प्रकाशकमेव प्रमाणमिति भाट्टदृष्ट्यवलम्बनेऽपि न स्वपक्षक्षतिरित्युपपाद्य इदानीं स्वमतमाह यदा त्विति। सिद्धं तत्त्वमस्यादिशास्त्रस्य प्रामाण्यं ब्रह्मैकाभासबुद्ध्युत्पादनेनाविद्यातत्कार्यनिवर्तकत्वात् न तु संविज्जनकत्वादित्युक्तं ब्रह्मानन्दिभिरित्यर्थः। प्रासङ्गिकमुपसंहृत्य प्रकृतमनिर्मोक्षप्रसङ्गपरिहारं निगमयति तस्मादित्यादिना। उक्तहेतुद्वयमप्रयोजकमिति वदन् पुनरप्यज्ञानशेषसद्भावं शङ्कते नन्वेकरूपत्वमित्यादिना संसारस्स्यादिति चेदित्यन्तेन। पूर्वं विरोध्यभावात्परिपूर्णमज्ञानमासीत् इदानीं विरोध्युदयान्न तच्छेषोऽपीति सिद्धान्ती शङ्कते ज्ञानविरोधादिति। ज्ञानस्याज्ञानशेषेण न विरोध इति पूर्ववादी परिहरति न ज्ञानमपीति। ब्रह्मज्ञानं सावशेषाज्ञाननिवर्तकं ज्ञानत्वाच्छुक्तिज्ञानवदिति प्रयोगः। **[Page 73]** अत्र जडज्ञानत्वमुपाधिरिति शङ्कते न तथेति। साध्यसमाव्याप्तिकत्वान्नोपाधिरिति परिहरति न स्वयंप्रकाशेऽपीति। भ्रमस्याज्ञानमूलत्वात्स्वयंप्रकाशफलज्ञानमपि सावशेषाज्ञाननिवर्तकं वक्तव्यम्। अतो यत्सावशेषाज्ञाननिवर्तकं तज्जडज्ञानमिति नास्ति व्याप्तिरित्यर्थः। ननु फलस्य सांशत्वात् युक्तं एकस्य रूपस्याप्रकाशनं निरंशस्वप्रकाशज्ञानस्य तु कृत्स्नाज्ञाननिवर्तकत्वं भविष्यतीत्याशङ्क्याह न च तस्यापीति। तत्र किं परिपूर्णब्रह्मज्ञानानन्तरमप्यज्ञानशेषस्साध्यते किं वा आपातज्ञानानन्तरमिति विकल्प्य आद्येऽनुपलब्धिबाध इति परिहरति तन्न प्रमाणाभावादित्यादिना। द्वितीये सिद्धसाधनत्वमाह प्राक्तु यथेति। ⋯ **[Page 74]** जीवन्मुक्तिसिद्ध्यनुपपत्त्याप्यज्ञानशेषावगमान्नानुपपत्तिबाध इति शङ्कते ननु यद्यपीत्यादिना। नन्वस्तु शरीरस्थितिः सा त्वन्नपानादिकमेव कल्पयेन्नाज्ञानशेषमिति तत्राह तस्यास्त्वज्ञानमूलेति। ननु जीवन्मुक्तिरेव नास्ति ततोऽर्थापत्तेरनुदय इत्याशङ्क्याह यदि हीति। ⋯ **[Page 75]** ननु विद्यार्थानां कर्मणां बलवत्त्वात्तद्दाहकत्वमित्या-

शङ्क्याह यत इति। ... यथा कृत्स्नतमोनिवर्तनसमर्थोऽपि सविता अपवरकप्रतिबन्धात्तद्गतं तमोलेशं न निवर्तयति तथा प्रवृत्तकर्मफलप्रतिबन्धाद्विद्याप्यविद्यालेशं न बाधते। तत्क्षयकाले तु संततिरूपेण वर्तमाना सैव अविद्यालेशमपि बाधत इत्याह अत आ प्रारब्धभोगक्षयादिति। ननु भोगोऽस्ति चेत् स विद्याविरोधित्वात्तां बाधत एवेत्याशङ्क्याह तत्र यथेति। भोगस्य प्रतिभासमात्रत्वान्न विद्याविरोधित्वमिति भावः। ननु विद्यावतोऽपि चेद्भोगः तस्याज्ञात्को विशेष इत्याशङ्क्याह शरीरेति। अहंकारपूर्वकत्वाभावो विशेष इति भावः। ननु भोगार्थमारब्धशरीरे विद्या न जायते ततो नास्ति विद्याभोगयोस्सहभाव इत्याशङ्क्य परिहरति अथोच्येतेत्यादिना। पूर्वं कल्पनागौरवप्रसङ्गात्स्वयमारब्धे विद्योत्पादकत्वमयुक्तमित्युक्तम्। इदानीमभ्युपेत्यापि दोषमाह तथा स्वयमारब्धेऽपीति। विद्यार्थैः कर्मभिस्स्वयमारब्धेऽपि देहे नान्त्यकाले विद्या स्यात् चित्तास्वास्थ्याविशेषादित्युक्तम्। तदाक्षिपति विद्यार्थशरीर इति। **[Page 76]** उत्क्रमणादिनिबन्धनं चित्तास्वास्थ्यं तच्च मरणाभावे न संभवतीत्येतत्तावदभ्युपगम्य जीवन्मुक्तिरवश्यं वक्तव्येत्याह एवमपीति। ... नन्वाचार्याभावे कुतः कर्मणां नैष्फल्यं स्वर्गादिकर्मवदन्तरेणाप्याचार्यं फलदातृत्वोपपत्तेरित्याशङ्क्याह न हि केवलान्येवेति। आचार्यनिरपेक्षाणीत्यर्थः। एवमर्थापत्तेरनुदयं निरस्य अन्यथाप्युपपत्तिमाशङ्कते संस्कारादेवेति। संस्कारस्य तद्वतोऽन्तःकरणस्य चाविद्योपादानकत्वादुपादानाभावेऽसंभव इति परिहरति तन्न अविद्याभाव इति। दृष्टान्तं विघटयति भयेति। भयकम्पादेश्शरीरोपादानत्वात् निमित्तापगमेऽप्यस्ति संभव इत्यर्थः। ... प्रौढिवादेन संस्कारमात्रात्कार्यभावं दृष्टान्तेऽभ्युपगम्य दार्ष्टान्तिके वैषम्यमाह भवतु वेत्यादिना। ननु रज्ज्वास्सांशत्वादज्ञानशेषो घटते निरंशत्वात्त्वात्मनो नास्त्यज्ञानलेश इत्याशङ्क्याह सावशेषोऽपीति। ननु ज्ञाने जातेऽप्यज्ञानलेशोऽस्ति चेत् जन्मान्तरारम्भकोऽपि कस्मान्न भवेदित्याशङ्क्याह न चैतावतेति।

नन्वपान्तरतमःप्रभृतीनां ज्ञानिनामेव पुराणे व्यासादिभावेन प्रादुर्भाव-स्मरणादस्ति ज्ञानिनोऽपि देहान्तरभोग इत्याशङ्क्याह न चारब्धशरीरेति। अथ संपत्स्य इत्यादिश्रुतिविरोधादपान्तरतमःप्रभृतीनामपि न प्रवृत्त-कर्मातिरिक्तकर्मबन्धनशरीरान्तरभोगः। किंतु प्रारब्धकर्मवशादेव। ... [Page 77] ननु ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः ज्ञानाद्ब्रह्मीभूतस्य न प्रारब्धभोगसंभवः अनश्नन्नन्योऽभिचाकशीतीति ब्रह्मणो भोगप्रतिषेधा-दित्याशङ्क्याह आरब्धभोगे त्विति। प्रवृत्तफलेन कर्मणा प्रतिबन्धो जीवन्मुक्तिप्रमाणलभ्यस्तत्कत्वब्रह्मविदनुभवसिद्धश्चारब्धभोगे कारणमुक्तम्। ब्रह्मीभावाभिधानं च अब्रह्मत्वभ्रमव्यावृत्त्यभिप्रायं न तु बिम्बसंपत्त्यभि-प्रायं अथ संपत्स्य इति श्रुतेरिति भावः। ननु ज्ञानोदयानन्तरमेव बिम्बभावापत्त्यभावे ज्ञानान्मुक्तो न स्यात् किंतु उपाधिध्वंसात्। तथा च विद्वानमृत इह भवतीति श्रुतिः पीड्येतेत्याशङ्क्याह अतो ज्ञानोदयेति। कुत इत्यत आह अशेषसंसारेति। आगामिबन्धकारणव्यावृत्त्यभिप्रायं जीवतोऽपि मुक्तत्वाभिधानम्। अत एव जीवन्नथ च मुक्त इत्यविरुद्धं पद-द्वयम्। यथा अन्तःकीटदष्टवटबीजस्य भाव्यङ्कुरादिजननशक्तिप्रतिहतावपि वर्तमानबीजव्यवहारसंपादकत्वं तथा आगामिशरीराद्यारम्भरूपेण दग्धस्य जीवोपाधेरज्ञानस्य वर्तमानकार्यसंपादकरूपेणावस्थानं न विरुध्यत इत्युप-संहरति पूर्ववादी अतो विदुषोऽपीति। ... [Page 78] यतो मुक्ति-स्सिद्धा अतो नानिर्मोक्षप्रसङ्गबाध इत्युपसंहरति अतः शुक्तिज्ञानस्येति। एवं तावदनिर्वाच्यमज्ञानं भ्रमकारणमित्यस्मिन् पक्षे न कोऽप्यनिष्टप्रसङ्ग इत्युपपाद्य व्यतिरेकासिद्धिपरिहारमुपसंहरति शुक्तिज्ञानस्येति। अन्वय-व्यतिरेकाभ्यामनिर्वचनीयाज्ञानजत्वे सिद्धे यद्वैतण्डिकेन चोदितं भ्रान्ति-बाधौ न स्त इति तत्परिहृतमित्याह अतो भ्रान्तिबाधौ नामेति। परिहृतमपि वैतण्डिकचोद्यमधिकविवक्षया पुनरुद्भावयति कस्येत्यादिना। यदि दूषणादिव्यवहारसिद्ध्यनुपपत्त्या भ्रान्तिबाधावेष्टव्यौ तर्हि प्रपञ्चोऽपि

समानन्यायतयैव एष्टव्य इत्याह नन्वेवं तर्हीत्यादिना । ननु कल्पितान्ना-दिना जीवनादिसिद्धिरित्यत आह अदृष्टं वेति । किंच प्रपञ्चदूषणाय अद्वैतसाधनाय वा शब्दलिङ्गादिप्रपञ्च एष्टव्य इत्याह नापि तस्येति । ननु श्रुत्यादीनां स्वरूपेणैवोपायत्वात्सत्यत्वस्योपायत्वाप्रयोजकत्वाच्छ्रुत्यादिरूपेण प्रपञ्चमाश्रित्य सत्यरूपेण दूषयामीति शङ्कित्वा साम्येन परिहरति अथ तमित्यादिना । ननु यत्प्रतिपन्नं तत्सत्यमिति वदता भ्रान्तिबाधौ स्त इति ज्ञाने भ्रान्तित्वबाध्य[ध ?]त्वे प्रतिपन्ने चेत् तावपि सत्यावेवेति न दूष्याविति शङ्कित्वा तर्हि प्रपञ्चस्यापि सत्यत्वाभावे शशविषाणवदसत्त्वेन अनुपायत्व-प्रसङ्गात्सत्यत्वमभ्युपेयम् । तथा च न दूष्यत्वमिति परिहरति तौ चेदा-श्रितावित्यादिना । ननु प्रपञ्चाख्यधर्मिणस्तत्काशाज्जन्मादीनां धर्माणामनौ-पाधिकानामपि भिन्नत्वादिप्रकारैरनिरूप्यत्वेन मिथ्यात्वाद्धर्मिभूतप्रपञ्चो-ऽपि मिथ्येति शङ्कित्वा तर्हि भ्रान्तिबाधयोरपि भेदजन्मदोषचक्षुराद्यपेक्ष-त्वेन तदसिद्धावसिद्धिरिति परिहरति अथ भेदोत्पत्तीत्यादिना । [Page 79] ननु यद्यप्येवमनुपपन्नौ तथापि प्रसिद्धत्वादभ्युपगन्तव्यावेवेति शङ्कित्वा तुल्यमन्यत्रापीति परिहरति तथापि तावित्यादिना । एवं तुल्यन्यायतामुक्त्वा विशेषमाह तयोरभावे तु सुतरामिति । ... परमत-मभ्रान्तं मत्वा तन्निषेधाय प्रवृत्त्यनुपपत्तेरवश्यं वैतण्डिकेनापि भ्रान्ति-बाधावेष्टव्याविति परिहरति किमर्थमित्यादिना । [Page 80] किमि-त्युन्मत्तादपि हेयत्वं ममेत्याशङ्क्याह न हि तस्येति । अस्ति नास्तीति वा भ्रमो भवति उन्मत्तस्य । भवतस्तु भ्रमबाधौ न स्त इति निश्चयकाल एव भ्रमबाधौ स्त इति ज्ञाने भ्रमत्वबाध्य[ध ?]त्वनिश्चयो भवतीति विरुद्ध-द्वयवत्त्वं विरोधाज्ञानं चाधिकम् । ततस्तस्मादपि हेयत्वं तवेत्यर्थः । ... विप्रतिपत्तिरपीति । सत्त्वासत्त्वानिर्वचनीयत्वानेकत्वैकत्वग्रहणत्वस्मृतित्वादि-स्वरूपविशेषे वा अधिष्ठानस्य भावाभावे [?] आरोप्यस्य पुरोदेशभावाभावे [?] च विप्रतिपत्तिर्न तु भ्रान्तिबाधयोरस्तित्वेऽपीत्यर्थः । विप्रतिपत्तिधर्मित्वेन

भ्रमबाधयोरनङ्गीकारे दोषमाह तयोरिति । अवश्याभ्युपगन्तव्यावपि भ्रान्तिबाधौ तर्हि कस्मिन् पक्षे युज्यत इत्याशङ्क्याह एवं च सति यद्यपीति । सत्यरूप्यखपुष्पादिवदिति । द्वितीयो व्यतिरेकदृष्टान्तः । नन्वनिर्वचनीयं न बाध्यमसद्विलक्षणत्वात् सत्यरूप्यवत् । न च ख्यात्यर्हं सद्विलक्षणत्वात् नृशृङ्ग-वदित्याशङ्क्याह ख्यातिबाधाभ्यामेव चेति । पक्षान्तरे भ्रमबाधयोरसं-भवात्तत्सिद्ध्यन्यथानुपपत्त्या अनिर्वचनीयत्वावगमादनुमानमर्थापत्तिबाधित-मित्यर्थः । ... यच्च वैतण्डिकेनोक्तं भ्रमबाधवत्प्रपञ्चोऽपि सत्य एवैष्टव्यः अन्यथा जीवनादिव्यवहारानुपपत्तिरित्यादि तत्राह प्रपञ्चस्यापीति । श्रुतियुक्तिगम्यानिर्वचनीयत्वसद्भावेऽप्यज्ञानां व्यावहारिकसत्त्वेनैव सर्वव्यव-हारोपपत्तेरन्यथाप्युपपत्तिरित्यर्थः । ... **[Page 81]** जानतां त्विति । परोक्षबाधो नाभावपर्यवसायीति भावः । यदप्युक्तं सर्वानिर्वचनीयत्वे बाध्यस्य बाधकवद्बाध्यत्वं न स्यात् बाधकस्यापि बाध्यवद्बाधकत्वं न स्यादिति बाध्यबाधकभावो न सिद्ध्यतीति तत्राह भ्रान्तिबाधयोश्चेति । शुक्तिज्ञानस्य बाधकत्वसिद्ध्यधीनं रूप्यज्ञानस्य बाध्यत्वमनिर्वचनीयत्वं च । पश्चात्तेनैव दृष्टान्तेन शुक्तिज्ञानस्यानिर्वचनीयत्वं सिध्यति । तस्माद्बाध्यबाधकभावसिद्ध्यधीनमनिर्वचनीयत्वं न तद्बाधकमित्यर्थः । ... पूर्वं बाधकस्य शुक्त्यादिबोधस्यानिर्वचनीयतामङ्गीकृत्य बाध्यबाधकभाव-संभव उक्तः । संप्रति दृष्टान्तसाधनावस्थायां बाधकस्य शुक्त्यादिबोधस्य अनिर्वचनीयतापि नास्ति दृष्टान्तसिद्ध्युत्तरकालीनत्वात् तदनिर्वचनीय-ताया इत्याह न चेति । अद्यत्वे रूप्यभ्रान्तेरेव बाधात्तस्या एवानि-र्वाच्यतेत्यर्थः । अथ यथा वृक्षादेर्विद्यमानापि मृन्मयता स्फुटं घटादे-रिव न व्यज्यते तथा शुक्त्यादिबोधस्य विद्यमानाप्यनिर्वचनीयता न व्यज्यते परं न तु नास्त्येवेत्याशङ्क्याह यदि तस्यापीति । उक्तमेव परिहारं स्मारयति बाधकस्येति । बाधकस्य बाधकत्वसिद्धावेव सपक्षसिद्धिद्वारेण निरूप्यमाणे या अनिर्वचनीयता सिध्यति सा न तस्य

बाधकतां हिनस्तीत्यर्थः। ननु निरूप्यमाणेऽपि यस्यानिर्वचनीयत्वं तस्य बाधकत्वे दृष्टान्ताभावान्नात्र प्रश्वास इति शङ्कते ननु सत्यस्येति। सत्यं दृष्टान्तो नास्ति तथापि दृष्टान्तसिद्धमेवेष्यत इति नियमो नास्ति अदृष्टान्तसिद्धस्यापि मन्त्रादिप्रभावस्याङ्गीकरणात् असत्यस्याबाधकत्वमेवेत्यत्र प्रमाणादर्शनाच्च अन्यत्रादर्शनेऽपीहैव शुक्तिबोधेऽनिर्वाच्यस्य बाधकता दृश्यतामिति परिहरति सत्यमिति। प्रमाणादर्शनादित्यसिद्धो हेतुः अस्त्यनुमानमित्याह नन्वनिर्वचनीयत्वादिति। अनुमानानुपपत्तेर्नैवमिति परिहरति तन्नेति। कुतोऽनुमानानुपपत्तिरित्याकाङ्क्षायां शुक्तिज्ञानस्याबोधकत्वे सति हेतुदृष्टान्तासंभवात्। तदेव कुत इत्याकाङ्क्षायां रूप्यज्ञानस्यानिर्वचनीयत्वादिसिद्धेश्शुक्तिज्ञानानिर्वचनीयत्वादिसिद्धेश्च शुक्तिज्ञानस्य बोधकबाधकत्वादिसिद्ध्यधीनत्वादिति योजना। नन्वनिर्वचनीयत्वं बाधाधीनमित्येतावता यद्यनिर्वचनीयपक्षे बाधोपपत्तिः तर्हि रूप्यस्य देशान्तरादौ सत्त्वमपि बाधाधीनम्। तुच्छत्वमपि तदधीनम्। अतस्सत्तुच्छपक्षयोरपि बाधोपपत्तिरित्याशङ्क्याह न चैवं सत्यत्वमिति। अनिर्वचनीयत्वं यथा बाध्यत्वप्रयुक्तं तद्वत्सत्यत्वं न बाध्यत्वप्रयुक्तमबाध्यस्याप्यात्मनस्सत्यत्वदर्शनात्। प्रत्युताबाध्यत्वप्रयुक्तमेव सत्यत्वम्। एवं तुच्छत्वमपि न बाध्यत्वप्रयुक्तं तुच्छस्याख्यातत्वेन बाधानर्हत्वात्। अतोऽनिर्वचनीयस्यैव बाध्यत्वमित्यर्थः। एवं तावद्दृष्टान्तस्यासत्यत्वमुपपाद्य दार्ष्टान्तिके योजयितुं चोद्यमुद्भावयति ननु यद्यपीति। बाधकं शुक्त्यादिज्ञानं सत्यं बोधकत्वात् घटादिज्ञानवदिति प्रयोगः। तत्र हेत्वसिद्धिमाशङ्क्योक्तं न हीति। **[Page 82]** साध्यविकलो दृष्टान्त इति शङ्कते घटादिज्ञानस्यापीति। घटादिज्ञानं सत्यमर्थबोधकत्वात् श्रौतज्ञानवत्। अतो न साध्यवैकल्यमिति परिहरति तन्नेति। तदर्थं श्रौतज्ञानार्थम्। पदपदार्थादिविषयं पदपदार्थतत्संबन्धविषयम्। प्रत्यक्षादीत्यनेनोपजीव्यत्वेन प्रत्यक्षादेः प्राबल्यं न श्रुत्या बाध्यत्वमिति दर्शितम्। नन्वसत्यस्यापि वर्णदैर्घ्यादेस्सत्यार्थसाधकत्वादसत्यमपि

श्रौतं ज्ञानं सत्यार्थसाधकमेव । अतस्ताथ्यवैकल्यमित्याशङ्क्याह यद्यपीति। ज्ञानसत्यत्वे किं फलमित्याशङ्क्याह अतो ज्ञानानामिति। विमतं सत्यं ज्ञानविषयत्वादात्मवदित्यर्थः । प्रपञ्चसत्यत्वानुमानं एकमेवाद्वितीयमित्यादिश्रुतिबाधितमित्याशङ्क्य सत्यत्वानुमानविरोधे श्रुतेस्सत्तासामान्यैकत्वादिरूपचरितोऽर्थो ग्राह्य इत्याह श्रुतेरिति । सत्यत्वानुमानविरोधे श्रुतेरन्योऽर्थो ग्राह्य इत्येतदसंगतमिति परिहरति तन्नेति । अबाधितविषयत्वं ह्यनुमानस्याङ्गम् । ततस्तत्परश्रुतिविरोधेऽनुमानस्याभासत्वात् श्रुतेस्तु शक्तितात्पर्याभ्यां बोधहेतोस्तदनपेक्षत्वात् प्रसञ्जकतयोपजीव्यस्यापीदं रजतमिति ज्ञानस्य नेदं रूप्यमित्यनेनोपजीविना बाधदर्शनाच्च वृथैव श्रुत्यर्थत्यागः प्रसज्यत इति भावः। ... आगमानुग्राहकमनुमानमप्यस्तीत्याह अनुमानतोऽपीति। प्रपञ्चस्य मिथ्यात्वे किं फलितमित्याशङ्क्याह ततो घटादिज्ञानस्येति । यदुक्तमसत्यं बोधकं न दृष्टमिति तच्चासिद्धमित्याह सर्वमेव चेति । ... यतस्स्वरूपेणासत्यमपि ज्ञानं बोधकमतो बाधकज्ञानं संभवतीत्युपसंहरति अतस्सर्वस्येति । **[Page 83]** इदानीं निवृत्तिनिरूपणद्वारेण पुनरनिर्वाच्याज्ञानपक्षमाक्षिपति का तर्हीत्यादिना । संसारभ्रमस्य स्वोपादानाज्ञानात्मकत्वस्य साधितत्वादज्ञाननिवृत्तिरेव भ्रमनिवृत्तिरिति सिद्धान्त्यभिमतमनुवदति अज्ञाननिवृत्तिरेवेति । कासावज्ञाननिवृत्तिरित्ययं प्रश्नो न कर्तव्यस्सिद्धत्वादिति मत्वा आह किं तामिति। आक्षेपश्च न युक्त इत्याह सा त्वयापीति। ... अज्ञाननिवृत्तेर्मोक्षत्वानभ्युपगमात्किमिति सा मयेष्यत इत्याह न हि तामनिच्छन्निति । जीवितुमपीति । ओदनविषयाज्ञानानिवृत्तौ ओदनोऽयमिति निश्चयाभावात् तदुपादानभक्षणायोग इत्यर्थः । विवदितुमिति । त्वदुक्त्या पराज्ञानानिवृत्तौ त्वदुक्तिवैयर्थ्यमित्यर्थः। कस्य पक्षे सा युज्यत इति निरूपयितुमिति। अनिर्वचनीयाज्ञानपक्षे ज्ञानाभावाज्ञानपक्षे तदापि भावान्तराभावपक्षे केवलाभावपक्षे वा निवृत्तिर्युज्यत इति निर्णेतुमित्यर्थः । तां ब्रूहि किं सा

सती उतासती किं वा सदसती ज्ञानमात्रापनोद्या वा। तत्राद्यं दूषयति सा चेत्सतीत्यादिना। अद्वैतवादिनां ह्यज्ञानकृतं सद्वितीयत्वमिति अज्ञान-भावः प्रसज्यते। यदि तथा अज्ञानं न दृष्टं तर्हि तमज्ञानभावं विनापि सद्वितीयत्वं स्यादित्यर्थः। यद्युक्तदोषभीत्या आत्मत्वं स्वीक्रियते तत्राह सात्मैव चेदिति। हेत्वपेक्षत्वान्न सदेत्याशङ्क्याह निर्हेतुत्वं चेति। यद्वा। सदा अस्तु को दोष इत्याशङ्क्याज्ञाननिवृत्त्यर्थं श्रवणादिविधानं न स्यादित्याह निर्हेतुत्वं चेति। तर्हि सद्धेतुरस्त्वित्यत आह सद्धेतुत्वेऽपीति। आत्मनो-ऽपि तन्मात्रत्वेन सद्धेतुत्वादनाद्यज्ञानानाश्रयत्वं स्यादित्यर्थः। यदि तदा-श्रयत्वनिर्बन्धस्तत्राह सादित्वं वेति। किंच सादेस्सर्वस्याज्ञानकार्यत्वा-दात्मनोऽपि सादित्वे तत्कार्यत्वं स्यात्। ततश्च कारणं कार्याश्रितमिति विपरीतं स्यादित्याह अनित्याश्रयमिति। द्वितीयमनूद्य दूषयति अथाभाव इत्यादिना। अज्ञाननिवृत्तेरसल्लक्षणाया आत्ममात्रत्वे आत्मवत्सदा सद्भावस्स्यात्। आत्मधर्मत्वे तस्य धर्मस्य धर्मिणस्सकाशाद्भेदे सद्वितीयत्व-मतद्धर्मत्वं च स्यात् अभेदे सदा सद्भावस्स्यादित्यादिदोष उक्त इत्यर्थः। तृतीयं प्रत्याह तथा सदसत्त्वे चेति। सदसद्रूपायास्तस्या आत्मनोऽन्यत्वे सद्वितीयत्वमनन्यत्वे चाज्ञानं न स्यादित्यर्थः। किंच विरोधात्सदसद्रूपं वस्त्वेव नास्तीत्याह न च तदिति। चतुर्थं दूषयति अनिर्वचनीयत्व इति। ... नाप्नोति। ज्ञानासंभवप्रसङ्गादित्यर्थः। सत्त्वादिपक्षे दूषणान्तरमाह किंचेत्यादिना। नन्वज्ञानस्यानिर्वचनीयत्वात्तन्निवृत्तेस्सत्त्वमसत्त्वं सदसत्त्वं वा यदि न संभवति तर्हि त्रितयविलक्षणप्रकारान्तरमस्त्वित्यत आह न चान्य इति। अनिर्वाच्यत्वे दोषान्तरमाह न च तदेवेति। निवृत्ति-निवृत्तिमतोर्वैलक्षण्यप्रसिद्धिविरोधादित्यर्थः। ननु यथा परेषां भाव-निवृत्तिर्भावान्तरं यथा वा सत्यस्य घटस्य ध्वंसस्सत्यस्तथा अनिर्वाच्याज्ञानस्य निवृत्तिरनिर्वाच्यान्तरमस्त्वित्याशङ्क्याह न चानिर्वचनीयान्तरमिति। ... ज्ञानहेतुकत्वायोगप्रसङ्गादपि नानिर्वचनीयत्वमित्याह ज्ञानहेत्विति।

**[Page 84]** न केवलमनिच्छैव किंच विरोधोऽप्यस्तीत्याह अनादि चेति । अज्ञानस्यानादित्वात्तादेरज्ञानान्तरस्यानङ्गीकारादज्ञानकार्यस्य चाज्ञानमात्रहेतुकत्वात् अनिर्वचनीयस्य ज्ञानहेतुकत्वं विरुद्धमित्यर्थः । अज्ञाननिवृत्तेरनिर्वाच्यत्वे दूषणान्तरमाह तन्निवृत्तेश्चेति । अज्ञाननिवृत्तेरनिर्वचनीयत्वे तात्त्विकत्वं न स्यात् । ततश्च अतात्त्विकनिवृत्तिप्रतियोगिचैतन्यस्येवाज्ञानस्यापि तात्त्विकनिवृत्तिर्न स्यादित्यर्थः । कादाचित्कत्वे सत्यनिर्वचनीयत्वादज्ञानोपादानकत्वं च स्यादित्याह अज्ञानहेतुत्वं चेति । तस्मादज्ञाननिवृत्त्यन्यथानुपपत्त्या नानिर्वचनीयमज्ञानमित्याह अतोऽनिर्वचनीयस्येति । किंच भावाभावयोरेव लोके प्रसिद्धिर्न त्वनिर्वाच्यस्य । तस्मादज्ञानमपि भावोऽभावो वा स्यादित्याह प्रसिद्धेश्चेति । नन्वज्ञानं नाभावः ख्यायमानत्वादित्युक्तं तत्राह अभावश्चेति । किमिति न तुच्छ इत्याशङ्क्य तुच्छस्याप्रमेयत्वादित्याह अप्रमेयत्वेति । यदा । अभावस्याप्रमेयत्वप्रसङ्गादित्यर्थः । अन्यथा तद्व्यवहारेति । भ्रान्तिविकल्पप्रत्ययाभ्यामगम्यत्वात्प्रमाणस्याप्यभावे भावव्यवहाराभावप्रसङ्ग इत्यर्थः । नन्वज्ञानस्य अभावत्वे निवृत्तिप्रतियोगिकत्वमनुपपन्नमभावस्याभावीयप्रतियोगित्वायोगादित्यत आह तस्य चेति । यच्चोक्तं भावाभावप्रमाणागम्यत्वेनानिर्वचनीयत्वं तत्राह ज्ञानाज्ञानयोश्चेति । अस्त्वनुपपत्तिस्ततः किमित्यत आह न हि तामिति । अज्ञानं ज्ञानाभाव इत्यङ्गीकृत्य तन्निवृत्तिर्ज्ञानोदय एवेत्युक्तम् । भावपक्षेऽपि तथैवेत्याह यदा त्विति । ननु तर्हि घटोऽपि भावान्तरत्वादज्ञाननिवृत्तिस्स्यादित्याशङ्क्यपूर्वं ज्ञानलक्षणाज्ञानस्य स्वाश्रयात्मन्युत्तरावस्थारूपज्ञानमेव निवृत्तिरित्याह ज्ञानभावेऽज्ञाननिवृत्तिप्रसिद्धेरिति । ··· यच्च ज्ञानमात्रापनोद्यत्वेनानिर्वाच्यत्वं प्रपञ्चितं तन्निराचष्टे अतो नात्रेति । शक्तिशेषनाशो दाहः । आत्यन्तिकोच्छित्तिर्निवृत्तिः । **[Page 85]** ननु ज्ञानस्य प्रकाशत्वे सति अभावनिवर्तकत्वात्प्रदीपस्येव स्वाभावातिरिक्ताज्ञानतमोनिवर्तकत्वं स्यादित्याशङ्क्यासिद्धो हेतु-

रित्याह स्वाभावस्यापीति। ··· ननु न बोधकत्वमात्रेण बाधकत्वप्रसिद्धि-र्घटते सर्वज्ञानानां बाधकत्वप्रसङ्गात् अतो भ्रमप्रतिपन्नस्य निवृत्तिं कुर्या-दित्याशङ्क्याह यदि कुर्यादिति। विमतं नानिर्वाच्यं निवृत्तिमत्त्वात् घटादिवदित्यर्थः। एवं च सति दृष्टान्ताभावेन मिथ्यात्वानुमानं न घटत इत्याह आद्यन्तवत इति। ननु तर्हि ज्ञानान्मोक्षसिद्ध्यन्यथानुपपत्त्या बन्धमिथ्यात्वमित्याशङ्क्य ज्ञानस्य तद्धेतुत्वायोगान्नैवमित्याह सर्वस्य सत्त्वा-दिति। यत्तु वेदान्तैकदेशिनः कर्मसमुच्चितं ज्ञानं बन्धनिवर्तकमिच्छन्ति तत्राह ज्ञानस्य त्विति। ··· सदसत्सदसत्तद्वैलक्षण्यावच्छिन्नज्ञानमात्राप-नोद्यरूपानिर्वचनीयविलक्षणं पञ्चमप्रकारमादाय परिहरति नायं दोष इत्यादिना। अज्ञाननिवृत्तेरसंभव एव एकनिमित्तं यस्य स तथोक्तः। स दोषराशिः प्रकारान्तरसंभवे न भवतीत्यर्थः। ··· **[Page 86]** नन्वनिर्वच-नीया निवृत्तिर्निर्वाच्यस्य न दृष्टेत्याशङ्क्याह अनिर्वचनीयापीति। नित्य-पदार्थानां निवृत्तिरनिर्वचनीयातिरेकेण न संभवति सत्त्वे बाधायोगादसत्त्वे ख्यात्ययोगादित्यर्थः। नन्वनुरूपा चेन्निवृत्तिर्वक्तव्या तर्ह्यनिर्वाच्याज्ञानमेव तादृशाज्ञानस्यानुरूपा निवृत्तिरस्त्वित्याशङ्क्य परिहरति तर्हि तदेव तस्येत्यादिना। ननु यदि निवर्त्यमेव तन्निवृत्तिर्न भवति तर्हि तत्सजातीय-मन्यदेव निवृत्तिरस्तु इत्याशङ्क्याह अत एव नान्यदिति। प्रदीपप्रकाश-हेतुकतमोनिवृत्तिर्यथा न तमोऽन्तरं तद्वज्ज्ञानप्रकाशहेतुकाज्ञाननिवृत्तिर्न निवर्त्यसजातीयाज्ञानमित्यर्थः। अत्र चाज्ञाननिवृत्तेस्तादृशमेवानिर्वाच्यत्वं खण्ड्यते यादृशमज्ञानस्य ज्ञाननिवर्त्यत्वेनानिर्वाच्यत्वम्। न तु सर्वथा वास्तव-रूपेण निरूपणासहत्वम्। इतरथा मिथ्यात्वानुमानभङ्गप्रसङ्गात्। अष्टमा-ध्याये चानिर्वचनीयत्वाङ्गीकाराच्च। ··· तस्मान्नेह नानास्ति किंचनेति श्रौतनिषेधेन आत्मातिरिक्तस्य अवस्तुत्वावगमात्पञ्चमप्रकारा निवृत्ति-र्मिथ्येत्येव रहस्यम्। न च मिथ्याभूतस्याविद्यातत्कार्ययोरन्यतरत्वनियमः अविद्यासंबन्धजीवविभागादौ व्यभिचारादिति द्रष्टव्यम्। ज्ञानहेतुकत्वा-

देव शून्यत्वमपि निराकरोति नापि शून्यमिति । अर्थक्रियारहितत्व-साम्याच्छून्यमेवास्त्वित्याशङ्क्य अनर्थहेतुज्ञानविरोधित्वज्ञानहेतुकत्वप्रति-योगिकत्वरूपविशेषस्य विद्यमानत्वान्नैवमिति परिहरति शून्यादित्यादिना । उक्तप्रकारनिवृत्तौ प्रमाणं पृच्छति अज्ञाननिवृत्ताविति । अज्ञान-निवृत्तिप्रसिद्धिरेव प्रकारान्तरेणानुपपद्यमाना उक्तप्रकारत्वं गमयती-त्यर्थापत्तिरुक्ता । इदानीं प्रमाणप्रश्नोऽपि न घटत इत्याह यस्य स्वरूपे-ऽपीति । यस्मादज्ञाननिवृत्तिस्सर्वजनप्रसिद्धा तर्कबलाच्च पक्षान्तरशङ्का निरस्ता तस्मादुक्तप्रकारैवेत्युपसंहरति तस्माद्यथेति । उक्तप्रकारात्प्रकारा-न्तरमज्ञानतन्निवृत्त्योर्न संभवतीत्युक्तम् । तत्प्रपञ्चयति न ह्यात्मन इति । ···

**[Page 87]** प्रागभावव्यतिरेकेण [?] ज्ञानाभावपक्षोक्तदोषपरिजिहीर्षया प्रागभावनिवृत्तिर्ज्ञानमिति पक्षं स्वीकरोति अथैतदित्यादिना । एवं तर्हि ज्ञानाज्ञानबहुत्वं न स्यात् आत्मपरिणामस्य तत्प्रागभावलक्षणापरिणामस्य चैकत्वात् । ततश्च विषयान्तरेऽप्यग्रहणाभावाद्युगपत्सर्वाभासस्स्यादिति परिहरति तदा एकस्येति । ··· घटज्ञानस्य पटज्ञानं प्रागभाव इति पक्षा-न्तरं परिगृह्य क्रमपक्षस्योपपत्तिं शङ्कते स्यान्मतमिति । आत्मनो निरंशत्वेन पूर्वपरिणामानुपयुक्तरूपान्तराभावात् क्रमेणाप्यनेकपरिणामो न संभवतीति परिहरति तच्चायुक्तमिति । तस्य रूपान्तरस्येति व्यधिकरणे षष्ठ्यौ । ··· आत्मन एकरूपत्वेन परिणामान्तरोपादानत्वयोग्यरूपान्तराभावान्न क्रम-परिणाम इत्युक्तम् । तत्रैकरूपत्वमसिद्धमित्याशङ्क्याह न हि तस्येति । नन्वेकरूपस्य मृत्पिण्डस्य घटरूपेण परिणतस्य पुनरपि करकादिपरिणामा-न्तराणि दृश्यन्त इत्याशङ्क्य तत्र वायुजलयोरनुप्रवेशतारतम्यान्न कारणस्यैक-रूप्यमित्याह मृदादीनां त्विति । ननु यथा कटकमुकुटकुण्डलाद्यवस्था-स्वनुगतं सुवर्णमात्रं निरंशमेवोपादानं न च कार्यनिवृत्तौ निवर्तते तथा आत्मापि परिणामापगमे नापगच्छति । तस्मात्तदभावेऽभावादित्यसिद्ध-मित्याशङ्कते तदभावेऽप्यात्मेति । तत्र वक्तव्यं किं परिणामपरिणामिनो-

भेद एव उताभेदः किं वा भेदाभेदौ तद्विलक्षणता वा। नाद्य इत्याह न भेदेति। अत्यन्तभेदे नीलपीतादिवत्परिणामपरिणामिभावायोगान्नानयोर्भेदः। ततश्च भेदाभावादात्मा चेदस्ति परिणामोऽप्यस्त्येव। स चेन्नास्ति आत्मापि न स्यात्। ततश्च परिणामाभावेऽप्यात्मा भवतीत्युक्तं न सिध्यतीत्यर्थः। **[Page 88]** नन्वभेदोऽस्तु भावोऽभावो वा सहैव मा भूत् किं बाधकमित्यत आह अन्यथा एकस्यैवेति। सहैव स्यादित्युक्तमेवोपपादयति तथाहीति। ननु परिणामस्य सांशत्वान्न कृत्स्ननिवृत्तिः। अतोऽवशिष्टांशरूप आत्मा भविष्यतीति शङ्कते यद्यप्यात्मेति। निष्ककार्यस्य रुचकस्य निष्कत्ववन्निरंशकार्यस्यापि निरंशत्वान्नाकृत्स्ननिवृत्तिरिति परिहरति तन्नेति। परिणामस्य सांशत्वेनाकृत्स्ननिवृत्तावप्यात्मा न तिष्ठति। तत उत्तरपरिणामानां नात्मपरिणामत्वमित्याह अंशस्थितावपीति। द्वितीयं दूषयति अभिन्नत्वेऽपि तयोरिति। आत्मनः परिणामाभिन्नत्वेन क्षीरस्येव नाशात्परिणामनिवृत्तावप्यात्मा भवतीति न सिध्यतीत्यर्थः। एतेनैव परिणाम एव तिष्ठति नात्मेत्यत्र हेतुरप्युक्तो द्रष्टव्यः। ज्ञानादेर्जन्माभावे निर्विकारत्वमप्यस्मदभिमतमात्मनस्सिध्येदित्याह अतश्चेति। एकपरिणामस्यात्माभेदेऽपि परिणामान्तराणां भिन्नत्वेन जन्मसंभवात्सविकारत्वमित्यत आह सर्वेति। अस्तु निर्विकारत्वं ततः किमित्यत आह अतोऽस्येति। आत्मैव परिणामादभिन्न इत्यङ्गीकृत्य परिणामस्यात्ममात्रत्वं निरस्तम्। इदानीमात्मनः परिणाममात्रत्वं न संभवतीत्याह ज्ञानादात्मन इति। आत्मनस्स्वपरिणामज्ञानादभिन्नत्वे तावन्मात्रत्वेन परिसमाप्तत्वात्पुनः परिणन्तुमात्माभावादेकमेव ज्ञानं स्यात्। यद्यनेकज्ञानेच्छा तर्हि युगपदेवानेकज्ञानानि स्युः। ततश्च परिणाममात्रस्यात्मनः परिणामनाशे नाशस्स्यादित्यर्थः। परिणामभेदपक्षोक्तं दोषमपरिणामेऽप्यतिदिशति एवमज्ञानाख्योऽपीति। अज्ञाननाशे ज्ञानोत्पत्तिस्संभवति किमिति नैकमपि ज्ञानं स्यादित्याशङ्क्याह ज्ञान्यभावादिति।

तृतीयमनूद्य दूषयति आत्मा अज्ञानादिश्चेत्यादिना। [Page 89] नन्वात्मनोऽज्ञानादेश्च स्वात्मापेक्षयापि भेदो नानिष्ट इत्यत आह न च स्वत एवेति। अवध्यवधिमद्भावायोगात्प्रतियोगिधर्मिभावायोगादित्यर्थः। इतश्च नाभिन्नयोरेव भेद इत्याह येन रूपेणेत्यादिना। दिगम्बरादिमतं चतुर्थविकल्पमनुवदति न भिन्न इति। किं भेदादेर्निरूपणासहत्वाद्वैलक्षण्यवाचोयुक्तिः किं वा तत्तद्वैलक्षण्यसमुच्चयस्य वस्तुत्वात्। आद्यं प्रत्याह अवस्तु तर्हीति। द्वितीयमनूद्य दूषयति वस्त्वेवेत्यादिना। परस्परविरुद्धानां विधौ समुच्चयविरोधवन्निषेधेऽपि समुच्चयविरोधसाम्यात्। अन्यथा विधिसमुच्चयस्यापि प्रसङ्गात्। अतश्च भेदहीनत्वं चेत् अभिन्नत्वमेवात्मस्वरूपवत् अभेदहीनत्वं चेत् भिन्नत्वमेव घटादिवदित्यर्थः। ··· तर्हीति। अभिन्नाभिन्नत्वात् भेदाभेदहीनत्वादित्यर्थः। ज्ञानादिर्घटादिश्चात्मस्वरूपं ततो भेदाभेदहीनत्वात् आत्मस्वरूपवदिति प्रयोगः। ··· इतरस्यापि स्युरिति प्रसङ्गाभासोऽयं प्रत्यभिज्ञाविरोधादिति शङ्कते ननु ज्ञानेति। ज्ञानाज्ञानयोर्भावाभावाः तेषु घटादयश्च तदभावाश्च तेषां भावाभावेषु इति विग्रहः। यस्मिन् परिणममाने तदेवेदमिति बुद्धिर्न विहन्यते तत्परिणामिनित्यमित्यर्थः। भवेत्प्रत्यभिज्ञाविरोधो यद्यात्मनः प्रत्यभिज्ञाविषयत्वं स्यादिति परिहरति नेति। वस्तुसिद्धिः प्रमाणादेवेति नियमात्प्रत्यभिज्ञामन्तरेण तवापि बौद्धेनाक्षिप्तस्य नित्यत्वस्य सिद्धिर्न स्यादिति शङ्कते प्रत्यभिज्ञानं विनेति। ··· [Page 90] आत्मनोरिव तस्येति। नैयायिकस्याभिमतयोरात्मनोरिवेत्यर्थः। आत्ममनसी न संयोगार्हे निरंशत्वादात्मवदित्यस्य साध्यवैकल्यमाशङ्क्य संयोगस्य कल्पकाभावान्नैवमित्याह न हीति। न च विभुत्वमुपाधिः क्रियादौ व्यभिचरितत्वेन साध्यासमव्याप्तिकत्वादिति मत्वा लोकसिद्धां व्याप्तिमाह सांशयोरेव हीति। किं चात्ममनसी न संयोगार्हे अपरिणामित्वादात्मद्वयवदित्याह नापीति। ननु कार्यानुगुणसंयोगसिद्धये सविकारत्वं सांशत्वं च कल्प्यतामित्याशङ्क्याह

सविकारत्वे इति । किं चात्मा न गुणी अपरिणामित्वात्सत्तावदित्याह सविकाराणामेव चेति । आकाशे व्यभिचारमाशङ्क्याह नाकाशस्येति । आकाशस्यापि जन्मवत्त्वश्रवणात्परिणामित्वमस्तीत्यर्थः । आत्मा न गुणी अजातत्वात्सत्तावदित्याह जातानामेव चेति । परमाणुषु व्यभिचारपरिहारं स्मारयति यदीति । यस्माज्जातानामेव गुणा दृष्टा अत आत्मनोऽपि गुणवत्त्वे जन्मादि प्रसज्येत । यद्येतदनिष्टं तर्ह्यगुणत्वमेवाभ्युपेयमित्याह अत आत्मनोऽपीति । किंच गुणाः किं गुणिनोऽत्यन्तभिन्नाः किं वा अभिन्नाः किं वा भिन्नाभिन्नास्तद्विलक्षणा वा । आद्ये दोषमाह आत्मनश्चेदिति । यद्यतो भिद्यते तत्ततोऽन्यत्रापि सत्तां प्रतीतिं च लभत इति घटादौ व्याप्तिदर्शनाद्गुणानामपि तदुभयं स्यादित्यर्थः । घटादिगुणेषु व्यभिचारमाशङ्क्याह तथान्येषामिति । असमवेतत्वमुपाधिरिति शङ्कते नैताविति । समवायोऽप्यसमवेतश्चेत् समवायिभ्यः पृथक् दृश्यताम् । न चोपलभ्यते स्वातन्त्र्येण । अतो न साध्यसमव्याप्तिरिति परिहरति सोऽपीति । अथ सोऽपि समवेतस्तत्राह न चास्तीति । ननु यथा प्रदीपस्स्वव्यवहारे प्रदीपान्तरं नापेक्षते तथा समवायोऽपि स्वसमवेतत्वव्यवहारे समवायान्तरं नापेक्षते । अतस्तस्य स्वपरनिर्वाहकत्वान्नानवस्थेति शङ्कते संबन्धत्वादिति । ··· [Page 91] परिणामानां सिद्धवद्भेदाभावमङ्गीकृत्य दूषणमुक्तम् । दूषणप्रपञ्चस्तु गुणपक्षोक्तो योजनीय इत्याह परिणामानां चेति । परिशिष्टपक्षत्रयेऽपि पूर्वोक्तदोषं स्मारयति न भिन्नाश्चेदिति । ··· इतश्चात्ममनस्संयोगजा ज्ञानादयो गुणा दुर्निरूपा इत्याह आत्ममनसोश्चेति । यदि कार्यानुकूलः कश्चिदतिशयविशेष इष्यते तत्राह विशेषभावे चेति । सातिशयत्वादनित्यत्वादिप्रसङ्ग इत्यर्थः । मनःपरिस्पन्दस्संयोगादेः कादाचित्कत्वनियामक इति शङ्कते आत्मनो विशेषाभावेऽपीति । सर्वेषामात्मनां तत्र तत्र संनिहितत्वाविशेषान्मनःकर्मणि विशेषाभावाच्च तन्निमित्तः संयोगादिस्तेषां सर्वेषां प्रसज्यत इति परिहरति सर्वात्मभिरिति

मनःकर्मणि विशेषं शङ्कते यददृष्टेति । यस्य जीवस्यादृष्टनिमित्तं मनःकर्म तेनैवात्मना संयोगो न सर्वैस्सन्निधिमात्रेणेत्यर्थः । अदृष्टमपि प्रतिनियतं नाद्यापि सिद्धं मनःकर्म हेतुर्यस्य संयोगस्य तज्जत्वाददृष्टस्येति परिहरति अदृष्टमपीति । यस्माददृष्टासाधारण्ये सिद्धे तन्निमित्तमनःकर्महेतुकसंयोगासाधारण्यं सिध्यति तत्सिद्धौ चादृष्टासाधारण्यमिति परस्पराश्रयत्वं अनादित्वकल्पना चान्धपरम्परैव तस्माददृष्टादीनां सर्वपुरुषसाधारण्यात्सर्वैस्सर्वदा च मनस्संयोगस्स्यादित्युपसंहरति ततश्चात्मनामिति । इतश्चाज्ञानतन्निवृत्ती न प्रामाणिके इत्याह आत्मनश्चेत्यादिना । ज्ञानादीनां तद्गुणत्वे ज्ञानाद्यभावानां तद्विशेषणत्वे चाङ्गीकृते इत्यन्वयः। ··· [Page 92] त्वदुक्तः पञ्चमप्रकार एवेति नियमः कुत इत्याशङ्क्य निवर्त्यस्यानिर्वचनीयत्वादित्याह यतोऽप्रमेयत्वादिति । ननु तर्ह्यन्तःकरणस्य प्रमेयत्वात्तदाश्रयेऽज्ञानतन्निवृत्ती प्रामाणिके भविष्यत इत्याशङ्क्याह यस्य त्विति । साध्यमेव प्रतिपादयति तस्य हीति । ··· अज्ञाननिवृत्तिदूषणप्रकारेण संसारनिवृत्तिमपि दूषयति संसारनिवृत्तेश्चेति । सत्त्वे त्विति । संसारनिवृत्तेस्सत्त्वे तु आत्मवत्सदा भावात्सदा संसारनिवृत्तिस्स्यात् । तथा च शास्त्राचार्योपदेशादिवैयर्थ्यमित्यर्थः । ··· अज्ञानस्य निद्राख्यान्तःकरणवृत्तिरूपत्वेन [?] साङ्ख्यैः कार्यत्वमभ्युपेयते। तस्य स्वकारणाद्भेदोऽभेदो वा स्यात्। नाद्य इत्याह किंचेति। कारणात्मना सत्त्वाभावादसत्कार्यवादप्राप्तिरित्यर्थः। द्वितीयेऽपि कारणाभिन्नं वा कार्यं कार्याभिन्नं वा कारणमिति विकल्प्य आद्यं प्रत्याह अभेदे तु कारणे तिष्ठतीति । तथा च कार्यान्तरानुत्पत्तिस्स्यादिति भावः । ननु निवृत्तमपि कारणं पुनरुद्भवतीत्याशङ्क्याह न च पुनरिति। [Page 93] नन्वज्ञानकारणस्यान्तःकरणस्य मूलकारणं प्रधानं विद्यत इत्याशङ्क्याह अस्ति चेदिति । ननु मूलकारणस्यानादित्वान्न नाशो न्याय्य इत्याशङ्क्याह तथा न कारणोत्पत्तिं विनेति। यद्वा। कारणोत्पत्तिमन्तरेण कार्योत्पत्तिवत् तन्नाशमन्तरेण कार्यनाश इत्यत आह

तथा न कारणेति । अभेदे कारणस्यानादित्वमनुत्पत्तिर्वा न स्यादतस्सर्व-नाशस्सर्वोत्पत्तिर्वा स्यादित्यर्थः । किं चाभेदे सर्वानुत्पत्तिस्स्यात्कारणो-त्पत्त्यसंभवादित्याह न च कारणस्योत्पत्तिरिति । तदनुत्पत्तौ कारण-कारणानुत्पत्तावित्यर्थः । किंच सर्वाभेदोऽप्यापद्येत इत्याह कारणा-त्कार्याणामिति । द्वितीयविकल्पं दूषयति अन्यथा कारणस्यापीति । कार्याभिन्नरूपेण भेदोऽप्यस्तु को दोष इत्याशङ्क्याह न चैकस्येति । ... अज्ञाननिवृत्तिपूर्वपक्षदशायां रूप्यमज्ञानजं न भवतीति यदुक्तं तत्राह रूप्यादेश्चेति । यद्वा । अज्ञाननिवृत्तेरुक्तप्रकारत्वेऽपि रूप्यादि-कार्यनिवृत्तेर्वस्तुत्वमित्यत आह रूप्यादेश्चेति । [Page 94] ज्ञान-निमित्तेति । ज्ञाननिमित्तत्वाच्च रूप्यादिनिवृत्तिरज्ञाननिवृत्तिरेवेत्यर्थः । किमिति ज्ञाननिमित्तत्वादज्ञाननिवृत्त्यात्मकत्वमित्यत आह ज्ञानं ह्यज्ञान-मेवेति । अन्यथा अतिप्रसङ्गादिति । घटादिकमपि निवर्तयेदित्यर्थः । ... कुतो न संभवतीत्यत आह अर्थेति । अर्थबोधनमात्रमेवास्य स्वरूपम् । ततस्तद्व्यतिरिक्तव्यापाराभावान्नास्य बाधकत्वसंभव इत्यर्थः । ननु यथावद्वस्तु-बोधनेनैव बाधकं न तु निवर्तनेनेत्याशङ्क्याह न च बोधनमेवेति । ननु ज्ञानस्यार्थबोधनमात्ररूपेण जायमानस्य जन्मातिरिक्तव्यापाराभावात् भावे चार्थबोधनमात्रात्मकत्वादित्यत्र मात्रशब्दविरोधान्नाज्ञाननिवर्तकत्वसंभव इत्याशङ्क्याह निवर्तकं त्विति । अनिवृत्तप्रागभावस्य ज्ञानस्य निवृत्ति-कारणत्वायोगात् स्वसत्तालाभमात्रेण स्वभावविशेषादवान्तरव्यापाराद्वा ज्ञाननिवर्तकत्वं न तु प्रधानव्यापारान्तरेण नाप्यर्थबोधनरूपव्यापारेण । तच्च लोके प्रसिद्धमिति नात्र प्रमाणमन्वेषणीयम् । संभावितं च तमः-प्रकाशदृष्टान्तेन स्वविरोधिहन्तृत्वं ज्ञानस्येत्यर्थः । भवत्वज्ञानं ज्ञाननिवर्त्यं रूप्यादेः किमायातमित्याशङ्क्याज्ञानात्मकत्वं सिध्यतीत्याह रूप्याद्यपीति । निवर्तकत्वेन बाधकत्वं समर्थयितुं बोधनमेव बाधनमित्यस्मिन् पक्षे किं बाध्यविषयविज्ञानात्तस्य बाधनं ततोऽन्यार्थविषयज्ञानादेवेति विकल्प्य

क्रमेण निरस्यति बोधनमेव चेदित्यादिना । ननु निवर्तनमेव बाधन-मित्यस्मिन्नपि पक्षे रूप्यज्ञानस्य स्वविषयबोधकत्वं घटादिज्ञानानां बाधकत्वं चेत्युभयप्रसङ्गोऽपि सम इति शङ्कते तुल्यमेतदिति । तत्र तावद्रूप्य-ज्ञानस्य स्वविषयबाधकत्वप्रसङ्गं दूषयति । तन्नेति । रूप्यज्ञानस्य प्राक्सिद्ध-रूप्यविषयत्वेन जायमानत्वाभावान्न तद्बोधकत्वम् । बोधकत्वाभावादेव तन्नान्तरीयकनिवर्तनाभावान्न बाधकत्वप्रसङ्ग इत्यर्थः । घटादिज्ञानानां बाधकत्वं दूषयति तदुभयमिति । न केवलमज्ञानमात्रनिवर्तकं बाधकमुच्यते किंतु कार्यकारणपरिणताज्ञाननिवर्तकम् । ततो नातिप्रसङ्ग इत्यर्थः । यथा अन्नमेवाद्न्निति । यथान्नरूपेण परिणतमृद्भक्षक एवान्नादो न तु केवल-मृद्भक्षकः तद्वत्कार्यरूपेण परिणताज्ञानं निवर्तयदेव बाधकं न त्वज्ञानमात्रं निवर्तयदित्यर्थः । नेदं रजतमिति ज्ञानं केचिद्बाधकमिच्छन्ति । तान् प्रत्याह बाधकादेवेति । साक्षिसिद्धरजताभावस्य परामर्शज्ञानं स्मरणविशेषो न त्वज्ञातरजताभावग्राहि प्रमाणमित्यर्थः । न केवलमप्रमाणत्वादबाधकम-नियतत्वादपीत्याह परामर्शकाभावे त्विति । यदा शुक्तिज्ञानानन्तरमर्था-न्तरव्यासक्तचेतस्तया रजताभावसंस्कारोद्बोधो न भवति तदा उद्बुद्ध-संस्कारादेः परामर्शहेतोरभावे परामर्शज्ञानमपि न भवत्येव । अतोऽननु-गतत्वादपि तस्य न बाधकत्वमित्यर्थः । ननु त्वया चेद्बाधकं विशेष्य अति-प्रसङ्गः परिह्रियते तर्हि ममाप्येवं वक्तुं शक्यत इति शङ्कते नन्वेवमिति ।

**[Page 95]** ननु निवर्तकत्वं इदं नेतीत्यपहारकत्वं वा विना कथं बाधकत्व-मित्याशङ्क्याह तत्पूर्वकं वेति । नान्यत्किंचिदिति । यत् पूर्वमन्यथाख्यातत्व-हीनघटादिभावज्ञानं यच्च तादृशयोरन्योन्याभावज्ञानं तयोः बोधकत्वमेव न बाधकत्वमित्यर्थः । भ्रमपूर्वकं सम्यग्ज्ञानं बाधकमुक्तम् । भवेदेव यदि बाध्यं किंचिन्निरूपयितुं शक्येतेति मन्वानः किं रूप्यस्य बाध्यत्वं तत्संसर्गस्य वा अन्यस्य वा कस्यचिदिति विकल्प्य आद्यमुत्थाप्य निरस्यति कस्य तर्हीत्यादिना । नास्ति तर्हि बाध्यत्वं रूप्यस्य सत्त्वेन अबाध्यत्वादित्यर्थः ।

ननु सतो नास्ति बाध्यत्वमित्येतत्सत्यं रूप्यमपि शुक्तौ नास्तीति बाध्यं भविष्यतीति शङ्कते सत्यं नास्त्येवेति। ननु नास्त्येवेति चेद्बाध्यं तर्हि सद्वादहानिरित्याशङ्क्याह स्वात्मना त्विति। तर्हि किं तदन्यत्र सत् प्रतियोगि किं वा अत्र ख्यातमिति विकल्प्य प्रथमे दोषमाह तर्हि स्वात्मनेति। ... द्वितीयमनूद्य दूषयति अत्रैव शुक्त्यात्मना ख्यातस्ये- त्यादिना। पूर्वं निषेधमङ्गीकृत्य निषेध्यस्य सत्त्वं न सिध्येदित्युक्तम्। इदानीं निषेधोऽपि न घटत इत्याह शुक्त्यात्मना चेत्ख्यातस्येति। ननु त्वयापि शुक्तौ रूप्यस्य बाध्यत्वमिष्यते ततः किमिति मां प्रति तस्य बाध्यत्वं दूषयसीत्याशङ्क्य अस्मदभिमतनिवर्त्यत्वस्य त्वयानङ्गीकारात् [?]। निषेध्यत्वं हि त्वया बाध्यत्वमभ्युपेयते। निषेधश्च तस्य नास्ति। तस्मात्तस्य बाध्यत्वं दूष्यत इत्याह निषेधो हीति। यद्वा। निषेधासंभवोऽस्तु ततः किमित्यत आह निषेधो हीति। निषेधश्चास्य नास्तीत्युक्तम्। तत् व्याप्तिपुरस्सरं प्रपञ्चयति यद्धि यद्रूपमित्यादिना। **[Page 96]** व्यभिचारशङ्कापाकरणाय विपक्षे बाधकमाह यस्मिन् देश इति। ... ज्ञानप्राप्तत्वादुभयमविरुद्धमित्या- शङ्क्याह अविरोधे त्विति। ... **[Page 97]** यदन्यथाख्यातिवादिना- मन्यथाबोधकत्वेनाभिमतमप्रामाण्यं तद्दूषयितुं पृच्छति कथं च रूप्यज्ञान- स्येति। ... बाध्यासिद्धेर्बाधकासिद्धिरित्युक्तम्। तत्र प्रसिद्ध्यवष्टम्भेन शङ्कते नन्विति। किंकृतः केन प्रयोजकेन कृत इत्यर्थः। यद्यपि बाध्यबाधक- प्रसिद्धिरस्ति तथापि प्रयोजकान्वेषणे किमन्यथाबोधकत्वं बाध्यत्वे प्रयोजकं किं वा विरुद्धार्थत्वं किं वा पूर्वभावित्वमुत निषेधात्मकत्वमाहोस्विन्मिलितं सर्वमिति विकल्प्य नाद्य इत्याह तथापि नान्यथाबोधनादिति। द्वितीय- मनूद्य निरस्यति विरुद्धार्थत्वादित्यादिना। **[Page 98]** ननु यद्यपि पूर्वस्योत्तरविरुद्धार्थत्वेनोत्पत्तिर्नास्ति तथापि तयोर्भावाभावविषयत्वेनार्थतो विरोधोऽस्ति। तथा च पूर्वस्य बाध्यत्वमित्याशङ्क्य तर्ह्युत्तरस्यापि बाध्यत्वं स्याद्विरुद्धार्थत्वाविशेषादिति परिहरति तथाप्यर्थेत्यादिना। उत्तरस्य

अबाध्यत्वे पूर्वस्यापि बाध्यत्वं न स्यादविशेषादित्याह न चेन्नैकस्यापीति । एतदेव चोद्यपूर्वकं स्पष्टयति बाध्यस्येत्यादिना । तृतीयमुद्भाव्य तर्हि नेदं-रजतमिति-ज्ञानोत्तरकालभाविनो रजतज्ञानस्य बाधकत्वं स्यादिति परि-हरति पूर्वं बाध्यमित्यादिना । ननु तदपि तदुत्तरकालभाविना नेदं रजतमिति ज्ञानेन बाध्यत इति न बाधकमिति शङ्कित्वा तथापि बाधकलक्षणस्य विद्यमानत्वाद्बाधकं च स्यादिति परिहरति तदप्युत्तरेणे-त्यादिना । न केवलं पूर्वेषामेव नेदं रजतमिति ज्ञानानां रूप्यज्ञानबाध्यत्वं किं तूत्तरेषामपि तदुत्तरकालमपि इदं रजतमिति ज्ञानस्य संभवादित्याह एवमुत्तरेषामपीति । फलितमाह एवं च सतीति । ब्रह्मज्ञानस्यैवाबाध्यत्वं प्रपञ्चज्ञानस्य बाध्यत्वमेव स्यादित्यर्थः । चतुर्थमनूद्य निषेधात्मकत्वेऽपि विरुद्धार्थत्वेन बाधकत्वं तच्च रूप्यज्ञानस्याप्यस्तीति परिहरति रूप्य-ज्ञानस्येत्यादिना । ननु विरुद्धार्थत्वे सति निषेधात्मकत्वं बाधकत्वे प्रयोजकमित्याशङ्क्य तर्हि व्यवधानात् निश्चलत्वादिति लिङ्गाभासनाच्च नायं पुरुषो न जीवतीति वा भ्रमः पूर्वप्रत्ययविरुद्धार्थत्वे सति निषेधात्मकत्वा-द्बाधक एव स्यादित्याह नायं पुरुष इति । ... जीवतिप्रत्ययबाधोऽस्तु ततः किमित्यत आह अतश्चेति । कालभेदेन विरोधादिरुद्धार्थत्वविशेषणं दृष्टान्ते नास्तीति शङ्कते ननु पुंस इति । तत्प्रत्ययेषु च निवृत्तेषु इति विपरिणामेनानुषङ्गः । **[Page 99]** पुंसो जीवने निवृत्ते तत्प्रत्ययेषु निवृत्तेषु जीवनस्योपलब्धियोग्यस्यानुपलब्धौ जीवनाभावज्ञानं तत्र दृष्टान्ते भवतीति जीवनाजीवनयोः कालभेदेनाविरोधस्तत्रोच्यते चेत् तर्हि रूप्या-भावज्ञानमप्यनुपलब्धिजन्यं अभावज्ञानत्वात्संप्रतिपन्नाभावज्ञानवत् । अतः कालभेदेनाविरोधाद्व्यापकं लक्षणमिति परिहरति एवमत्रापीति । तज्ज्ञाने चासति चेत्यनुवृत्तिः । विरोधे दोषमाह अन्यथेति । रूप्ये तज्ज्ञाने चासति जायमानमभावज्ञानं पूर्वभावविरोधि चेत्तर्हि दृष्टान्तेऽपि जीवनाभावज्ञानविरोधात्पूर्वमपि जीवनं न स्यात् अन्येषां च विनाशिनां

पूर्वसद्भावो न स्यादित्यर्थः। पूर्वं विरोधमभ्युपगम्य विरुद्धार्थत्वादि अप्रयोजकमुक्तम्। इदानीं विरोधोऽपि निरूपयितुं न शक्यत इत्याह कस्येति। इदं रजतं नेदं रजतमिति ज्ञानयोस्स्वस्वविषयाबाधकत्वाद्विरोधो नास्तीत्यर्थः। नन्वेकस्मिन् भावरूपधर्माणामविरोधात् तज्ज्ञानानामप्यविरोधस्स्यात्। एकस्मिन्नेव पुरोवर्तिनि रूप्यस्य भावाभावयोर्विरोधात् तज्ज्ञानयोर्विरोधस्स्यादेवेति मन्वानश्चोदयति नन्वेकस्याप्यनेकानीति। रूप्यभावाभावयोरिदमंशे दृष्टिरस्ति वा न वा। अस्ति चेत् एकस्मिन्नपि तयोर्दृष्टत्वेन संभवात्तज्ज्ञानयोर्न विरोधः नास्ति चेत् तज्ज्ञानयोरभावादेव न विरोध इति परिहरति तन्नेति। एतदेव विशदयति तौ चेदिति। एवं भावाभावयोर्दृष्टावदृष्टौ च भावाभावज्ञानयोरविरोधमुपपाद्य ज्ञेययोरविरोधं दर्शयितुं पुनश्शङ्कते नन्वनेकान्यपीति। नान्यत्र दृष्टमेवान्यत्र दृश्यतेऽनवस्थानात्। अतः (प्रतीत्यनुसारिणौ) ज्ञानद्वयानुसारेण भावाभावौ रूप्यस्यैष्टव्याविति परिहरति नायं दोष इति। यच्चानेकानि भावरूपाणि संभवन्तीत्युक्तं तदपि प्रातीतिकमेव न यौक्तिकमित्याह भावरूपैरपीति। कुतो न न्यायत इत्यत आह एकमिति। [Page 100] एकस्यानेकरूपत्वाभावे हेतुर्भावात्मना एकरूपैरपीति। संभवतितरामित्युक्तातिशये हेतुमाह द्वैरूप्येति। भावत्वे भेदायोगाद्रूपाणामपि [?] तत्र नानेकत्वं घटते। अत्र तु भावाभावत्वेन वैलक्षण्याद्रूपभेदसंभावनाप्यस्तीत्येकस्य द्विरूपत्वं सुतरां संभवतीत्यर्थः। अन्यत्र भावाभावयोस्सहादर्शनमभ्युपगम्याविरोधोऽभ्यधायि। इदानीं भेदाभेदवादे घटादिकं मृदादेर्भिन्नं भवति नेति एकस्य भेदस्य भावाभावौ सह दृष्टावित्याह किंचेत्यादिना। ननु भेदाभेदवादिनोऽप्येकरूपे वस्तुनि भावाभावसहभावो नेष्ट इति शङ्कते येन रूपेणेति। रूपद्वयद्वारकमपि भिन्नाभिन्नत्वमेकस्यैव रूपिण इति सिद्धो दृष्टान्त इति परिहरति तथापीति। ननु सोऽपि रूपी नैकरूपो रूपान्तरसद्भावादित्याशङ्क्याह रूपान्तरेति। रूपान्तराभ्यामपि भिन्नाभिन्नत्व-

मेकस्यैव स्यात्तत्रापि रूपान्तरभावे ततो भिन्नाभिन्नत्वमेकस्य स्यात् तत्परिहाराय पुनश्च रूपान्तरमित्यनवस्थेत्यर्थः। एकं रूपमिति पाठे स्पष्टोऽर्थः। ननु भेदाभेदयोर्न भावतन्निषेधत्वं किंतु उभयोरपि भावधर्मत्वमेव। तस्माद्भावाभावयोस्सहभावो न दृष्ट इति चोदयति नन्वभिन्नमिति। धर्मिणो भेदाभेदधर्मकत्वेऽपि भेदाभेदयोर्भेदान्तरधर्मासंभवात्स्वरूपेणैव भिन्नत्वमस्ति नास्ति वेति वक्तव्यम् [?]। ततश्च भावाभावावेकत्र स्यातामिति मयोक्तं सिध्येदिति दर्शयितुं पक्षान्तरं प्रतिक्षिपति तौ भेदाभेदाविति। ननु भेदाभेदधर्मयोरपि वस्तुनस्तुकाशाद्भेदाभेदौ धर्माविव न तु भावाभावावित्याशङ्क्याह धर्मान्तरेति। उक्तदोषपरिहारायानेकान्तवादमाशङ्कते न भिन्नाविति। ननु भेदाभेदौ धर्मिणस्तुकाशादभेदरहितत्वात् ततो भिन्नौ यथा परस्परं यथा वा अन्यत इत्यत आह न च मिथ इति। नञर्थनिरूपणेनानेकान्तवादं दूषयति अभेदशब्दे नञ इति। तदन्यतद्विरुद्धपक्षे भेदाभेदयोः परस्परभेदो नास्तीत्युक्तमयुक्तं स्यादित्यभिधाय तदभावपक्षे मम दृष्टान्तस्सिद्ध इत्याह भेदाभावश्चेदिति। ततः किं फलितमित्याशङ्क्याह एवं च सतीति। अत्र स्वशब्देन स्वयंशब्देन च धर्मिवस्तूच्यते। ··· प्रकृते योजयति इति सर्वस्येति। तज्ज्ञाने रूपभावाभावज्ञाने न स्तो न चेत् स्त एव चेत् किमिति ज्ञानानुसारेण नेच्छसीत्यर्थः। **[Page 101]** भावाभावावेकत्रानभ्युपगच्छतो भेदाभेदवादत्यागस्स्यादिति दोषमाह अथ रूप्येति। तौ भावाभावावेकत्रानिच्छतस्तव तस्य भेदाभेदाग्रहस्यासिद्धेरित्यर्थः। एकस्यैकत्र भावाभावानभ्युपगमेऽपि भेदाभेदपक्षस्तेत्यतीति शङ्कते न त्यजामीति। तं भेदाभेदवादाग्रहं न त्यजामि भावरूपधर्मद्वयवत्त्वात् तौ च भावाभावौ नेच्छामीत्यर्थः। तत्र हेतुः न हीति। यच्चाभेदपदे नञो विरुद्धार्थत्वमाशङ्क्य दूषितं तदपि व्यर्थमित्याह नापीति। ननु भेदादन्यत्वाङ्गीकारेऽप्यभेदस्याभावत्वं न निषिद्धं स्यात् अभावस्यापि भेदादन्यत्वादित्याशङ्क्याह सन्नेवेति। भावरूप

एवेत्यर्थः। नन्वभेदस्य भेदादन्यत्वमेव न भवति किं त्वनन्यत्वमप्यस्ति। ततश्च भेदाभेदयोर्भिन्नाभिन्नत्वे धर्मान्तरासंभवात्स्वरूपेणैव भावाभावात्मता वक्तव्येत्युक्तं सिध्यतीत्याशङ्क्य तदप्यसंगतमित्याह न चान्यानन्य इति। अयमनयोर्भेद इत्येव प्रतीतेरित्यर्थः। भेदादन्य एवाभेद इत्यस्मिन् पक्षे भावरूपधर्मद्वयवत्तदपि [?] न सिध्यतीति परिहरति एवं तर्हीति। अभेदस्य भेदादन्यत्वेनाभेदहीनत्वाद्भेदाभेदहीनयोः परस्परभेदस्येष्टत्वाद्भेदवस्तुनोरपि भेदाभेदाङ्गीकारे भावाभावयोरेकत्वाभ्युपगमप्रसङ्गादभेदहीनत्वं वाच्यम् [?]। ततश्चाभेदहीनत्वाद्भेदवस्तुनो भेदाभेदवदत्यन्तभिन्ने स्याताम्। तथा च सति भेदवस्तुनोर्न धर्मिधर्मभावस्स्यादित्यर्थः। एवमभेदोऽपि वस्तुनोऽत्यन्तभिन्नस्स्यात् अभेदहीनत्वाद्भेदवत्। अत एवातद्धर्मश्च स्यादित्याह एवमभेदस्यापीति। यत एवं धर्मद्वयवत्तयापि भेदानुपपत्तिरतो भावाभावात्मतानभ्युपगमे भेदाभेदवादहानिरिति युक्तमेवोक्तमित्याह अतो नास्तीति। नन्वभेदहीनत्वाद्धर्मापेक्षया भेदानुमानं भेदभावाद्वस्त्वन्तरवद्धर्मधर्मित्वाभावानुमानं च रूपरसादिष्वनैकान्तिकमित्याशङ्क्याह एवमतोऽन्येऽपीति। मदुक्तं सिद्धं भावाभावात्मत्वं सिद्धमित्यर्थः। नञोऽर्थत्रयोक्तदोषपरिजिहीर्षया मतान्तरं शङ्कते नन्वभेदेति। नञ्समासत्वे भेदाभेदयोः परस्परभेदस्य दुर्वारत्वादनवस्था स्यात्। अतस्तयोः परस्परभेदरहितत्वात्तद्दृष्टान्तेन धर्मिणोऽपि तयोर्भेदानुमानप्राप्तातद्धर्मत्वपरिहाराय [?] भेदाभेदाङ्गीकारप्रसङ्गहेतुकभावाभावात्मता न सिध्यतीत्यर्थः। ननु शौक्ल्यादिधर्माणां भिन्नाभिन्नत्वेन धर्मधर्मित्वदर्शनात् तदभावे कथं भेदाभेदयोर्धर्मत्वं स्यादित्याशङ्क्याह नाप्यन्येषामिति। शुक्लो घट इति सामानाधिकरण्यस्य धर्मधर्मिभावसंबन्धालम्बनत्वात् भेदाभेदयोस्त्वाप्रतिभानादित्यर्थः। यस्मात्क्वापि भेदाभेदनिबन्धनो धर्मधर्मिभावो न दृष्टस्तस्मादभेदाभावेऽपि धर्मत्वप्रत्ययबलाद्भेदानङ्गीकाराच्च भेदाभेदयोर्धर्मत्वं न विरुध्यत इत्याह अतोऽनयोस्तेषां च धर्मत्वमपीति। कथं तर्हि भेदाभेद-

वादसिद्धिरित्याशङ्क्याह अतो धर्मिणामेवेति । धर्मिणोरेवान्योन्यापेक्षं धर्मद्वयवत्तया भिन्नाभिन्नत्वं न तु भावाभावरूपतया । तत एकस्य भावाभावात्मत्वदोषस्त्वदुक्तो न स्यादित्यर्थः । तदेतन्मतान्तरं दूषयति तच्चायुक्तमिति । ननु भेदाभेदधर्मैकवस्तुभावप्रसङ्ग इत्येतद्विरुद्धमुच्यते धर्मिणां मिथो भेदाभेदाभ्युपगमादित्याशङ्क्य अभ्युपगतहानप्रसङ्गो दोष इत्याह न हि मिथ इति । धर्मिणां मिथो भेदाभेदाभ्युपगमेऽपि तद्धर्मत्वेनाभिमतानां भेदाभेदादीनां धर्मित्वेनाभिमतेभ्यस्त्वकाशाद्भेदाभेदासंभवात्तेषां धर्मधर्मिभावो न स्यात् यत्र न भिन्नाभिन्नत्वं न तत्र धर्मधर्मिभावो यथा न धर्मेषु परस्परमिति व्याप्तिदर्शनादित्यर्थः । **[Page 102]** विपक्षेऽतिप्रसङ्गं बाधकमाह अन्यथेति । भिन्नाभिन्नत्वाभावेऽपि धर्मधर्मित्वाभ्युपगमे सर्वान् धर्मान् प्रति धर्मित्वं स्यात्सर्वधर्माणाम् । तथा घटादिधर्माणां पटादिधर्मत्वं स्यात् भेदाभेदराहित्याविशेषादित्यर्थः । ततोऽस्मिन् पक्ष इति । अभेदशब्दस्यानञ्समासत्वपक्ष इत्यर्थः । धर्मिणामेव परस्परं भेद इति यो भेद उक्तस्स तु भेदः किं धर्मो न [?] तद्रूपरसादीनामेकैको धर्म एवासाधारणधर्मिनिष्ठत्वात् उत भेदस्य सप्रतियोगिकत्वाद्रूपादिभ्योऽन्य इति विकल्पयति अपि चेदं भवानिति । ··· तत्र तावद्द्वितीयं दूषयति यद्यभिन्न एवेति । यस्य यतो भेदो नास्ति तस्य ततोऽभेदस्तत्स्वरूपत्वं च स्यात् यथैकस्य धर्मस्य । स्वतो भेदहीनस्य स्वतोऽभिन्नत्वं स्वस्वरूपत्वं चेतिव्याप्तिदर्शनादेकधर्मव्यतिरिक्तास्सर्वे पदार्थास्ततो भेदहीनास्तदात्मकास्स्युरित्यर्थः । आद्यं दूषयति तथेति । भेदस्य स्वापेक्षया भेदवदभेदश्च नास्तीत्याद्यपक्षे तत्स्वरूपात् भेदलक्षणधर्मस्वरूपात् न किंचिदतिरिच्यत इत्युक्तम् । तत्र को हेतुरित्यत आह ततो भेदाभेदेति । यथा तत्स्वरूपस्य भेदलक्षणधर्मस्वरूपस्य ततो भेदाभेदहीनत्वात्तत्स्वरूपत्वं तद्वदन्यस्यापि सर्वस्य तल्लक्षणत्वात्ततो भेदाभेदहीनत्वात्तत्स्वरूपत्वं सिध्यति । ततस्तत्स्वरूपान्न किंचिदतिरिच्यत इत्यर्थः । आद्यपक्षे भेदाभेदहीनत्वादिति हेतुमात्रमेव

विशिष्यते फलं पुनः पक्षद्वयेऽप्यविशिष्टमद्वैतवादापत्तिलक्षणमित्याह अत उभयोरिति। विजातीयानामेकत्वमयुक्तमित्याशङ्क्योक्तं एकरूपमिति। एकधर्मातिरिक्तधर्मान्तराभावस्योपपादितत्वेन एकरूपत्वाद्वैजात्यं नास्तीत्यर्थः। नन्वेवंविधमपि तत् स्वतो भिन्नाभिन्नं ततो नाद्वैतवादापत्तिरित्याशङ्क्याह तदपि यदीति। एकरूपस्य तस्य रूपान्तराभावात्स्वरूपेणैव भिन्नाभिन्नत्वं स्यादित्यर्थः। ननु पक्षान्तराणामप्यनुपपन्नत्वात्तत्र कथमतिशयवाचीष्टन्प्रयोग इत्याह ननु पक्षान्तरेऽपीति। नन्वभेदस्य भेदाभावत्वेन भावरूपधर्मत्वानङ्गीकारादभेदान्तरानभ्युपगमेनानवस्थाभावाच्च नास्त्यनुपपत्तिरिति शङ्कते अथोच्येतेति। यद्यप्यभेदस्याभावत्वेनाभेदानवस्था नास्ति तथापि भेदस्य भावरूपधर्मत्वात् भेदे भेदाभेदे चानवस्थाप्राप्तेः अभेदे च वस्तुमात्रत्वेनैकस्य प्राप्तेर्धर्मधर्म्यादिभावानुपपत्तिरस्त्येवेति परिहरति तथापीति। आदिशब्देन भेदत्वप्रतियोग्यपेक्षत्वाद्यनुपपत्तिस्संगृह्यते। पक्षान्तरेष्वप्यनुपपत्तिरस्तीत्येतत्सत्यम्। अत एवातिशयवाचीष्टन्प्रयोगोऽनेकानुपपत्तिग्रस्तत्वात्पक्षस्येति परिहरति सत्यमत एवेति। **[Page 103]** एतदेव स्पष्टयति अभेदशब्दस्येत्यादिना। अवयवशक्त्यैवार्थप्रतिपादकत्वसंभवे समुदायशक्तिकल्पनमन्याय्यमिति न्यायविरुद्धमभेदशब्दस्य रूढित्वकल्पनमित्यर्थः। अभेदो नाम भेदहीनतामात्रं प्रतीयते। तस्य भावरूपधर्मत्वकल्पनं प्रतीतिविरुद्धम्। तस्य वस्त्वन्तरापेक्षत्वमपि प्रतीतिविरुद्धम्। न हि घटपटयोरभेदः प्रकाशते। सत्त्वप्रमेयत्वादिना त्वभेदप्रकाशः पक्षान्तरसाधारणः। तथा वस्तुनस्तद्धर्माणां च स्वरूपापेक्षया चात्यन्ताभेदो न भवतीति प्रतीतिविरुद्धम् [?]। तथा वस्तुनो भेदेनाभेदेन च यन्नास्ति तन्निरात्मकमिति व्याप्तिविरुद्धं धर्माणामस्तित्वाभिधानम्। स्वत्वेन परकीयत्वेन च व्यवस्थितानामपि केषांचिद्धर्माणां भेदाभेदहीनतया सर्वसाधारणत्वेन संकरप्रसङ्गश्चेत्यर्थः। पूर्वं पक्षान्तरेऽप्यनुपपत्तिसाम्यमङ्गीकृत्योक्तम्। इदानीं नात्र प्रतिबन्दिग्रहस्यावसरो मम तत्साधनस्य तव वा तद्दूषणस्याप्रस्तुत-

त्वादित्याह न चान्येति । अतस्तत्सिद्धं रूप्यस्य भावाभावत्वं सिद्धमित्यर्थः । प्रासङ्गिकं परिसमाप्य प्रकृतं मध्ये निगमयति प्रमेयाविच्छेदं दर्शयितुं तस्मादिति । तन्निषेधेन रूप्यनिषेधेनेत्यर्थः । रूप्यस्य भेदाद्वैलक्षण्यं शङ्कते अथोच्येतेति । तद्विरोधित्वात् निषेधस्य स्वयमपहाररूपत्वादिति भावः । भवेदिदं वैलक्षण्यं यदि रूप्यमिथ्यात्वं सिद्धं भवेत् । तदसिद्धं चक्रकापत्तेरिति परिहरति कुतस्तर्हीत्यादिना । ... अभेदज्ञानं भेदस्य निषेधकमेव न भवत्यधर्मज्ञानवद्धर्मस्येत्याशङ्क्याह भेदाभेदज्ञाने अपीति । **[Page 104]** ननु भेदाभेदज्ञानयोर्निषेध्यनिषेधविषयत्वमन्तरेणाविरुद्धभावरूपविषयत्वे कथमेकत्रासंभवस्तयोरित्याशङ्क्याह तथाहीति । तत्र ययोरेव धर्मिप्रतियोगिनोर्भेदज्ञानं तयोरेव किमभेदज्ञानमुतान्यत्र । आद्येऽभेदज्ञानत्वेनाभिमतस्यापि समानधर्मिप्रतियोगिविषयत्वेन संप्रतिपन्नभेदज्ञानवद्भेदगोचरत्वादत्यन्तभेदवादस्स्यादित्यर्थः । अभेदज्ञानमपि भावप्रमेयं भवेच्चेदित्यन्वयः । ... एवमाद्यविकल्पेऽत्यन्तभेदस्स्यादित्युक्तम् । इदानीं द्वितीयमुत्थापयति भेदाभेदज्ञानयोरपीति । अत्रापि भिन्नयोरभेदज्ञानं नास्तीति भेदाभेदवादहानिरिति परिहरति तर्हि न भिन्नस्येति । उक्तमेव विवृणोति भिन्नं ह्यपेक्ष्येत्यादिना । अन्यथेति । स्वापेक्षया स्वस्मिन्नभेदज्ञानमित्यनङ्गीकृत्य भिन्नमपेक्ष्य भिन्नेऽभेदज्ञानमित्यङ्गीकारे सतीत्यर्थः । एवं च सतीति । भेदज्ञानं भिन्ने भवति स्वरूपे चाभेदज्ञानं भवतीत्युक्तविषयविभागेऽवश्याभ्युपगन्तव्ये सतीत्यर्थः । यतः प्रकारान्तरेण भेदाभेदवादो न निर्वहत्यतो भेदबाधकत्वमभेदज्ञानस्याभ्युपगन्तव्यमित्युपसंहरति अतस्तदिच्छतेति । भिन्नयोरभेदज्ञानमिच्छतेत्यर्थः । पुनर्भेदाद्वैलक्षण्यं शङ्कते न भेदो बाध्य इति । ... ननु भेदस्यानेकपुरुषदृश्यत्वमस्ति रूप्यस्य तु न तथा । तस्मादस्ति विशेष इत्याशङ्क्य बो[बा ?]ध्यत्वसामान्यान्नैवमित्यभिप्रायेणाह किं बहुनेति । प्रपञ्चस्येति । भेदस्येत्यर्थः । इतस्त्र सत्ख्यातिवादिना रूप्यस्य मिथ्यात्वाद्बाध्यत्वं वक्तुं न

शक्यत इति वक्ष्यन् मिथ्यात्वं तावत्पृच्छति [?] किंचेति। **[Page 105]** प्रमाणहीनत्वं मिथ्यात्वमिति नेत्याह नापीति । शङ्कते ज्ञानं तस्येति । निरस्यति ननु ज्ञानमेवेति । चक्षुरादिषु प्रमाणत्वोक्तिः प्रमाणसाधनत्वाभिप्रायेणेति भावः । उक्ताङ्गीकारेण विशेषं शङ्कते सत्यमिति । ज्ञानं चेत् प्रमाणमेवेत्युपपादयितुमयथार्थत्वं विकल्पयति किमिदमिति । विद्यमानशुक्तित्वलक्षणप्रकारस्याग्रहीतत्वात् ज्ञानस्यार्थापेक्षया न्यूनत्वं अविद्यमानरजतत्वप्रकारस्य गृहीतत्वादाधिक्यमित्यर्थः । तत्राद्यं निरस्यति यदि न्यूनतेति । सर्वेषामपि ज्ञानानां ज्ञेयगतपरिमाणादिसर्वप्रकारविशिष्टत्वेन विषयाग्रहादयथार्थत्वं स्यादित्यर्थः । द्वितीयं दूषयति अथाधिक्यमिति । अविद्यमानरूप्यत्वग्रहणात् ज्ञानस्यार्थशून्यत्वं प्राप्तम् । तच्चानिष्टं निरालम्बनवादनिषेधादित्यर्थः । भ्रमसंपादनाकारतया [?] अंशे निरालम्बनत्वमिष्टमिति चेत्तत्राह अयुक्तं चेति। युक्त्युपेतत्वाभावमेव प्रतिपादयति ज्ञायतेऽर्थ इत्यादिना । ननु शुक्तौ रूप्याभावेऽपि रूप्यज्ञानं प्रत्यक्षं तत्कथमपह्नूयत इत्याशङ्क्याह प्रत्यक्षमपीति । ... प्रत्यक्षमपि प्रत्यक्षं ज्ञानमिति पक्षेऽपीत्यर्थः । यस्य तु फललिङ्गानुमेयं ज्ञानं भाट्टस्य तेन त्वया सुतरामिदं वक्तुं न शक्यत इत्याह अनुमेयं त्विति । अर्थाश्रयं हि प्राकट्यं प्रमातृव्यापाररूपज्ञानानुमाने लिङ्गं भाट्टस्य । अर्थाभावे च तदवच्छिन्नफलाभावादनुमानासंभवादर्थशून्यज्ञानमनुमातुं न शक्यमित्यर्थः । अथानुमानादिष्वर्थाभावेऽपि तत्संविद्दर्शनान्नार्थसमवायि फलं किं त्वात्माश्रयमित्याशङ्क्याह संविदपीति । ... अतः प्रमाणशून्यत्वं नाम मिथ्यात्वं नास्ति रूप्यस्येत्याह अतो ज्ञानमस्ति चेदिति । एवं तावत्प्रमाणशून्यत्वं नाम मिथ्यात्वं रूप्यस्य न संभवतीत्युपपाद्य यदुक्तमसत्त्वं मिथ्यात्वं न भवतीति तद्विवृणोति नेदं रूप्यमस्तीति चेदित्यादिना । ... **[Page 106]** एवं तावदाद्यज्ञानपर्यालोचनया रूप्यस्य मिथ्यात्वे प्रसञ्जिते [?] द्वितीयज्ञानबलेन शङ्कते ननु नेदं रजतमित्यादिचेदित्यन्तेन । ननु रूप्यं शुक्त्यात्मना

नास्तीति यदि निश्चितं तर्हि तदात्मना रूप्यज्ञानमपि नास्त्येव सार्थत्वा-ज्ज्ञानस्येत्याशङ्क्याह तथापि इदं रजतमिति। अस्याभावेऽपीति। रूप्यस्य शुक्त्यात्मत्वाभावेऽपीत्यर्थः। तर्हि ज्ञानद्वयानुरोधेन तस्य रूप्यस्य सदसदा-त्मत्वमेव स्यादिति परिहरति अस्तु तर्हीति। गत्यन्तराभावः कुत इत्यत आह उभयोरपि ज्ञानयोरिति। ज्ञानत्वादर्थशून्यत्वायोगान्नास्ति गत्य-न्तरमित्यर्थः। पूर्वं शुक्तिरूप्यैक्यस्य प्रतिपन्नत्वादसत्त्वमनुपपन्नमित्युक्तम्। इदानीमसत्त्वमङ्गीकृत्यापि मिथ्यात्वादिव्यवहारस्य तद्गतत्वेनैवोपपत्तेर्मिथ्यैव रजतमभावादित्याद्यनुभवसिद्धं रजतमिथ्यात्वादिकं तव न सिध्यतीत्याह यदि नामेति। तस्य ऐक्यस्येत्यर्थः। ननु शुक्तिरूप्यैक्यस्याभावान्मिथ्या-त्वादप्रमाणत्वाच्च तद्गतान्येवाभावादीनि रूप्येऽप्युपचाराद्व्यवह्रियन्ते न तु तस्य तानि सन्त्येवेत्याशङ्क्य तर्हि शुक्तावपि तद्व्यवहारापत्तिः तस्या अपि रूप्यवदसदैक्यप्रतियोगित्वाविशेषादिति परिहरति अथेत्यादिना। ननु तादात्म्यबो[बा ?]धेऽपि शुक्तेस्सत्त्वान्नमिथ्यात्वाद्युपचार इत्याशङ्क्याह सत्त्वं चेष्टमिति। पुनर्विशेषमाशङ्क्य बाधोत्तरं स्वावच्छेदकदेशे शुक्तीदमंशस्येव रूप्यांशस्यापि प्रत्यक्षेण प्रतीतिस्समानेति परिहरति शुक्तेः प्रत्यक्षेणापी-त्यादिना। देशान्तरे दृष्टं रूप्यान्तरमित्याशङ्क्याह अन्यथा तस्येति। अन्यथा अबाध्यरूप्या स्यादिति। देशान्तरे शुक्ते रूप्यात्मकतया दृष्टत्वेन सत्त्वान्नेदं रजतमिति तस्या रूप्यतादात्म्यं न बाध्यं स्यादित्यर्थः। रूप्यमपि तथेति। शुद्धं दृष्टमित्यर्थः। … **[Page 107]** पूर्वं तादात्म्यस्य बाध्यत्वमङ्गीकृत्य रूप्यगतबाध्यत्वादिप्रसिद्धिर्दुरुपपादैवेत्युक्तम्। इदानीं तदपि नास्तीत्याह नापि तयोरैक्यमित्यादिना। … उक्तदोषं परि-हरन् ऐक्यस्यैव बाध्यत्वमुपपादयति पूर्ववादी नन्वैक्यमित्यादिना। …

**[Page 108]** अन्यथेति। ऐक्यज्ञानाक्रान्ते विषये जातं भेदज्ञानं यदि तद्विरोधि तद्बाधकं च स्यात्तदा उत्तरकाले तत्रैव जातमिदं रूप्यमिति ज्ञानं बाधकं स्यादित्यर्थः। आश्रयहीनोऽयं प्रसङ्गाभास इत्याह नन्विति।

अथ दोषवलात्पुनस्सजातीयभ्रमोत्पादो घटते तत्राह भवन्नपीति। शुक्तिरूप्ययोरैक्यं मया ज्ञायत इति ज्ञानाभावान्न पूर्वसिद्धभेदनिश्चय-बाधकत्वमित्यर्थः। एवं वदतो यदि भेदाभेदज्ञानयोर्विरोधोऽभिमत-स्तर्ह्यैक्यनिश्चयवतोऽपीदं रूप्याद्भिन्नमिति ज्ञानं न स्यादिति परिहरति तर्हि ऐक्येति। ... विपक्षे भिन्नाभिन्नं वस्तु न स्यादिति बाधकमाह अन्यथेति। एवं द्वितीयविकल्पस्य द्विधा विकल्पेन निरासं कृत्वा आद्यमनूद्य निरस्यति अथ ज्ञाते भेद इति। घटः पटो न भवतीत्यादिज्ञानानां बाधकत्वप्रसङ्गपरिहारं शङ्कते इतरेतरभावज्ञाने जाते इति। तर्हि किमितरेतरात्मकभावज्ञानगोचर एवाभावज्ञानं किं वा अन्यत्र। तत्रान्त्यं प्रत्याह कथमिति। तस्य भावज्ञानस्यागोचरे वर्तितुं शीलमस्येति तद्-गोचरवर्ति। कथमपहरेत् न कथंचित् परस्परवार्तानभिज्ञत्वाद्घटपटज्ञानव-दित्यर्थः। आद्यं दूषयति यदीति। अभावज्ञानत्वान्न तेन पूर्वस्य दार्ढ्य-मित्याशङ्क्याह भावार्थत्वे चेति। नन्वेकगोचरत्वं न घटते चेन्मा घटीष्ट भिन्नगोचरमभावज्ञानमेव भावज्ञानबाधकमस्त्वित्याशङ्क्य अभावज्ञानत्वा-त्संप्रतिपन्नाभावज्ञानवन्न बाधकमित्याह भिन्नगोचरं चेति। **[Page 109]** दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्यं शङ्कते नन्विति। भावज्ञानविषयावच्छेदक-देशकालापेक्षया देशकालान्तरेऽभावबोधकत्वात्तस्याबाधकत्वमस्य तु तत्रैव बोधकत्वेन विरुद्धत्वाद्बाधकत्वमित्यर्थः। एवं वैलक्षण्येऽपि विवक्षितांशे साम्यमाचक्षाणः परिहरति तथापीति तद्वदेव प्राप्तानुपलब्धावभाव-ज्ञानमिवेत्यर्थः। पुनरपि विकल्पयति अपि चेति। शुक्तेरेव साक्षाद्रूप्य-भावो विरुद्ध इत्यभिप्रायेणाद्यविकल्पः। [इदं रजतं ?] नेदं रजतमिति च ज्ञानद्वयानुसारेण द्वितीयविकल्प इति द्रष्टव्यम्। ... ननु भिन्नत्वेऽपि रूपरसयोरिवान्योन्यभावो न संभवतीत्याशङ्क्य सत्यं स मया नोपपाद्यते किंतु त्वदङ्गीकारमुपजीव्योच्यत इत्याह अतो यदीति। अभिन्ने धर्मि-प्रतियोगिभावहीन इत्यर्थः। ... नन्वितरस्येतरभाव इति विशिष्टप्रत्ययस्य

विशेषणभेदज्ञानसापेक्षत्वं चेत् तर्हीदंरूप्ययोरपि भेदः प्रतीत इति शङ्कते इदं रूप्यांशयोरपीति। ... अंशिनिषेधे दोषान्तरमाह यदि नाशेति। अंशविशिष्टस्यैवांशित्वादंशिनिषेधेन शुक्तिरूप्ययोरपि निषेधस्स्यादित्यर्थः। ननु शुक्तिरूप्ययोः कल्पनयैव तदंशत्वं न परमार्थत इति नांशिनिषेधेऽपि निषेध इत्याशङ्क्याह शुक्तिरूप्ययोरिति। उक्तदोषपरिहाराय विशेषं शङ्कते शुक्तिरूप्ययोरिति। यद्यंशी नाम अंशद्वयसमुदायात्मकस्स्यात्तदा तन्निषेधे तदंशयोरपि निषेधस्स्यात्। न तु तथा। किंतु शुक्तिरूप्याभ्यामितरेतर-भूताभ्यामारब्धोऽन्य एव। स च नेदं रूप्यमितीतरेतरभावनिषेधेन निषेध्यस्तन्तुसंयोगविगमेनेव पटः। ततोऽ'शी नास्तीति निषेधाभावो न दोष इत्यर्थः। **[Page 110]** तद्भानेऽपि अंशिभानेऽपीत्यर्थः। यदि इतरेतरभावनिषेधो बाधस्स्यात्तदा एतच्चोद्यं परिशुद्धं स्यात्। स च न भेदज्ञानेऽज्ञाने च तादात्म्यस्यानुपपत्तेर्निषेध इत्याह न उक्तोत्तरत्वादिति। भेदज्ञानपूर्वकमन्योन्याभावज्ञानं बाधकमित्यस्मिन् पक्षे दोषान्तरमाह अपि चेत्यादिना। ... अभ्युपगम्य भेदज्ञानं बाधासंभवोऽभ्यधायि। तदपि निरूप्यमाणे न संभवतीत्याह कथं चैकत्वेनेत्यादिना। अस्तु प्रतियोग्यपेक्षा किं तत इत्याह अन्यश्चेति। धर्मिणस्सकाशादन्यत्वा-भावे प्रतियोगिनोऽपि धर्मित्वप्रसङ्गादिति भावः। नन्वन्य एव प्रति-योगीत्येतत्सत्यं किं त्वज्ञातो भेदो यस्य स इदमंशो रूप्यस्य भेदज्ञाने प्रतियोगी भविष्यतीत्याशङ्क्याह न चाज्ञातभेद इति। ... ननु येन केनापि प्रकारेण बाधकज्ञानमस्माकं सिषाधयिषितं तत् प्रतियोगि-ज्ञानस्य बाधकत्वेऽपि सेत्स्यतीत्याशङ्कते तर्हीति। **[Page 111]** अत्र धर्मित्वमेव न प्रतियोगित्वमन्यस्य प्रतियोगित्वादन्यस्मिन्नपि प्रतियोगित्व-मेव न तु धर्मित्वं ततोऽन्यस्यान्यधर्मित्वादिति [?] धर्मित्वप्रतियोगित्व-ज्ञानाय भेदापेक्षत्वादनवस्था स्यादिति परिहरति न स्यादिति। इदानीं द्वैतवादिनामभिनिवेशमाशङ्क्य विशेषतः प्रकृते भेदज्ञानासंभवमाह प्रत्यक्षे-

णैवेत्यादिना। अन्यच्च भेदस्य प्रत्यक्षत्वेऽपि प्रकृते न भेदः प्रत्यक्षः प्रत्यक्षाप्रत्यक्षयुगपद्धर्मस्याप्रत्यक्षत्वाद्वायुवनस्पतिसंयोगवदित्यर्थः। ननु संयोगस्योभयधर्मत्वादुभयाप्रत्यक्षत्वे भवेदप्रत्यक्षत्वम्। भेदस्तु प्रतिपदार्थमसाधारणः। ततस्संयोगविलक्षणरूपत्वाद्भेदस्य अन्यतरप्रत्यक्षत्वेऽपि प्रत्यक्षत्वं स्यादित्याशङ्क्याह तच्च यदीति। एकधर्मत्वमनेकधर्मत्वं चेत्येतदप्रयोजकं धर्म्यप्रत्यक्षत्वे तद्धर्मतया न भेदः प्रत्यक्ष इत्यर्थः। ... नन्वपुनरुक्तानेकशब्दवाच्यत्वान्नीलपीतादिवद्भेदोऽनुमीयते तद्वाच्यत्वानुपपत्त्या वा कल्प्यत इत्याशङ्क्य अभेदप्रत्यक्षविरोधात् कल्पितभेदेनापर्यायशब्दवाच्यत्वसंभवाच्च नैवमित्याह नापीति। पुनर्भेदादिज्ञानमभ्युपगम्य तस्याबाधकत्वमाह कथं चेत्यादिना। भेदादिज्ञानं किं साक्षाद्भ्रमं नाशयति उत कारणनिवृत्त्या किं वा विषयाभावबोधनेन। न तावदाद्यौ पक्षौ भ्रमस्य तत्कारणस्य च आत्मादेस्तत्त्ववस्तुत्वात् ज्ञानस्य च वस्तुनिवर्तकत्वासंभवादित्यर्थः। ननु भेदज्ञानस्य स्वप्रमेयबोधकत्वेनैव जातत्वात् न भ्रमनिवर्तकत्वं यद्यपि भवति तथाप्यभावज्ञानस्य प्रसक्तप्रतिषेधरूपत्वेन भ्रमविरोधित्वाद्भवेन्निवर्तकत्वं विरोधिसंनिपाते वस्तुनिवृत्तेरपि लोके दर्शनादित्याशङ्क्याह यदि भेदज्ञानादिति। प्रमेयद्वारकविरोधित्वस्य स्वप्रमेयबोधकत्वस्य च द्वयोरपि समानत्वेन अभावज्ञानस्य ततो वैषम्याभावादित्यर्थः। ननु वस्तुबोधकस्यापि ज्ञानस्य नान्तरीयकमज्ञाननिवर्तकत्वं चेदिष्टं तर्ह्यैक्यं तज्ज्ञानं चान्योन्याभावाज्ञानमेवास्त्विति न वाच्यमित्याह न चाज्ञानमिति। ऐक्यतज्ज्ञानयोरन्योन्याभावाज्ञानत्वस्याप्रसिद्धत्वात् त्वयानिष्टत्वाच्चेत्यर्थः। न केवलमज्ञानत्वानङ्गीकार एव विपरीतवस्तुत्वाङ्गीकारोऽप्यस्तीत्याह वस्तु चेति। तृतीयं विकल्पमनूद्य दूषयति ऐक्यस्याभावमिति। प्रामाणिकस्यैवाभावः प्रमाणग्राह्य दृश्यते। ततश्शुक्तिरूप्ययोरैक्यमपि क्वचिद्वस्तु स्यादित्यर्थः। किं चैक्याभावोऽपि त्वया निरूपयितुं न शक्य इत्याह कश्चेति। असदेव ह्यैक्यं त्वयेष्यते न चासत्संबन्ध्यभावान्तरं प्रमाणभूमौ दृश्यत इत्यर्थः। ननु मा भूदर्था-

न्तरमैक्यं स्वयं नास्तिस्वरूपमिति शङ्कते ऐक्यमेवेति। तत्र यस्य स्वयं-नास्तित्वं तस्य किमैक्यं रूपं किं वा नास्तित्वमात्रमैक्यस्य स्वरूपमिति विकल्पयति कोऽर्थ इति [Page 112] आद्यं निरस्यति न तावदिति। अभावस्य भावान्तरं रूपं न तु प्रतियोगिभूतो भाव एवेति हि भवतो राद्धान्तः। तस्मादैक्याभावस्य ऐक्यमेव रूपं न भवतीत्यर्थः। द्वितीयं निरस्यति नाप्यैक्यमिति। ऐक्यस्य अभावो रूपं न भवति इदं रजतमिति विधिरूपज्ञानविषयत्वान्निषेधरूपज्ञानाविषयत्वाच्चेत्यर्थः।… इतश्चैक्याभाव-बोधनेनाभावज्ञानस्य ऐक्यज्ञानबाधकत्वं न संभाव्यत इत्याह यदि चैक्यमेवेति। ऐक्यस्याभावस्वरूपत्वे अभावस्यैक्यस्वरूपत्वे चाभावज्ञानमप्यैक्य-ज्ञानविषयमेव विषयीकरोति ऐक्यस्याभावत्वात् ततस्तेनाप्यैक्यज्ञानं स्थिरं भवति न तु बाध्यत इत्यर्थः। तदेव ऐक्यमेवेत्यर्थः। यथाज्ञातं पूर्वं यथा ज्ञातं तथैवेत्यर्थः। पूर्वं विधिमुखेन अस्तीति बोध्यत इति बाधकत्वं स्यादिति शङ्कते तदन्यथेति। तत्र किमस्तित्ववन्नास्तित्वमैक्यस्य रूपान्तर-त्वेन बोध्यमुतैक्यादन्यत्वेनेति विकल्प्य दूषयति किं तस्यैवेति। ऐक्यलक्षण-रूपिण्यसति तद्रूपं तदवच्छिन्नं वा अन्यद्बोधयितुमशक्यम्। तस्मादैक्यास्तित्व-रूपस्य न काचित्क्षतिरित्यर्थः। अन्यबोधनपक्षेऽधिकमाह तस्य चेति। अभावज्ञानेनैक्यादन्यस्यैव बोध्यत्वादैक्यस्य अभावज्ञानाविषयत्वं सिद्धम्। तस्मादैक्यस्य सत्त्वमेव स्यादित्यर्थः। नन्विदंरूप्यांशयोरैक्यं हट्टादौ सिद्धमेव। तस्य शुक्तिसंबन्धो निषिध्यत इति शङ्कते सत्त्वेऽपीति। [Page 113] निरस्यति सोऽपीति। सोऽपि संबन्धः पुरोवर्तितया ज्ञातो न वा। न चेत् अप्राप्तनिषेधकत्वान्नीलं न पीतमितिवद्बाधो न स्यात् ज्ञातश्चेत् सन्नेव स्यादित्यर्थः। प्रकृतं संक्षिप्योपसंहरति तस्मादिति। अभाव-ज्ञानं भ्रान्तिनिवृत्तौ यथा नोपयोगि तथा भेदज्ञानमपि नोपयोगीत्याह तथेति। उक्तमर्थमाप्तोक्त्या द्रढयन् संगृह्णाति तदुक्तमिति।… यस्मा-द्रूप्यस्य तत्तादात्म्यस्यान्यस्य वा कस्यचिद्बाध्यत्वं निरूपयितुं न शक्यते

तस्मादित्युपसंहरति तस्मादिति। अन्यथाख्यातिपक्षोक्तं दोषमात्मख्यातिपक्षेऽप्यतिदिशति तथेति। आत्मख्यातिवादिनोऽपि न काचिद्भ्रान्तिस्स्यात् सर्वमेव वा ज्ञानं भ्रान्तिस्स्यादित्यर्थः। तत्पक्षेऽधिकमाह बुद्ध्याकार इति। यस्या बुद्धेः रूप्यमाकारस्स किं तयैव बुद्ध्या सिध्यति किं वा बुद्ध्यन्तरेण। नाद्य एकस्याः कर्मकर्तृत्वविरोधादित्युक्त्वा न द्वितीय इत्याह बुद्धेश्चेति। बुद्ध्यन्तराविषयत्वे हेतुमाह समत्वादिति।… यद्युक्तदोषभीत्या स्वप्रकाशत्वं स्वीकरोषि तत्राह स्वयमिति। बुद्ध्यन्तरस्य स्वस्य चाविषयत्वाद्बुद्धेर्न रूप्याकारत्वसिद्धिरित्यर्थः। ननु स्वपरानधीनप्रकाशत्वं स्वप्रकाशत्वं न भवति किंतु स्ववेद्यत्वम्। अतो रूप्याकारसिद्धिरित्याशङ्क्य तदापि सा बुद्धिर्मदाकारो रूप्यं बहिर्वद्भातीति किं स्वोदय एव जानीयात्किं वा कालान्तरे। प्रथमं प्रत्याह सैव चेद्बुद्धिरिति। रूप्यमिदमिति हि ज्ञात्वा पुरोवर्तिनि प्रवर्तते न तु बहिरिव भातीति ज्ञानादित्यर्थः। द्वितीयं निराचष्टे न च सान्यदेति। स्वसंवेद्यत्वं स्वप्रकाशत्वलक्षणमङ्गीकृत्य दूषणमभाणि। तदप्यसंभवग्रस्तमित्याह न च सा स्वात्मानमिति। स्वस्य स्वस्कन्धाधिरोहकल्पाया वृत्तेरसंभवात्स्वात्मानं बाह्यमिव गृह्णामीति बुद्ध्यनुल्लेखाच्च न स्वसंवेद्यत्वमित्यर्थः। यद्वा। स्वात्मानं चेत्स्वयं गृह्णीयात्संविदाकारमिव रजताकारमपि बाह्यतया न गृह्णीयादिति स्ववेद्यत्वे दोषमाह न च सा स्वात्मानमिति। स्ववेद्यत्वं न घटते चेत्तर्हि गत्यन्तराभावात्परवेद्यत्वमस्त्वित्यपि न वाच्यमित्याह न चान्या तामिति। यद्वा। बाह्यत्वस्य बुद्ध्यन्तरेण ग्रहणमस्त्वित्याशङ्क्याह न चान्या तामिति। त्वन्मते बुद्धेरन्याविषयत्वात् तवापसिद्धान्तस्स्यादित्यर्थः। अन्याविषयत्वे हेत्वन्तरमाह क्षणिकत्वादेश्चेति। … [Page 114] ननु तर्हि यथात्माविद्याजं रूप्यं तव आत्मनैव प्रकाश्यं तथा बुद्ध्यविद्याजं रूप्यं बुद्धिबलात्सेत्स्यतीत्याशङ्क्याह न चाविद्येति। क्षणिकाया बुद्धेरनाद्यविद्याश्रयत्वायोगादित्यर्थः। ननु बुद्धिधर्मो नोभयधर्मो नान्तरालधर्मः न च

नास्तीत्यर्थः [?]। पञ्चमाकारा अविद्यास्तीति शङ्कते अस्ति चेदिति। तथाप्य-निर्वाच्या सा नेष्टा असन्मतापातात्। अतस्सती चेन्निरूपणसहत्वं वाच्यम्। ततश्च बुद्धेस्तकाशात्तस्या अन्यत्वमनन्यत्वं वा। अनन्यत्वे बुद्धिस्वरूपवद्विषयत्वं न स्यात् अन्यत्वेऽपि तस्यास्संवेद्यत्वे तथा बुद्धिविषयत्वं न स्यादिति परिहरति तथापीत्यादिना। … यस्या बुद्धेः रूप्यमाकारस्तयैव बुद्ध्या बुद्ध्यन्तरेण वा तन्न सिध्यतीति भ्रमासिद्धिरुक्ता। तत्र स्वसंवेद्यत्वेन भ्रमसिद्धिं शङ्कते अथ बुद्धेरिति। स्वसंवेद्यं तावद्बौद्धस्य बुद्धिरूपम्। इदानीं रूप्यं तद्बहिष्ठं च यद्भ्रान्तं तदपि स्वसंवेद्यं चेत्किं तदेव बुद्धे रूपं किं वान्यदप्यस्ति। प्रथमे सर्वैव बुद्धिर्मिथ्या स्यादिति बाधकाभावः चरमे तु सर्वैव बुद्धिरमिथ्यैवेति बाध्याभाव इति परिहरति किं तदेवेत्यादिना। इतश्च स्वसंवेद्यत्वपक्षोऽनुपपन्न इत्याह मिथ्यारूपमपीत्यादिना। कुत इत्यत आह तथैव ख्यातेरिति। रूप्यमिदमिति चामिथ्याप्रकारेणैव भासमानत्वा-दित्यर्थः। अथापि बाधख्यानान्मिथ्यात्वं स्यादित्यत आह न हि यत्स्वय-मिति। स्वयंवेद्येऽन्यथात्वग्राहकप्रमाणाप्रवृत्तेर्बाध्यत्वख्यातिर्न स्यादित्यर्थः। … नापि तदात्मानमिति। अवेद्यत्वादन्यथात्वस्य बुद्ध्यवेद्यत्वप्रसङ्गाद्बाध्य-बाधकभावनिश्चयो न स्यादित्यर्थः। यद्वा। वेदितुस्तस्य रूप्यवेद्यत्वा-योगादित्यर्थः। यद्येतद्दोषभीत्या रूप्यस्यान्यथात्वं बुद्धिवेद्यमिष्यते तत्राह वेद्यत्वे चेति। अन्यथात्वस्य बुद्धिवेद्यत्वे रूप्यस्याप्यन्यवेद्यत्वप्रसङ्गात्स्वसंवेद्यता-हानिरित्यर्थः। उक्तनीत्या रूप्यं तद्बहिष्ठत्वं च स्वसंवेद्यं न घटते चेत्तर्ह्य-स्वसंवेद्यं भवत्वित्याशङ्क्याह अस्वसंवेद्यत्वे चेति। … **[Page 115]**

बुद्धेस्स्वप्रकाशैकरूपत्वसिद्ध्यनुपपत्त्या बाह्योऽर्थो वक्तव्य इत्युपपाद्य इदानीं नीलादेर्ग्राह्यत्वसिद्ध्यनुपपत्त्यापि बाह्योऽर्थो वक्तव्य इत्याह यस्याश्चेत्यादिना। … पूर्वं न बुद्धिरूपं रूप्यं बहिर्भाति किंतु बहिष्ठमेवेत्यात्मख्याति-निरासाय स्वप्रकाशत्वावष्टम्भेन बाह्यार्थः प्रसाधितः। सांप्रतं स्वप्रकाश-त्वावष्टम्भेनैव जन्मादिकमपि प्रतिषेधति क्षणिकबुद्ध्यभिन्नरूप्यं ख्यातीत्यात्म-

ख्यातिनिरासायैव स्वयंप्रभत्वे चेत्यादिना। अशुद्ध्यादयस्सुखदुःखादय इत्यर्थः। ... अख्यातिमते भ्रमबाधासंभवमाह तथेति। ... [Page 116] पूर्वं प्राभाकरमतानुसारेणाभावाभावमभ्युपगम्योक्तम्। इदानीं सोऽप्ययुक्त इत्याह न चाख्यातिर्नास्तीति। ख्यातिवत्प्रसिद्धत्वान्नास्तीति प्रतिषेधानुपपत्तेश्चेत्यर्थः। किंच सर्वख्यात्यभावाभावे सर्वज्ञत्वप्रसङ्गः। प्रमाणानां चाज्ञातज्ञापकत्वात् अज्ञानाभावे वैयर्थ्यं स्यादित्याह अख्यात्यभावे चेति। ... शून्यवादिनोऽपि भ्रान्तिबाधकव्यवस्था न सिध्यतीत्याह तथेति। आद्यज्ञानात् यद्यप्यसत्त्वं न सिध्यति तथापि द्वितीयज्ञानात्सिध्यतीत्याह तस्यासत्त्वमिति। तत्र सिद्धान्ती विकल्पयति तस्यासत्त्वं नामेति। किं पूर्वप्राप्तसद्रूपरूप्यमेवासत्त्वं किं वा शौक्ल्यादिवत्सद्रूपरूप्यगतं रूपान्तरमुत सद्रूपरूप्यप्रतियोगिकत्वात्ततोऽन्यदित्यर्थः। पक्षत्रयेऽपि पूर्वप्राप्तस्य सद्रूपत्वस्य न क्षतिरित्याह त्रिधापीति। तथा ततोऽन्यदपीति। रूप्यादन्यदप्यसत्त्वं तस्मिन् सत्येव भवेत्प्रामाणिकमिति न पूर्वसिद्धस्य काचित्क्षतिरित्यर्थः। यदुक्तं रूपान्तरमपि तस्मिन् सत्येव भवतीति तदाक्षिप्य समाधत्ते एकस्य द्वे रूपे इत्यादिना। यतो रूपवत्यविद्यमाने रूपस्य सत्ता बोधनं वा न घटते ततस्तत् पूर्वप्रतिपन्नं सिद्धम्। तस्य भावकाले यद्यसद्रूपं न भवेत्तर्हि कदाचिदपि न भवेदित्यर्थः। [Page 117] किमिति कदाचिदपि न भवति तस्य अभावकाले स्यादित्यत आह अभाव इति। तस्य रूपिणोऽभावे रूपाभावादन्यथा स्वातन्त्र्यापातादित्यर्थः। विरोधेऽप्यसत्त्वस्याभाव उक्तः। सांप्रतं विरोध एव नास्तीत्याह कस्य विरोध इति। बाधकमपि तदेव दृढीकुर्यादित्याद्यपक्षमाक्षिपति ननु तदेवेति। ननु बाधकेनापि तदेव चेद्बोध्यते कथं न दृढीकुर्यादित्यत आह किंत्विति। यदि बाधकेनाप्यस्ति रूप्यमित्येव बोध्येत तदा सद्रूपरूप्यस्य दार्ढ्यं स्यात्। न तु तथा। किंतु नास्तीति बोध्यते। अतो न तद्दार्ढ्यमित्यर्थः। समाधत्ते नास्तीत्यपीति। पूर्वत्र

असद्वादिसिद्धमसत्त्वमेव विकल्प्य दूषितमिह त्वभावमात्रमित्यपुनरुक्तिः। नन्वन्यस्यामपि शुक्तौ बोधितायां रूप्यस्यासत्यवदन्यस्मिन्नपि नास्त्यर्थे बोधिते रूप्यमसत्स्यादिति शङ्कते अन्यस्मिन्नपीति। निरस्यति न तावदिति। अकारकत्वात् ज्ञानस्य वस्तुनाशकत्वाभावादित्यर्थः। अन्यथातिप्रसङ्गादिति। रूप्यादिलक्षणनास्त्यर्थज्ञानस्य रूप्यनिवर्तकत्वे घटादिनिवर्तकत्वमपि स्यादित्यर्थः। ननु बोधकमेव चेज्ज्ञानं कथं तवापि ज्ञानाद्रूप्यादिनिवृत्तिरित्याशङ्क्याह अज्ञानं त्विति। ज्ञानोत्पत्तिनान्तरीयकतया विरोधिनोऽज्ञानात्मकस्य निवृत्तेर्न ज्ञानस्य अकारकत्वविघातप्रसङ्ग इति भावः। ननु ज्ञानं चेन्नान्तरीयकतया स्वप्रमेयाज्ञानं निवर्तयेत्तर्हि नास्त्यर्थज्ञानमपि स्वप्रमेयाज्ञानं निवर्तयेत्। ततश्च रूप्यनिवर्तकमपि भविष्यति रूप्यस्यापि नास्त्यर्थाज्ञानात्मकत्वादित्याशङ्क्याह न च नास्त्यर्थाज्ञानजमिति। अप्रमेयशून्याज्ञानकार्यत्वाभ्युपगमाद्रूप्यस्य अभावप्रमाणप्रमेयनास्त्यर्थाज्ञानात्मकत्वं नैष्टव्यमित्यर्थः। ननु नास्त्यर्थस्य सद्रूप्यमात्रत्वतदन्यत्वयोरसंभवात् शौक्त्यवत्तस्यैव रूपान्तरत्वेन ज्ञानबोध्यत्वं स्यादित्याशङ्क्य तस्य बोध्यत्वेऽपि रूप्यस्यासत्त्वं न स्यादित्याह अतो यद्यपीति। एवं तावत्त्रिधापि रूप्यासत्त्वं द्वितीयज्ञानान्न सिध्यतीति नासत्ख्यातिर्भ्रान्तिरित्युक्ते पूर्ववादी विशेषं शङ्कते नास्त्यर्थ एवेति। शुक्तौ रूप्यं नास्तीत्युभयसंप्रतिपन्नो रूप्याभाव एव रूप्यबुद्ध्या गृह्यते। ततो भ्रमसिद्धिः अधिष्ठानरूप्याभावज्ञानाच्च रूप्यबाधसिद्धिरित्यर्थः। यदनुविद्धमारोपितं भाति तदधिष्ठानम्। तत्र रूप्याभावश्चेदधिष्ठानं नास्ति रूप्यमित्यभावानुविद्धं प्रकाशेत न तथा प्रकाशत इति परिहरति तन्नेति। सदधिष्ठान एव भ्रमो वाच्यस्तदन्वयादित्युक्तम्। तत्र शङ्कते असदेवेति। असदेवाधिष्ठानं भ्रमादस्तीति भातीति न तदन्वयबलेन सदधिष्ठानत्वमित्यर्थः। प्रमाणाभावेन परिहृत्य अभ्युपगम्याह भावेऽपीति। असत्त्वेन भातीत्यत्र प्रमाणभावेऽपि तत् प्रमाणं रूप्यस्य सत्त्वं न निवारये-

दसत्संबन्धिसत्त्वबोधने पर्यवसितत्वाद्यथा बाधकज्ञानं रूप्यसंबन्ध्यसत्त्वबोधने पर्यवसितत्वान्न तत्सत्त्वं वारयति तद्वदित्यर्थः। असतो निरूपणासहत्वादपि नासदधिष्ठानो भ्रम इत्याह किं तदित्यादिना। यत्सदात्मना ख्याति तदसत् किमिति पृष्टः कथयति सदन्तरमिति। सदन्तरं सदन्तरात्मना ख्यातीत्येतदन्यथाख्यातिनिराकरणेन प्रत्युक्तमित्यर्थः। **[Page 118]** तुच्छशब्दोऽल्पे गुणहीने निकृष्टे च लोके प्रयुज्यते। तदभ्युपगमेऽभिमतसिद्ध्यभावात्स्वाभिमतं संकेतं शून्यवाद्याह निस्स्वभावमिति। प्रसिद्धेनैवाप्रसिद्धं लक्षयितव्यं त्वदुक्तं तु न प्रसिद्धमिति परिहरति न तादृगिति। ननु नासंभवो [व ?] लक्षणदूषणमस्ति नास्तिज्ञानेन संभावितत्वादित्याशङ्क्य तर्ह्यव्यापकं लक्षणं तुच्छत्वेनाभिमतेऽपि निस्स्वभावत्वाभावादित्याह तदपि हीति। मेयत्वमङ्गीकृत्य अव्यापकं लक्षणमित्युक्तम्। मेयत्वमपि न घटत इत्याह मेयं चेदित्यादिना। विमतमतुच्छं मेयत्वाद्घटवदित्यर्थः। साध्यवैकल्यमाशङ्क्य घटादीनां निस्स्वभावत्वाभावान्नैवमिति परिहरति तेऽपीत्यादिना। तुच्छस्य मानव्याप्यत्वायोगान्मेयत्वे घटादिवत्सत्त्वमुक्तम्। ततः किं फलतीत्याशङ्क्याह अतोऽसत्सदात्मनेति। यतोऽसत्ख्यातिः काचिन्न भ्रान्तिर्यथार्थत्वादतो यदि भ्रान्तिरिष्यते नेदं रूप्यमित्यसत्ख्यातिरेव भ्रान्तिरिष्यतां पूर्वप्रवृत्तख्यातिविरोधादित्यर्थः। ननु नेदं रूप्यमित्यसत्ख्यातेर्भ्रान्तित्व[त्वा ?]प्रसिद्धिविरोधान्नेष्यत इत्याशङ्क्य तर्ह्यसत्ख्यातीति त्वदीयबुद्धेरेव भ्रान्तित्वमिष्यतामसतः ख्यात्ययोग्यत्वादित्याह अथवेति। ख्यात्ययोग्यत्वमेव कुत इत्यत आह ख्यातौ चेति। तुच्छत्वं न स्यादिति दोष उक्त इत्यर्थः। ··· **[Page 119]** एवं मतान्तराणि निराकृत्य परिशेषतस्स्वमतमुपसंहरति तस्मादिति। आत्मख्यात्यादिपक्षत्रयोक्तं दोषं त्रिभिराप्तश्लोकैर्दृढीकरणाय संगृह्णन् प्रथमश्लोकद्वयेन शून्यख्यात्यात्मख्यातिपक्षोक्तं दोषं संगृह्णाति अस्तिनास्तीति। अन्यथाख्यातिपक्षोक्तदोषसंग्राहकाप्तश्लोकावतारकं तदुक्तमिति पदमत्राप्यनुवर्तते।

नास्तिधियाप्यस्तिधीविषयस्यैव साधनेऽस्तिधीर्दृढा भवति । भिन्नविषयत्वे बाधकधियास्पृष्टत्वादस्तिधीर्दृढा स्यात् । असच्चेन्नास्तिबुद्धिगम्यमतुच्छं स्यात् । मितत्वतः ज्ञातत्वात् घटवत् । विज्ञानवादिपक्षेऽपि स्वयंप्रकाशं किंचिज्ज्ञानमन्तरेणाज्ञानभ्रान्त्यादयो न सिध्यन्ति । तच्च स्वयंप्रकाशं वस्तु स्वयंप्रकाशत्वाद्भेदादिसाक्षित्वाच्च त्रिधाप्यनन्तम् । अतश्शून्यं क्षणिकं वा विज्ञानं भ्रमबाधयोः ख्यातीति वदन्तौ शून्यविज्ञानवादिनौ भ्रान्तौ । तदुक्ति-भ्रान्तिमूलेत्यर्थः । तृतीयश्लोकेनाख्यातिदोषं संगृह्णाति ख्यात्यख्याती इति । ते तव मते पृथग्विरुद्धलक्षणे चेत्तर्ह्यस्यैव भवदनिष्टोऽप्यभावः तस्यैव ख्याति-विरुद्धत्वाद्वस्तुनः ख्यातिबाध्यत्वायोगाच्चेत्यर्थः । अपिर्विरोधद्योतकः । यद्वा । अख्यातेर्भ्रान्तित्वे सर्वदा भ्रान्तित्वमपि स्यादिति समुच्चयद्योतकः । तेशब्दस्य द्विवचनत्वे प्रगृह्यत्वेन प्रकृतिभावादस्तीत्यत्र अकारस्य स्वरूपेण श्रवणप्रसङ्गा-दकाराधिक्यं स्यात् । तस्मात्तवशब्दार्थत्वमेवेति । यद्युक्तदोषभीत्या ख्यात्य-ख्याती अपृथगेकलक्षणे इष्टे ते तदा ख्यातिस्सर्वा भ्रमस्स्यात् । नो वा कश्चिदपि भ्रमः । तथा च शास्त्रं वृथा स्याद्भ्रमनिवृत्तिप्रयोजनाभावा-दित्यर्थः । सिद्धान्तश्लोकस्य पूर्वपक्षदशायां परोक्तमनूद्य दूषयति यदुक्त-मित्यादिना । **[Page 120]** तेनैवेति । परमार्थतोऽसतस्सदात्मना-ख्यातिरसत्ख्यातिः । सास्माकं न प्राप्नोति प्रामाणिकासत्त्वानङ्गीकारात् भावावच्छेदकदेशादौ निषेधज्ञानासंभवप्रदर्शनेनानिर्वाच्यस्य सद्रूपस्वरूप[?]-सद्भावप्रतिपादनाच्चेत्यर्थः । इतश्च नासत्ख्यातिप्रसङ्गो वाच्य इत्याह किंच सद्रूप्यात्मनेति । पूर्ववाद्याह रूप्यस्येति । रूप्यस्य तव मते सत्त्वेनानि-र्वचनीयस्य सदित्येवंप्रकारेण निर्वचनानर्हस्य सद्रूपं नास्त्येव । अथ च भाति । ततोऽसत्ख्यातिप्रसङ्ग इत्यर्थः । प्रामाणिकसत्त्वाभावेऽपि प्राती-तिकसत्त्वाङ्गीकारात् नासत्ख्यातिरित्याह तदेव चेत्तथा भातीति । रूप्यं सदिति भाति चेदित्यर्थः । प्राभाकरेण सुतरामिदं न चोद्यमित्याह यस्य चाभाव इति । यद्वा । नास्तीति किमिति न ज्ञायत इत्यत आह यस्य

चेति । त्वन्मतानुसारेण चोद्यत इत्याशङ्क्य मन्मते परमार्थसत्त्वाभावेऽपि रूप्यस्य प्रातीतिकं सत्त्वमस्तीत्युक्तम् । तस्मान्नास्मन्मतानुसारेणापि चोद्यसंभव इत्यर्थः । तर्ह्यभावप्रमाणवादी भाट्टस्सत्त्वाभावं ज्ञास्यतीत्याशङ्क्याह अभावप्रमाणवाद्यपीति । नैवं जानीयादज्ञानकार्यरूप्यं नास्तीति न जानीयादित्यर्थः । किमिति न जानीयादित्यत आह रूप्यस्येति । तन्मते हि कदाचित्प्रमाणगृहीतस्यैवाभावः प्रतीयते । न च शुक्तिरूप्यं तस्यानिर्वचनीयाज्ञानकार्यत्वं वा कदाचित्प्रामाणिकम् । अतो न तदभावोऽपि प्रामाणिक इत्यर्थः । निषेधप्रत्यय एव सत्त्वाभावे प्रमाणं विद्यत इत्याशङ्क्याह न हि तद्रूप्यमिति । ननु यथा भाति तथैव निषेधो मा भूत् प्रकारान्तरेण भविष्यतीत्याशङ्क्याह न चान्यथेति । इदं रूप्यमन्यत्र नास्तीति निषेधो न दृश्यत इत्यर्थः । तर्हि निषेधाभावे सत्त्वप्राप्तेर्नानिर्वाच्यतेत्याशङ्क्याह न चान्यथा तस्येति । शुक्त्यात्मकरूप्यस्य देशान्तरादौ सत्त्वे प्रमाणं नास्ति । पुरोदेशे च सत्त्वं नेष्यते । ततोऽनिर्वाच्यत्वमित्यर्थः । अनिर्वाच्यत्वे फलितमाह अतस्तस्येति । ...

**[Page 121]** इदानीं सत्त्वानुभवविरोधं शङ्कते अनिर्वाच्यं चेद्रूप्यमिति । अथवा । आक्षेपे प्रत्युक्ते सुहृद्भूत्वा पृच्छति अनिर्वाच्यं चेदिति । यथान्येषां वादिनां शुक्तीदंतासंसर्गो रूप्ये भ्रमाद्भाति तथास्माकमपि शुक्तिसत्तासंसर्गो रूप्ये भ्रमाद्भाति । प्रामाणिकसत्त्वविधुरस्यापि प्रातीतिकसत्त्वाभ्युपगमाच्च न सत्त्वानुभवविरोधो दोष इत्याह भ्रान्तित्वादिति । तत्त्वतस्सद्सत्त्वविधुरस्य यदि सदात्मना प्रतिभास इष्यते तर्ह्यसत्ख्यातिप्राप्तिरित्यपि नाशङ्कितव्यमित्याह नासत्ख्यात्याशङ्केत्युक्तमिति । यतस्सत्त्वस्याप्रामाणिकत्वान्न सत्त्वानुभवविरोधो नाप्यसत्ख्यातिप्रसङ्गः तुच्छत्वस्याप्रामाणिकत्वादतो निरपवादमनिर्वाच्यत्वमित्युपसंहरति अतो भ्रान्ताविति । ननु शुक्तिसत्तासंसर्गोऽनिर्वाच्ये रूप्ये भाति चेत्तर्हि त्वयाप्यन्यथाख्यातिरङ्गीकृता तथान्येषामपि वादिनां भ्रमोऽन्यथाख्यातिर्भविष्यतीत्याशङ्क्याह अन्येषां

लिति । अन्यथाख्यानसिद्धौ भ्रमसिद्धिस्सिद्धे च भ्रमे तत्रान्यथाख्यानमितीतरेतराश्रय इत्यर्थः । तर्हि तवापि ज्ञानस्य रूप्यादेर्बाधासंभवसाम्यान्न भ्रान्तिसिद्धिरित्याशङ्क्याह मत्पक्षे लिति । सत्यरूप्यवन्मिथ्यारूप्यादेः प्रमातृव्यापारभूतज्ञानविषयत्वाभावादज्ञानात्मकस्य ज्ञानादज्ञाननिवृत्त्या निवृत्तिमत्त्वं बाध्यत्वमुपपद्यते । ज्ञानादज्ञाननिवृत्तेश्च प्रसिद्धिमात्रसिद्धायास्स्वीकार्यत्वान्नेतरेतराश्रयत्वादि प्रसञ्जनीयमिति भावः । एवं तावद्यत्र प्रत्यक्षं बाधकं तत्र सविलासाज्ञाननिवृत्तिर्बाध इत्युपपाद्य अनुमानादिष्वतिदिशति अतः प्रत्यक्षबाधस्येति । ... एवंप्रकारा एव । सविलासाज्ञाननिवृत्तिरूपा एव न तु विषयापहाररूपा इत्यर्थः । अन्यथेति । विषयापहारपक्षेऽनुमानादीनामप्येकविषयत्वे भिन्नविषयत्वे वा बाधकत्वायोगाद्बाधप्रसिद्धिरेव न स्यादित्यर्थः । ... ननु यत्रापरोक्षभ्रमस्तत्र किमनुमानादीनां प्रवृत्तिरेव नास्ति प्रवृत्तानां वा वैयर्थ्यमित्याशङ्क्याह अनुमानादयश्चेति । यद्यपि परोक्ष एवार्थे प्रवर्तमाना अनुमानादयो बहुलमुपलभ्यन्ते तथाप्यात्मानन्दयोः प्रकाशैक्यस्वयंप्रकाशतया नित्यापरोक्षे प्रवर्तन्त इत्यपिशब्देनोक्तम् [?] । ततः परोक्षे चन्द्रैकत्वादावात्मानन्दयोः प्रकाशमात्रत्वे [?] चापरोक्षे वर्तमानत्वान्नानुमानादेरप्रवृत्तिरित्यर्थः । तर्हि वैयर्थ्यमित्यत आह अतस्तैरिति । न च वैयर्थ्यं वस्तुविपरीतावभासस्यानिर्वाच्याज्ञानात्मकत्वद्योतकत्वादित्यर्थः । नन्वद्यतनो यश्चन्द्रो न स सद्वितीयश्चन्द्रत्वाद्गतदिनचन्द्रवदित्यनुमानादाप्तवाक्याद्वा द्विचन्द्रादेरभावमेव कस्मान्न जानाति कुतोऽनिर्वाच्याज्ञानात्मकत्वमेव प्रतिपद्यत इत्याशङ्क्याह प्रत्यक्षबाध इति । यत्र प्रत्यक्षबाधो बभूव तत्र विपरीतावभासस्याज्ञानात्मकत्वव्युत्पत्तेरिहाप्यज्ञानात्मकत्वमेव प्रतिपद्यते । न त्वभावं द्विचन्द्रादीनां वेत्ति भावज्ञानाक्रान्ते विषयेऽभावज्ञानासंभवादुक्तहेतुभ्य इत्यर्थः । ननु स्वाभाविकचन्द्रद्वित्वाभावज्ञानेन भ्रमविषयस्य चन्द्रद्वित्वस्य हेयत्वमेव कस्मान्नेष्यत इत्याशङ्क्याह प्रत्यक्षबाधे चेति । अज्ञाननिवृत्त्यैव निवृत्ति-

मत्त्वव्युत्पत्तेर्नाभावज्ञानहेयत्वमिष्यत इत्यर्थः । **[Page 122]** ननु चन्द्रादीनामेकत्वादौ ज्ञात इति किमिति विशेष्यते स्वातन्त्र्येणाज्ञानात्मकत्वमेव ज्ञायतामित्याशङ्क्याह न चैकत्वादीति । सम्यग्वस्तु किंचिदवलम्ब्येतरन्मिथ्येति वक्तुं शक्यते न त्वेवमेवेत्यर्थः[?] । ननु यावच्छब्दं शब्दार्थो गृह्यते न चाप्तवाक्येऽनिर्वाच्यशब्दोऽस्ति । किं तर्हि । द्विचन्द्राद्यभाववाचकनञ्शब्द एवेत्याशङ्क्याह न द्वौ चन्द्राविति । यो हि यत्र भावज्ञानगोचरस्स तत्रैव निषेध्य इति पूर्वोक्तव्युत्पत्तिबलान्नञो निषेधकस्य स्वाभाविकचन्द्रद्वित्वाद्यभावबोधनेन प्रतिपन्नस्यानिर्वाच्यत्वे तात्पर्यम् । अतो नञ्शब्दतात्पर्याद्निर्वाच्यनिश्चय इत्यर्थः । लोके निषेधवाक्यस्य तात्पर्यमुक्त्वा वेदेऽप्यतिदिशति नेह नानेति । स्वाभाविकब्रह्मनानात्व[त्वाभाव ?]-बोधनेन प्रतिपन्ननानात्वमिथ्यात्वे तात्पर्यमित्यर्थः । दृष्टान्तानुवादेन दार्ष्टान्तिकं निगमयति तस्मादित्यादिना । ननु शाब्दमग्निहोत्रादिज्ञानं परोक्षमेव दृष्टम् । कथं शाब्दं ब्रह्मज्ञानमपरोक्षमुच्यत इत्याशङ्क्याह शाब्दमपीति । आपरोक्ष्यव्यञ्जकं ज्ञानमपरोक्षम् । नान्यगतज्ञानं किंचिदपरोक्षं नामास्ति । ब्रह्म तु यत्साक्षादपरोक्षादिति श्रुतेरापरोक्ष्यस्वभावम् । अतस्तद्व्यञ्जकं तत्त्वमस्यादिवाक्योत्थमन्तःकरणवृत्तिरूपं ज्ञानमपरोक्षं यथाहं स्वयंप्रकाश इत्यादिवाक्यजन्यज्ञानमित्यर्थः । नन्वपरोक्षाज्ज्ञानाच्चेद्ब्रह्मत्वव्यावृत्तिस्तर्हि ततः प्राक् प्रत्यक्षत्वाभिमतस्य कर्तृत्वादिज्ञानस्य भ्रमत्वमपि न ज्ञायेत कारणाभावादित्याशङ्क्याह प्रागपीति । श्रुतेरैकात्म्ये तात्पर्यावधारणेन अर्थादितरस्य मिथ्यात्वं ज्ञातुं शक्यत इत्यर्थः । अत्र दृष्टान्तमाह यथा अनुमानेति । ... न केवलमार्थिकं मिथ्यात्वज्ञानं स्वमुखेनापि श्रुत्यनुमानाभ्यां गम्यत इत्याह नेह नानेति । स्वपक्षे भ्रान्तिबाधसंभवं पक्षान्तरे चासंभवमुक्तमुपसंहरति अतोऽसत्पक्ष इति । ... **[Page 123]** सत्ख्यातिनिराकरणपरतया प्रथमं योजनामाह तत्रैषेत्यादिना । तथा असत्त्वे यथा भाति तथा अभावे पुरोदेशावच्छिन्नरूप्याभावे न

ख्यातिस्स्यात् । अर्थशून्यख्यात्यसंभवोक्तहेतुभ्य इत्यर्थः । ननु शुक्तीद-मंशात्मत्वमेवास्य रूप्यस्यासद्रूपं न तु सर्वम् । अतस्स्वरूपेण सत्त्वा-त्ख्यातिस्संभवतीति शङ्कते न सर्वं रूपमिति । तर्हि रूप्यमात्रख्याति-रेव स्यान्न त्विदं रूप्यमिति सामानाधिकरण्यख्यातिरिति परिहरति यद्रूपमिति । भावान्तरमभावोऽन्यो न कश्चिदित्युक्तत्वादसदपि तादात्म्यं न तुच्छम् । अतः ख्यातिस्संभवतीति शङ्कते अथोच्येतेति । यद्यप्यभाव-प्रमाणप्रमेयमसदङ्गीकरोषि तथापि नास्तीत्येव ख्यातिप्रसङ्गादिदं रूप्यमिति सत्त्वेन ख्यातिरूपा भ्रान्तिर्न स्यादिति परिहरति तथापीति । तादात्म्य-मसदपि दोषवशात्सद्रूपेण भातीति भ्रान्तिर्घटत इति शङ्कते तदसदिति । तर्हि येन सद्रूपेण भाति तत्तस्यास्ति उत नास्तीति विकल्प्य आद्ये बाधाभावान्न भ्रमसिद्धिरित्याह अस्ति चेदिति । द्वितीये नास्ती-त्येव सम्यक्ख्यातिस्स्यान्न तु भ्रम इत्याह नास्ति चेदिति । धर्मि-प्रतियोगिभेदज्ञानाभावान्नास्तीति सम्यक्ख्यातिर्न स्यादित्याशङ्क्य तर्हि सापि मास्तु तथापि न भ्रम इत्याह न वा न तु भ्रम इति । द्वितीय-मेव पक्षमवलम्ब्य भ्रमं साधयति असतस्तत्सद्रूपमिति । सिद्धान्ती विकल्प्य दूषयति किं तदिति । उक्तमेवोत्तरमिति । नास्तीति ख्यातिस्स्या-दित्यर्थः । अत उक्तप्रकारेण तादात्म्यस्यासत्त्वे सत्ख्यातिर्न घटत इति भ्रमो न सिध्यतीत्याह अतोऽसत्त्व इति । सत्ख्यातिमसद्रूपेऽपि तादात्म्ये-ऽभ्युपगम्याह यदि नामेति । बाधकस्य किं तदेव प्रमेयं किं वा तस्यैव रूपान्तरमित्याद्युक्तेन न्यायेनेत्यर्थः । **[Page 124]** एकैकपादमन्यथा व्याचष्टे अथवेत्यादिना । ... पुनरसत्पक्षे द्वितीयं पादं योजयति अथवा असत्त्वादिति । ... कथं द्वावपि पादार्थावसत्पक्षदूषकावित्याकाङ्क्षायां पादद्वयं योजयितुं बहिरेव विकल्पयति यद्रूप्यं भातीत्यादिना । इदानीं योजयति सत्त्वे न भ्रान्तीति । तुच्छस्य सद्रूप्यात्मकत्वाभावेऽपि भ्रान्तित-स्तदात्मकत्वेन तस्य भानं स्यादिति शङ्कते सद्रूप्यरूपमिति । भ्रान्ति-

सिद्धामपि तदात्मतां तत्संबन्धं च क्रमेण विकल्पयति सा किमिति। उत न—तुच्छसंबन्धितया नास्तीत्यर्थः। दूषयति त्रिधापि पूर्ववदुत्तरं योज्यमिति। तुच्छत्वे सत्ख्यातिर्न स्यात् अस्तित्वे बाधो न स्यात् नास्तित्वे नास्तिख्यातिस्स्यादित्यर्थः। नास्तित्वपक्षमवलम्ब्य विशेषं शङ्कते तस्य सा नास्तीति। ··· पूर्ववदुत्तरं च योज्यमिति। तुच्छत्वे सत्ख्यातिर्न स्यात् अस्तित्वे बाधो न स्यात् नास्तित्वे नास्तिख्यातिस्स्यादित्यर्थः। यद्रूप्यं भाति तत्तुच्छं चेन्न भ्रान्तिख्यातिबाधकौ स्यातामिति पुरस्तादुक्तम्। तत्र विशेषं शङ्कते रूप्यमपीति। तत्राप्येष एव न्याय इति। असतो यत्सद्रूपं तदपि किमसदेव उत सत् सत्त्वेऽप्यस्ति उत नेति विकल्प्य परिहारो द्रष्टव्य इत्यर्थः। पूर्वं यथा रूप्यं भाति तथास्ति उत नास्ति वेति विशेष-विकल्पाश्रयणेन सत्पक्षे पूर्वार्धं योजितम्। इदानीं यः कश्चिद्बाध्यांशस्स सत्त्वेन भाति न वेति साधारण्येन सत्पक्षनिराकरणे श्लोकार्धं योजयति सत्पक्षेऽपीत्यादिना। ननु बाध्यांशो दोषदृश्योऽन्यस्तु प्रमाणदृश्यः कथ-मितरांशवद्बाध्यः संश्च स्यादिति साम्यमुच्यत इत्यत आह न च तयो-र्बाधादिति। हट्टादिगतरूप्यप्रत्ययादाकारवैलक्षण्याभावादित्यर्थः। बाधा-त्प्रागपि बाध्याबाध्यांशयोर्भेदज्ञानं प्रौढिवादेनाङ्गीकृत्याह ज्ञातेऽपीति। ननु द्वयोरपि सद्रूपेणाबाध्यत्वं तुल्यमेव विरोधिभेदज्ञानादभेदबाधेन बाध्यत्वमपि तुल्यमेवेति शङ्कते शुक्तिरूप्ययोर्भेदज्ञानादिति। **[Page 125]** किमसावभेदो ज्ञातेऽपि भेदेऽनुवर्तते न वा। आद्यं प्रत्याह ज्ञाते-ऽपीति। विरोधेऽपि भेदस्येवाभेदबोधात् अभेदस्यापि भेदबोधादबाधो न्याय्यः अन्यथा भेदस्यापि तत्प्रसङ्गात्। तस्मादभेदबाधेन तयोर्बाध्यत्वं न तुल्यमित्यर्थः। द्वितीयं दूषयति भेदज्ञाने चेदिति। अन्यथेति। अभेदस्या-ज्ञानत्वाभावे ज्ञानादनिवृत्तिप्रसङ्गादित्यर्थः। पूर्वं ज्ञेयप्राधान्येन दूषणमुक्त्वा ज्ञानप्राधान्येन वदन् बाध्यांशस्य ज्ञानमस्ति वा न वेति विकल्प्य आद्यं प्रत्याह बाध्यांशस्यापि चेदिति। विज्ञानवादिपक्षेऽधिकमाह सर्वज्ञानानां

चेति । तथा—न बाध्यबाधकभाव इत्यर्थः । द्वितीयविकल्पे दोषमाह असत्त्वेन चेद्भातीति । तज्ज्ञानासत्त्वे तु भ्रमाद्यसंभवस्स्पष्टः । यदापि ज्ञेयशून्यं ज्ञानं तदापि न भ्रान्तिबाधौ युक्तौ निरालम्बनस्य ज्ञानस्यासंभवादिति गमयितव्यम् । यद्वा । पूर्वप्रकारात् प्रकारान्तरेण आद्यं पादं व्याचष्टे बाध्यांशस्यापि चेदिति । बाध्यांशविषयज्ञानस्य सत्त्वे तस्येतरांशज्ञानतुल्यता । तत्रोभयोर्ज्ञेयशून्यत्वे ज्ञेयवत्त्वे च न भ्रान्तिबाधावतिप्रसङ्गादित्याशयः । द्वितीयपादं योजयति । तथा असत्त्वेन चेदिति । बाध्यांशो रजतादिर्यद्यसदाकारेण भाति तदानीं तथा भ्रान्तिबाधौ न स्यातामित्यर्थः । कुत इत्यत आह तस्य वेति । अख्यातिनिराकरणपरतया पुनः श्लोकार्धं योजयति अख्यातिपक्षेऽपीत्यादिना । तद्यथार्थमेवेति न भ्रम इति । अयथार्थज्ञानानङ्गीकारादिति भावः । उत्तरार्धमुपसंहारच्छलेन योजयति तस्मादित्यादिना । उक्तार्थेषु सर्वेष्वपि योजयितुं शक्यते ग्रन्थविस्तरभयान्न योज्यत इत्याह एषाक्षरयोजनादिगिति । एवं क्वचित्किंचित्पदमध्याहृत्य योजनां प्रदर्श्य श्लोकस्याक्षरताडितमर्थमाह अथवा सत्त्वे रूप्यादेरित्यादिना । तदंशस्य प्रतीतैकदेशस्य रूप्यांशस्य वा सर्वस्य वा प्रतीतस्य कृत्स्नस्याधिष्ठानांशस्य रूप्यांशस्य तयोरैक्यस्य चेत्यर्थः । एतावानेवा[स्य श्लोकस्या ?]र्थ इति । शब्दताडितोऽर्थ इत्यर्थः । श्लोकेऽनुक्तस्य कथनमयुक्तमित्यत आह उत्तरग्रन्थार्थ इति ॥ ९ ॥

**[Page 126]** सिद्धान्तश्लोके परिशेषार्थापत्तिभ्यां भ्रान्तीनां विषयेण सहानिर्वचनीयाविद्यात्मकत्वं ज्ञापितम् । तत्रानुपपत्त्यन्तरविरोधं दर्शयन् श्लोकव्यावर्त्यमाह ननु यद्यविद्यैवेत्यादिना । इदं रजतमित्यत्र इदमंशो रूप्यांशस्तयोरैक्यं च भाति । तस्य सर्वस्य बाधश्चेत्साधिष्ठानभ्रमसावधिकबाधप्रसिद्ध्यनुपपत्तिः । एकांशबाधेनापि बाधकस्य चरितार्थत्वान्न सर्वस्यांशस्य बाधश्चेत् न तर्हि कस्याप्यंशस्य बाधस्याङ्गमविषयत्वाविशेषात् । तदा च बाधप्रसिद्ध्यनुपपत्तिरित्यर्थः । इदमंशतज्ज्ञानयोरभ्रमत्वं हृदि कृत्वा

सर्वस्यैवाविद्यात्वं न मयोक्तमिति सिद्धान्ती स्वाभिमतमाह ननु भ्रान्तेरिति । विशेषमुपादित्समानस्य किमेकं ज्ञानमभिमतं किं वा द्वे किं वा सांशमेवैकम् । तत्र प्रथममनुमोदते सत्यमिति । एकत्वानुभवं नाटयति । इदं रजतमिति । तर्हि न्यायसाम्यात्सर्वस्यापि बाधोऽस्त्वित्याशङ्क्याह न चेति । किमित्ययुक्तिमानित्यत आह न हीति । भ्रमकाले त्वधिष्ठानत्वाय बाधकालेऽवधित्वाय च बाधायोग्यतया इदमंशस्यावस्थानाभावाद्भ्रमबाधासंभव इत्ययुक्तिमान् सर्वबाध इत्यर्थः । इतश्च न सर्वबाध इत्याह न हि भिन्नेति । भ्रमविषयस्य सर्वस्य बाध्यत्वे तदन्यविषयं ज्ञानं बाधकं स्यात् तच्चायुक्तमित्यर्थः । ··· द्वितीयमभिप्रायमनूद्य दूषयति अथेदमित्यादिना । ··· तृतीयमभिप्रायमनूद्य दूषयति अथैकमेवेति । इन्द्रियसंस्कारदोषादिसामग्रीवशादलौकिकमेकं ज्ञानं यदि जायते तदापि सदात्मना ख्यातेरविशेषादिदमंशवद्रूप्यमप्यबाध्यं स्याद्रूप्यवद्वा इदमंशोऽपि बाध्यस्स्यात् । अतो मत्पक्ष इव त्वत्पक्षेऽप्यनुपपत्तिरस्तीत्यर्थः । अविशेषादिति हेतोरसिद्ध्या परिहरति तन्नेति । ज्ञानतदाभासयोर्विशेषभावान्न सर्वस्यैव बाध्यत्वम् । अर्थतादात्म्यवज्ज्ञानतदाभासतादात्म्यं साक्षिसिद्धमिष्यत इत्येकज्ञानव्यवहार इति भावः । नन्विदं— रजतमितिज्ञानस्य सविषयस्याविद्याकार्यत्वेनाविद्यात्वं सिद्धान्तश्लोकेऽभ्यधायि । कथमिदानीं ज्ञानतदाभासविवेचनेनाभासविषयस्यैव बाध्यत्वमुच्यत इत्याशङ्क्याह न तावदिति । भ्रान्तांशस्य चेदविद्यात्वमुक्तं तर्हि भ्रान्तित्वमपि सर्वस्य किं न भवतीत्याशङ्क्याह न चेति । हेतुत्वेन श्लोकार्धं योजयति यावद्धीति । उक्तेन न्यायेनेति । निरवधिबाधादर्शनेनेत्यर्थः । इदमिहाकूतम्—संसृष्टरूपेण भ्रमविषयस्येदमंशस्य तेन रूपेण बाध्यत्वेऽपि स्वरूपेण भ्रमाविषयत्वादबाध्यत्वम् । अतो न बाधस्सर्वस्येति । यच्च सदात्मना प्रतिभासाविशेषात्किंचिदपि न बाध्यमित्युक्तं तत्राह न च न किंचिदपीति । यच्चोदाहरणं पक्षान्तरवदिति तत्राह न चेति । ··· **[Page 127]**

ननु शुक्तिज्ञानं शुक्त्यज्ञानं चेन्निवर्तयति कृत्स्नमपि निवर्तयतु । ततः पुनस्तत्र भ्रमो न स्यादित्याशङ्क्याह अज्ञानस्य त्विति । उत्तरार्धं व्याचष्टे तस्मादित्यादिना ॥ १० ॥

यच्च सिद्धान्तश्लोके रूप्यवत्तज्ज्ञानस्याप्यविद्यावृत्तित्वमुक्तं तदाक्षिप्य समाधत्ते रूप्याभाव इति श्लोकेन । ··· [Page 128] रूप्याभावे कुतस्तद्धीरिति श्लोकभागं पक्षान्तरनिराकरणेऽपि योजयति तथा आत्मख्यातिरित्यादिना । नन्वख्यातिवादिनामस्माकं पुरोवर्तिनि रूप्यज्ञानाभाव इष्ट एवेत्याशङ्क्याह अख्यातिपक्षे त्विति । असत्यार्थविषयज्ञानाभावे भ्रान्तिर्न सिध्यतीत्यर्थः ॥ ११ ॥

वृत्तकीर्तनपूर्वकं श्लोकान्तरमवतारयति यावद्बाध्यमित्यादिना । भ्रमप्रतिपन्नमध्ये यावत् बाधे भाति तावदेवाबाध्यमित्युक्तम् । तच्च शून्यमिति शून्यवादिनः । तान् व्यावर्तयति तावच्चाख्येवेति । तस्यैव विवरणं नासद्बाध्यमिति । भ्रमे बाधे वा भानानर्हत्वादबाध्यं यत्तन्नासदित्यर्थः । अथ बाध्यं यद्रूप्यं तत् कालान्तरे देशान्तरे वा अस्तीति केचित् । तान् व्यावर्तयति नापीति । कालान्तरीयस्य देशान्तरीयस्य च व्यवधानाद्भानासंभवादित्यर्थः । यद्बाधे न भाति तन्मिथ्येत्युक्तम् । तत्र केचिदन्यथाख्यातिवादिनो बाधेऽनवभासमानमपि रूप्यमन्यत्र सदित्याहुः । तान् व्यावर्तयति बाधितं त्विति । प्रमाणाभावादित्यर्थः । यत् लक्षणेन बाध्यमुक्तं तदुदाहरणेन निर्दिशति अत इदमंश एवेति । ··· [Page 129] आत्मख्यातिमते दूषणान्तरमाह न च क्षणिकेति । शुक्तिबुद्धिं प्रति रूप्यबुद्धेरविषयत्वान्नष्टत्वाच्च न शुक्तिबुद्धौ रूप्यसिद्धिरित्यर्थः । भ्रान्तिकाले स्मृतं रूप्यं स्वदेशसंसर्गं विना स्वरूपेण शुक्तिज्ञाने प्रतीयतामित्यख्यातिमाशङ्क्याह न च स्मृतं परोक्षमिति । ··· तद्रूप्यं स्मरामीति ज्ञानं बाधकमस्त्विति न वाच्यमित्याह न च स्मृतीति । न च स्मृतिज्ञानं बाधकं

प्रमाणस्यैव भ्रमनिवर्तकत्वेन प्रसिद्धेरित्यर्थः । असदधिष्ठानं तज्ज्ञानमेव च बाधकमिति शून्यवादी तत्राह न चासदिति ॥ १२ ॥

बाधितं न कुत्रचिदिति प्रतिज्ञामात्रमकारि । तत्प्रपञ्च उत्तरो ग्रन्थ इत्याह बाधितं त्विति । किमन्यत्र ख्यातिबलाद्बाधितस्य सत्त्वं किं वा अनुपपत्तिबलात् । नाद्य इत्याह न तावदिति । इह बाधितं रूप्यमन्यत्रास्तीति तावन्न भातीत्यन्वयः । न केवलं ममैवान्यत्र ख्यात्यभावः किंतु तवापीत्याह इह बाधात्त्विति । असतः ख्यातिर्न संभवति ख्यातिं विना च बाधो न घटत इत्यनया युक्त्या अत्र बाधाच्च अन्यत्र त्वया सत्त्वं कल्प्यते न तु प्रतीतिबलादित्यर्थः । न द्वितीय इत्याह न च सा कल्पनाल्लभ्येति । असत एव शुक्तिरूप्यसंसर्गस्य ख्यातिवदसत एव रूप्यस्य ख्यातिर्भविष्यतीत्यन्यथाप्युपपत्तिरित्यर्थः । नन्वख्यातिवादिना सामानाधिकरण्यख्यातेरनभ्युपगमात्तं प्रति नास्ति दृष्टान्त इत्याह यस्तु ब्रूयादिति । तदुत्तरत्वेनापि श्लोकं व्याचष्टे तस्य प्रतीतिविरोधस्स्याद्यतो नान्यत्र भातीति । इतश्चात्रैव भानं नान्यत्रेति मन्तव्यमित्याह इह बाधादेव चेति । इह बाधादन्यत्र सत्त्वं कल्प्यते न पुनस्स्वानुभवत एवान्यत्र सत्त्वं सिद्धं इह बाधस्य रूप्यस्यात्र भानमन्तरेणानुपपन्नमिति इह भानमेष्टव्यमित्यर्थः । स्वानुभवत एवान्यत्र सिद्धत्वे दोषमाह यदि सिद्धमित्यादिना । **[Page 130]** अस्त्विहैव भानमथापि रूप्यं नास्तीत्याशङ्क्य परिहरति इहासदपीत्यादिना ॥ १३ ॥

असतः ख्यात्यनुपपत्त्या क्वापि रूप्यस्य सत्त्वं वक्तव्यमित्यर्थापत्तेरन्यथाप्युपपत्तिमुक्त्वा सांप्रतमन्यथैवोपपत्तिमाह सत्तां चेदिति । असतः ख्यातेरसंभवात् सत्तां चेत्ख्यातिः कल्पयेत्तर्हि इहैव तां कल्पयेदित्यर्थः ॥ १४ ॥

बाधविरोधादिहैव सत्ताकल्पनमशक्यमिति शङ्कते यत्र रूप्यं भातीति । श्लोकाद्बहिरेव पूर्वोक्तं परिहारान्तरं स्मारयति तदयुक्तमित्यादिना । ... किंच रूप्यख्यातेः अरूप्येणापि सार्थत्वेऽन्यत्र रूप्यस्य सत्ताकल्पनं व्यर्थं

स्यात्तस्यास्यार्थत्वाय हि तत्कल्पनमित्याह रूप्यस्येति । ··· विरोधमभ्युपगम्याह विरोधेऽपीति । अन्यविषयत्वं वेति । पारमार्थिकरूप्याभावविषयत्वं स्यान्न तु प्रतीयमानरूप्याभावविषयत्वं प्रतीतिविरोधात् । प्रतीयमानत्वादेव योग्यानुपलब्धिलक्षणाभावज्ञानसामग्र्यभावाच्चेत्यर्थः । ··· [Page 131] रूप्यख्यातेः प्रत्यक्षत्वसिद्धौ भवेद्वलीयस्त्वं तदेवासिद्धमित्याशङ्क्याह न च रूप्यख्यातेरिति । उक्तन्यं परिहारान्तरमुपसंहरति अत इति । इदानीं श्लोकं योजयति तच्च बाधान्न कल्प्या चेदिति । ··· पुनर्बाध्यत्वाबाध्यत्वकृतं विशेषं शङ्कते गवि विषाणस्याबाध्यत्वादिति । सिद्धान्ती निषेधप्रयोजकनिरूपणेन साम्यं वक्तुं विकल्पयति किं यत्रास्तीति । तत्राद्यं निरस्यति आद्य इति । द्वितीयेऽपि किं पुरोदेशख्यातमेव तन्निषेधप्रतियोगि किं वा देशान्तरस्थमिति विकल्प्य आद्यं निरस्यति द्वितीये त्विति । तृतीयमुत्थापयति अन्यत्रेति । ननु क्लृप्तकल्प्ययोः क्लृप्तग्रहणं वरमिति न्यायेन नेह सत्ताकल्पनं युक्तं किं त्वन्यत्र क्लृप्तं सत्त्वं ग्राह्यं तस्य चात्र निषेध इति शङ्कते अन्यत्र सदेवेह निषिध्यत इति । तर्हि देशान्तरस्थस्यैव रूप्यस्य निषेध्यत्वात्पुरोदेशस्थस्यानिषेधो देशान्तरे सत्त्वकल्पनानुपपत्तिश्च स्यादिति परिहरति अस्यानिषेधादिति । नन्वन्यत्र सतश्चेन्निषेधोऽङ्गीकृतः तर्ह्यस्यापि निषेधस्सिद्ध एव । अतस्तदेवेदं रूप्यमिति शङ्कते अन्यत्र सदेवेदं रूप्यमिति चेदिति । ··· ॥ १५ ॥

[Page 132] ख्यातिबलादन्यत्र सत्त्वासिद्धिमभ्युपगम्य बाधबलादन्यत्र सत्त्वं साधयति पूर्ववादी ननु यद्यपीति । इह निषेधानुपपत्त्यान्यत्र सत्त्वमित्येका अर्थापत्तिः । तामुक्त्वा अधुना अन्यत्र निषेधाभावानुपपत्त्या अन्यत्र सत्त्वमित्यर्थापत्त्यन्तरमाह यदि सा अन्यत्रापीति । ननु पुरुषः कल्पयति न बाध इत्याशङ्क्याह तत्कल्पनाद्धेतुरिति । ··· ॥ १६ ॥

[Page 133] निरस्तं सत्ख्यातिपक्षं संक्षेपतोऽनूद्योत्तरश्लोकतात्पर्यमाह अन्यत्र सदेव रूप्यमित्यादिना । ··· तथार्थत्वात्— यथार्थप्रतिभाससमर्थ-

वत्त्वादन्यथाख्यातिवादिप्रभृतिभिर्नान्यथा सत्ता रूप्यस्य कल्पनीयेत्यर्थः । नेदं रूप्यमिति बाधदर्शनादसदेव रूप्यं भातीति मत्वा शून्यवादिभिरपि तदसत्ता न कल्पनीयेत्याह नाप्यसत्ता असदेव भातीति । यद्वा । रूप्यं सदेव भाति यस्मात्तस्मात्तस्यासत्ता न कल्पनीयेति योजना । यथाज्ञानं सद्भावनियमो नास्तीति द्वितीयपक्षे दोषमाह द्वितीये त्विति । अन्यथासत्ताया असत्तायाश्च कल्पनाबीजं द्वितीयपक्षे कुतो न स्यादित्यत आह रूप्यख्यातेरिति । ··· बाधकस्यापीत्यत्र अयथार्थत्वसंभवादित्यनुषज्यते । ··· यथार्थत्वनियमाभावेऽपीति । इदं बाध्यमिदं बाधकमिति विभागज्ञानेऽप्ययथार्थत्वशङ्कासंभवादित्यर्थः । ··· ॥ १७ ॥ १८ ॥

[Page 134] एवं तावत्पक्षान्तरनिराकरणेन सिद्धान्तमुपसंहृत्य पुनरन्यथाख्यातिनिराचिकीर्षया व्यवहितं संबन्धमाह यद्यपीदमिति । अपरोक्षज्ञानसामग्र्यां विषयस्याप्यन्तर्निवेशात्ख्यातिस्वरूपलाभाय अन्यथानुपपत्त्यैव रूप्यसत्त्वं कल्पयतीत्यर्थः । विमतं रूप्यं नास्यां ख्यातौ विषयत्वेनोपयुज्यते तत्राख्यायमानत्वात् घटवदित्यनुमानविरोधादन्यथाप्युपपत्तिशङ्केति [?] परिहरति तथाभान इति । श्लोकगतमन्यथेतिपदं व्याचष्टे अज्ञायमानेनेति । ननु यथा त्वत्पक्षे शुक्तिसत्ता अनुपलब्धापि रूप्यभ्रमोपयोगिनी तद्वदज्ञातमप्यन्यत्र सत्त्वं रूप्यज्ञानोत्पत्त्युपयोगि भवेदित्याशङ्क्य अस्मत्पक्षे भ्रान्तेरविद्योपादानत्वात्तत्त्वस्याज्ञातत्वमुपयुक्तम् । अन्यथा अविद्योपादानकत्वायोगादित्याह अविद्यानिमित्ते त्विति । ··· प्रकारान्तरेण श्लोकं योजयति कथंचेति । ··· [Page 135] उत्तरार्धमुत्तरत्वेनावतारयितुं शङ्कामाह यद्यपीति । रूप्यव्यक्तिविशिष्टजातिस्फुरणं परिपूर्णविषयत्वम् । तदभावेऽपि रूप्यजात्याकारेण स्फुरणादपरिपूर्णविषयत्वमस्त्येव यथा इदमंशस्य शुक्तित्वविशिष्टपरिपूर्णविषयत्वाभावेऽपि इदमित्यपरिपूर्णविषयत्वं तद्वदित्यर्थः । वैषम्यकथनेन निरस्यति नेति ॥ १९ ॥

ननु सत एव बाधकज्ञाने भानदर्शनादन्यथाख्यानमपि सत एवेति

वक्तव्यम् । अतोऽज्ञातरूप्यसत्त्वस्य भ्रमोपयोगोऽस्तीति शङ्काभागं व्याचष्टे असतापीति । तर्हि कल्पनालाघवाच्छुक्तिरेव सती रूप्यात्मना ख्यातीत्यङ्गीकार्यमिति परिहारभागं व्याचष्टे किं रूप्येणेति ॥ २० ॥

श्लोकव्यावर्त्यमाह ननु शुक्तिवदिति । रूप्यस्याधिष्ठानत्वाभावादसत्त्वमित्याशङ्क्य वनस्पतिद्वयस्यैकत्वाध्यासाधिष्ठानत्ववच्छुक्तिरूप्ययोरुभयोरधिष्ठानत्वमित्याह द्वयोरपीति । विशिष्टरूपेण द्वयोरपि भ्रान्तिबाधौ दृष्टावित्यर्थः । द्वयोरिति विषयसप्तमी । ... **[Page 136]** एवमुक्तप्रकारेण सद्विलक्षणं ख्यातियोग्यं च निदर्शनं सिद्धमित्याह तस्माद्रूप्यस्येति ॥ २१ ॥

इतश्चासन्न ख्यातीति न शक्यते वक्तुमित्याह किंचेति । स्वाभिप्रायेणासच्छब्दार्थमाह असच्छब्देनात्रेति । पराभिप्रायेणासच्छब्दार्थमाह अभावो वेति । उत्तरे च केचिच्छ्लोका उभयविषयत्वेन योज्या इत्याह उभयत्रेति । उभयत्राक्षरयोजनया किं दूषितमित्यत आह येऽनिर्वचनीयमिति । ये चाख्यातिवादिनोऽनिर्वचनीयमभावं च नेच्छन्ति ये चान्यथाख्यातिवादिनोऽनिर्वचनीयमेव नेच्छन्ति तदुभयदूषणं सिद्धमित्यर्थः । ननु प्रकृतानुपयोग्यसत्समर्थनमख्यातिवादिनः प्रति किमिति क्रियत इत्यत आह असत्समर्थनं चेति । एवं कतिपयश्लोकस्य तात्पर्यमुक्त्वा श्लोकं योजयति असन्न ख्यातीति । ... ॥ २२ ॥

**[Page 137]** ननु यथा आत्मन्यज्ञायमानेऽपि प्रमेयत्वं त्वया निषिध्यते तद्वदसत्यप्यज्ञायमाने ख्यातिर्मया निषिध्यत इत्याशङ्क्य वैषम्यमाह आत्मेति । कुतस्स्वयंज्योतिष्ट्वमित्यत आह तस्येति । स्वयंज्योतिषीति । आत्मनस्स्वयंज्योतिष्ट्वेन भानात्तस्मिन् प्रमेयत्वप्रतिषेधो न विरुध्यत इत्यर्थः । तस्य स्वयंज्योतिष्ट्वमपि श्रुतितस्सिध्यतीत्यपेरर्थः । यद्वा । विज्ञात इव स्वयंज्योतिष्यपि धर्मप्रतिषेधादिरुपपद्यत इत्यपेरर्थः । नासदीदृगिति । स्वयंज्योतिरित्यर्थः । नान्यदीदृशमिति । आत्मनोऽन्यन्न स्वप्रकाशमित्यर्थः । उत्तरार्धं व्याख्याति असत इति ॥ २३ ॥

पूर्वमसदवच्छिन्नख्यातिनिषेधानुपपत्त्या सज्ज्ञानमापादितम्। इदानीं सद्विवेकेन ख्यानमन्तरेणासतोऽसिद्धेस्तत्ख्यानमङ्गीकार्यमित्युत्तरश्लोकार्थमाह सतोऽर्थादिति। तर्हि विवेकेन ज्ञानमस्त्वित्यत आह असन्न भातीति वचनमिति। असन्न भातीतिवचनं न चेत्सविशेषणं तदा माता मे बन्ध्येतिवद्विरुद्धार्थं स्यादिति योजना ॥ २४ ॥

सविशेषणनिषेधोऽप्यन्यथाख्यातिवादिना कर्तुं न शक्यत इत्याह असद्रूपमिति। असद्रूपं भाति न सद्रूपेण भाति चेत् एवं सति नासत्ख्यातिर्निषिद्धैवेति योजना। व्याचष्टे यदि सविशेषणमिति। अन्यस्यान्यथाख्याननिषेधादन्यथाख्यातिपक्षनिषेध एव स्यादित्यर्थः ॥ २५ ॥

अत्रान्यथाख्यातिवादी स्वमतं दर्शयन् नायं निषेधोऽस्माकमनिष्ट इति शङ्कते स यदीति। असन्न सद्रूपेण ख्यातीत्यनेन नान्यथाख्यातिमात्रं निषिध्यते। किं त्वसदन्यथा ख्यातीत्येतत्। न तु सदन्यथा ख्यातीत्येतदपि। अतो नास्माकमनिष्टमित्यर्थः। सदन्यथा ख्याति न त्वसदित्यत्र हेतुर्वाच्य इति सिद्धान्तिना उक्ते पूर्ववाद्याह नात्मा असत इति। असतोऽन्यत्सत् तस्य नात्मा स्वरूपम्। एवमसदपि सतो नात्मा न स्वरूपमित्यर्थः। विविक्तसदसतोरैक्यज्ञानं च नास्तीत्याह नासद्धीरिति। ततः किमित्यत आह अत इति। सदसतोस्तत्ख्यात्योश्च परस्परानात्मतालक्षणविरोधात् क्वापि तादात्म्यादर्शनान्न भ्रमेऽपि तादात्म्यावभासस्संभवति। सतोस्त्विदंरूप्यांशयोस्सम्यक्स्थले तादात्म्यदर्शनात् सतोऽन्यथाख्यातिस्संभवतीति भावः। सम्यक्स्थले रूप्य एवैकस्मिन् पुरोदेशावच्छिन्नत्वेन इदंशब्दप्रयोगदर्शनान्न द्वयोस्तादात्म्यं क्वचिदपि दृष्टम्। अतोऽसतोऽन्यथाख्यात्यनुपपत्तिवत् सतोऽपि सदन्तररूपेण असद्रूपेण वा अन्यथाख्यातिर्न घटत इति परिहरति तथा सतोऽपीति। **[Page 138]** किंच सदन्यथा ख्यातीति वदतां किं सत् स्वात्मना ख्यातीत्युच्यते किं वा सदन्तरात्मनेति विकल्प्य आद्यं निरस्यति कथं चेति। द्वितीयमनुवदति सदन्तरेति। तत्र सदन्तर-

मपि किं सदेव उतासदिति विकल्प्य आद्यमनूद्य निरस्यति न स्यादिति। विलक्षणाकारमन्तरेण व्यावृत्त्ययोगात्सन्मात्रख्यातीनां भ्रान्तित्वप्रसङ्गा-न्नान्यथाख्यातिस्सिध्येदित्यर्थः। द्वितीयमुत्थाप्य निरस्यति अथेति। सदन्तर-स्यासत्त्वादेकमेव सत् स्यात्। ततस्तस्सदन्तरात्मना ख्यातिर्नामासदात्मना ख्यातिस्स्यात्। सा च त्वयैव निषिद्धेत्यर्थः। विपक्षे दोषमाह द्वितीयवत्त्व इति। सदन्तरस्यासत्त्वाद्द्वयोरप्यन्योन्यापेक्षया सदन्तरत्वेन द्वयोरपि सतो-रसत्त्वप्रसङ्ग इत्यर्थः। ननु सदन्तरस्यासत्त्वं वदतस्ततोऽसत्त्वमिष्टमेवेत्या-शङ्क्याह असच्चेत्सदुच्येतेति। न पर्यायत्वेन लोकोऽवगच्छतीति भावः। इतश्चासत्सदन्तरमित्ययुक्तं तवेत्याह असच्चेत्सदन्तरमिति। असत एवा-सदात्मना ख्यातिरन्यथाख्यातिरित्युक्तं स्यात्। तथा च नासतोऽन्यथा-ख्यातिरिति तव प्रतिज्ञाहानिरित्यर्थः। पूर्वमसतोऽन्यथाख्यातेरन्यथा-ख्यातित्वं अङ्गीकृत्यापादितम्। इदानीं तदपि न सिध्यतीत्याह कथं चेति। घटादेरपि घटात्मना ख्यातेरन्यथाख्यातित्वप्रसङ्गादित्यर्थः। नन्वसदन्त-रात्मना ख्यातित्वादन्यथाख्यातित्वमस्तीत्याशङ्क्य असदन्तरमपि सदन्तर-वद्द्विधा विकल्प्य क्रमेण दूषयति असदन्तरात्मनेत्यादिना। सतस्सदन्तरा-त्मना ख्यातिरन्यथाख्यातिरित्युक्तवतस्तव असतस्सदात्मना ख्यातिरन्यथा-ख्यातिरित्यापद्यत इत्यर्थः। उक्तं प्रमेयं संक्षिप्य दर्शयन्नुपसंहरति। तस्मा-दिति। उक्तेन न्यायेनेति। सत एव सदात्मना ख्यातेर्यथार्थत्वात् तस्याश्च भ्रमत्वे सर्वख्यातेरपि भ्रमत्वप्रसङ्ग इत्यर्थः। नन्वसत्सद्रूपेण न भातीत्यत्र असच्छब्देनानिर्वचनीयस्य विवक्षितत्वात्तस्य सद्रूपेण भानं प्रतिषिध्यते न पुनरसत एव असतोऽपि शुक्तिरूप्यतादात्म्यस्य सद्रूपेण भानाङ्गीकारादिति चोदयित्वा परिहरति असदित्यादिना। किंच यदसत् त्वयाङ्गीकृतं तदपि निरूप्यमाणमनिर्वाच्यमेवेति दर्शयितुं विकल्पयति तच्चासदिति। नन्वसत्सदपि न भवति तुच्छमपि न भवतीति शङ्कित्वा तर्ह्युभयविलक्षणत्वादनिर्वाच्य-मेवेति परिहरति नोभयमित्यादिना। नन्वसतोऽभावप्रमाणविषयत्वा-

न्नानिर्वचनीयत्वमिति शङ्कित्वा परिहरति प्रमाणवत्त्वादित्यादिना। नन्वसतः प्रमाणवत्त्वाभावे तत्ख्यातिरेव न स्यादित्याशङ्क्याह अप्रमाणवत्त्वेऽपीति। ... [Page 139] ख्यातिव्यवहारयोरभावे तदपह्नवस्य न सिध्यतीत्याह तदपह्नवस्येति। तस्मात्सतोऽन्यथाख्यातिरविद्यां विना न सिध्यतीत्युपसंहरति तस्मादिति। उक्तेऽर्थे श्लोकमवतारयति तदेतदिति। सद्वस्तु अन्यथा ख्याति नासदिति चेत्त्वयोच्यते तर्हि तत्र हेतुरुच्यताम्। पूर्ववादी हेतुमाह नात्मेति। असतोऽन्यस्मिन् असतो नात्मा न स्वरूपं असङ्गीर्वा न सत्ख्यातिरिति चेत्तत्र सिद्धान्त्याह तथा सत इति। सतोऽपि नान्यस्मिन्नात्मा स्यात्। अतो नान्यथाख्यातिसिद्धिरित्यर्थः॥ २६॥

नन्वसत इन्द्रियासंबन्धात्प्रत्यक्षभ्रमे ख्यातिरेव न संभवति सतस्तु संभवतीति वैषम्यमाशङ्क्य साम्येन परिहरति असदक्षैरिति। सतोऽपि ख्यानयोग्यरूपस्यापीत्यर्थः॥ २७॥

ननु देशान्तरस्थमपि दोषबलादिन्द्रियसंबद्धं भविष्यतीत्याशङ्क्य तर्ह्यसदेव तथा किं न स्यादित्याह दोषादिति। किंच नान्यत्र सदेव भ्रान्तौ भातीत्याह रूप्यं भातीति। ननु देशान्तरस्थरूप्यस्यासंनिहितत्वेऽपि सत्त्वादेव स्वरूपेणेन्द्रिययोग्यत्वादिन्द्रियेण ग्रहणं दोषबलात्संभवेत् न त्वेवं त्वदभिमतस्यानिर्वचनीयस्येति वैषम्यमाशङ्क्य ईदृशं वैषम्यमभ्युपगम्यापि तस्यैव कालान्तरीयस्य नेन्द्रियेण ग्रहणं संभवतीत्याह यद्यपीत्यादिना। असत्त्वात्तदेति। तदा भ्रमदशायां तस्य नष्टत्वेनासत्त्वादित्यर्थः। तस्य वर्तमानेति। चक्षुषो वर्तमानसंबन्धित्वनियमादित्यर्थः। पूर्वं दोषवशाद्देशान्तरस्थग्रहणमभ्युपगम्योक्तम्। इदानीं तदपि न घटत इत्याह दोषोऽपीति। ... तर्हि चक्षुरन्तरमसंनिहितसंबन्धं सृष्ट्वा देशान्तरस्थं ग्राहयेदित्याशङ्क्याह न चक्षुरन्तरमिति। तथा सति दोषापगमेऽपि चक्षुरन्तरस्यावस्थानप्रसङ्ग इत्यर्थः। तर्हि पूर्वसिद्धमेव चक्षुरन्यत्र नीत्वा ग्राहयेदित्याशङ्क्याह तदेव वेति। नेत्यनुवर्तते। विपक्षे दोषमाह नयेच्चेदिति। इदमंशस्य चक्षुषा

ग्रहणं न स्यादित्यर्थः । ननु नीयमानं चक्षुर्न पक्षिवद्गच्छति किंतु सवितृकिरणवदित्याशङ्क्य तर्हि मध्यस्थानामपि ग्रहणप्रसङ्ग इत्याह संततं चेदिति । मध्यस्थानामग्रहणे देशान्तरस्थमपि न गृह्येतेत्यर्थः । **[Page 140]** इतश्च न देशान्तरस्थग्रहणमित्याह व्यवधानाच्चेति । व्यवहितस्याग्राहक[त्व?]लमनुभवेन दर्शयति समीपस्थमपीति । समीपस्थमपि घटादिव्यवधाने चक्षुषा न गृह्यते किं पुनर्दूरस्थं पर्वताद्यनेकव्यवधानसंभवादित्यर्थः । इतश्च न भ्रमविषयस्येन्द्रियसंबन्धित्वमित्याह कथं चेति । ··· इतश्चान्यत्र सदेव भ्रान्तौ भातीति न शक्यत इत्युत्तरार्धं योजयन्नाह इदमात्मना चेति । पूर्वमत्रजलमभ्युपगम्योक्तम् । इदानीं तदपि रूप्यज्ञानस्य नास्तीत्याह अत इति । अतशब्दाभिहितमेव स्फुटयति असदिति । सद्विषयत्वाभावादित्यर्थः । महाप्रमेयमुपसंहरति अतोऽसदिति ॥ २८ ॥

असज्ज्ञाननिराकरणासंभवे युक्त्यन्तरमाह सदन्तरमिति । अनुवादाय तुच्छस्यापि प्रतीतिर्वक्तव्येत्याह तुच्छमुक्तेति । नन्वसन्न ख्यातीत्युक्त्या स्वरूपेणापि सत्त्वहीनस्यानिर्वचनीयस्याख्यानमुच्यते न त्वसत इति शङ्कते अनिर्वचनीयमिति । निरस्यति तच्चेति । अनिर्वचनीयस्यापि रूप्यादेः ख्यातिदर्शनादित्यर्थः । इतश्चानिर्वाच्यस्य ख्यातिस्त्वयाङ्गीकृतेत्याह असतोऽपीति । असतोऽसत्यत्वेऽनिर्वाच्यत्वात्तस्य च त्वया भानाङ्गीकारादनिर्वचनीयस्यापि भानं त्वयाङ्गीकृतमेवेत्यर्थः । नन्वसतस्सदन्तरत्वेन तत्ख्यातिस्संभवति । अनिर्वाच्यस्य तु सद्विलक्षणत्वात्स्वरूपसत्त्वहीनतुच्छस्येव ख्यातिर्न संभवतीत्यत आह तुच्छमिति । यद्वा । असत्ख्यानमनिर्वाच्यख्यानं वा न निषिध्यते किंतु तुच्छस्य ख्यानं तस्य निस्स्वरूपत्वादित्यत आह तुच्छमिति ॥ २९ ॥

ननु रूप्यस्यानिर्वचनीयत्वसिद्ध्ये तुच्छस्याख्यानं त्वयाप्युक्तम् । तत्र तदनुवादाय ख्यातिर्वाच्या । तथा च न ख्यातिनिषेध इति त्वदुक्तदोषस्य तावकीनपरिहार एवास्माकमपि भविष्यतीति प्रतिबन्दीं शङ्कते नन्विति ।

··· [Page 141] कथमिति। तत्र तावदन्यथाख्यातिवादिनस्तदसंभवमाह उच्यते न तावदिति। शुक्तौ रूप्यसंसर्गभ्रम इव अतुच्छे तुच्छसंसर्गभ्रम इति वा रूप्यख्यातेश्शुक्तिविषयत्ववत्तुच्छख्यातेरतुच्छविषयता भ्रम इति वा शुक्तिख्यातौ रूप्यख्यातिभ्रमवदतुच्छख्यातौ तुच्छख्यातिभ्रम इति वा अन्यथाख्यातिवादिभिर्वक्तव्यम्। तन्न संभवति तुच्छतत्ख्यात्यो रूप्यतत्ख्यात्योरिवान्यत्रानभ्युपगमादित्यर्थः। अभ्युपगमे को दोष इत्यत आह सिद्धत्वे चेति। रूप्यस्येव तुच्छस्याप्यन्यत्र प्रमाणसिद्धत्वावश्यंभावात् क्वापि तुच्छं नास्तीति निषेधो न शक्य इत्यर्थः। इदानीमख्यातिवादिनस्तादृशपरिहारासंभवमाह तथा अख्यातिवादिनापीति। ··· ननु गृह्यमाणस्मर्यमाणाद्यविवेकरूपस्तुच्छख्यात्यादिभ्रमो मया नेष्यते येन रूप्यवत्तुच्छादेरन्यत्र सत्त्वं स्यात् किं त्वख्यातौ ख्यात्यभिमानो बालानामिति शङ्कते अख्याताविति। अत्र विकल्प्य दूषयति किं सर्वाख्याताविति। सर्वविषयाख्याताविति। सर्वविषयाख्यातावित्यर्थः। किंच वस्त्वख्यातौ सत्यामसत्ख्यातीति योऽभिमानस्सोऽपि किमात्मकः— किमख्यात्यात्मकः किं वा ख्यात्यात्मक इति विकल्प्य दूषयति कस्येति। असत्ख्यातिभ्रमः असत्ख्यातिरूपभ्रम इत्यर्थः। उक्तो दोष इति। सर्वाख्यातिश्चेत् सुषुप्तादावेवासत्ख्यात्यभिमानस्स्यात् यस्य कस्यचिदख्यातिश्चेत्सदा स्यादित्यर्थः। असत्ख्यातिरूपभ्रमस्याख्यातित्वे दोषान्तरमाह अख्यातावख्यातिरिति। [Page 142] असत्ख्यातिभ्रमो नाम अख्यातिरित्येतावतार्थसिद्धावख्यातावख्यातिरिति पुनरुक्तिर्व्यर्थेत्युक्ते तत्र सार्थत्वं शङ्कते न वृथेति। प्रथमाख्यातिशब्देन वस्त्वदर्शनं द्वितीयेन चादर्शनाभावदर्शनयोर्विवेकाग्रहणं विवक्षितमित्यर्थः। तर्हि रूप्यख्यातिरिवाभावख्यातिरपि क्वचिदिष्टा स्यात् अन्यथा तदविवेकायोगादिति परिहरति असदिति। द्वितीयविकल्पमनुवदति अथ ख्यातिरिति। तर्हि ख्यातेस्सालम्बनत्वनियमात् किमख्यातिरालम्बनमुतासत्ख्यातिरिति विकल्प्य आद्यं प्रत्याह तस्येति। तस्य भ्रमस्याख्याति–

श्चेद्विषयः किं सर्वविषयाख्यातिः कतिपयविषयाख्यातिर्वेत्युक्त एव दोष इत्यर्थः । द्वितीयं प्रत्याह असत्ख्यातिरेवेति । असत्ख्यातिरेव चेदालम्बनं तदा शुक्तीदमंशस्यानिर्वचनीयत्वादसत्ख्यातिरिष्टा स्यादित्यर्थः । ख्यातेरसत्ख्यात्यालम्बनत्वे दोषान्तरमाह अभ्रमत्वं चेति । असत्ख्यात्यालम्बनायाः ख्यातेरभ्रमत्वं च स्यात् । न हि घटख्यातौ घटख्यातिरियमिति ख्यातिर्भ्रान्तिर्भवतीत्यर्थः । अत्रासत्ख्यातेरभ्रमत्वपरिहारायाशङ्कते अथाख्यातिमिति । दोषवशादख्यातिमेवासत्ख्यातिं मन्यन्ते न त्वसत्ख्यातिर्नाम वस्त्वस्तीत्यर्थः । परिहरति अन्यथाख्यातिस्सेति । सा तावदख्यातेरसत्ख्यात्यात्मना प्रतीतत्वादन्यथाख्यातिस्स्यात् । सा च त्वयापीष्टा स्यादित्यर्थः । सेति पदं मध्यप्रदीपवदुभयत्र संबध्यते । यद्वा । सा च दृष्टा स्यात् असत्ख्यातिरपीष्टा स्यादित्यर्थः । एवमख्यातावसत्ख्यातिभ्रमशब्दार्थं दूषयित्वा संप्रत्यधिष्ठानभूताख्यातिरपि किं ख्यात्यभावः किं वा ख्यातिरेवेति विकल्प्य आद्यं प्रत्याह अख्यातिरपीति । असदभावस्तत्ख्यातिश्चाधिष्ठानस्फुरणार्थमिष्टा स्यादित्यर्थः । द्वितीयं प्रत्याह ख्यातिरेव चेदिति । ··· इदानीं विज्ञानवादिनापि तुच्छं ख्यातीत्यादिर्भ्रम इत्याश्रयितुं न शक्यत इत्याह तथा आत्मख्यातीति । बुद्ध्याकारत्वाभ्युपगमे च क्वापि नास्तीति निषेधो न युज्यत इत्युक्तमित्यर्थः । किं च अभावानङ्गीकारे नास्त्यद्वैतमित्यादिव्यवहारोऽनिर्वचनीयानङ्गीकारे जगतश्शून्यत्वं न युज्यत इत्यादिव्यवहारस्य विज्ञानवादिनो न सिध्यतीत्याह कथं चाभावमिति । ननु त्वयापि तुच्छादिभ्रममिच्छता क्वचित्तुच्छादेस्सिद्धिरेष्टव्या नो चेद्भ्रमजनकपूर्वानुभवसंस्काराभावाद्भ्रमाभावप्रसङ्ग इत्यत आह मत्पक्षे त्विति । प्रमाणसंस्कार एव न भ्रमहेतुर्भ्रमसंस्कारादपि भ्रमदर्शनात् । अतः क्वापि प्रमाणतोऽसिद्धस्यैवाविद्यामहिम्ना भ्रान्तौ भानान्नान्यत्र सिद्धिरेष्टव्येत्यर्थः । ··· ॥ ३० ॥

**[Page 143]** पूर्वमसदनिर्वाच्यं वा सदादिभिर्निषेद्धुं न शक्यत इति

प्रतिपादितम् । इदानीं सद्वादिनामेव परस्परं प्रधानं नास्ति नियोगो नास्तीत्यादिनिषेधोऽपि न सिध्यतीत्याह भवतामन्योन्यपक्षा इति । प्रधानादेर्भ्रान्तिविषयत्वेऽन्यत्र सत्त्वप्रसङ्गादित्यर्थः । ... ननु यथा त्वदभिमताविद्याजन्यतया परस्य साक्षिसिद्धं तदुक्त्या प्रतिपन्नं पक्षान्तरमनूद्य त्वया युक्त्या निराक्रियते तद्वदस्माभिरप्यस्मदङ्गीकृतभ्रान्त्या परेषां सिद्धमनूद्य निराक्रियत इत्याशङ्क्य तद्ध्वंसद्विलक्षणत्वेन प्रतीतियोग्यं सद्विलक्षणत्वेन निरासयोग्यं च पक्षान्तरं जनयन्ती त्वयाप्यविद्या स्वीकार्या स्यात् । अन्यथा त्वदभिमताख्यात्यादिलक्षणभ्रमसिद्धस्यान्यत्र प्रामाणिकत्वेन दूष्यत्वासंभवादित्याह अविचारितेत्यादिना । प्रामाणिकस्य निराकरणं कुतो न संभवतीत्यत आह न्यायेति । परेष्टमित्यस्य अध ऊर्ध्वं च संबन्धः । ... परेष्टमित्यस्य वैशेषिकादिभ्रमसिद्धात्मभेदस्सौगतभ्रमसिद्धक्षणिकत्वं चार्थ इत्याह परेष्टं वा आत्मभेदमिति । ... ॥ २१ ॥ २२ ॥

**[Page 144]** लौकिकभ्रमसिद्ध्यनुपपत्त्या पक्षान्तरनिराससिद्ध्यनुपपत्त्या वा अविद्या यतो न वादिभिरपलपनीया अतो दृष्टान्तसिद्धिरित्याह अत इति ॥ २३ ॥

एवं दृष्टान्तसाधनेनानुमानतः प्रपञ्चस्य मायामयत्वलक्षणमिथ्यात्वमभिधाय आगमतोऽप्याह मायाविद्येति । ननु मायाप्रकृतिकत्वमस्तु तावता कथं मिथ्यात्वमित्यत आह यतो मायामया इति । लोके मायाविदर्शितहस्त्यश्वरथादिषु शुक्तिरजतादिभ्रमेषु च मिथ्याभूतेषु मायापदस्य व्युत्पत्तेर्वेदेऽपि तथाभूतार्थग्रहणस्य न्याय्यत्वान्मायाप्रकृतित्वमेव मिथ्यात्वमित्यर्थः । एकरूपे वस्तुनि नानाविधविचित्रावभासनचतुरतामाह मायेति । आत्मना सह स्थितत्वेऽप्यभिव्यक्तात्मना निवृत्तियोग्यतामाह अविद्येति । आश्रयविषयभेदमन्तरेणाद्वये वस्तुनि स्थितियोग्यत्वमाह तम इति । प्रसिद्धतमोवन्न चलनादिमात्रहेतुः किंतु सर्वकारणमित्याह कारणमिति । लयभूमित्वादुपादानमेव न निमित्तमात्र[?]मित्याह लय

इति । तर्ह्यात्मविद्ययोरुभयोरप्युपादानत्वादद्वितीयत्वभङ्ग इत्यत आह शक्तिरिति । आत्माधिष्ठानत्वान्न तस्याः पृथक्सत्तेत्यर्थः । स्वाधिष्ठानस्यात्मनस्स्वावभासकरूपं प्रति अनाच्छादकत्वमाह सुप्तिरिति । अद्वयानन्दाकारावभासं प्रति आच्छादकत्वमाह महासुप्तिरिति । एकस्मिन्नात्मन्यनेकचेतनभ्रमहेतुत्वमाह निद्रेति । शास्त्रजन्यज्ञानं विना न निवृत्तिरित्याह अक्षरमिति । आत्मवद्व्याप्तदेशकालशून्यमित्याह आकाशमिति । दृश्यप्रपञ्चस्य मायाप्रकृतिकत्वे तव किं फलमित्यत आह तस्मादिति । कर्तृत्वादिप्रपञ्चस्य मायामात्रत्वेन निवर्त्यत्वादात्मनोऽद्वयत्वं फलमित्यर्थः ॥ ३४ ॥

मायाशब्दस्य वेदनिघण्ट्ववष्टम्भेनार्थमाचक्षाणश्लोकस्य व्यावर्त्यमाह ननु मायाशब्द इति । परिहारत्वेन श्लोकं योजयति तन्न तत्कार्यस्येति । कथमवगम्यत इत्याशङ्क्य प्रतिपन्नोपाधौ ब्रह्मात्मनि श्रुत्या द्वैततद्दर्शनयोर्निषिध्यमानत्वादित्याह तयाहीत्यादिना । अत्रैव प्रतिपन्नोपाधौ ब्रह्मात्मन्येवेत्यर्थः । **[Page 145]** नन्वस्तु द्वैततद्दर्शनयोरनिर्वचनीयत्वं मायायास्तु कथमित्यत आह तत्कारणमपीति । ··· पूर्वं मायाशब्दस्य प्रज्ञानामसु पाठेऽपि प्रकृतिपदसामानाधिकरण्यविरोधात्प्रज्ञार्थत्वं हित्वा कार्यानुरूपा अनिर्वाच्या माया लोकसिद्धा तदर्थत्वेन स्वीकार्येत्युक्तम् । इदानीं प्रज्ञावाचित्वमभ्युपेत्यापि किं ब्रह्मचैतन्यलक्षणा प्रज्ञा तदर्थः किं वा बुद्धिलक्षणेति विकल्प्य नाद्य इत्याह प्रज्ञानामत्वेऽपीति । कुत इत्यत आह इतरेषामिति ।

मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।
माया प्रज्ञा तथा धीश्च स्मृतिश्च परिपठ्यते ॥

इत्यत्र प्रज्ञया सह पठितानां मनआदिशब्दानां तदर्थत्वाभावादित्यर्थः । ··· द्वितीयस्त्वङ्गीक्रियत इत्याह अत इति । मीयतेऽर्थोऽनयेति व्युत्पत्त्या मायाशब्दो बुद्धिलक्षणप्रज्ञानाम स्यादित्यर्थः । ··· ॥ ३५ ॥

नेह—नानास्तीति—वाक्येन परमाणुष्विव कारणे ब्रह्मणि नानात्वं नास्तीत्युच्यते न तु प्रपञ्चो नास्तीति। तत्राह नान्यत्रेति। कारणे कार्यं निषिध्यते। ततोऽन्यत्र च कारणाधीनसत्ताप्रकाशस्य कार्यस्य सत्त्वं न संभवति। तस्मात्कार्यप्रपञ्चो नास्त्येवेत्यर्थः। नन्विवशब्दस्योपमार्थत्वात् ब्रह्मगतनानात्वतद्दर्शनोपमानभूमित्वेन कार्यप्रपञ्चनानात्वतद्दर्शने स्त एवेत्यत आह नानेवेति। अस्य पूर्वश्लोकेनापौनरुक्त्याय भास्करमतावलम्बनेन पूर्वश्लोकार्थभञ्जिकामाशङ्कामाह ननु नेहेति। प्रत्यक्षादेर्व्यावहारिकप्रमाणत्वमेवेत्यत आह दृष्टिश्रुतेरिति। ननु नानेव पश्यतीति वाक्येन कार्यप्रपञ्चो निषिध्यत इत्यत आह नानेवेति। अनेनापि वाक्येन ब्रह्मणि नानात्वदृष्टिरेव निषिध्यते न तु कार्यप्रपञ्चदृष्टिरित्याह[?] ब्रह्मणि नानेव पश्यति कार्यप्रपञ्च इव नाना यः पश्यतीत्येवमर्थत्वाद्वाक्यस्येत्यर्थः। ननु नानाशब्दस्य नानाभूतकार्यप्रपञ्चवाचित्वमेव न तु नानात्ववाचित्वम्। अतः कार्यप्रपञ्चनिषेधकमेवेदं वाक्यमित्याशङ्क्य तथापि नानाभूतप्रपञ्चस्योपमानत्वेन रक्ष्यत्वान्न तद्दृष्टिनिषेध इत्याह कथं चेति। अत्र किं नानाशब्दो नानात्ववाचित्वेन व्युत्पन्नः किं वा तदुपलक्षितवस्तुवाचित्वेनेति विकल्प्य नाद्य इत्याह न तावदिति। एकादिशब्देष्वदर्शनादित्यर्थः। विपक्षे दोषमाह यदेत्तेदिति। ··· द्वितीयस्त्वस्मदभिमतानुकूल इत्याह अतो नेहेति। नानाशब्दस्य नानाभूतवस्तुवाचित्वान्नानाभूतं कार्यं ब्रह्मणि निषिध्यत इति सिध्यति। तथा च न तत् क्वापि स्यात् कारणाधीनसत्ताप्रकाशस्य तत्र निषेधेऽन्यत्र सत्त्वासिद्धेरित्यर्थः। **[Page 146]** किंच यदन्यत्र सदेव नानात्वं ब्रह्मणि निषिध्यत इत्युच्यते तत्किं कार्यमकार्यं वेति विकल्प्य आद्ये तस्य नान्यत्र सत्त्वसिद्धिरित्याह नानात्वमपीति। द्वितीये तु न निषेधार्हमित्याह अकार्यं चेदिति। तर्हि तदुभयविलक्षणमस्त्वित्यत आह न चेति। भास्करमते ब्रह्मणोऽद्वितीयत्वं नाम सकार्यात्तस्माद्विलक्षणशून्यत्वम्। तस्य हानिप्रसङ्गा-

दित्यर्थः। ... एवं नानात्वस्य दुर्निरूपत्वं प्रसाध्य कार्यप्रपञ्चस्यापि भेदाभेदविकल्पेन दुर्निरूपतामाह कार्यकारणयोश्चेति। कार्यस्येव कारणस्यापि भेदस्स्यात्। ततश्च कारणभेदः श्रुत्या निषिध्यत इत्ययुक्तमुक्तमित्यर्थः। कार्यकारणयोर्भेदे कार्यस्य कारणादिव कारणस्यापि कार्याद्भेदस्स्यात्। ततश्च यावद्विकारं तु विभागो लोकवदिति न्यायेन ब्रह्मणोऽपि कार्यत्वप्रसङ्ग इत्याह भेदे कारणस्यापीति। भेदपक्षे दोषान्तरमाह भेदे चेति। भेदाभेदपक्षे दोषमाह भिन्नाभिन्नं चेदिति। ब्रह्म अब्रह्मात्मकं स्यात् ब्रह्मणो ब्रह्मत्वं हीयेत कार्येणाभिन्नत्वादित्यर्थः। तत्र कार्यस्य ब्रह्मात्मकत्वांशे दोषमाह तदापीति। कार्यस्य ब्रह्मात्मकत्वे कारणभूतब्रह्मवत्कार्यस्यापि परस्परभेदो न स्यात् स्याच्चेत् ब्रह्मणोऽपि स्यादित्यर्थः। इदानीमब्रह्मात्मकत्वांशे दोषमाह अब्रह्मत्वे चेति। ब्रह्मात्मकत्वांशे दोषान्तरमाह ब्रह्मरूपस्य चेति। ... **[Page 147]** उत्तरार्धयोजनया श्रुतेरर्थमाह अत एवेति। अत एव उपमानभूतस्य नानावस्तुनः क्वचिदप्यभावादेवेत्यर्थः। माणवकादावग्न्यादिदर्शनस्य यथा मुख्यापेक्षया आभासत्वं न तद्वदिहाभासत्वमित्याह अज्ञानेति ॥ ३६ ॥

अन्वयव्यतिरेकगर्भाच्छ्रुत्यन्तरादपि द्वैतप्रपञ्चस्य मिथ्यात्वं कण्ठोक्तमित्याह यत्र हीत्यादि। ... ॥ ३७ ॥

प्रपञ्चबाधकब्रह्मज्ञानसिद्ध्यन्यथानुपपत्त्या प्रमात्रादिद्वैतप्रपञ्चस्य सत्यत्वं वक्तव्यमित्याशङ्क्याह दृश्यदृश्योरिति। प्रमात्रादेर्मिथ्यात्वेऽपि श्रौतस्य ज्ञानस्य परमार्थात्मदृष्टिव्याप्तत्वेन तदाकारस्य ब्रह्मज्ञानस्य संभवादन्यथाप्युपपत्तिरित्यर्थः। यद्वा। आत्मनो दृक्शक्त्यर्थवत्त्वाय द्वैतप्रपञ्चस्य सत्यत्वं वक्तव्यमित्याशङ्क्य दृक्शक्तिस्स्वात्मापेक्षया अर्थवतीत्याह दृश्यदृश्योरिति। आत्मनः आत्मविषया दृष्टिरित्यर्थः। यद्वा। दृश्यतद्दर्शनयोरिव दृश्यतत्स्मरणयोरप्यभावस्स्यादित्यत आह दृश्यदृश्योरिति। ... **[Page 148]** कूटस्थदृष्टिरात्मैव परमार्थवस्तु द्वैतं पुनरवस्त्वित्यस्यार्थस्यानेकयुक्त्युपबृंहितत्वा-

दपि न द्वैताबाधाशङ्का इत्याह युक्तिभिश्चेति । श्रुतियुक्तियुक्तत्वेऽपि प्रत्यक्षादिविरोधान्नायमर्थस्साधीयानित्याशङ्क्याह तथा प्रत्यक्षादीति । दर्शितो दर्शयिष्यते चेत्यनुवर्तते ॥ ३८ ॥

ज्ञानान्मोक्षश्रुत्यनुपपत्त्यापि बन्धस्य मिथ्यात्वमवगम्यत इत्याह ज्ञानमात्रेति । ··· ॥ ३९ ॥

**[Page 149]** बन्धरूप्ययोर्ज्ञानातिरिक्तसाधनानिवर्त्यत्वमुपपादयति मुक्तिशुक्ती इति । बन्धस्येत्युपलक्षणम् । रूप्यस्यापि नाशस्स्यादित्यर्थः । रूप्यस्य शुक्तिकृतो नाश एवास्तु को दोष इत्यत आह रूप्ये मृद्वदिति । तथा च नष्टमृत्पिण्डस्येव रूप्यस्य सत्यत्वं स्यात् । सत्ये च रूप्ये मृत्पिण्डज्ञानस्येव रूप्यज्ञानस्य भ्रान्तित्वं शुक्तिज्ञानस्य घटज्ञानवद्बाधकत्वं च न स्यादित्यर्थः । एतद्बन्धस्याप्युपलक्षणम् ॥ ४० ॥

पूर्वं बन्धरूप्ययोः क्रियया मुक्तिशुक्तिभावमङ्गीकृत्याभिहितम् । इदानीमन्यथाभाव एव न संभवतीत्याह भवत इति । अन्यथाभावो नाशो वा भवतो न भवेदभवतश्च न भवेदित्यर्थः । ··· **[Page 150]** रूप्यं च तथेति । अज्ञानजं ज्ञानमात्रापनोद्यं चेत्यर्थः ॥ ४१ ॥

दृष्टान्तस्य ख्यातिबाधान्यथानुपपत्त्या यदनिर्वचनीयत्वमुपक्षिप्तं तद्भास्करमतावलम्बनेनान्यथैवोपपन्नमिति शङ्कते नन्वनिर्वचनीयत्व इति । ··· ननु तर्हि ख्यातिबाधाभ्यां रूप्यस्य सदसदात्मकत्वप्रसङ्ग इत्याशङ्क्य ख्यायमानत्वेन तावत्सत्त्वं साधयन्नन्यथाख्यातिं परिशेषयति अतोऽसत इति । तर्हि सत्यरूप्यवद्बाधो न सिध्येत् । यदि सिध्येत् सत्यरूप्यस्यापि स्यादित्यत आह बाधोऽपीति । ख्यातिबाधयोर्भिन्नविषयत्वायोगात्सदसदन्यतरविषयत्वे वक्तव्ये प्राथमिकन्यायानुसारेण सत्त्वमेव युक्तम् । तथा च बाधोऽपि यदि भवेत्सत एव भवेत् । न तु सतस्सर्वत्र[त्रा ?]बाध इति भावः । नासच्चेत्तन्न सत्कथमित्यंशं व्याचष्टे किंचेति । यथायमब्राह्मणो न भवती-

त्येवमसन्न भवति चेत्सदेव स्यादित्यर्थः । तस्मात्सत एव कथंचिदिति । स्वरूपेणाबाध्यत्वेऽपि संसृष्टरूपेण बाध्यत्वमिति भावः ॥ ४२ ॥

[Page 151] यस्मात्सतोऽन्यस्य ख्यातिबाधौ न युज्येते तत उपसंहरति नात इति । ··· मा भूद्वा कार्यस्य सत्यत्वश्रवणं तथापि युक्त्या तस्य सत्यत्वं सिध्यतीत्याह कारणस्य चेति । श्रुतियुक्तिहीनत्वेऽपि प्रतीत्या सिध्यत्वित्यत आह तत्प्रतीतिरिति । ननु नास्तीति प्रतीतिस्तत्तुच्छविलक्षणानिर्वाच्यविषयेत्युक्तमित्याशङ्क्याह नास्तीत्यपीति । अभावस्यापि ब्रह्मविकारत्वेनाकाशादिवत्सत्यत्वमेवेत्यर्थः । उपसंहरति तस्मादिति । जनेः ख्यातेश्चासंभवादिति कार्यप्रपञ्चस्यासत्त्वाभावे तुच्छख्यात्यसंभवमात्रं शुक्तिरूप्यस्यासत्त्वाभावे हेतुरिति द्रष्टव्यम् ॥ ४३ ॥

परपक्षान्तरस्यासंभवान्नान्यथैवोपपत्तिरित्यभिप्रेत्यासत्पक्षं तावन्निरस्यति उच्यते नासत इति । असतश्शशविषाणादेः ख्यातिजन्मादर्शनात् प्रपञ्चस्य ख्यातत्वाज्जातत्वाच्च नासत्त्वं रूप्यस्य ख्यातत्वान्नासत्त्वमित्यर्थः । इदानीं सत्पक्षं निरस्यति विनेति । सत आत्मनो बाधनाशयोरदर्शनाद्बाध्यमानस्य रूप्यस्य नाशवतश्च प्रपञ्चस्य न सत्त्वमित्यर्थः । इदानीं निष्कृष्य दार्ष्टान्तिकस्यैव जन्मनाशश्रुत्यन्यथानुपपत्त्या अनिर्वाच्यत्वं साधयति सदसज्जन्मनाशौ नेति । सत आत्मनोऽसतश्च शशविषाणादेर्जन्मनाशादर्शनाज्जगतश्च तच्छ्रवणादुभयवैलक्षण्यमित्यर्थः । पूर्वश्लोकं व्याख्याति लयापीति । शुद्धस्य संसर्गादिरहितस्येत्यर्थः । शुक्तेर्ब्रह्मणश्च तत्प्रसङ्गादिति । शुक्तेर्बाधप्रसङ्गाद्ब्रह्मणो नाशप्रसङ्गादित्यर्थः । उत्तरश्लोकमाक्षेपसमाधानपूर्वकं व्याख्यातुमाक्षेपं तावदाह ननु सतोऽपीति । ··· [Page 152] अभेदपक्षे भवेदयं दोषः प्रपञ्चब्रह्मणोर्भेदोऽप्यस्तीत्याशङ्क्याह अन्यत्वेऽपीति । इदानीं श्लोकं योजयति अतो न सत इति ॥ ४४ ॥ ४५ ॥

पूर्वश्लोकेन जगतस्सत्त्वे जन्मनाशासंभवमुक्त्वा अधुना रूप्यस्य सत्त्वे बाधासंभवमाह सतोऽपीति । भ्रान्तिविषयत्वाद्रूप्यांशस्येत्यत आह बाध्येतरां-

शयोरिति । उभयोरप्यंशयोस्सत्त्वाविशेषे तद्बुद्ध्योरपि भ्रान्तित्वमभ्रान्तित्वं वा समानं स्यादित्यर्थः । तर्ह्यसत एव बाधोऽस्त्वित्यत आह असतस्त्विति ॥ ४६ ॥

यदुक्तं नासच्चेत्तन्न सत्कथमिति तत्राह किं चादुष्टाद्योऽपीति । ... ॥ ४७ ॥

[Page 153] अत्र प्रतिबन्दिन्यायेन शङ्कते ननु मायेवेति । यथा स्वप्नस्याविद्यात्वेऽपि तद्व्यवहारदशायां कस्यचिद्रूप्यांशस्यैव भ्रान्तिविषयत्वं बाध्यत्वं च न त्विदमंशस्येति नियमस्तद्वज्जाग्रद्व्यवहारदशायामपि स्यादिति परिहरति स्वप्नवदिति । ननु मिथ्याभूतमपि यदि किंचिदबाध्यं भवेत्तदा ब्रह्मज्ञानादपि कृत्स्नबन्धबाधो न स्यादित्यत आह प्रबोधे स्वाप्नवदिति । सर्वो व्यवहार इति । अभ्रान्तत्वेनाबाध्यत्वेन च प्रतिपन्नं तद्विषयव्यवहारस्य निवर्तत इत्यर्थः ॥ ४८ ॥ ४९ ॥

स्वपक्षे परिहारमुक्त्वा परपक्षे तदभावमाह व्यवस्था व्यवहारेऽपीति । ... ननु त्वत्पक्षेऽपि दर्शनबलादेव भ्रान्तिबाधव्यवस्था न पुनर्युक्तितः तद्वदसत्पक्षेऽपि स्यादित्याशङ्क्य मत्पक्षे युक्तिरप्यस्तीति परिहरति ननु सेत्यादिना । श्लोकस्थेन तेशब्देन द्योतितमर्थमाह मम त्विति । ननु सा दृश्यत इति भागं व्याचष्टे नन्विति । तद्वदस्माकमपि सर्वस्य सत्त्वेऽपि दर्शनादेव व्यवस्था अस्त्विति भावः । बाढमित्याद्यंशं व्याख्याति सत्यमित्यादिना ॥ ५० ॥

[Page 154] किं चानिष्टतुच्छख्यातिप्रसङ्गपरिहाराय रूप्यादेर्मायामयत्वं वक्तव्यमित्याह यतो मायामनिच्छत इति । रूप्यतत्संसर्गयोर्मायामयत्वमनिच्छत इत्यर्थः । ननु रूप्यादेरन्यत्र सत्त्वान्न तुच्छत्वम् । ततो न तुच्छख्यातिप्रसङ्ग इत्यत आह यतो न शुक्ताविति । अन्यत्र सत्त्वपरामर्शमन्तरेण निषिध्यमानत्वादित्यर्थः । मायाभ्युपगम एव श्रेयानिति । ख्यातिबाधसंभवादिति भावः ॥ ५१ ॥

सिद्धान्तश्लोके सदसद्वादनिराकरणं सूचितम् । तत्र सद्वादनिराकरणं प्रपञ्च्य अधुना असद्वादनिराकरणं प्रपञ्चयितुमवसरप्राप्तं चोद्यमुद्भावयति अत्राहेति । अपरोक्षतया प्रतीयमानस्य रूप्यादेः कथं तुच्छतेत्याह तथा बाधादिति । नेदं रजतमिति ज्ञानविषयत्वात्तुच्छत्वं गम्यत इत्यर्थः । ननु न बाधो रूप्यादेस्तुच्छत्वं बोधयति किं तु रूप्यादि नाशयत्येव । ततो नाश्यत्वाय अतुच्छत्वं रूप्यादेरित्याशङ्क्याह न हन्तीति । कुत इत्यत आह सा हीति । ज्ञानस्य बोधकत्वमन्तरेण वस्तुनाशकत्वादर्शना-दित्यर्थः । किंच बाधकज्ञानसमनन्तरं रूप्यस्याभानादभावाच्च न तत्स-दित्याह बाधकज्ञाने हीति । ··· अत्राधिष्ठानज्ञानस्य बाधकत्वं मन्वानस्य मायावादिनो मतमाशङ्कते न स इति । तच्च सद्विलक्षणं बाधानुप-पत्त्या वेत्ति न तु बाधकज्ञानात् तस्य सद्रूपशुक्तिगोचरत्वेन तद्गोचरत्वा-योगादित्यर्थः । ··· ॥ ५२ ॥

**[Page 155]** नन्वसतस्सदन्तरत्वात्ख्यातिसंभवेऽपि तुच्छस्य ख्यातिर्न संभवतीत्याशङ्क्याह न स्यादिति । ··· ॥ ५३ ॥

तुच्छं सदात्मना भ्रमे भातीत्येतत् विपक्षे बाधकाभिधानेनाप्यापादयति नासत्सत्त्वेनेति ॥ ५४ ॥

**[Page 156]** इदानीं प्रमाणभूमौ तुच्छस्य स्वरूपेणापि ख्यात्यर्हत्वं साधयति न भाति तुच्छमिति । इतस्य तुच्छख्यातिरङ्गीकार्येत्याह न चेत्तदिति । श्लोकव्यावर्त्यमाह नन्विति । नेदं रजतमिति ज्ञानस्य तुच्छ-विषयत्वं व्यतिरेकमुखेनोपपादयति न हीति । सत्त्वबोधकत्वाभावेऽपि न तुच्छबोधकत्वं तुच्छातिरिक्ताभावबोधकत्वादिति सद्वादिमतमनूद्य निरस्यति यदि रूप्येत्यादिना । रूप्यव्यतिरिक्तस्य सर्वस्य रूप्याभाववत्त्वादन्यस्य वेत्युक्तम् । ननु न तस्याबाधकत्वमनिष्टम् । इदं रजतमित्यपरोक्षभ्रमस्य नेदं रजतमिति परोक्षज्ञानबाध्यत्वायोगादतः प्रत्यक्षं शुक्तिज्ञानमेव बाधक-मित्यन्यथाख्यात्येकदेशी शङ्कते प्रत्यक्षभ्रमस्येति । परोक्षत्वेन ततो दुर्बलत्वा-

दित्यर्थः । इदं रजतमिति ज्ञानस्यापरोक्षत्वेऽपि भ्रमत्वाद्दुर्बलत्वम् । नेदं रजतमिति ज्ञानस्य परोक्षत्वेऽपि प्रमाणत्वात्प्रबलत्वम् । अतोऽस्य तद्बाधकत्वं नानुपपन्नमिति परिहरति नायं दोष इति । तर्हि रूप्यज्ञानस्य न भ्रमत्वमित्यत आह अभ्रमत्व इति । ... पूर्वं शुक्तिज्ञानस्य बाधकत्वमङ्गीकृत्य नेदं— रजतमितिज्ञानस्य बाधकत्वमुपपादितम् । इदानीं तस्य बाधकत्वमेव न संभवतीत्याह प्रत्यक्षं चेति । अत्र विरोधाद्बाधकत्वमाशङ्क्य विरोधमेव निरस्यति विरोधादित्यादिना । मायावादिनापि नेदं रजतमित्यभाव-ज्ञानस्य बाधकत्वमेष्टव्यमित्याह मायावादिनापीति । ... **[Page 157]** ननु तुच्छं ख्यातीति तद्वादिना भ्रान्त्या उक्तं विकल्पेन प्रतिपाद्य अनूद्य तद्भ्रान्तिनिवृत्त्यर्थमेवोच्यते न तु मया तुच्छभानमङ्गीक्रियत इत्यतुच्छ-ख्यातिवादी शङ्कते त्वद्भ्रान्तीति । तुच्छवाद्युक्तं विकल्पेनापि प्रतिपाद्य अनुवदितुं सदादिभिर्न शक्यत इति परिहरति न सदादिनामिति । सर्वात्मना क्वापि तुच्छतत्ख्यातौ न स्त इति सदादिभिर्वक्तुं न शक्यत इत्यर्थः । तर्हि भ्रमसिद्धस्यान्यत्र सत्त्वमनिच्छता मायावादिना अनूद्य निषेद्धुं शक्यत इत्यत आह मायावादिनापीति । तेनापि मद्भ्रमे स्वविकल्पे च तुच्छस्य भानाङ्गीकारादित्यर्थः । ननु न वादिसिद्धं तुच्छं सम्यग्रूप्यं च न भ्रमविषयौ किं त्वविद्याविलसित एव तुच्छरूप्यतुच्छे तद्विषयत्वेन ख्यात इति शङ्कते न भ्रान्ताविति । यद्यपि मायाविलसितत्वं तथापि माया-विलासात्मकरूप्यसमानरूप्यस्येव तद्विलासात्मकतुच्छस्यापि क्वचित्ख्यात्यर्हत्वं सिध्येदिति परिहरति तथापीति । तस्मान्न मायावादिनस्त्वद्वादिभ्यो विशेष इत्याह तस्मादिति । कुत इत्याशङ्क्य तुच्छज्ञानस्य त्वदीयस्य मदीयस्य च भ्रमत्वाभ्युपगमेऽपि तत्र तस्य ख्यातत्वावश्यंभावादित्याह तुच्छभ्रमाभ्युपगमेऽपीति । भ्रमे तस्य ख्यातत्वाभावे को दोष इत्यत आह नान्यथेति । सर्वथा भ्रमसिद्धस्यान्यत्र सत्त्वपक्षेऽसत्त्वपक्षे चेत्यर्थः ॥ ५५ ॥

पूर्वं तुच्छं न भातीति वदता तुच्छभानमङ्गीकार्यमिति तर्कणा-

पादितम् । इदानीं तर्केणापि न शक्यमित्याह किंचेति । भ्रान्तौ यथा भातं न तथा क्वाप्यस्तीत्यर्थः । यथाशब्दस्यार्थमाह शुक्तिसामानाधिकरण्ये-नेति । रूप्यमन्यथा सदपि देशान्तरे बुद्धौ वा सदपि यथा शुक्तिसंसृष्ट-तया भ्रान्तौ भाति न तथा क्वचिदप्यस्तीत्यर्थः । तथास्तित्वे दोषमाह अन्यथेति । तस्माद्भ्रान्तौ भातस्य संसर्गस्य सद्वादिभिरसत्त्वाभ्युपगमादसङ्ख्यानं तैरङ्गीकृतमित्याह अत इति । ननु मायावादिमते भ्रान्तौ भातस्य मायामयत्वाङ्गीकारान्न तुच्छख्यात्यभ्युपगम इत्यत आह तथा मायाया इति । [Page 158] यतस्तुच्छमेव भ्रान्तौ सद्रूपेण भाति ततस्तत्स्वभाव-बोधकबाधोऽपि तुच्छबा[बो ?]धक एष्टव्य इत्याह तथा तद्बाधोऽपीति । अत एवेति परामृष्टं स्पष्टयति न हीति ॥ ५६ ॥

यत्केनापि रूपेण नास्ति तत्तुच्छमुच्यते । रूप्यादेस्तु उपादानरूपेण सत्त्वान्न तुच्छत्वमित्याशङ्क्य बाधके रूप्यरूपेणास्तीत्यभानात्पाश्चात्यस्य कार्यस्य पूर्वसिद्धोपादानरूपत्वायोगाच्च न तद्रूपेण सत्त्वमित्याह योन्यात्मनेति । ··· श्लोकस्य प्रथमपादं व्याचष्टे यदीत्यादिना । द्वितीयपादं व्याचष्टे तथापीति । अथापि भ्रान्तावतुच्छमेव भायादित्यत आह अतो भ्रान्तावपीति । नन्वन्यस्मिंस्तुच्छख्यात्या (नान्यत्) अन्यत्रापि तुच्छख्यान-साधनेऽतिप्रसङ्ग इत्यत आह अन्यथेति । भ्रान्तिबाधयोरेकविषयत्व-नियमादित्यर्थः । न त्वबोधीति । बाधकेनातुच्छता न अबोधि बोधितेत्यर्थः । यद्वा । न अबोधि बुद्धवान् कश्चिदतुच्छतामित्यर्थः । ननु सद्धिय एव बाधकत्वाभ्युपगमान्न बाधकेनातुच्छता अबोधीत्यसिद्धमित्यत आह न च सद्धीरिति । घटादिबुद्धेर्बाधकत्वादर्शनान्न सद्धियो बाधकत्वमित्यर्थः । अत्र घटादिधियस्तकाशाच्छुक्तिधियो वैषम्यं दर्शयन् बाधकत्वं शङ्कते ननु सच्छुक्तिधीरिति । सविलासाज्ञानदाहकस्य बाधकत्वान्न घटादिधियो बाधकत्वमित्यर्थः । शुक्तिज्ञानस्य बाधकत्वं कल्पनागौरवप्रसङ्गेन निरस्यति नैतद्युक्तमिति । ननु रूप्यादेश्शुक्त्यज्ञानजत्वेन तज्ज्ञाननिवर्त्यत्वान्न तुच्छ-

तथा नेदं— रजतमितिज्ञानबोध्यत्वमित्यत आह रूप्यादेश्चेति । अत्रापि पूर्ववाक्यस्थस्य नञोऽनुवृत्तिर्द्रष्टव्या । इदानीं रूप्यादेरज्ञानजत्वाभ्युपगमेऽपि नानिर्वाच्यत्वसिद्धिरित्याह अज्ञानं चेति । ··· [Page 159] ज्ञानाभाव एवाज्ञानं सैव च मायेति स्वाभिप्रायेण दूषणमुक्त्वा पराभिप्रायेण मायाया अनिर्वाच्यत्वमङ्गीकृत्याह अनिर्वाच्यत्वेऽपीति । ननु मायाजस्य मायात्मकत्वमेव स्यात्कार्यकारणयोरनन्यत्वनिश्चयादित्यत आह न हीति । नन्वसज्जन्माभ्युपगमे जायमानस्य कारणात्मकत्वमयुक्तं स्यान्न तु तथा किंतु सदेव जायत इत्यत आह न च सत्त्व इति । जन्मनस्तार्थत्वमाशङ्क्य परिहरन्नुत्तरार्धं योजयति अनभिव्यक्तेत्यादिना । अभिव्यक्तेस्तद्वैशिष्ट्यस्य चागन्तुकत्वेन अनादिमायात्मकत्वायोगान्नानिर्वाच्यत्वसिद्धिरित्यर्थः॥ ५७॥

नन्वनभिव्यक्तस्य प्राक्सत्त्वादभिव्यक्तमपि तदानीं सदेव तयोरैक्यादित्याशङ्क्याह व्यक्ताव्यक्तात्मनोरिति । अथात्यन्ताभेदो नेष्यते किंतु भेदोऽप्यस्तीत्याशङ्क्याह भेदे त्विति । ··· असज्जन्मापि मायाधीनमस्त्वित्याशङ्क्याह असच्चेदिति । विद्यमानस्य ह्यपेक्षा नाम धर्मस्संभवतीत्यर्थः । तर्हि जन्माख्यधर्मोऽपि नाविद्यमानस्य संभवतीति शङ्कते नासत इति । जन्मव्यवहारसिद्ध्यन्यथानुपपत्त्या जन्म असत एव वाच्यमिति परमुखेनोपपादयितुमुपक्रमते न सतोऽपीत्यादिना । असिद्धेनात्मना जायते चेदसतो जन्मप्रसङ्ग इत्यर्थः । ननु तर्ह्यसतो जन्मवत् कारणाकाङ्क्षा भविष्यतीत्याशङ्क्याह असतश्चेज्जन्मेति । कार्यानुरूपस्यासत एव कारणस्य सर्वत्र सुलभत्वान्न कारणान्तराकाङ्क्षेत्यर्थः ॥ ५८ ॥

किंच अनिर्वचनीयं प्रातीतिकं यौक्तिकं वा । नोभयथापि घटत इत्याह किंचेति । न केवलमयौक्तिकमेव प्रत्युत युक्तिविरुद्धं चेत्याह तन्न सच्चेदिति । कुतोऽसत्प्राप्तमित्यत आह असत्सदिति । असद्व्यतिरेकेणान्यस्य सत्प्रतियोगित्वाभावादसत्प्राप्तमित्यर्थः ॥ ५९ ॥

[Page 160] असत इवानिर्वचनीयस्यापि सद्विलक्षणत्वात्सत्प्रति-

योगिकत्वं किं न स्यादित्याशङ्क्य द्वयोरपि सत्प्रतियोगिकत्वे सति सन्न भवतीत्युक्तौ संदेहप्रसङ्ग इत्याह सन्नेत्युक्त इति। किंच कार्यमिदं कारणमिदमिति नियमोऽपि त्वत्पक्षे न सिध्येदित्याह कार्यकारणयोरिति। संदेहप्रकारं दर्शयति अनिर्वाच्यं नु तदिति। द्वितीयार्धं व्याचष्टे अपि चेति ॥ ६० ॥

एवं तर्कतश्शून्यवादमुपपाद्य तत्र वेदसंमतिमप्याह असद्वा इति। मोक्षे संज्ञाभावाभिधायिन्या श्रुत्या मदभिमत एव शून्यप्राप्तिलक्षणो मोक्ष इत्यपि गम्यत इत्याह संज्ञाभाव इति। अनावृत्तिश्रुत्यन्यथानुपपत्तिरपि शून्यभावस्यैव मोक्षत्वे प्रमाणमित्याह ततोऽनावृत्तीति। सदन्तरात्मतापन्नानां मृदादीनां प्रकृत्यापत्तिलक्षणावृत्तिदर्शनादित्यर्थः[?]। नन्वसतः कारणत्वे समस्तजगत्कारणभूतब्रह्मप्राप्तिश्रुतिर्बाध्यत इत्यत आह अतस्तमसेति ॥ ६१ ॥

**[Page 161]** सिद्धान्तमुपक्रमते अत्रोच्यत इत्यादिना। असतस्सत्ताप्रतीत्योरन्यनिरपेक्षसिद्धित्वेऽपि चक्षुस्संप्रयोगाद्ययोग्यस्य तस्य प्रमाणतस्सिद्ध्ययोगाद्भ्रान्तितस्सिद्धिस्स्यात्। ततोऽविद्यात्मकमेवेति न वस्तुसिद्धिरित्याह मायामनिर्वाच्यामिति। एवंशब्दार्थमाह शून्यपक्ष इत्यादिना। मायामित्यादिश्लोकभागं विवृणोति यतोऽनिर्वाच्यामिति। न किंचित्सिध्येत् स्वयमेव सत्ताप्रतीत्योरन्यनिरपेक्षतया न सिध्येदित्यर्थः। किमिति दूरोत्सारितत्वमित्यत आह तस्या इति। निर्विषयज्ञानाभावादिति भावः। असत्तत्ख्यातिश्च मा भूत् किं तत इत्यत आह अतोऽसत इति। नन्वसद्रूपाश्रयार्थासंभवेऽपि मनोरथमात्रं कुतो न संभवेदित्यत आह असतोऽप्रसिद्धत्वादिति ॥ ६२ ॥

भेदाभेदादिविकल्पासहत्वेनाप्यसतो मायाश्रत्वं साधयति सतोऽन्यदिति। यद्वा। असतोऽनादित्वात्स्वतन्त्रत्वाच्च स्वजनकतया स्वाश्रयतया वा अन्यानपेक्षत्वान्मायां विनापि संभव इत्याशङ्क्य विकल्पासहत्वेनासंभवमाह

सतोऽन्यदिति । असतोऽस्तित्वे तुच्छत्वं न स्यात् नास्तित्वे चासत्पदार्थाभावादेव तत्ख्यात्यभावान्न तस्य सद्रूपेण ख्यातिर्भ्रान्तिरिति सिध्यतीत्यर्थः । तद्भ्रान्तिमूलमेवेति । तद्वचो भ्रान्तिमूलमेवेत्यर्थः ॥ ६३ ॥

ननु नास्तीतिप्रतिपत्तिपूर्वकं प्रयुज्यमाननास्तिशब्दाभिधेयत्वेन सद्विलक्षणं तुच्छं त्वयैवाभ्युपगतमिति चोदयति नन्वस्तिनास्तीति । नन्वनिर्वचनीय एव मया नास्तिशब्दः प्रयुज्यते न पुनस्त्वदभिमते तुच्छे तस्य ख्यात्यनर्हत्वादित्याशङ्क्य त्वदभिमतप्रयोगान्तरे तथा उक्तिरस्तु यदा मदुक्तं तुच्छं विकल्प्य दूषयसि तदा तस्य ज्ञेयत्वं शब्दवाच्यत्वं च त्वयाङ्गीकृतमित्याह असद्यत इति । इतश्च तयोर्भिन्नार्थत्वमित्याह अस्ति नास्तीति । अत्रापि व्यचीकॢप इत्यस्य संबन्धः । अभिन्नार्थत्वे विकल्पकोटिद्वयत्वायोगादित्यर्थः । तस्मादावयोरुभयोरपि तुच्छार्थस्वीकारे गतिस्समानेति नैकश्चोदनीय इत्याह समा अत इति । ... ॥ ६४ ॥

[Page 162] ननु त्वदाश्रितस्य मायात्मकस्यासतस्त्वयैव विकल्प्य दूष्यत्वायोगान्मदिष्टस्यैव दूष्यत्वाय ख्यातित्वं शब्दवाच्यत्वं त्वयाभ्युपेयमित्याशङ्क्य निरूप्यमाणे ख्यातिशब्दार्हं तदेव मायात्मकमसत् अमायात्मकं तुच्छमिति भ्रान्त्या [?] तुच्छं पश्यामीति तुच्छवादिनो वाक्यात्तस्य तुच्छभ्रमसद्भावं बुद्ध्वा तद्वाक्यसिद्धं तदभिमतं तुच्छं तद्भ्रमव्यावृत्तये विकल्प्य दूषितवानस्मि न पुनरस्मदनुभवसिद्धमित्याह तच्च व्यचीकॢपमिति । किंच भ्रमसिद्धस्य रूप्यस्य न्यायैर्मायामात्रत्वसाधनात्तुच्छस्यापि भ्रमसिद्धस्य मायामात्रत्वं निरूपितमित्याह न्यायैश्चेति । यदुक्तं त्वयापि सदसत्पदार्थयोरङ्गीकारान्न मां प्रत्यसद्विकल्पः कार्य इति तत्र स्वपक्षे पदार्थपरिशुद्धिं तावत्करोति सत्यमित्यादिना । मयापि व्यवहारे तयोर्विभिन्नार्थत्वमिष्यत एव व्यावहारिकविभिन्नार्थत्वेन पारमार्थिकाद्वैतस्याविरोधादिति भावः । अन्यथा तद्व्यवहारासंभवादिति । सदसतोर्भेदानभ्युपगमे तयोरन्यतरव्यवहारासंभवप्रसङ्गादित्यर्थः । यदि भेदेनाभ्युपगतौ

तर्हि किमिति मां प्रति असत् विकल्प्य दूष्यत इत्यत आह तथापीति । व्यवहारे मदभिमतस्यासच्छब्दार्थस्य तुच्छवाद्यभिमततुच्छत्वानङ्गीकारादित्यर्थः । कुत इत्यत आह तस्येति । तुच्छस्याभिधेयत्वायोग्यत्वादित्यर्थः । ननु मायासिद्धमप्यसदेवेति चेत्कुतस्तदाश्रयणमित्यत आह तस्य अतुच्छत्वादिति । शब्दविषयत्वयोग्यातुच्छमायाविवर्ततया तस्यातुच्छत्वेन शब्दाभिधेयत्वयोग्यत्वादित्यर्थः । [Page 163] ननु त्वदाश्रितस्यासतोऽतुच्छत्वे तस्य सत्त्वमेव कुतो न स्यादित्यत आह अतुच्छत्वेऽपीति । तुच्छस्य ख्यातिशब्दानर्हत्वात्सतो नास्तिव्यवहारायोग्यत्वाच्च परिशेषादनिर्वाच्यमसदित्युक्तम् । अत्र शून्यवादी तुच्छस्य ख्यात्यनर्हत्वशब्दावाच्यत्वोक्तिमसहमानस्स्वोक्तं स्मारयति ननु तुच्छस्यापीति । … किंच भ्रान्तिप्रतीतस्य रूप्यवत्क्वचित्सम्यक्ख्यात्यर्हत्वमित्येतत्किं सत्ख्यातिवाद्यनुसारेणोच्यते किं वा त्वदभिप्रायेण किं वा मायावाद्यभिप्रायेणेति विकल्प्य नाद्य इत्याह तुच्छस्य चेति । सत्ख्यातिवादिमते तुच्छस्य रूप्यवत्क्वचिदसिद्धेर्विषमो दृष्टान्त इत्यर्थः । द्वितीयं प्रत्याह न च क्वापीति । तव अपसिद्धान्तत्वापत्तेरित्यर्थः । तृतीयं प्रत्याह न च रूप्यमपीति । मायावादिमतेऽपि न साक्षाद्रूप्यं भ्रमे ख्याति तस्याज्ञानवृत्तित्वेनारूप्यत्वाभ्युपगमादित्यर्थः । अतो मदभिप्रायेण वदता त्वया यथा मम भ्रान्तावरूप्यमेव रूप्यमिति ख्याति तथा तवानिर्वाच्याविद्याविवर्तत्वेन सात्मकमेव तुच्छं निरात्मकमिति स्वोत्प्रेक्षामात्रेण भातीत्यभ्युपेयमित्याह अतोऽरूप्यमिति । … अतो न क्वचिदिति । अभावभ्रमो न स्यात्तुच्छख्यातिरूपभ्रमो न स्यादित्यर्थः । कुतः क्वचित्तुच्छभ्रमो न स्यादित्यत आह त्वत्पक्षेऽभावभ्रम इति । असत्ख्यात्यसंभवादिति पदच्छेदः । यथा त्वत्पक्षे तुच्छाधिष्ठानरूप्यभ्रमेऽधिष्ठानभूतस्य तुच्छस्य तुच्छरूपेण ख्यातिर्न संभवति तद्वत्तुच्छभ्रमेऽपि तुच्छाधिष्ठानभूतस्य सम्यक् तुच्छस्य तुच्छरूपेण ख्यात्यसंभवादित्यर्थः । यद्वा । न क्वचिदभावभ्रमस्स्यात् अभावाधिष्ठान-

स्सदात्मख्यातिलक्षणो भ्रमो न स्यादित्यर्थः । कुत इत्यत आह त्वत्पक्ष इति । अस्मिन् व्याख्याने तु सत्ख्यात्यसंभवादिति पदच्छेदः । तुच्छाधिष्ठानतुच्छभ्रमे सम्यक् तुच्छस्याधिष्ठानभूतस्य सदात्मना ख्यात्यसंभवात्तुच्छाधिष्ठानरूप्यभ्रमेऽपि तुच्छस्य सद्रूप्यात्मना ख्यात्यसंभवादित्यर्थः । ... [Page 164] परिशेषान्मन्मार्गमेव तर्हि समाश्रयेति परिहरति अनिर्वाच्यविषयाविति । निवृत्तेः पञ्चमप्रकारत्वेऽपि सदसद्विलक्षणत्वेनानिर्वाच्यत्वोक्तिरिति द्रष्टव्यम् । भ्रमं चेति । रूप्यभ्रमं चानिर्वाच्यविषयमिच्छेति पूर्वेण संबन्धः । ... न्यायैश्चेत्यंशेनोक्तं लौकिकन्यायं दर्शयति भ्रम एव चेति । न केवलं सत्त्वासत्त्वविकल्पेनासतो मायामात्रत्वं किं त्वनुमानाच्चेत्यर्थः । मायामात्रमिति निरूपितवानस्मीति संबन्धः । मायामयत्व उक्तेरिति । अज्ञानान्वयव्यतिरेकित्ववाधान्यथानुपपत्त्यादिभिर्न्यायैरित्यर्थः । उत्तरार्धं व्याख्याय फलितमाह रूप्यस्य मायामयत्वनिरूपणेनेति । न्यायैरिति बहुवचनसूचितन्यायान्तरमाह असदादिशब्दानामिति । ... ननु यद्यसदपि मायापरिणाम एव तर्हि सदिदमसदिदमिति व्यवहारनियमः कथमित्यत आह तथापीति । शुक्तिरूप्यरज्जुसर्पादीनामविद्यात्मकत्वाविशेषेऽपि यथा रूप्यं हर्षहेतुस्सर्पो भीतिहेतुरिति नियमस्तथा प्रतिव्यक्ति स्वभावभेदात्किंचिदविद्याकार्यं सद्बुद्धिवेद्यं किंचिदसद्बुद्धिवेद्यमिति सर्वसत्यवादिनामिव व्यवहारनियमस्सिध्यतीत्यर्थः । यद्वा । स्वाप्नशुक्तिरूप्ययोर्मायामयत्वाविशेषेऽपि सदसत्त्वव्यवहारनियमः यथा तद्वदित्यर्थः । ... ॥ ६५ ॥

[Page 165] एवं स्वपक्षे सदसत्पदार्थाव्यवस्थां परिहृत्य शून्यत्वासत्त्ववादिमते तदसंभवमाह तवासदिति । मदभिमतस्येवासतस्त्वदभिमतस्यासतः सत्त्वासत्त्वभिन्नत्वाभिन्नत्वादिविकल्पासहानिर्वाच्यमायामयत्वानङ्गीकारात्तस्य सतस्सकाशाद्भेदादिकं वाच्यमित्यर्थः । नन्वहमपि मायामसदिव विकल्प्य दूषयामीत्यत आह सदसद्भ्यामिति । न च

सास्तीति। साम्यवचनस्य मतभेदापेक्षत्वादेकपक्षत्वे समानगतितापि नास्तीत्यर्थः ॥ ६६ ॥

अत्र तुच्छवादी शङ्कते असन्नास्तीति। असतोऽभावः असत्पदार्थस्या-विद्यमानतेत्यर्थः। असतो विलक्षणविषया असतस्स्वरूपबुबोधयिषयेत्यर्थः। मायायामस्तिशब्दवदिति। भ्रान्त्याद्यवस्थासु मायात्मकरूप्यादिषु प्रयुक्तो-ऽस्तिशब्दो यथा तामेव मायामाह न तु तत्त्वं तथेत्यर्थः। वृत्तानुवाद-पूर्वकं पूर्वपक्षश्लोकद्वयं व्याचष्टे सतोऽन्यदित्यादिना। द्वितीयश्लोकं व्याचष्टे एवमस्तीत्युक्तेऽपीति ॥ ६७ ॥ ६८ ॥

**[Page 166]** एवं तुच्छवादी सदसत्त्वविकल्पं परिहृत्य भेदाभेद-विकल्पेनासदसिद्धिमाशङ्क्याह सतोऽन्यत्वमिति। तदेतत्सिद्धान्ती परिहरति उक्तमुत्तरमिति। श्लोकगतपूर्वपक्षभागव्यावर्त्या सिद्धान्तिनश्शङ्कामनुवदति सतोऽर्थादित्यादिना। ··· किंच भावरूपभेदं प्रति धर्मित्वप्रतियोगि-त्वानुपपत्त्या च असदर्थस्य सत्त्वमेष्टव्यमित्याह यद्यसत इति। किं सतो-ऽन्यदिति। सत्त्वहीनं न भेदधर्मी स्यादित्यर्थः। सद्वा कुतोऽन्यदिति। सत्त्वहीनं न प्रतियोगीत्यर्थः। शङ्काया उत्तरत्वेन पूर्वार्धं योजयति नैकोऽपीति। न त्वसद्भेदसत्तयेत्यस्यार्थान्तरमाह भेदधर्मस्य वेति। तस्य असत इत्यर्थः। पटादीनां भेदधर्माश्रयत्वात्सत्त्वं नासतो भेदधर्माश्रयत्व-मस्तीत्युक्तम्। तर्ह्यसदर्थस्य सदर्थाद्भेदधर्माभावात्तन्मात्रत्वप्रसङ्ग इत्यत आह भेदाभावेऽपीति। अतद्रूपत्वेन प्रतीतेः सद्रूपत्वेनाप्रतीतेरित्यर्थः। भेदाभावेऽपि न तन्मात्रतेत्यत्र दृष्टान्तमाह यथेति। भेदस्य भेदिन-स्स्वकाशाद्भेदाभावेऽपि न भेदिस्वरूपत्वं तद्वदित्यर्थः। तृतीयपादं शङ्का-पूर्वकं व्याख्याति असतो भेदाभाव इत्यादिना। असतां स्वगत-भेदाभावेऽपि घटादिलक्षणप्रतियोगिभेदान्मुख्यानेकत्वे दृष्टान्तमाह यथा घटयोरिति। घटे घटान्तरे च पटे पटान्तरे च यो भेदो वर्तते तस्य स्वगतभेदाभावेऽपि प्रतियोगिभेदान्मुख्यमनेकत्वं तद्वदित्यर्थः। ···

[Page 167] इदानीमसतामेकत्वमेव न तु स्वगतो भेदोऽस्तीत्यङ्गीकारेऽपि प्रतियोगिभेदाद्भेदव्यवहारस्सिध्यतीत्यत्र दृष्टान्तमाह यथा चेति। नापि तत्रेति। तत्र असति त्वया कृतस्य घटसत्त्वविकल्पस्यासद्रूपाविरोधेनोत्तरवचनं मम संभवेदित्यर्थः। तद्वचनसंभवस्येति। उत्तरवचनसंभवस्येत्यर्थः। सिद्धान्तपादमवतारयति उक्तमुत्तरमिति। अत्र सिद्धान्ती स्वोक्तं तावद्विवृणोति तथाहीत्यादिना। सतोऽन्यदस्त्यसन्नामेत्यत्रासतस्सदन्यत्वमस्तित्वं चोक्तम्। तत्रास्तित्वावष्टम्भेन दूषणमुक्तं स्मारयित्वा अन्यत्वावष्टम्भेनोक्तं स्मारयति सतोऽन्यत्वे चेति। यदुक्तं भेदधर्माभावेऽप्यसद्रूपत्वान्नासतस्सत्त्वमिति तदेतन्निरस्यति सतोऽनन्यत्वे चेति। सतोऽपि तथेति। नातद्रूपत्वमित्यर्थः। तथा च सिद्धे भेदेऽतद्रूपत्वसिद्धिरतद्रूपत्वाच्च भेदसिद्धिरिति परस्पराश्रयत्वमिति भावः। भेदाभावेऽप्यतद्रूपत्वे दोषमाह यदि स्यादिति। असदप्यसद्रूपमित्यत्रापि न स्यादित्यनुवर्तते। एवं तावद्भेदधर्माभावेऽतद्रूपत्वासिद्धिमुपपाद्य अतद्रूपत्वेन [?] भेदसिद्धिमाह अनन्योन्यरूपत्वे चेति। सत्त्वं घटपटयोर्भेदधर्मवत्त्वे प्रयोजकमित्यत आह सत्त्वं चेति। तथा चातद्रूपत्वे शून्यत्वं न सिध्येदिति भावः। पूर्वं भेदाभेदविकल्पेनासन्निराकृत्य इदानीं याभ्यां रूपाभ्यां सदसतोर्वैलक्षण्यं त्वयोच्यते ते सदसद्रूपे परस्परविलक्षणे न वेति विकल्प्य निराकरोति सदसद्रूपयोश्चेति। यद्वा। धर्मभेदस्य सत्त्वप्रयोजकत्वान्न स्वरूपभेदमात्रादसतस्सत्त्वसिद्धिरित्यत आह सदसद्रूपयोश्चेति। तयोस्स्वरूपभेदे स्वरूपस्येव सद्रूपस्यापि सत्त्वं स्यादभेदे तत्सद्रूपमेव वा स्यादसद्रूपमेव वा स्यान्नान्यस्येत्यर्थः [?]। इतश्च नासत्सिद्धिरित्याह असतोऽपि रूपवत्त्व इति। कस्यातद्रूपत्वमिति। रूपवत्त्वाभावेऽतद्रूपत्वविशेषणं कस्य स्यादित्यर्थः। अतद्रूपत्वे दोषान्तरमाह अरूपत्वे चेति। भेदधर्माभावेऽप्यतद्रूपतया भेदव्यवहारविषयत्वे भेदो न दृष्टान्तस्स्यादित्यर्थः। ननु तर्हि दृष्टान्तत्वसिद्ध्यै भेदस्याप्यरूपत्वमिष्यत इति चेत्तत्राह अरूपश्चेदिति। भेदस्याप्यसत इवासिद्धिरेव स्यात्स्वरूप-

शून्यस्यास्तित्वव्याघातादित्यर्थः। एवं भेदस्यादृष्टान्तत्वमुक्त्वा आकाशादे-रदृष्टान्तत्वमाह तथा आकाशादिरिति। आकाशादिरप्यरूपश्चेत्तथा असता व्याख्यात इत्यर्थः। रूपवत्त्वे च न रूपहीनस्यासतो दृष्टान्त इत्याह रूपवांश्चेदिति। भेदाकाशयोस्स्वरूपवत्त्वेन असतस्सकाशाद्वैषम्यमुक्तं तेन किं लभ्यत इत्यत आह रूपवत्त्वे भेदस्येत्यादिना। असतस्स्वरूपहीनतया उपाधिसंबन्धस्याप्यसंभवान्न भेदाकाशयोरिवोपाधिभेदादपि भेदव्यवहार-संभव इत्यर्थः। असति निस्स्वभावे भेदव्यवहाराङ्गीकारे दोषमाह असत्यपीति। [Page 168] पूर्वं भेदिनस्सकाशाद्भेदहीनमतद्रूपं च भेदं दृष्टान्तत्वेनोक्तमभ्युपगम्य तस्यासद्वैषम्यमुक्तम्। इदानीं निरूप्यमाणे सोऽपि न भेदोऽस्तीत्याह भेदभेदिनोश्चेति। स्वरूपभेदेऽ[न ?]न्योन्यरूपवत्त्व इत्यर्थः। तस्मादसदपि भ्रान्तिमूलमभ्युपगम्य भेदं दृष्टान्तत्वेनोदाहरेत्याह अत इति। यद्वा। यदि भेदं दृष्टान्तमिच्छसि तर्ह्यसतो भ्रान्तिमूलतायां दृष्टान्तत्वेनेच्छ न तु त्वदभिमतार्थ इत्याह अत इति। यस्त्वसति अस्तिनास्तिशब्दप्रवृत्ति-प्रकारस्त्वया दर्शितस्सोऽपि निर्मूल इत्याह असतश्चेति। सन्मायायो-रिव असत्यपि तत्प्रवृत्तिसंभवो दर्शित इत्यत आह सन्माययोस्त्विति। सतो वास्तवरूपेण मायाया आभासरूपेण स्वरूपसिद्धेरित्यर्थः॥ ६९॥

त्वयैव तवोत्तरमुक्तमित्येतद्विवृणोति सदेव सर्वमिति। ... द्वितीयस्या-भावे च-शब्दः कथमित्येवं व्याख्याय इदानीमसति द्वितीयत्वेनाभिमते निस्स्वभावत्वेनाभिधेयत्वाभावादेव च-शब्दो न युज्यत इति व्याख्यानान्तर-माह असतश्चेति। द्वितीयत्वेनाभिमतस्यासतश्शब्दावाच्यत्वेन शब्दप्रवृत्त्य-संभवस्य दर्शितत्वात्तच्च च-शब्दोऽनुपपन्न इत्यर्थः॥ ७०॥

द्वितीयाभावे तत्समुच्चयार्थश्चकारो न संभवतीत्युक्तमेवार्थं विपक्षेऽति-प्रसङ्गदर्शनेन साधयति सद्द्वितीयमिति। इतश्चासतः सद्द्वितीयत्वं न स्या-दित्याह सतोऽपीति। सत्त्वेन भिन्नत्वेन च द्वितीयत्वयोग्यस्यापि सतस्स-द्द्वितीयत्वमयुक्तं सत्स्वरूपे भेदाभावात् किमुतासतः सत्त्वाद्यभावेन तदयोग्य-

स्येत्यर्थः। सतो द्वितीयमसदिति समासाभिप्रायेण व्याख्याय सत् द्वितीयमस्यासत इति समासान्तराभिप्रायेण व्याख्याति सद्वा असत इति। [Page 169] परार्धसंख्या महासंख्या। तद्विशेषाभावादिति। त्रित्वादिसंख्यापूरकत्वमन्तरेण द्वित्वसंख्यापूरकत्वमेवासतस्ततो वा येन भवेत्तादृशविशेषाभावात्तस्येत्यर्थः। ··· उत्तरार्धं व्याख्याय कैमुतिकन्यायेनासद्भेदं निराकरोति किंचेति। ··· यदुक्तमसद्भेदस्सद्भेदादिति तन्निराकर्तुमनुवदति सदन्तरमिति। तत्र सच्छब्दानुसारेण तावद्दूषणमाह तदपीति। अन्तरशब्दानुसारेण दोषमाह असच्चेदिति। पूर्वं सदन्तरस्यासत्त्वमङ्गीकृत्य तत्र सतो द्वितीयमित्युक्तम्। इदानीं तस्य नासत्त्वं संभवतीत्याह सदन्तरं चेति। तथा च न सदन्तरस्यासत्त्वमित्यर्थः। ततः किमित्यत आह न च सदेवेति। ··· इतश्च न सद्भेदस्सिध्यतीत्याह भेदोऽपीति। यद्वा। स्वाश्रयसिद्धये विशेषान्कल्पयेदित्यत आह भेदोऽपीति। तर्हि भेदादिनिरूपणाभावादसद्व्यवहारस्य निर्विषयता स्यादित्यत आह अतो भेदव्यवहारवदिति। कुत इत्यत आह सत्तुच्छयोरिति। व्यवहारविषयत्वानुपपत्तेरित्यर्थः॥ ७१॥

एवमभिज्ञाव्यवहार[?]विषयत्वायातुच्छत्वमसतः प्राधान्येन प्रसाध्य अधुना अभिवदनव्यवहारविषयत्वायाप्यतुच्छत्वमसतस्स्वीकार्यमित्युत्तरग्रन्थस्य तात्पर्यमाह एतदेवेति। ··· ॥ ७२॥

[Page 170] अभिन्नयोर्न वाच्यवाचकभावस्संभवतीत्युक्तम्। तत्र वैयाकरणमतावलम्बनेन शून्यवादी चोदयति आहेति। विमतश्शब्दः स्ववाचकः शब्दत्वात् शब्दशब्दवत्। वाच्यस्य वाचकेऽन्तर्भावे वाचकस्य वाच्येऽन्तर्भावे क्रमेण दोषमाह न तदिति। ··· ॥ ७३॥

एकस्योभयासंभवे हेतुमाह तथाहीत्यादिना। ··· शब्दशब्दवदितिदृष्टान्ते दोषाभिधित्सया तमुद्भावयति ननु शब्द इति। परिहरति तथापीति। शब्दो वाच्यो येषां तेऽपि शब्दादयश्शब्दाः शब्दत्वसामान्य-

लक्षणमन्यमर्थं वदन्त एव अविनाभाववशेन व्यक्तिं लक्षयन्तस्स्वात्मानमपि लक्षणया वदन्ति न तु मुख्यया वृत्त्या। तदेव हि वाचकत्वम्। तत-श्शब्दशब्दादीनामपि स्ववाचकत्वाभावात्साध्यविकलो दृष्टान्त इत्यर्थः। अर्थो घटादिलक्षणो वाच्यो येषां ते तु घटादिशब्दास्स्ववाचकतया नोपलभ्यन्ते स्वातिरिक्तार्थवाचकतयैवोपलभ्यन्ते। ततोऽनुपलब्धिबाधः प्रत्यक्ष-बाधश्चेत्याह अर्थवाच्यास्त्विति। किं तत इत्यत आह अतो न शब्दा-द्वैतेति। घटाद्यर्थानां स्ववाचकघटादिशब्दविवर्ततया तदभिन्नत्वात्तेषां च शब्दानां स्ववाचकशब्दविवर्ततया तदभिन्नत्वात् तव यदभिप्रेतं शब्दाद्वयत्वं तन्न सिध्येत् शब्दार्थयोर्भेदादित्यर्थः। [Page 171] किंच जगदान्ध्य-प्रसङ्गलक्षणप्रतिकूलतर्कपराहतत्वादप्रयोजको हेतुरित्याह अभेदेऽपि तयो-रित्यादिना। नन्वजडात्माभिन्नत्वेन आत्मशब्दस्याजडत्वात् तेनान्यस्य सिद्धिसंभवान्न जगदान्ध्यप्रसङ्ग इति शङ्कते अजडात्माभेदादिति। तर्ह्यर्थस्य स्वस्वभावपरित्यागेन स्ववाचकशब्दस्वभावतापत्तिरिति यस्तव पक्षस्तस्य हानिस्स्यादिति परिहरति तर्हीति। यथा आत्मशब्दस्स्वार्था-भिन्नः तथा घटादिशब्दा अपि स्वार्थाभिन्ना एव स्युरिति न शब्दाद्वैत-सिद्धिरित्यर्थः। ननु वाच्यो हि वाचकादभिन्नः तथा चात्मनो लक्ष्यरूपस्य स्वप्रकाशत्वेनावाच्यत्वान्न तस्य वाचकाभेद इत्यजडात्मसंनिधानादितरस्य सिद्धिर्घटते। तस्मान्न जगदान्ध्यप्रसङ्ग इति शङ्कते अथोच्येतेति। ... नन्वसद्बुद्धेरसच्छब्दस्य चासच्छब्द एव विषयः तथा च तयोर्न निरालम्बनत्व-मिति शङ्कते असच्छब्द एवेति। असच्छब्दस्य सद्रूपत्वादसद्बुद्ध्यादि-विषयत्वमयुक्तमिति परिहरति न तस्येति। विपक्षे दोषमाह तथापि स्याच्चेदिति। कुतो न स्यादित्यत आह द्वयोरिति। सद्बुद्धिविषयस्यैवास-द्बुद्धिविषयत्वे अन्यत्र घटादिशब्देष्वपि सदसद्बुद्धिविषयत्वप्रसङ्ग इत्यर्थः। ... [Page 172] पूर्वं वाचके वाच्यस्य कल्पितत्वमभ्युपगम्योक्तम्। इदानीं तदपि न संभवतीत्याह वाच्यस्य चेति। वाचकस्यापि वाच्यत्वात्— शब्द-

शब्दवाच्यत्वादित्यर्थः। ननु स्थाणुशुक्तौ रूप्यकल्पनान्नाकल्पिताश्रयत्व-नियमः कल्पनाया इत्याशङ्क्य तत्रापि रूप्यस्य शुक्तेश्चात्मन्येव कल्पितत्व-मित्याह न हि कल्पिताश्रयेति। ननु शब्देऽर्थकल्पना शब्दकल्पना तु वाच्यवाचकभावविधुरे चिदात्मन्यस्त्वित्याशङ्क्याह तौ चेति॥ ७४॥

ननु वर्णात्मकशब्दविवर्तत्वेन तदभेदाद्वाच्यवाचकयोश्शब्दत्वासंभवेऽपि स्फोटात्मकशब्दात्मकब्रह्मविवर्तत्वाद्वर्णात्मकशब्दतद्वाच्ययोस्स्फोटाख्यशब्दा-भेदसंभवाद्वाच्यवाचकयोश्शब्दत्वमिति चोदयति शब्दब्रह्मेति। ब्रह्मणो-ऽशब्दत्वात् शब्दत्वेऽपि तेन वाच्यवाचकयोरभेदायोगाच्च न तयोश्शब्दत्व-मिति परिहरति नैवमिति। वाच्यवाचकाविति। वर्णात्मकशब्दतद्वाच्या-वित्यर्थः। ननु वाच्यवाचकयोश्शब्दब्रह्मविवर्तत्वे शब्दब्रह्माभावः प्रसज्येत तत्त्वविपर्ययेण वर्तनं विवर्त इति निर्वचनात्। तथा च तयोः कथं शब्दब्रह्माभेद इत्यत आह तत्रैवेति। ··· **[Page 173]** ननु यदि श्रुतियुक्तिपर्यालोचनया प्रपञ्चस्य कल्पितत्वं का तर्ह्यभेदवादिवचसां गति-रित्याशङ्क्य स्थाणुश्चोर इत्यादिवाक्यानां या गतिस्सा तेषामपीत्याह अत इदमिति। अत्र प्रतिबन्दिन्यायेन शङ्कते नन्वेवं तर्हीति। आत्मैव सर्वमित्यादिवचसां स्थाणुश्चोर इत्यादिवाक्यवद्यथा प्रपञ्चमिथ्यात्वबोधने-नात्मैक्यबोधकत्वमेवं स्फोटाख्यशब्दो वाच्यवाचकावित्यादेरपि वाच्य-वाचकमिथ्यात्वबोधनेन शब्दब्रह्मैक्यबोधकत्वमित्यर्थः। आत्मैक्यबोधकवाक्य-वच्छब्दैक्यबोधकं वाक्यं तव नास्तीत्याशङ्क्याह तदुक्तमिति। ··· पूर्वं शब्दस्यास्वप्रकाशत्वं स्वप्रकाशत्वं वेति विकल्प्य दूषणमुक्तम्। इदानीं तदभिमतस्य ब्रह्मणो ज्ञेयत्वमज्ञेयत्वं वेति विकल्प्य क्रमेण दूषयति अज्ञेयस्याशब्दत्वादिति। अज्ञेयस्य ब्रह्मत्वेऽपि ज्ञेयशब्दत्वाभावात् ज्ञेयस्य शब्दत्वेऽप्यज्ञेयब्रह्मत्वाभावान्न ब्रह्मणश्शब्दत्वसिद्धिरित्यर्थः। **[Page 174]** नन्वस्य श्रौतत्वान्न तर्केण निरास इत्यत आह न च शब्द इति। नन्वेतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार इत्यादिश्रुतिरस्तीत्याशङ्क्याह यदि

नामेति। परापरब्रह्मदृष्ट्या ओंकारोपासनविधिपरा सा श्रुतिरित्यर्थः। ननु कस्मादोंकारस्य ब्रह्मत्वबोधनेऽपि श्रुतेस्तात्पर्यं न कल्प्यत इत्याशङ्क्याह उक्तेभ्य इति। वाच्यत्वादिन्द्रियग्राह्यत्वाद्बुद्धिवेद्यत्वादित्युक्तेभ्यो हेतुभ्य इत्यर्थः। ब्रह्मणश्चाशब्दत्वे कथितं हेतुं स्फुटयति ब्रह्मणश्च शब्दत्व इति। ब्रह्मणश्शब्दत्वाभावे श्रुतीराह यद्वाचेति। यद्वाचानभ्युदितमित्यशब्दवत्त्व-मुक्तं येन वागभ्युद्यते इति शब्दराशेस्समस्तस्य तत उदयाभिधाना-त्तस्याशब्दत्वमुक्तमिति द्रष्टव्यम्। ... ज्ञेयस्याब्रह्मत्वाच्छब्दाद्वैतं न सिध्यतीत्युक्तम्। तत्र प्रतिबन्दिन्यायेन शङ्कते नन्वेवं तर्हीति। कुत इत्यत आह आत्मनोऽब्रह्मत्वादिति। कुतस्तस्याब्रह्मत्वमित्यत आह आत्मा हीति। नन्वहमिति ज्ञायमानस्याहंकर्तुरनात्मत्वाभ्युपगमादब्रह्मत्वमिष्ट-मेवेति सिद्धान्ती शङ्कते अहंकर्तापीति। तस्यैवाहं स्वयमित्याद्यात्म-वाचकशब्दवाच्यत्वं नान्यस्य कस्यचित् ततो न तस्यानात्मत्वमिति परिहरति न तस्यैवेति। ... तर्हि मत्पक्षेऽपि शब्दशब्दवाच्यस्य वर्णस्य नास्ति ब्रह्मत्वं किंतु लक्ष्यस्यैव स्फोटस्येति परिहरति एवं शब्दोऽपीति। अतो ब्रह्मैवेति। स्फोटाख्यब्रह्मैवेत्यर्थः। शब्दस्य ब्रह्मत्वे प्रमाणाभावादयं पक्षः पूर्वमेव परिहृत इत्याह उक्तोत्तरत्वादिति। अज्ञेयत्वप्रसिद्धिरिति चोक्तोत्तरत्वा-दित्यन्वयः। ... **[Page 175]** अतद्विषयत्वादिति। आत्मनः प्रत्यक्षाद्य-विषयत्वात्तस्य ब्रह्मत्वं न प्रत्यक्षादिविरुद्धमित्यर्थः। नन्वहं सुखी दुःखीति सुखादिविशिष्टस्यात्मनः प्रत्यक्षादिविषयत्वदर्शनात्तदविषयत्वमसिद्धम्। ततो विरोधोऽप्यस्तीत्यत आह सुखदुःखेति। सुखदुःखादिविशिष्टतया साक्षिणा अनुभूयमानस्याहंकारत्वान्न तस्य ब्रह्मत्वं बोध्यते किंतु तत्साक्षिण एव। तस्य च प्रमाणान्तराविषयत्वान्न विरोधगन्धोऽपीत्यर्थः। ननु साक्षिणोऽपि ब्रह्मत्वं शब्दैरेव बोध्यते। तथा च शब्दवाच्यत्वात्प्रमाणान्तर-विषयत्वमपि स्यादित्यत आह स चात्मेति। ननु तर्ह्यहंशब्दस्य चिदात्मनि वृत्त्यभावादहं ब्रह्मेति शब्दाद्बोधनमयुक्तमित्याशङ्क्य अहंकार-

विशिष्टे प्रयुक्तोऽहंशब्दो ब्रह्मशब्दसामानाधिकरण्यानुपपत्तेर्लक्षणया तदनुगतं साक्षिणं ब्रह्मत्वेन लक्षयतीत्यभिप्रेत्य अहंकारविशिष्टात्मनि प्रयोगं दर्शयति तस्मिन्नपीति। यस्माच्चिदात्मनो न ज्ञेयत्वं नापि बाह्यत्वं तस्मान्न तस्य ब्रह्मत्वं विरुध्यत इत्याह तस्मान्नात्मन इति। एवमात्मनो ब्रह्मत्वं प्रसाध्य अधुना ब्रह्मणोऽप्यात्मत्वं प्रसाधयति न चानात्मन इति। यद्वा। त्वंपदार्थस्वभावालोचनया आत्मनो ब्रह्मत्वं प्रसाध्य इदानीं ब्रह्मपदार्थपर्यालोचनयाप्यात्मनो ब्रह्मत्वमाह न चानात्मन इति। अनात्मनः आत्मनोऽन्यस्य ब्रह्मणो घटादेरिव ब्रह्मत्वं न युक्तमित्यर्थः। सर्वज्ञत्वश्रुतिबलात्तस्य चेतनत्वमभ्युपगम्यत इत्याशङ्क्य तर्ह्यात्मलक्षणवत्त्वेन तदभेदान्नात्मनोऽन्यत्वमित्याह चेतनत्वेऽपीति। ननु चेतनत्वेऽपि तस्य आत्मनस्सकाशाद्भेदोऽस्त्वित्याशङ्क्य तर्हि तस्य ब्रह्मपदार्थत्वं न स्याद्ब्रह्मपदात्स्वरसेन प्रतीयमानस्य त्रिविधपरिच्छेदराहित्यस्य वस्तुपरिच्छेदे सति असंभवादित्याह भेदेऽपीति। स्वमतमुपसंहरति तस्मादिति। ब्रह्मात्मनश्चेतनत्वेन शब्दशब्दलक्ष्यस्फोटात्मत्वायोगान्न शब्दशब्देन तस्य लक्ष्यत्वमित्यर्थः॥ ७५॥

परपक्षे दोषान्तरमाह अपिचेति। ··· प्रमाणान्तरेण प्रत्यक्षावगमात्पराग्र्थवाचकेनापि लक्ष्यस्य प्रत्यक्षमवगम्यत इत्यत आह अक्षं बोधयतेति। ··· **[Page 176]** ननु चन्द्रस्य परागर्थशाखाशब्देन लक्ष्यत्वान्नाप्रत्यक्षप्रतीतिः किंतु प्रागेव चन्द्रस्य प्रतिपन्नत्वादित्याशङ्क्य जन्मप्रभृति चन्द्रप्रतिपत्तिहीनोऽपि न तद्वाक्यात्प्रत्यक्षं चन्द्रस्य प्रतिपद्यत इत्याह न हि शाखेति। ··· प्रासङ्गिकं विचारमुपसंहरति तस्मादात्मेति। आत्मनि—त एव ब्रह्मत्वाद्ब्रह्मकार्यस्यात्मकार्यत्वेन— कृत्स्नकार्यलये तस्यात्मनोऽद्वयत्वं वक्तुं शक्यते न तु शब्दस्य तस्य ब्रह्मत्वाभावात्तद्विवर्तस्य शब्दविवर्तत्वाभावादित्यर्थः। घटाद्वैतं वेत्यत्र वा-शब्द इवार्थः। एवमुक्तप्रकारेण वाच्यवाचकयोरभेदे वाच्यवाचकभावो न स्यादित्युक्तं सिद्धमित्याह अत इति॥ ७६॥

असतश्शब्दवाच्यत्वे तस्य शब्दाद्भिन्नत्वं सत्त्वं चाभ्युपगन्तव्यमिति प्रतिज्ञाय भिन्नत्वं तावत्प्रपञ्च्य सत्त्वमिदानीं प्रपञ्चयति असति तु वाच्य इत्यादिना । अर्थमुक्त्वा श्लोकमवतारयति तदेतदाहेति । असच्छब्द-स्सन्नपि नासतो वाचकस्स्यात् असति शब्दप्रवृत्तिनिमित्तासंभवादित्यर्थः । असतश्शब्दवाच्यत्वे दोषमाह ततोऽसदिति ॥ ७७ ॥

तुच्छस्य शब्दावाच्यत्वे युक्त्यन्तरमाह इतश्चेति । शून्यस्याज्ञेयत्वं कथ-मित्याशङ्क्य निस्स्वरूपस्य तस्य बुद्धावाकारप्रदत्वेन बुद्धिजन्यफलाधारत्वा-भावादित्याह बुद्धिरिति । ··· ॥ ७८ ॥

**[Page 177]** एवमसदादिशब्दस्य सालम्बनत्वसिद्ध्यन्यथानुपपत्त्या तुच्छस्य सात्मकत्वं प्रपञ्च्य इदानीमसद्बुद्धेस्सालम्बनत्वसिद्ध्यन्यथानुपपत्त्या तस्य सात्मकत्वं प्रपञ्चयति शून्यं चेज्ज्ञायत इत्यादिना । अन्यत्सदिष्यताम्— अन्यत्वं तुच्छवाद्यभिमतासद्वैलक्षण्यं च तस्येष्यतामित्यर्थः । तत्र ताव-द्विज्ञानवादिमतेनानन्यत्वाङ्गीकारे दोषमाह बुद्धेश्चेति । कुत इत्याशङ्क्य ज्ञानव्यावर्तकतया भासमानस्य सात्मकस्यैव ज्ञेयत्वदर्शनात्स्वरूपशून्यस्य ज्ञेयत्वासंभवादित्याह शून्यस्येति । शून्यस्य तुच्छत्वेऽज्ञेयत्वमुक्तमित्यन्वयः । उत्तरार्धं व्याचष्टे अनन्यच्चेदिति ॥ ७९ ॥

इतश्च न बुद्धेर्बोध्यत्वसंभव इत्याह अपिच बुद्ध्या चेदिति । ··· ॥ ८० ॥ ८१ ॥

**[Page 178]** बुद्धेरन्यत्सदिष्यतामित्यत्रान्यत्वं सत्त्वं च सूचितम् । तत्रान्यत्वं प्रपञ्च्य सत्त्वं प्रपञ्चयति बुद्धिमालम्ब्येत्यादिना । बुद्धेरना-लम्बनत्वायोगात्पूर्वबुद्धिमालम्ब्योत्तरा बुद्धिस्स्याच्चेदित्यर्थः ॥ ८२ ॥

ननु मा भूत्तर्हि पूर्वबुद्ध्यालम्बना उत्तरा बुद्धिः किंतु स्वात्मानं स्वांशं वा आलम्ब्य जायतामित्याशङ्क्याह आत्मानमित्यादिना । ··· ॥ ८३ ॥

तर्हि निरालम्बनत्वमेव बुद्धेरस्त्वित्याशङ्क्याह न निरालम्बनेति । ··· नन्वसतो बुद्धिबोध्यत्वेन हेतुना तुच्छत्वं निरस्यता त्वया तस्यानिर्वाच्य-

रूपस्य बुद्धिबोध्यत्वा(न)ङ्गीकारादनिर्वचनीयमपि बुद्धिबोध्यमित्यङ्गीकृतं स्यात् । तच्च तवायुक्तमनिर्वचनीयरूप्यादिबुद्धेस्त्वया बुद्ध्याभासत्वाङ्गीकारादित्याशङ्क्य त्वदभिमतमेव बुद्धिबोध्यत्वमुपादाय अतुच्छत्वसाधनान्न दोष इत्याह न चेति ॥ ८४ ॥

[Page 179] मैवं मा चूचुदो मायामनिर्वाच्यामृते यतः । नासत्सिद्धिरिति सूचितां तुच्छासिद्धिं व्याख्यायोपसंहरति स्वरूपेणापीति । शून्यत इति भावप्रधानो निर्देशः । शून्यत्वादित्यर्थः ॥ ८५ ॥

इदानीमसत्सिद्धिमभ्युपगम्यापि शून्यख्यात्यसंभवमाह यदि सद्रूपेति । अञ्जसा साक्षादित्यर्थः ॥ ८६ ॥

स्वत इति । अग्न्यौष्ण्यादिवत्स्वाभाविकमित्यर्थः । अन्यत इति । देशान्तरादितस्समायातमित्यर्थः । तद्रूपत्वादित्येतन्न ततोऽपेयात् न शून्यतेति पूर्वेण उत्तरेण च संबध्यते । तत्र पूर्वेण संबन्धे तस्य शून्यस्वरूपत्वादित्यर्थः । उत्तरेण संबन्धे तत् रूप्यं रूपमस्य शून्यस्येति बहुव्रीहिः । सदात्मकरूप्यस्वरूपत्वान्न शून्यत्वमित्यर्थः । रूप्यरूपत्वादित्येतदेवोत्तरत्रापि हेतुत्वेन परामृशति अतश्चेति । परामृष्टस्यैवार्थमाह अस्य रूप्येति ॥ ८७ ॥

शून्यतापाये को दोष इत्याशङ्क्य भ्रान्तिबाधवैपरीत्यं स्यादित्याह अतश्च शून्येति । तत्र रूप्ये नेदं रजतमिति शून्यत्वबोधिका बुद्धिर्मृषा स्यादित्यर्थः । यद्वा । तत्र शून्यत्वाभावे सतीत्यर्थः । ननु बाधकबुद्धित्वादमृषा स्यादित्याशङ्क्य ततो नेदं-रजतमितिज्ञानाद्बाधोऽपि न स्यात् अतस्तस्य बाधकत्वमपि मृषैवेत्याह तत इति । रूप्यबुद्धेर्मृषात्वेन बाध्यत्वान्नेदं-रजतमितिबुद्धेर्बाधकत्वं स्यादित्याशङ्क्याह अमृषेति । अमृषात्वं तस्याः कुत इत्यत आह वस्तुतत्त्वेति । वस्तुनश्शून्यस्य तत्त्वं रूप्यात्मकत्वं तस्य तथैव बोधकत्वादित्यर्थः । इतश्च न शून्यस्य रूप्यात्मकत्वं स्वाभाविकमित्याह रूप्यापाये तयोरिति ॥ ८८ ॥ ८९ ॥

[Page 180] आगन्तुकत्वपक्षे सत्ख्यातिरिष्टा स्यादित्याह देशान्तरा-

दिगमिति । वा-शब्दादनागतमेव भातीति कोऽप्यन्तरमाक्षिप्यते । शून्ये-इति पदस्य भातीति पूर्वेण सत्ख्यातिरिष्टेत्युत्तरेण च संबन्धः । वृथैवेति । अधिष्ठानमेव [?] सदित्येतत्पक्षपरित्याग इत्यर्थः ॥ ९० ॥

देशान्तरादिस्थस्य रूप्यस्य शून्ये भानाङ्गीकारे दोषान्तरमाह रूप्यमन्यस्थमिति । वा-शब्दादनागत्य वेति कोऽप्यन्तरमाक्षिप्यते । आगत्य अनागत्य वा भाति यदीत्यर्थः । तदेव भातीति । तदेव रूप्यमेव रूप्यात्मना भातीत्यर्थः । नो शून्यमिति । न शून्यं रूप्यात्मना ख्याति शून्यं रूप्यमित्यैक्येन भानादर्शनादित्यर्थः ॥ ९१ ॥

किंच यच्छून्ये रूप्यमागतं भाति तत्किं शून्यस्य स्वभावादेव किं वा कामा[मला ?]दिहेतुवशात् । तत्राद्यं प्रत्याह शून्यगाविति । यथा शुक्ते-स्सामान्यांशदर्शनाद्भ्रमः पश्चाद्विशेषांशदर्शनाद्बाध इति नियमस्संभवति न तथा शून्यस्य संभवति तस्य कालत्रयेऽपि विशेषाभावात् । तथा च तत्र चेद्भ्रमबाधौ स्यातां सदैव स्यातां यदि विरोधान्न स्यातां तर्हि न कदाचिदपि स्यातामित्यर्थः । तत्काल इति । भ्रान्तिबाधयो-स्सद्भावकाल इत्यर्थः । विशेषाभावे हेतुमाह तुच्छत्वादिति । द्वितीयं प्रत्याह अत एव न हेतुतोऽपीति । अत एव शून्यस्य विशेषाभावादेव हेतुसंबन्धस्याप्यभावान्न तद्वतोऽपि भ्रान्तिबाधनियमस्संभवतीत्यर्थः । पूर्वं शून्यापेक्षया देशान्तरादिसद्भावमङ्गीकृत्योक्तम् । इदानीं शून्यस्यानव-च्छिन्नत्वेन तदपेक्षया देशान्तराद्यभावान्न रूप्यस्य देशान्तरगतत्वोक्ति-संभवोऽपीत्याह कालादीति । बाधश्चेत्यत्र सदैव स्यान्न वा कदाचि-दित्यनुवर्तते ॥ ९२ ॥

**[Page 181]** ननु यद्यपि शून्यस्य रूप्यं न स्वरूपं नापि देशान्तरा-दागतं तथापि तस्य रूप्यात्मता सिध्यति शून्यपरिणामत्वाङ्गीकारादित्या-शङ्क्याह शून्यं रूप्यात्मनेति । ... ॥ ९३ ॥

पूर्वं जन्माङ्गीकृत्य भ्रमबाधौ न सिध्यत इत्युक्तम् । इदानीं शून्यस्य

रूप्यात्मना जन्मादि न संभवतीत्याह अनंशत्वादिति। अनित्यता चास्तिता च अनित्यतास्तिते। अनित्यत्वाशून्यत्वे स्यातामित्यर्थः। ··· ये तु मायां विना ब्रह्मैव वा प्रधानं वा परिणमत इति वदन्ति तन्मते ऽप्युक्तदोषमतिदिशति अतस्ततोऽपीति। उत्तरार्धं व्याचष्टे निरंशस्यापि चेदिति॥९४॥

ननु निरंशस्य यद्यपि न युगपदनेकपरिणामस्संभवति तथापि क्रमेण संभवतीत्याशङ्क्याह नान्यदापीति। ··· ॥ ९५ ॥

**[Page 182]** विपक्षे दोषमाह स्यात्तु चेदिति। ··· एवमिति। कृत्स्ननाशः एवं सकृदित्यर्थः। ततः किमित्याशङ्क्य सदा सकृत् कृत्स्नस्य जन्म सदा सकृत् कृत्स्नस्य नाशो वा स्यादित्याह सकृत्सदेति। ··· सकृत्सदेत्यंशं व्याचष्टे सदा चेति। ··· ॥ ९६ ॥

पूर्वं जन्मनाशयोः क्रममङ्गीकृत्य कृत्स्नजन्मयौगपद्यं कृत्स्ननाशयौगपद्यं वा उक्तम्। इदानीं जन्मनाशयोरपि न क्रमसंभव इत्याह सह वा स्तामिति। कुतस्तौ सह भवतामित्यत आह नियम इति। जन्मनाशयोर्हेतुभूते शून्ये सत्यपि तयोः क्रमेणैव भावे हेत्वभावादित्यर्थः। विरोधात्तयोस्सहभावासंभवमाशङ्क्य तर्हि तावेव न सिध्यत इत्याह मिथ इति। जनिध्वंसौ कदाचन न स्तामित्यन्वयः। ··· असतो जन्म न स्यादित्येतद्विवृणोति भावो हीति। यस्य शून्यस्य जन्माख्यो भावस्तदसत् अभावरूपमित्यर्थः। ··· ॥ ९७ ॥

**[Page 183]** इतश्च स्यात्तु स्थितिशीलं निर्विकारमेव शून्यं जायत इत्ययुक्तमित्याह अविकार्यवेति। शून्यस्य परिणामक्रियया रूप्यरूपापत्तिरित्यनभ्युपगमे रूप्यस्य शून्यकार्यत्वं न स्यादित्यर्थः। ननु रूप्यस्य शून्यकार्यत्वमनिष्टं तस्य वासनापरिणामत्वेन तत्कार्यत्वा[न ?]भ्युपगमादित्याशङ्क्य तर्हि कारणत्वेन शून्यकल्पनं व्यर्थमित्याह स्याच्चेदिति। **[Page 184]** कुतो वृथेत्यत आह तदसिद्धेरिति। शून्यस्य रूप्यकारणत्वाभावेन अन्यथानुपपन्नकार्यलक्षणस्य कल्पकस्यासिद्धेरित्यर्थः॥ ९८ ॥

पिण्डावस्थानाशेन घटभाववच्छून्यावस्थानाशेन रूप्यभावे द्वितीयं सर्पादिकार्यं शून्यं[न्यात् ?] न स्यादित्युक्तम्। तत्र विशेषमाशङ्क्य दूषयति अपि नष्टमिति। दधिभावे क्षीरमिव रूप्यभावे नष्टमपि शून्यं प्रदीपनाशे तम इव पुनर्जातं फणी भवेद्यदीत्यन्वयः। कुतस्तज्जायते शून्यं रूप्यात्तन्नाशाद्वेति विकल्प्य आद्यं प्रत्याह स्वकार्यत्वान्न रूप्यत इति॥ ९९॥

रूप्याच्छून्यजन्मेत्यत्रैव दोषान्तरमाह रूप्याच्चेज्जायत इति। मृज्जघटस्य मृद्रूपत्ववत् रूप्यजस्यापि शून्यस्य रूप्यरूपत्वं स्यादित्यर्थः। किंच रूप्यादनष्टात्किं शून्यजन्म उत नष्टादिति विकल्प्य आद्यं प्रत्याह रूप्येऽनष्ट इति। उत्तरार्धं व्याचष्टे यथा च मृद्यनष्टायामिति। कुतो न युक्तमित्यत आह सति रूप्य इति। सति रूप्ये कारणत्वेन स्थिते सति सर्वशून्यत्वं न संभवेदित्यर्थः। यद्वा। सच्चेद्रूप्यं कारणं तदा तद्दृष्टान्तेन अन्यदपि कारणं सदेवेति सर्वस्यापि कारणस्य न शून्यत्वसंभव इत्यर्थः॥ १००॥

द्वितीयं प्रत्याह रूप्यनाशेऽपीति। रूप्यात्तन्नाशाद्वेति पूर्वतरविकल्पद्वयगते द्वितीयपक्षेऽपि किमनष्टाद्रूप्यनाशाच्छून्यजन्म किं वा नष्टादिति विकल्प्याद्यं निरस्यति तन्नाशादप्यनष्टान्नेति। रूप्यनाशस्याप्यशून्यत्वे तस्यानष्टस्य शून्यहेतुत्वे ततस्सर्वशून्यं न सिध्येदित्यर्थः। द्वितीयं निरस्यति नाशनाशेऽपीति। पूर्ववत् रूप्यनाशे रूप्याच्छून्यजन्माभाववत् नाशनाशेऽपि नाशाच्छून्यस्य जन्म न स्यादित्यर्थः। तृतीयपादं व्याचष्टे रूप्यनाशादित्यादिना। चतुर्थपादं व्याचष्टे नाशस्यापीति॥ १०१॥

एवं शून्यजन्मनि विकल्प्य खण्डिते शून्यवाद्याह तन्नाश एवेति। यदेव भवतां रूप्यनाशजन्म तदेव मम शून्यजन्म। तस्माच्छून्यस्य रूप्यजन्यत्वं संभवतीत्यर्थः। रूप्यनाशजन्मनोऽप्यस्माकमनिर्वाच्यत्वान्न वस्तुतश्शून्यजन्म सिध्येदिति परिहरति सति रूप्य इति। रूप्ये स्थिते सत्येव तन्नाशस्य विरुद्धत्वात् अविरोधे सर्वदा तन्नाशप्रसङ्ग इत्यर्थः। तर्ह्यसत्येव

रूपे तन्नाशोऽस्त्वित्यत आह रूपेऽसतीति। असत्त्वस्यैव नाशत्वादसत्त्वे सिद्धे पुनर्नाशवैयर्थ्यादनवस्थानाच्च असति रूपे न नाशसंभव इत्यर्थः॥ १०२॥

[Page 185] येन न्यायेन रूपाच्छून्यजन्म निरस्तं तं न्यायं शून्याद्रूपजन्मन्यतिदिशति एवं शून्यस्येति। यथा रूपनाशे रूपान्न शून्यजन्म स्यात् एवं शून्यनाशेऽपि न शून्याद्रूपजन्म स्यादित्यर्थः। तर्हि शून्यनाशाद्रूपजन्म अस्तु शून्यनाश एव वा रूपजन्मेत्याशङ्क्याह शून्ये सतीति। रूपे सत्यसति च रूपनाशवच्छून्ये सत्यसति च तन्नाशोऽपि न युक्त इत्यर्थः। … ॥ १०३ ॥

विस्तृतं प्रमेयं संक्षिप्योपसंहरति नातोऽसत इति। असतः प्रागसतः कार्यस्येत्यर्थः। नातोऽसतो जनिख्याती इत्यत्र जन्यभावं तावद्विवृणोति अत उक्तेनेत्यादिना। नाप्यसतः कारणादित्यत्र सतोऽसतो वा कारणादित्यध्याहर्तव्यम्। ननु यद्यसतः कार्यस्य सद्रूपेण जन्म अयुक्तं तस्य असद्रूपेणैव जन्मास्त्वित्याशङ्क्याह नाप्यसदात्मनेति। सतः कार्यस्यासदात्मना जन्म विरुद्धम्। असतश्चासदात्मत्वस्य पूर्वमेव सिद्धत्वान्न तदात्मना जन्म नाम संभवति। ततो नासतोऽसदात्मनापि कुतश्चित्कारणाज्जन्मसंभव इत्यर्थः। नाशबाधौ तदा कुत इत्यत्र जनिख्यात्योरसंभवादेव नाशबाधावपि न संभवत इत्युक्तम्। तत्र जन्यसंभवान्नाशासंभवं तावद्विवृणोति अतो नाश इति। अतश्शब्दार्थमाह जाताभाव इति। … उत्तरार्धं योजयति अतोऽसतोऽख्यातेरित्यादिना॥ १०४॥

[Page 186] यच्चोक्तं शून्यभावे मोक्षेऽनावृत्तिश्च घटत इति तत्राह शून्यापत्ताविति। शून्यस्यापि मोक्षस्य जन्यत्वान्न तत्पक्षेऽप्यनावृत्तिरित्यर्थः। किंच शून्यत्वापत्तिलक्षणमोक्षपक्षेऽनावृत्तिश्रुतिरनर्थिकेत्याह मोक्षे चेति। वृत्तिसंभव इति पदच्छेदः। यस्मिन् मोक्षे शून्यभूतस्यात्मनस्सद्भावाख्यवृत्तिरेव न संभवति तत्र आवृत्तिशङ्का न स्यादित्यर्थः। आवृत्तिसंभव इति वा पदच्छेदः। तदा अर्चिरादिना देशान्तरगतस्यैव

स्वदेशे शून्यभूतस्य पुनरावृत्त्यसंभवादावृत्तिशङ्का न स्यादित्यर्थः। ननु न शून्यैक्यप्राप्तिस्साध्या येन अनित्यता स्यात्किं त्वसाध्यैव तथापि त्वत्पक्ष इव अविद्यावशात्तदप्राप्तिभ्रमव्यावृत्तये साधनापेक्षा तन्निवृत्तौ मुक्तत्वव्यपदेशश्च स्यादिति शङ्कते शून्यस्यैवेति। वृत्तिसंभव इति पदच्छेदानुसारेणोत्तरार्धं व्याचष्टे त्वदिष्टे चेति। शून्यस्य वृत्त्यभावादिति। शून्यभूतस्यात्मनस्सद्भावाख्यवृत्त्यभावादित्यर्थः। आवृत्तिसंभव इति पदच्छेदपक्षानुसारेण व्याख्याति देशाद्देशान्तरमिति। आगमनयोग्यत्वसंभवे सति आवृत्तिशङ्का स्यात्तदभावे प्रतिषेधो व्यर्थस्स्यादित्यर्थः॥ १०५॥

किंच शून्यभाव एव तावन्न संभवति। दूरे तस्य मोक्षत्वमित्यभिप्रेत्याह शून्यभावः कुत इति। ···॥ १०६॥

**[Page 187]** या च श्रुतिर्मोक्षस्य शून्यभावे प्रमाणत्वेनोदाहृता तस्या अभिप्रायमाह विशेषज्ञाननाश इति। ···॥ १०७॥

ननु मा भूदज्ञाननिवृत्तिश्शून्यभावस्तथाप्यविद्यया सह देहाद्युपाधिनिवृत्तिनिमित्तविशेषविज्ञाननाशश्शून्यभावोऽस्तु यथा मोक्षादन्यत्र विशेषविज्ञाननाशश्शून्यभाव एव तद्वदित्याशङ्क्य सत्कार्यवादालम्बनेन दृष्टान्तं विघटयति नाशो न शून्यतेति। व्यवहारदशायामपि विशेषविज्ञाननाशस्य न शून्यात्मकत्वमित्येतत्कुत इत्यत आह भावादिति। नाशोत्तरकालमपि ज्ञानानां कारणात्मना सत्त्वादित्यर्थः। कारणरूपेण सत्त्वमेव विपक्षे बाधकेन द्रढयति शून्यभाव इति। पुनरित्येतत्प्रागित्यस्याप्युपलक्षणम्। ···॥ १०८॥

ननु कार्यस्य कारणात्मना सत्त्वे कार्यात्मनापि तस्य सत्त्वं स्यात्तयोरैक्यात्तथा च कार्यं कारणमिति भेदव्यवहारस्य का गतिरिति तद्भेदवादिनो मतमाशङ्क्य गतिमाह तदेव कारणमिति। ···॥ १०९॥

**[Page 188]** ननु स्वरूपैक्येऽपि विशिष्टरूपभेदान्नात्यन्ताभेदः कार्यकारणयोरित्यत आह अव्यक्तमेव च व्यक्तमिति। अभिव्यक्तिसिद्ध्यन्यथा-

नुपपत्त्या अनभिव्यक्तमेवाभिव्यक्तमिति गम्यते। तस्माद्विशिष्टभेदोऽपि न प्रामाणिक इत्यर्थः। यद्वा। अभिव्यक्त्यनभिव्यक्तिलक्षणविरुद्धधर्माश्रयत्वेन कार्यकारणयोर्भेद एवेत्याशङ्क्य तयोः कालभेदेनैकस्मिन्नप्यविरोधमाह अव्यक्तमेव चेति। ... ॥ ११० ॥

इतश्चाभिव्यक्त्यनभिव्यक्तिविशिष्टयोर्न भेद इत्याह किंचेति। ...॥१११॥

नन्वनभिव्यक्तिधर्मिण्यभिव्यक्तेर्निमित्तादभिव्यक्तिकाले कश्चिद्विशेषो जायते वा न वा। न चेत् तदानीमनभिव्यक्तस्य व्यक्तता का। न कापि। तादवस्थ्याज्जायते चेत् विशेषयुक्तस्याभिव्यक्तिधर्मिणोऽनभिव्यक्तिधर्मिणस्तत्काशाद्भेद एव स्यादिति शङ्कते नन्वव्यक्त इति। तथा चाभिव्यक्तेस्तत्कृतविशेषस्य च सार्थत्वान्यथानुपपत्त्या विशिष्टोऽसन्नेव जायत इत्यङ्गीकार्यमिति भावः॥ ११२ ॥

**[Page 189]** भेदपक्षेऽप्यभिव्यक्तेस्सार्थकत्वानुपपत्तिस्समानेति परिहरति नैवमिति। ... ॥ ११३ ॥

नन्वभिव्यक्तस्यानभिव्यक्तेनैकत्वात् प्रागसत्त्वं मा भूदभिव्यक्तेस्तत्कृतविशेषस्य च प्रागसत एवोत्पत्तिरस्त्वित्याशङ्क्य तयोरप्यसत्त्वं श्लोकद्वयेन निषेधति नाव्यक्तस्येति। ... द्वितीयश्लोकं व्याख्याति न ह्यसिद्धयोरिति। अस्य व्याख्या असतोरिति। नान्यदीयतेति। कस्यचिद्धर्मो न स्यादित्यर्थः। यथान्यस्येति। धर्मिणो यथा न धर्मधर्मतेत्यर्थः॥ ११४ ॥ ११५ ॥

**[Page 190]** असतस्तद्रूपेण जन्माभावे सतश्शून्यताभावे च न केवलं न्यायसद्भाव एव किंतु श्रुतिस्मृती अपि विद्येते इत्याह इतश्च कुत इति। ... असतस्सत्त्वापत्तिनिरासकश्रुत्यैव अर्थात्सतश्शून्यतापत्तिरपि निरस्तेति मत्वा आह न च सच्छून्यतामियादिति। कारणभावापत्तिरूपत्वान्नाशस्येत्यर्थः। ... ॥ ११६ ॥

एवं सद्वादावलम्बनेन शून्यवादं निरस्य अनिर्वचनीयवादमुपपादयिष्यन् सद्वादमाक्षिपति नन्विति। अनभिव्यक्तवस्तुस्थितिकालेऽभिव्यक्तेस्सत्त्वं तदैक्यं

चास्तीत्यभ्युपगमे सर्वदा अभिव्यक्तिरेव स्यात्। तथा च न कदाचिद्प्यनभिव्यक्तिस्स्यादित्यर्थः। अभिव्यक्तिकालेऽप्यनभिव्यक्तिरस्त्वित्यत आह व्यक्त्यव्यक्त्योरिति। अभिव्यक्तेरनभिव्यक्त्या सह स्थितत्वेन तन्निवारकाभावादनभिव्यक्तिस्तदा स्यादित्यर्थः। नन्वनभिव्यक्त्या सह वर्तमाना अभिव्यक्तिरनभिव्यक्ता। सा यद्यपि तां न निवर्तयेत् तथाप्यभिव्यक्ता सा तां निवर्तयेदनभिव्यक्त्या सहास्थितत्वादित्याशङ्क्य तर्ह्यसत्कार्यापत्तिरित्याह तत्राव्यक्तेति। साप्यभिव्यक्तिस्तत्रानभिव्यक्तास्तीत्याशङ्क्याह व्यक्तेरिति। स्याच्चेदिति। अभिव्यक्तिकालेऽप्यनभिव्यक्तिस्स्याच्चेदित्यर्थः। तद्धेतुत्वभावादिति। निवृत्तिहेतुत्वभावादित्यर्थः॥ ११७॥ ११८॥

**[Page 191]** तर्हि परिशेषादनिर्वाच्यस्यैव ते जनिख्याती स्यातामिति परिहरति सत्यमिति। अतोऽभिव्यक्त्यनभिव्यक्ती अपि जनिख्यातिमत्त्वादनिर्वाच्ये एवेत्याह व्यक्त्यव्यक्ती चेति। नन्वनिर्वाच्यस्यैव ख्यातिजनी इत्युक्तमयुक्तं सतोऽप्यात्मनः ख्यातिदर्शनादित्याशङ्क्याह ख्यातिरचेति। सर्वप्रपञ्चस्यानिर्वाच्यत्वेष्टेरसंवित्स्वभावजडमात्रख्यातिर्वा अभिप्रेतेत्याह सर्वा वेति। अख्यातस्वभावस्य— असंवित्स्वभावस्येत्यर्थः। नन्वबाध्यघटादेः कथं बाध्यरूप्यादेरिवानिर्वाच्यत्वमित्यत आह सर्वस्येति। नन्वत्र ख्यातिर्नाम रूप्यादिख्यातिः जडमात्रख्यातिर्वा अस्तु सा कथमनिर्वाच्यस्य संभवेदित्यत आह अख्यातस्वभावस्य चेति। शुक्लस्य कृष्णताया इव असंविद्रूपस्य जडस्य ख्याततायाः असंभवादनिर्वाच्यस्यैव जडस्य ख्यातिरित्यर्थः। नन्वख्यातस्वभावस्यैव जडस्य प्रमातृआश्रयज्ञानात् ख्यातत्वमस्त्वित्याशङ्क्य किं तेन तस्मिन् ख्यातत्वस्य कृतत्वात् ख्यातिरस्त्वित्युच्यते किं वा न क्रियते ज्ञानमात्रात् ख्याती[तिरि ?]त्युच्यत इति विकल्प्य आद्यं प्रत्याह अख्यातस्येति। अख्यातस्य ख्यात्या सह संबन्धानिरूपणात्मा कृता चेदनिर्वाच्यस्यैव तस्य सा कृता भवितुमर्हतीत्यर्थः। द्वितीयं प्रत्याह न क्रियते चेदिति। यदि प्रमातृआश्रयज्ञानेन जडे ख्यातता न क्रियते तदा जडं ख्यातीति जडस्य

ख्यानसामानाधिकरण्येन ख्यानव्यवहारो निरालम्बनस्स्यादित्युक्तम् । तत्र हेतुमाह तस्य स्वत इति । यतः ख्यातिरपि कादाचित्की जनिरिव सतोऽसतश्च निरूपयितुं न शक्यते ततोऽनिर्वाच्यस्यैव सा भवितुमर्हतीत्याह अत इति । जनेरनिर्वाच्यत्वं तद्वतोऽनिर्वाच्यत्वे प्रयोजकमित्याशङ्क्य [?] तर्हि जडस्य ख्यात्यैकत्वलक्षणा ख्यातिरपि विरुद्धैक्यरूपत्वाद्रज्जुसर्पैक्यवदनिर्वाच्यैवेत्याह स्वयं चेति । ख्यातिजनिमतोऽनिर्वाच्यत्वनिश्चयादभिव्यक्त्यनभिव्यक्त्योरपि ख्यातिजनिमत्त्वादनिर्वाच्यत्वमेवेत्याह अतोऽभिव्यक्तीति । यत उक्तेन न्यायेन अख्यातस्वभावस्यानिर्वाच्यस्यैव ख्यातिः साप्यनिर्वाच्यैव अतोऽप्यसतस्तात्त्विकी ख्यातिरयुक्तेत्याह अतोऽपीति । अत्र मायाप्रतिबन्दिग्रहेण शून्यवादी शङ्कते नन्विति । जडस्य स्फुरणैक्ये जडत्वहानिवत् मायाया अपि स्फुरणैक्ये मायात्वहानेस्स्फुरणैक्यासंभवान्न ख्यातिसंभव इत्यर्थः । परमार्थशून्यस्यापरमार्थमायाप्रतिबन्दिग्रहो न युक्त इति परिहरति सत्यमत एवेति । मायायास्स्फुरणैक्यस्याभासत्वात् ख्यातिरप्याभास एवेत्यर्थः । अनाभासत्वे दोषमाह अन्यथेति । सापि मायापीत्यर्थः ॥ ११९ ॥

[Page 192] पूर्वं जनिख्यात्यन्यथानुपपत्त्या जडस्यानिर्वाच्यमायात्वमुक्तम् । इदानीं शब्दवाच्यत्वस्य मायायामेवोपपत्तेः तदन्यथानुपपत्त्यापि तस्य मायात्वमित्याह सा चेति । ... ॥ १२० ॥

ननु तर्ह्यात्मन इव शून्यस्याप्यविद्ययैव जन्मादिसर्वव्यवहारास्पदत्वमस्त्वित्यत आह नाविद्ययापीति । ... ॥ १२१ ॥

[Page 193] ननु विद्यया विना स्वत एवाविद्यानिवृत्तिरन्याश्रयविषयविद्यया भविष्यतीत्याशङ्क्याह अविद्या यस्येति। समानाश्रयविषययोरेव विद्याविद्ययोर्निवर्त्यनिवर्तकभावः प्रसिद्ध इत्यर्थः। इतश्च असतो न विद्याश्रयत्वविषयत्वे इत्याह सतोऽपीति। न तद्विद्यां विनेति। असदाश्रयविषयां विद्यां विनेत्यर्थः। अन्यविद्ययेति। असदन्यवस्त्वाश्रयविषययेत्यर्थः ॥१२२॥

शून्याविद्यानिरासप्रसङ्गेन साङ्ख्याभिमतजडाश्रयामविद्यां निरस्यति यस्याज्ञानमिति। ··· विद्याभावादिति। विद्याश्रयत्वाभावात्तन्निवर्त्त्याविद्याश्रयत्वं नास्तीत्यर्थः। वेद्यत्वेऽपि विद्याश्रयत्वं कुतो न स्यादित्यत आह न ह्येकस्यैवेति॥ १२३॥

किं चार्थानर्थौ मुक्तिबन्धावज्ञानकार्यभ्रमतन्निवृत्तिलक्षणौ जडस्य न संभवतः। तस्मादपि न जडस्य भ्रमोपादानाज्ञानाश्रयत्वसंभव इत्याह अज्ञानिन इति। जडं न ज्ञानाश्रयः पुरुषार्थाभागित्वाच्छून्यवदित्यर्थः। विपक्षे बाधकमाह यदि जडस्याविद्येति। कुत इत्यत आह तस्येति। तस्य जडस्य अविद्याविरोधिविद्याश्रयत्वाभावादित्यर्थः॥ १२४॥

**[Page 194]** अज्ञानग्राहकप्रमाणाभावाच्च न जडस्याज्ञानसिद्धिरित्याह अज्ञान्यस्मीति। न दृक् अदृक् तस्या अदृशः। दृश्यस्य जडस्याज्ञान्यस्मीत्यज्ञानानुभवोऽपि कथं स्यात्। न कथंचित्। अतस्तस्य नाज्ञानाश्रयत्वमित्यर्थः। आद्यश्चकारोऽनुक्तसमुच्चयार्थः। न केवलं जडस्याज्ञानासंभव एव किंतु ग्राहकप्रमाणमपि नास्तीत्यर्थः [?]। नन्वज्ञानस्य जडाश्रयत्वात्स्वाश्रयस्वरूपभूतानुभवगम्यत्वाभावेऽपि मानान्तरगम्यत्वं संभवतीत्याशङ्क्याह अमानमेयमिति। अमानमेयत्वं कुत इत्यत आह प्राक्सिद्धेरिति। जडगोचरप्रमाणप्रवृत्तेः प्रागेव सिद्धत्वात्तत् अज्ञानं जडविशेषितं मितेर्मानात्कथं सिध्येत्। न कथंचित् नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायात्। अतो न मानमेयमित्यर्थः। प्रमाणप्रवृत्तेः प्रागेवाज्ञानस्य सिद्धौ युक्तिं पृच्छति कात्रेति। प्रमाणप्रवृत्तेः प्रागेव तत्सिद्धेस्त्वयाप्यभ्युपगन्तव्यत्वान्न मां प्रति युक्तिः प्रष्टव्येत्यभिप्रेत्य सिद्धान्ती पृच्छति तां किमजानन्निति। ज्ञाते प्रश्नानुपपत्तेः द्वितीयमुल्लङ्घ्य प्रथममादाय निरस्यति अजानन् पृच्छामीत्यादिना। तदज्ञानं युक्तिविशेषितमज्ञानमित्यर्थः। तज्ज्ञानात्प्राक् युक्तिज्ञानात्प्रागित्यर्थः। असिद्धं चेदिति। युक्तिविशेषितज्ञानात्प्राक् तद्विशेषितमज्ञानमप्रतिपन्नं चेत् अज्ञान-

मित्यज्ञानसद्भावनिश्चयस्तच्छब्दाभिधानं च न स्यादित्यर्थः । तर्हि युक्तिविषयप्रमाणज्ञानात्प्रागेव तदज्ञानसिद्धिरस्त्वित्याशङ्क्याह सिद्धं चेदिति । ततः किमित्यत आह अत एवेति । विमतं प्रमेयाज्ञानं तत्तत्प्रमेयप्रमाणप्रवृत्तेः प्रागेव सिध्यति अज्ञानत्वाद्युक्त्यज्ञानवदित्यर्थः । विपक्षे च अनवस्थाप्रसङ्गो बाधक इत्याह इतश्चेत्यादिना । प्रमाणस्याज्ञातार्थबोधकत्वादज्ञानस्यापि प्रमाणगम्यत्वे तदवगमात्पूर्वं तद्गोचरमज्ञानान्तरमेष्टव्यं तदपि प्रमाणगम्यमेवेति तदवगमात्पूर्वं तद्गोचरमज्ञानान्तरमेष्टव्यमित्यनवस्थानात्पूर्वपूर्वाज्ञानासिद्धावुत्तरोत्तराज्ञानासिद्धेर्न क्वाप्यज्ञानत्वसिद्धिरित्यर्थः । तदज्ञानं तदज्ञानं चेति । प्रमाणगम्याज्ञातविषयमज्ञानं तद्विषयमज्ञानान्तरं तद्विषयमज्ञानान्तरं चेत्यर्थः । तस्य तस्य ज्ञेयस्य— प्रमाणगम्याज्ञानप्रवाहस्येत्यर्थः । पूर्वं ज्ञात्वा तत्तज्ज्ञेयमिति । उपर्युपर्यागच्छदज्ञानं पूर्वं ज्ञात्वा पश्चादुत्तरमुत्तरमज्ञानं ज्ञेयमित्यर्थः । स्वपक्षे पुनरज्ञातार्थासिद्धिलक्षणो दोषो नास्ति साक्षिसिद्धत्वाङ्गीकारादज्ञातवस्तुन इत्याह नित्यात्मानुभवेति । साक्षिचैतन्यस्य प्रमाणत्वाभावान्निवर्त्याज्ञानान्तराप्रसङ्गात् नानवस्थापीत्याह अज्ञानान्तरेति । अज्ञानं प्रामाणिकं प्रमेयत्वाद्घटवदित्यनुमानविरोधं शङ्कते अथोच्येतेति । सर्वस्याज्ञानम्—सर्वविषयमज्ञानमित्यर्थः । यच्चानुमानं अज्ञानं तत्तत्प्रमेयज्ञानात्प्रागेव सिध्यतीति तत्सिद्धसाधनं प्रमाणज्ञानात्प्रागपि तस्य स्वरूपेण विद्यमानताङ्गीकारादित्याह स्वरूपतस्सिद्धमिति । स्वपरनिर्वाहकत्वादनवस्था नास्तीति भावः । दृष्टान्तश्च साध्यविकल इत्याह त्वद्युक्त्यज्ञानमपीति । प्रमाणेनैवाहं ज्ञात्वा— युक्तिविषयप्रमाणेनैव तद्विशेषितमज्ञानं ज्ञात्वेत्यर्थः । युक्त्यज्ञानस्य प्रामाणिकत्वमभ्युपगम्य तावत्परिहरति एवमपीति । युक्तिविशेषितस्यैवाज्ञानस्य प्रामाणिकत्वाद्विशेषणभूताया युक्तेरपि प्रामाणिकत्वं सिध्येत् नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायात् । ततश्च प्रमाणं विनैवाज्ञानं प्रतीतितस्सिध्यतीत्यस्य प्रतिज्ञातार्थस्य युक्त्युपेतत्वान्मत्प्रतिज्ञा निरुपद्रवा

सिध्यतीत्यर्थः । **[Page 195]** नन्वज्ञानस्य युक्त्युपलक्षितत्वमेव न तु तद्विशिष्टत्वं येन युक्तेरप्यज्ञानग्राहकप्रमाणात्प्रतीतिस्स्यादित्याशङ्क्य तदापि मद्युक्तेः कदाचित्प्रामाणिकत्वमेष्टव्यं अन्यथा तदज्ञानस्य प्रामाणिकत्वा-योगादित्याह प्रामाणिकस्यापीति । ... नन्वज्ञानग्राहकप्रमाणादज्ञान-विशेषणतया तदुपलक्षणतया वा सिध्यन्ती युक्तिर्न सम्यग्युक्तिः किंतु युक्त्याभास एव । तस्माद्युक्त्याभासस्यैव प्रमाणसिद्धत्वान्न तव प्रतिज्ञातार्थ-सिद्धिरित्यत आह न च युक्त्याभास इति । पूर्वं युक्त्याभासस्य प्रामाणि-कत्वं तदज्ञानस्य सत्त्वं प्रामाणिकत्वं चाभ्युपगम्य तस्य युक्त्याभासाज्ञानत्वान्न युक्त्यज्ञानत्वमित्युक्तम् । इदानीं युक्त्याभासस्य रूप्याभासस्येव भ्रमसिद्ध-त्वेन अप्रामाणिकत्वमत एव [सत्त्वं ?] प्रमाणनिवर्त्यं तद्विषयमज्ञानं च न सिध्येदित्याह न च युक्त्याभासस्येति। ... भ्रान्तिसिद्धस्य चेति। भ्रान्ति-सिद्धस्य चाज्ञातत्वाभावात्स्वयमज्ञानात्मकत्वाच्च अज्ञानात्मके चाज्ञाना-न्तराभ्युपगमेऽनवस्थापातात् न तत्राज्ञानं तन्निवर्तकं ज्ञानं च संभवति किं त्ववभासमात्रमेव स्यादित्यर्थः । फलितमाह अतो मद्युक्तेरिति । युक्तेः प्रामाणिकत्वे सम्यग्युक्तिविषयत्वादेवाज्ञानगतमप्रामाणिकत्वं सिध्येत् अप्रामाणिकत्वे तदज्ञानस्य स्वयमभावादेवाप्रामाणिकत्वं सुतरां सिध्ये-दित्यर्थः। तस्य चेति। युक्त्यज्ञानस्य चेत्यर्थः। नन्वज्ञानस्य प्रमाणागम्यत्वेऽपि जडस्य प्रमाणविषयत्वात् तद्ग्राहकमानेन तस्याज्ञानाश्रयत्वमपि प्रतीयता-मित्यत आह तस्मादज्ञानस्येति । ... ननु बाह्यस्य तमस इव आन्तर-स्याप्यज्ञानाख्यस्य तमसः किंचित्साधकं प्रमाणमङ्गीकार्यम् । अतस्तेना-ज्ञानस्य जडाश्रयत्वं गृह्यतामित्याशङ्क्य केवलाज्ञानग्राहकप्रमाणाभ्युपगमे-ऽपि तद्ग्राहकाज्जडाश्रयत्वमज्ञानस्य ग्रहीतुं न शक्यत इत्याह अज्ञान-प्रमाणमपीति । नन्वज्ञानप्रमाणगम्यमेव किंचिज्जडान्तरमस्ति । ततस्तेन तस्य तदाश्रयत्वमपि गृह्यतामित्यत आह न चाज्ञानप्रमाणेति। अज्ञान-ग्राहकमानगम्यत्वे च तस्याप्यज्ञानत्वमेव स्यादिति भावः। किं च

अज्ञानाश्रयभूतं तज्जडं किमन्तःकरणादि किं वा प्रधानम्। नाद्य इत्याह अन्तःकरणादीनां चेति। द्वितीयमनूद्य तत्किं विभक्तमविभक्तं वेति विकल्प्य आद्यं प्रत्याह अन्यदपीति। द्वितीयं प्रत्याह अविभक्तं चेति। अविभक्तत्वेन स्वातिरिक्तप्रकाशकाभावाज्जडत्वेन स्वप्रकाशत्वाभावाच्च न सिध्येदित्यर्थः। ननु तवाप्यात्मनोऽन्तःकरणादिभ्योऽन्यत्वेन सादित्वप्रसक्ते-रज्ञानाश्रयत्वं न घटत इत्यत आह अजडस्य त्विति। नन्वज्ञानस्य तामसत्वादनादित्वमसिद्धमित्यत आह अज्ञानं चेति। अन्यथेति। सादित्वे घटादिवदज्ञानमेव तन्न स्यादित्यर्थः। अज्ञानशब्देन विरोधि-भावोदयनिवर्त्यत्वाभिधायिना तदुदयात्प्राक् समस्तकालवर्तित्वमज्ञानत्व-मित्युक्तं भवति। तत् सादित्वे न स्यादित्यर्थः। इतश्चाज्ञानमनादीत्याह प्राङ्मुक्तानामिति। अज्ञानोत्पत्तेः प्राग्बन्धहेत्वज्ञानाभावे सति मुक्तानां जीवानां पुनरप्यज्ञानोत्पत्तेस्संभवसद्भावप्रसङ्गादनिर्मोक्षापत्तिरित्यर्थः। आत्मनोऽप्रमेयत्वात्तदाश्रितमप्यज्ञानमप्रमेयमेवेति सिद्धान्तश्लोके कथितम्। तदवष्टभ्य शङ्कते नन्वात्माज्ञानमेवेति। **[Page 196]** अज्ञानस्य जडा-श्रयत्वमभ्युपेत्य तावत्परिहरति तन्नेति। जडस्य प्रामाणिकत्वेऽप्यज्ञानस्य प्रमाणनिवर्त्यत्वान्निवर्तकेन निवर्तकसजातीयेन वा तस्य अगम्यत्वान्न जडा-श्रयमप्यज्ञानं प्रामाणिकमित्यर्थः। अज्ञानस्य जडाश्रयत्वमेव न संभवति कुतस्तदाश्रितत्वेन तस्य प्रामाणिकत्वमित्याह न चेति। ··· **[Page 197]** ननु ज्ञातत्वमिवाज्ञातत्वमपि न मानान्निष्पद्यते किंतु पूर्वसिद्धमेवा-ज्ञातत्वं जडविषयप्रमाणप्रवृत्त्यनुपपत्त्या ज्ञायत इत्याशङ्कते ननु मानेति। किमतो लभ्यत इत्याशङ्क्य पूर्वोक्तदोषाप्रसङ्ग इत्याह अतो नाज्ञातार्थेति। अज्ञातस्य जडस्याप्रतीतिप्रसङ्ग इति यो दोष उक्तस्स न स्यादित्यर्थः। मानादज्ञातत्वमेव निष्पन्नं स्यान्न तु ज्ञातत्वमिति यो दोषः प्रसञ्जितस्सो-ऽपि न स्यादित्याह नापि मानादिति। अनन्यथासिद्धपूर्वभाविप्रमाणस्य ज्ञातत्वमात्रहेतुत्वादित्यर्थः। अत एवैकस्य मानस्योभयार्थत्वाप्राप्तेरुभयार्थ-

त्वनिषेधोऽप्यप्राप्तप्रतिषेध इत्याह न चाज्ञातत्वस्येति। मानहेतुत्वप्राप्तिः— माननिष्पाद्यत्वप्राप्तिरित्यर्थः। निरस्यति तथापीति। मानादज्ञातत्वमेव निष्पन्नं स्यादित्यापा[दि?]तो दोषो यद्यपि नास्ति तथापि मानप्रवृत्तेः प्राक् सोऽज्ञात इति न शक्यं ज्ञातुं मानेनेत्यन्वयः। कुतो न शक्यं ज्ञातुमित्यत आह पूर्वमज्ञातत्वासिद्धाविति। जडविषयमानप्रवृत्तेः पूर्वं जडस्याज्ञातत्वाप्रतीतौ मानादेव जडं ज्ञायते न पुनस्स्वत इति ज्ञातुमशक्यत्वादित्यर्थः। कुतो ज्ञातुमशक्यमित्यत आह तत्स्वभावत्वेति। जडस्य ज्ञातता-स्वभावत्वनिश्चयसंभवादित्यर्थः। कुतस्तत्स्वभावत्वनिश्चयसंभव इत्यत आह तस्य तथैवेति। यथा शुक्लात्मना दृश्यमानस्य घटस्य न कदाचिदपि कृष्णात्मत्वं तथा जडस्य ज्ञातमितिरूपेणैव दृश्यमानस्य न कदाचिदप्यज्ञातरूपत्वम्। ततस्तत्स्वभावत्वनिश्चय इत्यर्थः। ननु तर्हि मानप्रवृत्त्युत्तरकालं जडस्याज्ञातत्वप्रसिद्धिरस्त्वित्यत आह प्रवृत्तेऽपीति। प्रवृत्तेऽपि माने सोऽज्ञात इति न शक्यं ज्ञातुं मानेनेत्यन्वयः। कुतो न शक्यमित्यत आह तत्प्रवृत्तीति। मानप्रवृत्तिनिश्चायकस्य फलभूतज्ञातत्वस्याभावादित्यर्थः। मानप्रागभावस्तत्प्रवृत्तिनिश्चयहेतुरस्तु प्रागभाववतामुत्तरकाले प्रवृत्तिदर्शनात् मानस्य च क्षणिकत्वेन प्रागभाववत्त्वादित्याशङ्क्य प्रागभावप्रतीत्यभावान्नैवमित्याह मानमपीति। ननु मेयाभाववन्मानाभावोऽपि प्रतीयतामित्याशङ्क्याह अत एवेति। ··· भावस्याभावाद्भेदादिप्रतीतिवत् अभावस्यापि भावाद्भेदादिप्रतीतिरस्त्वित्याशङ्क्य भावस्यापि ज्ञातत्वे स्वयंप्रकाशत्वापत्तेर्न भेदादिसिद्धिरित्याह भावस्यापीति। ततः किमित्यत आह अतस्सर्वस्यैवेति। ननु तर्हि स्वयंप्रकाशस्यैवाज्ञातत्वं मानाज्ज्ञायतामित्यत आह न च तस्याज्ञातत्वमिति। स्वाभाविकमज्ञातत्वं मानाज्ज्ञायत इत्येतन्न संभवति स्वयंज्योतिस्स्वभावविरोधादित्यर्थः। **[Page 198]** किंच स्वयंप्रकाशत्वे मानात्प्रागज्ञातत्वमित्यवधिरपि न घटते स्वरूपस्फुरणरूपस्य मानस्य सदा सिद्धत्वादित्याह

अवधीति। निरस्तमपि चोद्यं दोषान्तराभिधित्सया अनुवदति यत्त्वयोक्तमिति। अस्य जडार्थस्येत्यर्थः। यत्तावदर्थज्ञापकं मानं तस्यार्थग्रहण एवोपक्षयादज्ञातत्वसाधकं मानान्तरं वाच्यम्। तदपि किमर्थविषयमेव उताज्ञातत्वविषयमिति विकल्पयति अर्थस्येति। द्वितीयं तावदनूद्य निरस्यति अन्यविषयं चेदिति। अर्थविषयत्वाभावे तत्संबन्धबोधनायोगादर्थसंबन्धित्वेनाज्ञातत्वं न बोधयेदित्यर्थः। आद्यमनूद्य निरस्यति तद्विषयमेव चेदिति। मानान्तरेणेव अज्ञातत्वज्ञापकतयाभिमतादन्येनार्थविषयमानेनेवेत्यर्थः। विपक्षे दोषमाह अथ न तेनेत्यादिना। अर्थविषयेण मानान्तरेणाप्यर्थस्य ज्ञातत्वं कुतो न भवेदित्यत आह तद्विषयत्वेति। अर्थविषयत्वाविशेषादित्येतदसिद्धमित्यत आह न चातद्विषयेणेति। अतिप्रसङ्गादिति भावः। पूर्वमर्थस्याज्ञातत्वसाधकं मानमर्थविषयं न वेति विकल्प्य उभयथाप्यज्ञातत्वसाधकत्वं तस्य न संभवतीत्युक्तम्। इदानीं तस्य तत्साधकत्वमभ्युपगम्य ज्ञाप्यमज्ञातत्वं विकल्प्य दूषयति अथ किंचिदित्यादिना। अर्थोऽपि ज्ञात एव स्यात् तथा च तस्याज्ञातत्वं न सिध्येदित्यर्थः। तत्संबन्ध्यज्ञातत्वं न ज्ञाप्येतेति। अर्थस्याज्ञातत्वे तत्संबन्धि अज्ञातत्वमित्यपि ज्ञातुं न शक्येत संबन्धिबोधाधीनत्वात्संबन्धबोधस्येत्यर्थः। तर्हि मा भूदज्ञातत्वज्ञापनमित्यत आह अज्ञातत्वमपीति। तस्मादभिनिवेशे कृतेऽपि केवलाज्ञातत्वसाधकं मानं तव न घटत इत्याह अतोऽज्ञातत्वमिति। अङ्गीकृतमपि मानं तव निष्फलमित्याह यस्मादित्यादिना। यदि तस्मान्नार्थस्य ज्ञातत्वं भवति— कृष्णस्य शुक्लत्ववदज्ञातस्य अज्ञातत्वविरोधात् न मानादर्थस्य ज्ञातत्वं भवतीत्यर्थः। अर्थगतातिशयाजनकत्वेऽपि मानस्याज्ञातत्वविशिष्टरूपेण बोधकत्वान्न नैष्फल्यमिति शङ्कते अथ मनुष इत्यादिना। ... [Page 199] मानस्यातिशयाजनकत्वे केवलं नाज्ञातत्वसिद्धिरेव किंतु जडमात्रं न सिध्येदित्याह एवं चेदिति। अन्यत्राप्यज्ञातत्वव्यतिरिक्तजडेष्वप्येवमतिशयाजनकत्वमेव प्रमाणस्य वृत्तं स्वभावश्चेत्तदा जडमात्रं

न सिध्येद्विशेषाभावादेवेत्यर्थः। ननु त्वत्पक्षेऽपि मानस्याकारकत्वेन स्वविषये ज्ञाततालक्षणातिशयकरत्वाभावादसाधकत्वं समानमिति शङ्कते ननु न मानमिति। निरस्यति सत्यमत एवेति। जडे मानस्य वैफल्यमिति विशेषणादजडे साफल्यमिष्टम्। तदाक्षिपति नन्वजडस्यापीति। अतिशयाजनकत्वेऽप्यज्ञाननिवर्तकत्वात्साफल्यमिति समाधत्ते तन्नेति। ननु स्वरूपस्फुरणेनैव सिद्धस्य अज्ञाननिवृत्त्यपेक्षाभावादज्ञाननिवर्तकमानस्यात्मसाधकत्वाभावाद्वैफल्यमेवेत्यत आह स्वतस्सिद्धस्यापीति। ननु साधकमिवेत्यमुख्यं साधकत्वमुक्तम्। मुख्यमेव तु साधकत्वं किमिति नाभ्युपगम्यत इत्यत आह साधकत्वेति। स्वयंप्रकाशे स्फुरणलक्षणातिशयजनकत्वेन मुख्यसाधकत्वासंभवात् तिरोधायकनिवर्तनेनामुख्यसाधकत्वमुक्तमित्यर्थः। जडेऽप्येवं मानस्य साफल्यं किं न स्यादित्यत आह जडस्य त्विति। जडेऽप्यज्ञानं तन्निवृत्तिं च प्रौढिवादेनाभ्युपगम्याह निवर्तितेऽपीति। जडं प्रकाशत इति जडसामानाधिकरण्येन प्रकाशव्यवहारो न स्यादित्यर्थः। ननु मानस्य शुक्लादिलक्षणविशेषाजनकत्वेऽपि ज्ञाततालक्षणविशेषजनकत्वं स्यादेव। तथा च तादृशव्यवहारस्सिध्यतीति शङ्कते अथ मनुष इति। **[Page 200]** तर्हि मानादज्ञातजडवस्तुसिद्धिर्न स्यादिति मयोक्तं सिद्धमिति परिहरति तर्हि यावदिति। एवं जडस्य प्रसाधितमप्रामाणिकत्वमज्ञानस्याप्यतिदिशति अनेनापीति। ननु जडविषयमानस्य मानगम्यत्ववदज्ञानस्यापि जडविषयत्वान्मानगम्यत्वमस्त्वित्यत आह मानस्यापीति। जडमानस्यापि तथा— जडत्वाविशेषान्मानगम्यत्वं प्रत्युक्तमित्यर्थः। जडे तदज्ञानमानयोश्च मानाभावे फलितमाह अतो जडमिति। परमतनिराकरणमुपसंहरति अतोऽज्ञानेति। आत्माज्ञानव्यतिरेकेणेत्यर्थः। तस्य तत्र चेति। तस्य जडस्य तत्र जडेऽज्ञानासंभवात् जडाश्रयस्य जडविषयस्य चाज्ञानस्यासंभवादित्यर्थः। स्वमतमुपसंहरति अतः परमार्थेति। ननु सिद्धान्तश्लोके शुक्त्याद्यज्ञानजत्वं रूप्यादेर्दृष्टान्तत्वसिद्धये दर्शितम्। इह तु शुक्त्यादेर्जडस्याज्ञानमेव

नास्तीत्युच्यते । ततः पूर्वापरविरोधो दृष्टान्ताभावस्येत्याशङ्क्याह अस्यै-वार्थस्येति । लोकानुभवसिद्धं शुक्त्याद्यज्ञानं पूर्वत्रोक्तम् । इह तु तस्य प्रामाणिकत्वं निषिध्यते । ततो न पूर्वापरविरोध इत्यर्थः । शुक्त्यज्ञानाभावे रूप्यस्य तज्जत्वाभावात्प्रपञ्चमिथ्यात्वे दृष्टान्तो न सिध्यतीति नाशङ्कि-तव्यमित्युक्तम् । तत्र हेतुमाह लोकप्रसिद्धेति । सकलद्वैतानृतत्ववादिना लोकानुभवसिद्धस्यैव दृष्टान्तत्वस्वीकारादप्रामाणिकत्वापराधेन दृष्टान्ता-भावो नाशङ्कितव्य इत्यर्थः ॥ १२५ ॥

शून्यस्य जडस्य च प्रत्येकमविद्यां निराकृत्य साधारणं दूषणमाह शून्य इति । भ्रमः फलमित्याशङ्क्य किं स्वाश्रय एव भ्रमः फलं किं वा द्रष्ट्राश्रय इति विकल्प्य आद्यं निरस्यति भ्रमत इति । ते शून्यजडे न भ्राम्यत इत्यर्थः । द्वितीयं निरस्यति दृश्यस्येति । ··· ॥ १२६ ॥

**[Page 201]** पूर्वोक्तातिप्रसङ्गपरिहाराय नियममाशङ्कते द्रष्टविद्या-वशेनेति । यदा यस्य द्रष्टुरविद्या भवति तदैव तस्यैव दृश्यस्याविद्ययैव भ्रमस्स्यात् नान्येषामस्यापि नान्यदेति नियमसिद्धिरित्यर्थः । तर्हि भ्रमस्य द्रष्टविद्ययैवान्वयव्यतिरेकाभिधानात्तदविद्योपादानत्वमेवेति दृश्यस्याविद्या-कल्पनं व्यर्थमिति परिहरति वृथेतरेति । दृश्यस्यामविद्यामन्तरेण रूप्याद्य-सिद्धेस्तत्कल्पनं न व्यर्थमित्याशङ्क्य परिहरति नर्ते तामिति । इतश्च व्यर्थेत्याह तज्जत्वे चेति । दृश्याविद्योपादानत्वे भ्रमस्योपादानतन्त्रत्व-नियमाद्द्रष्ट्रा संबन्धस्तदाश्रितविद्यया निवृत्तिश्च न स्यादित्यर्थः । तृतीय-पादं व्याचष्टे यद्यपीत्यादिना । यच्छुक्त्याद्यज्ञानजं न भवति तच्छुक्त्या-श्रयं न भवति यथा रज्जुसर्पोषरोदकादि । ततश्शुक्त्यादिरूप्यादिसिद्ध्य-न्यथानुपपत्त्या दृश्याज्ञानं वक्तव्यमित्यर्थः । अन्यथाप्युपपत्त्या अर्थापत्तिं निरस्यंस्तुर्यं पादं व्याचष्टे तन्नेति ॥ १२७ ॥

**[Page 202]** शुक्त्यभावादिति । स्वप्ने शुक्तिरूप्यज्ञानं शुक्त्यज्ञानात् न भवति तत्र शुक्त्यभावादित्यर्थः । इतश्च जडाज्ञानजत्वं भ्रमविषयस्य

न स्यादित्याह तत्रात्माज्ञानेति । ··· पूर्वार्धं विवृणोति न हीत्यादिना । उत्तरार्धं व्याचष्टे तथा शुक्त्यादयोऽपीत्यादिना । दृश्याः— संनिहितदेशवर्तिन इत्यर्थः । बाह्या गिरिनदीसमुद्रादयः— व्यवहितदेशवर्तिन इत्यर्थः । दवीयोदेशादिसंबद्धाः— दूरदेशसंबद्धा अतिव्यवहितदेशस्था इत्यर्थः । तत्तदनुरूपेति । संनिहितदेशादिस्थस्य व्यवहितदेशादिस्थस्य दूरदेशादिस्थस्य दृश्यान्तरस्य तन्स्थाविद्यायाश्चाभावेऽपि द्रष्टाश्रयशुक्त्यादिविषयाविद्यया संनिहितादिरूपेण भान्तीत्यर्थः । दार्ष्टान्तिकमाह एवं जागरिते सत्स्वपीति । द्रष्टविद्याजत्वे रूप्यादेः कथं शुक्त्याद्याश्रयत्वप्रतिभास इति तत्राह द्रष्टुरेव तत्रेति । ननु स्वप्ने दृश्यान्तरस्य शुक्त्यादेरभावात्तदाश्रयाविद्या न कल्प्यते । जागरिते तु तस्य सत्त्वात्तदाश्रयैवाविद्या तत्र रूप्यादिप्रतिभासबाधयोर्नियामिका कल्प्यतामित्यत आह सत्यपीति । तस्य तदाश्रयेति । जडविषया जडाश्रया चेत्यर्थः । किमिति न कल्पनीयेत्यत आह दृश्येष्विति । एवमन्यथाप्युपपत्तिमुक्त्वा अन्यथैवोपपत्तिमाह दृश्यस्येति । कुत इत्यत आह न हीति । द्रष्टविद्याजन्यत्वे द्रष्टृस्वरूपेणाधिष्ठानभूतचैतन्येन दृश्येत दृश्याविद्याजन्यत्वे तु रूप्यादेर्दृश्यस्थत्वाद्दृश्यस्थस्य रूपादेरिव मानमन्तरेण दृश्यत्वायोग इत्यर्थः । तर्हि मानेनैव दृश्यतामित्यत आह मानदृश्यत्वेदिति । सर्वद्रष्टृसाधारणभूतशुक्त्यादिस्थत्वात्तद्रूपवत्सर्वैश्च दृश्येतेत्याह सर्वैश्चेति । अन्वयव्यतिरेकाभ्यां दुष्टेन्द्रियजन्यज्ञानवद्गम्यत्वदर्शनान्न द्रष्टगम्यत्वमानगम्यत्वसर्वदृश्यत्वानि प्रसज्यन्त इति शङ्कते भ्रान्त्यैवेति । रूप्यादिज्ञानस्यार्थबोधकत्वान्न भ्रान्तित्वमिति परिहरति भ्रान्त्यापि चेदिति । किंचित् वस्त्वित्यर्थः । रूप्यादेरर्थाभासत्वान्न रूपादिसाम्यमिति शङ्कते रूप्यादिरिति । रूप्यादिदृष्टेर्भ्रान्तित्वसिद्धौ रूप्यादेरर्थाभासत्वसिद्धिस्तत्सिद्धौ च तद्दृष्टेर्भ्रान्तित्वमिति इतरेतराश्रयत्वान्नैवमिति परिहरति नेति । **[Page 203]** ननु तयोरन्यतरस्यान्यतस्सिद्धत्वान्नान्योन्यायत्तसिद्धिकत्वमिति शङ्कते बाध्यत्वादिति । तत्र पूर्वोक्तमेव दोषं स्मारयन् परिहरति

तन्नेति । रूप्यादितज्ज्ञानयोर्बाध्यबोधकत्वाद्घटतज्ज्ञानयोरिव न ज्ञानान्तरबाध्यत्वं अतिप्रसङ्गादित्यर्थः । पूर्वं बाधकसद्भावेऽपि न बाध्यत्वमित्युक्तम् । इदानीं दृक्स्वस्य स्वसमानाधिकरणं बाधकमपि नास्तीत्याह न च दृश्येति । ननु रूप्यादिज्ञानस्यैव बाध्यत्वात्तस्य द्रष्टृस्थत्वेन समानाश्रयं बाधकमस्तीति शङ्कते तज्ज्ञानमिति । ज्ञानस्य बाध्यतायां नेदं रजतमित्यर्थबाधप्रसिद्धिविरोधप्रसङ्ग इति परिहरति तन्न रूप्यादेरिति । ज्ञेये स्थिते ज्ञानस्य यत्तिरोधानं तत् नाश एव न तु बाधस्तथापि तं बाधमभ्युपगम्य पुनरुत्पत्तिप्रसङ्गं दोषमाह ज्ञानं बाधितमपीति । इदानीं ज्ञेये स्थिते ज्ञानस्य बाध एव न स्याद्विषयापहारलक्षणत्वाद्बाधस्येत्याह कथं चेति । ननु ज्ञानबाधकाले रूप्यादेस्तत्कारणस्य ज्ञानान्निवृत्तिरूपबाधाभावेऽपि स्वकारणे लयरूपबाधसद्भावात् ज्ञानस्य बाध्यत्वं संभवेदिति शङ्कते ज्ञाने बाधित इति । तथापि रूप्यादेर्बाधितत्वप्रसिद्धिविरोधस्तदवस्थ एव लयस्य बाधितत्वप्रसिद्ध्यभावादिति परिहरति तथापीति । तर्हि विद्यानाश्यत्वमेवास्त्वित्यत आह विद्यानाश्यमिति । एवं जागरिते जडसत्त्वमभ्युपगम्य जडावरणाविद्यावैयर्थ्यमुक्त्वा स्वप्नेऽपि तत्सत्त्वमभ्युपगम्य तदावरणाविद्यावैयर्थ्यमाह अतो यत्राविद्ययेत्यादिना । ··· इतश्च न दृश्याश्रयाविद्याजस्स्वप्नप्रपञ्च इत्याह दृश्याविद्याजत्वे चेति । एवं जाग्रतीव स्वप्नेऽपि जडसद्भावाभ्युपगमेऽप्यविद्यायास्तदाश्रयत्वं न भ्रमोपयोगीत्याह तस्मादिति । पूर्वं जाग्रति स्वप्ने च जडसत्त्वमभ्युपगम्योक्तमिदानीं तदभ्युपगमं त्यजति न च जडस्येति ॥ १२८ ॥

**[Page 204]** ननु यदि शुक्त्यादिजडं नास्ति तर्हि रूप्यादेश्शुक्त्याद्यज्ञानजत्वप्रसिद्धिः कुत इत्याशङ्क्य शुक्त्याद्यवस्थापन्नात्माज्ञानजन्यत्वादित्याह शुक्त्यवस्थात्मेति । प्रसिद्धेरन्यथात्वे सिद्धान्त्येकदेश्यभिमतमुदाहरणमाह मृदवस्थेति । श्लोकनिरस्यां शङ्कामाह यदीति । उत्तरत्वेन श्लोकं योजयति शृण्वित्यादिना । ननु दीर्घप्रभान्यायेन शुक्तीदमंशपर्यन्तमात्मा-

विद्या प्रसरतीति किमित्यभ्युपगम्यत इत्यत आह शुक्त्यादीनामपीति । ... आ चरमकार्यादिति । अन्त्यकार्यपर्यन्तमित्यर्थः ॥ १२९ ॥

दृष्ट्याज्ञानजलप्रसिद्धिमप्रामाणिकीमुपपाद्य बाध्यबाधकप्रसिद्धिमप्यप्रामाणिकीमाह अज्ञानजलसाम्येऽपीति । उक्तं चैतत्पुरस्तात् सदादिनः प्रतिबन्दिग्रहपरिहारप्रसङ्गेन । इह तु स्वपक्षसिद्ध्यर्थमिति विभागः ॥ १३० ॥

[Page 205] आवरणं विक्षेपश्चेत्यविद्यायाः कृत्यद्वयमात्मनि । तत्र विक्षेपलक्षणं कार्यमनात्मनि निरस्य आवरणकृत्यं निराकर्तुमुपक्रमते न चाज्ञातत्वमित्यादिना । अज्ञातत्वमप्रकाशमानत्वम् । अज्ञत्वं ज्ञातृत्ववैधुर्यम् ॥ १३१ ॥

विपक्षे दोषमाह अज्ञातमज्ञं वेत्यादिना ॥ १३२ ॥ १३३ ॥

तत्कस्मादिति चेदिति । एतदेव स्फुटीकुर्वन् श्लोकं व्याचष्टे नन्वविद्याकृते चेदित्यादिना ॥ १३४ ॥

[Page 206] ज्ञेयत्वाच्चेज्जडशून्ययोर्ज्ञातत्वाद्यसंभवः तर्ह्यात्मनोऽपि ज्ञेयत्वं समानमित्याह नन्वात्मापीति । अहंकारसाक्षिण एव श्रुतिस्स्वप्रकाशतामाह न तस्याहंप्रत्ययवेद्यतेत्याह ज्ञेयत्वगन्धेति । ... स्वतो ज्ञातत्वं चेति । स्वयं दासास्तपस्विन इत्युक्ते यथा दासान्तरव्यावृत्तिर्विवक्षिता तथात्राप्यात्मापरोक्ष्ये संविन्नैरपेक्ष्यं विवक्षितमित्यर्थः । उक्तं प्रमेयजातं संक्षिप्योपसंहरति तस्माज्ज्ञेयज्ञात्रोरित्यादिना । तस्मात् ज्ञेयज्ञात्रोर्ज्ञत्वज्ञेयत्वयोरसंभवादित्यन्वयः । यथासंख्येनोदाहरणम् । यथा प्रकाश्यस्य घटादेर्नालोकता आलोकस्य च नालोकान्तरप्रकाश्यतेति ॥ १३५ ॥

[Page 207] निरूप्यमाणे यथा अनात्मनोऽविद्या न संभवति तथा आत्मनोऽपीत्याह नन्विति । अविद्या आत्माश्रितत्वानर्हा तद्विरुद्धरूपत्वात् तमोवत् । यदि वा आत्माश्रिता तदा किं स्वाभाविकी कादाचित्की वा । नोभयथापीत्याह न हीत्यादिना । यच्चोक्तमात्मन्यविद्याव्यावृत्तिः प्रमाणफलमिति तदपि नेत्याह अतस्तां विनैवेति । ... ॥ १३६ ॥

सिद्धान्ती परिशेषादात्माश्रयत्वमुपपादयितुं पक्षान्तरं तावत्प्रतिषेधति प्रसिद्धत्वादित्यादिना ॥ १३७ ॥

[Page 208] स्वातन्त्र्यमनात्मनोऽपि भविष्यति। ततस्संदिग्धो व्यतिरेक इत्याशङ्क्याह न चान्यस्य स्वतन्त्रतेति। स्वातन्त्र्यं सत्तापरोक्ष्ययोरन्यनैरपेक्ष्यं तन्नानात्मनस्संभवतीत्यर्थः। सत्तायां परनैरपेक्ष्यं स्वातन्त्र्यमितिमतमाशङ्क्य प्रतिषेधति तस्याः प्रतीतेरित्यादिना। इतश्चाविद्या न स्वतन्त्रेत्याह अविद्यायाश्च स्वतन्त्रत्व इति। ··· ॥ १३८ ॥

संबन्धस्य भावनिरूपणेन पुनरात्माविद्यामाक्षिप्य समाधत्ते ननु पुंस इत्यादिना। [Page 209] संबन्धसत्यतामात्रेण किमित्यविद्यायास्सत्यत्वमित्याशङ्क्याह न हि सत्यासत्ययोरिति। तर्ह्यविद्यापि सत्या अस्त्वित्याशङ्क्याह न च सत्यस्येति। अविद्यास्वभावानुरोधेन संबन्धस्य मिथ्यात्वमुक्त्वा संबन्धस्वभावानुरोधेन मिथ्यात्वमाह अपिचेत्यादिना। इतश्च न सत्यस्संबन्ध इत्याह पुंसोऽन्यस्य चेति। पुमानेव चेत्संबन्धः तदा तस्य निरंशस्य संबन्धत्वेनैव समाप्तत्वात्संबन्ध्यभावात् विद्यया च तस्यानिवर्त्यत्वात्सर्वप्रमाणवैफल्यं स्यात् अविद्यानिवृत्त्यसंभवादनिर्मोक्षोऽपि स्यादित्यर्थः। किं त्वविद्यैवेति। अविद्यातन्त्र इति। तथा च तद्भावाभावयोर्भावाभावनियमो यथा वैशेषिकादीनां द्रव्यतन्त्रता गुणादेरिति भावः॥१३९॥

पूर्ववादी यथाश्रुतं गृहीत्वा शङ्कते ननु न संबन्ध्येवेति। संबन्धत्वाविशेषादात्मैव कस्मादविद्यासंबन्धो न भवतीत्यसौ सत्यः प्रसज्यत इत्युक्तम्। तत्र विशेषमाशङ्क्य परिहरति आत्मनश्चिन्मात्रेत्यादिना। अषष्ठ्यर्थत्वादिति। निस्संबन्धत्वादित्यर्थः। ··· [Page 210] परस्योक्तं स्मारयति नन्वात्मनोऽपीति। संबन्धवत्येव षष्ठी भवतीति न नियम इत्याह न तस्येति। आत्मतन्त्रता संबन्धं विना न घटत इत्यपि संबन्धे व्यभिचरतीत्यर्थः। अथ संबन्धातिरिक्तस्य घटादेस्संबन्धेन आत्मीयत्वदर्शनादविद्या संबन्धेनात्मीया स्यात् तर्ह्यविद्यातिरिक्तमात्मीयं संबन्धेनैवात्मीयमिति

घटादावेव दृष्टत्वात्संबन्धस्यापि संबन्धान्तरेण अर्थनिष्ठता स्यात्। सा च त्वया नेष्यत इत्याह संबन्धस्य संबन्धान्तरेण नात्मीयतेति। एवं च सति अविद्यासंबन्धयोस्समानयोगक्षेमत्वमित्याह तत्र संबन्ध इत्यादिना। ... इतश्च नाविद्यासंबन्धो मृग्य इत्याह तस्याश्चेदित्यादिना। ... [Page 211] इतश्चासङ्ग एवात्मन्यनाद्यविद्याध्यास इत्याह संबन्धवत-श्चेदिति। प्रासङ्गिकमसङ्गत्वं साधयति स चेद्वेद्य इत्यादिना। परोक्तमनूद्य श्लोकं योजयति यत्तूक्तमित्यादिना॥ १४०॥

उत्तरग्रन्थस्य संक्षेपतस्तात्पर्यमाह आत्माविद्येति। प्रामाणिकेभ्य एव जातं ज्ञानं सम्यग्दृष्टं न मिथ्याधूमबुद्धिगृहीतबाष्पादेः। अतो ब्रह्मज्ञानस्य सम्यक्त्वसिद्ध्यनुपपत्त्या शब्दादेः प्रामाणिकत्वं वक्तव्यं तत्सिद्ध्यर्थमविद्या वक्तव्येत्यर्थः। श्लोकैरिति विशेषणात्पूर्वमप्येतदुक्तग्रन्थमेवोक्तमिति कथयति। अतो न पौनरुक्त्यम्। [Page 212] किं स्वाभाविकमप्रकाशमानत्वं मानं निवर्तयति ज्ञाततां वा करोति। नाद्य इत्याह तथाहीति॥ १४१॥

द्वितीयं दूषयति ज्ञाततामिति॥ १४२॥

ज्ञातताकरणे दोषान्तरमाह ज्ञातता मानजन्या चेदिति। ज्ञानस्य प्रमातृव्यापारत्वेऽपि अजन्यफलत्वात्क्रियावैलक्षण्यम्। तन्नेष्यते चेत् तदा-त्मीयत्वमेव स्यात्। तथा च विधेयत्वादिप्रसङ्ग इति भावः। आपरोक्ष्य-हेतुत्वं विशेष इति न वाच्यमित्याह न हीति। ... द्वितीयार्धं व्याख्याति यदि स्वगतेनापीत्यादिना। ... [Page 213] निवृत्ता-विद्यं जडं नापरोक्षं स्यादिति यज्जडश्लोके गदितं सिद्धान्तिना तदनूद्य दूषयति नाविद्यानिवृत्तिमात्रादित्यादिना। ननु यन्मानप्रवृत्तावा-परोक्ष्यं प्रसिद्धं तन्मत्पक्षेऽपि न घटत [?] इत्याशङ्क्याह न च तन्मान-जन्यमिति। ज्ञानजन्मैवापरोक्ष्यमिति नैयायिकादयः। तत्राह न च तन्मात्रस्यैवेति। अपरोक्षं ज्ञानमितिवदपरोक्षोऽर्थ इत्यापरोक्ष्यस्यार्थसामा-नाधिकरण्यप्रसिद्धेरर्थधर्मोऽप्यापरोक्ष्यम्। तच्च तदविद्यानिवृत्तौ व्यज्यते

पारोक्ष्यमिवानुमानादावित्यर्थः। किंच येनाप्यपरोक्ष्यं मानजन्यमिष्यते तेनाप्यविद्यानिवर्तकं मानमेष्टव्यमेवेत्याह कुर्वदपीति। ... ननु यदि जडस्यापरोक्ष्यं नाम धर्मः स्वीक्रियते तदा तेनैवापरोक्ष्यव्यवहारसिद्धेर्मानं जडविषयं न स्यादित्याशङ्क्याह न चेति॥ १४३॥

जडस्याज्ञानमात्रत्वात् तत्राज्ञानान्तरासंभवान्नास्ति प्रमेयत्वमित्याशङ्क्याह प्रत्यक्षादेरमानत्वमिति॥ १४४॥

विषयाभावादप्रामाण्यमुक्तम्। तत्राशङ्कते अक्षजादिरेवेति। बौद्धानुसारेण मानस्य स्वविषयत्वं वेदान्तिदेश्यानुसारेण [?]। आत्मनो रूपादिरहितत्वेनायोग्यत्वाच्च न प्रत्यक्षादिप्रमाणकत्वमित्यर्थः॥ १४५॥

**[Page 214]** इतश्चात्मा प्रत्यक्षादेर्न मेय इत्याह प्रत्यक्षादिभिरिति॥ १४६॥

अवान्तरप्रमेयमुपसंहरति नात्मेति। ... ॥ १४७॥

किमिति प्रमाणाभावमात्रेणात्मासिद्धिः स्वतस्सिद्धिरस्त्वित्याशङ्क्याह यद्यात्मैवेति॥ १४८॥

यस्मादनात्माविद्याङ्गीकाराभावे ब्रह्मज्ञानं मोक्षसाधनं न सिध्यति तस्मादित्युपसंहारः॥ १४९॥

किमनयानुपपत्त्या जडाज्ञानं प्रामाणिकं साध्यते प्रातीतिकं वा। नाद्योऽन्यथाप्युपपत्तेः। प्रातीतिकं तु यथाप्रतीति स्वीक्रियत एवेत्याह अत्रोत्तरमित्यादिना। ... ॥ १५०॥

**[Page 215]** यदुक्तमविद्याभावे प्रमाणव्यवहारो जडे न स्यादिति तत्राह न चाविद्याभावेऽपीति॥ १५१॥

भ्रान्तिवत्स्वप्नादिवच्चेति दृष्टान्तद्वयविवृणोति तथाहीत्यादिना॥ १५२॥ १५३॥

**[Page 216]** नन्वेवं च सतीत्यादिना पराभिप्रायं पूर्वोक्तमनूद्य श्लोकद्वयं व्याख्याति तन्नेत्यादिना। ... बाष्पादेर्मिथ्याधूमबुद्धिगृहीतस्य

सत्याग्निसाधनत्वं नेष्टं तथात्रापि न स्यादित्यपि न वक्तव्यमित्याह असत्यादेवेति । ह्रस्वदीर्घादिपरिमाणं शब्दस्य गुणभावान्नास्ति नैयायिकादीनां भाट्टानां च द्रव्यत्वेऽपि विभुत्वान्नास्ति । तथापि भ्रमाद्भाति । ततस्सम्यग्ज्ञानं च दृष्टमित्यर्थः । बाध्यत्वशङ्कयाप्यप्रामाण्यं न वाच्यमित्याह आत्माज्ञानोत्थेति । प्रयोजनस्य प्रवृत्तिनिवृत्तिसाध्यत्वात्सिद्धज्ञानं निष्फलत्वादप्रमाणमित्यपि न वाच्यमित्याह रज्ज्वज्ञानोत्थेति । उक्तं संक्षिप्य निगमयति तस्मादित्यादिना ॥ १५४ ॥ १५५ ॥

नन्वविद्याध्वंसे पूर्वावस्थातः कश्चिदात्मन्यतिशयो वक्तव्यः । ततस्सातिशयत्वादनित्यत्वादिप्रसङ्ग इत्याशङ्क्याह अनात्मत्वादविद्याया इति । अध्यस्तनिवृत्तिमनिर्वाच्यां विना न स्वरूपातिशयः कश्चिद्गगन इव निर्मले भवतीत्यर्थः । एवमनात्मन्यविद्यां निरस्य तत्फलमुपसंहरति प्रमाणस्य स्वप्रमेयाविद्येत्यादिना । अद्वितीयात्मातिरिक्तस्याप्रामाणिकत्वान्न परमार्थाद्वितीयवस्तुनिष्ठसमन्वयस्य कश्चिद्विरोध इति यदाद्यश्लोकस्य द्वितीयार्धेनोक्तं तत् सुस्थितमित्यर्थः । **[Page 217]** स्थिते चाविरोधे यः पूर्वार्धेन समन्वयस्सूचितस्स सुस्थित इत्याह अतः प्रत्यगात्मैवेति । प्रमाणान्तरविरोधो मा भूत् वेद एव कर्माण्युपासनानि च विदधानोऽद्वैतवादविरोधी भातीत्याशङ्क्याह कर्मोपासनादीति ॥ १५६ ॥

## ॥ इतीष्टसिद्धिविवरणे प्रथमोऽध्यायः ॥

---

# अथ द्वितीयोऽध्यायः।

[Page 218] वृत्तानुवादपूर्वकं संबन्धमाह शुक्तिरूप्यादीति। शुक्तिरूप्यादीनामनिर्वचनीयाविद्योपादानत्वप्रतिपादनाद्द्वितीयात्मनि वेदान्तसमन्वयस्य लौकिकवैदिकद्वैतावभासविरोधः पर्यहारि। उत्तरेषु त्वध्यायेषु पक्षान्तराणां मायामयत्वोपपादनेन समन्वयस्य पक्षान्तरविरोधः परिह्रियत इत्यविरोधाध्यायसंबद्ध एवायं सर्वो विचारः प्रकरणस्य शास्त्रैकदेशसंबद्धत्वात्। अध्यायभेदस्त्ववान्तरार्थभेदाद्द्रष्टव्यः। तत्र मायासिद्ध्यधीनं मायामयत्वोपपादनमिति हेतुहेतुमल्लक्षणस्संबन्धः। नैतेऽपीति। न केवलमसत्ख्यातिर्मायां विना न सिध्यति सदादा अपि मायामात्रा एवेत्यर्थः॥ १॥

तेषु मध्ये प्रथममन्यथाख्यातेर्मायामात्रत्वं प्रतिजानीते तत्रेति॥ २॥

कथं मायां विना न सिध्यतीत्यपेक्षायामन्यथाख्यातिस्वरूपं विकल्पयति ब्रूहीति। सिद्धान्तसंक्षेपमाह त्रिधापीति॥ ३॥

[Page 219] अर्थं वा अन्यथा ख्यापयति सान्यथाख्यातिरिति द्वितीयकल्पदूषणं तृतीये भविष्यति। स्वयमेव या अन्यथा भवति सा अन्यथाख्यातिरिति तृतीयकल्पदूषणं चतुर्थैकदेशेन। अख्यात्यात्मख्यात्योश्च तत्रैवातिदेशेन दूषणं भविष्यति। प्रथमकल्पदूषणमिहोपक्रमते यदीष्टा सेत्यादिना॥ ४॥

नन्वाकाशादेर्मूलकारणान्यथाभावरूपस्य बुद्धिः किमिति भ्रान्तिस्त्वयेष्टेत्याशङ्क्याह विकारिवस्तुज्ञानस्येति। किमर्थस्यान्यथाभावस्तथैव भवतः। च-कारात् अन्यथाभूतस्य वा। नाद्य इत्याह तथैव भवतो नेति। तथाभावान्यथाभावयोर्घटतद्ध्वंसयोरिव विरोधाद्युगपदेकत्रानुपलम्भाच्चेत्यर्थः। विपक्षे दोषमाह स्याच्चेदिति॥ ५॥

अविशेषादित्यस्यासिद्धिमाशङ्क्य परिहरति देशकालेति । देशादिप्राप्तिरपि निरूपयितुं न शक्यत इत्याह तत्प्राप्तिविशेषोऽपीति । देशादिराहित्यसद्भावे देशादिप्राप्तिर्न घटते विरोधात् । अपगते तस्मिन् प्राप्तिश्चेत् अन्योन्याश्रयत्वं देशादिप्राप्त्या तद्राहित्यापगमः तद्राहित्यापगमे देशादिप्राप्तिरिति । किंच देशादिप्राप्तेर्निमित्ताभावे सदा भावस्स्यात् । देशान्तरादिविशेषभावेऽनवस्था स्यात् देशान्तरादिप्राप्तेरपि विशेषान्तरापेक्षासाम्यादित्यर्थः ॥ ६ ॥

द्वितीयं कल्पं दूषयति अथ भूत्वेति ॥ ७ ॥

**[Page 220]** भाविरूपापेक्षया पूर्वस्थितरूपेणावस्थानमन्यथाभाव इत्यत्र दोषान्तरमाह अन्यस्मिन्निति । ··· पूर्वरूपावस्थानमन्यथाभाव इत्यङ्गीकृत्योक्तम् । वस्तुतस्तु न तदन्यथाभावशब्दार्थ इत्याह भाविरूपापेक्षयेति । ··· ॥ ८ ॥

पक्षद्वयोक्तदोषपरिहाराय विशेषं शङ्कते ननु यदीति । न तथाभूतस्यान्यथाभावो नाप्यन्यथाभूतस्य । किंतु त्यक्तपूर्वरूपस्य । ··· पूर्वरूपत्यागमङ्गीकृत्यान्यथाभूतस्यान्यथाभावो विरुद्ध इत्याह उच्यत इति । पूर्वरूपपरित्यागेनान्यथाभूतत्वमप्यवगतमिति [?] न वाच्यमित्याह न स त्याग इति । ··· ॥ ९ ॥ १० ॥

**[Page 221]** पूर्वरूपत्यागमङ्गीकृत्यान्यथाभावोऽभञ्जि । सोऽपीदानीं न संभवतीत्याह तथैवेति ॥ ११ ॥

यच्च पूर्वरूपं त्यज्यते तत्किं स्वरूपं व्यतिरिक्तं वा । नाद्य इत्याह स्वरूपं चेदिति ॥ १२ ॥

युगपदुभयं विरोधान्न घटते चेत् क्रमेणास्त्वित्याशङ्क्याह त्यक्त्वा विनेति । कदाचित्त्याज्यमेव भवतीति न शक्यं वक्तुं त्यक्तृसापेक्षत्वात् त्यक्तैव कदाचिद्भवतीत्यपि न शक्यं वक्तुं त्याज्यं विना त्यक्तृरूपायोगादित्यर्थः । परस्परसापेक्षं त्यक्तृत्याज्यरूपद्वयमेकस्मिन् मा भूत् । ततः किमित्या-

शङ्कामाह इयं विनेति । त्यागस्योभयसापेक्षत्वादुभयाभावे तृतीयमपि न संभवतीत्यर्थः ॥ १३ ॥

द्वितीयविकल्पं दूषयति न चान्यदिति । तत्किमप्राप्तं प्राप्तं वा । आद्ये त्यागो न संभवति अप्राप्तत्वादेव । विपक्षे दोषमाह अप्राप्तं त्यज्यते यदीति । त्यक्तता तस्मिन् पक्षे अन्तं समाप्तिं न यास्यतीत्यर्थः ॥ १४ ॥

द्वितीयं प्रत्याह संबन्धादिति । संबन्धोऽपि त्यक्तृत्याज्याभ्यामन्योऽनन्यो वा । आद्ये सोऽपि न प्राप्त इति त्यागो न घटत इत्यर्थः ॥ १५ ॥

अनन्यत्वेऽपि एकैकाभिन्नो द्वयाभिन्नो वा । आद्यं प्रत्याह त्याज्यानन्यो न स प्राप्त इति । त्याज्यस्याप्राप्तत्वात् । त्यक्त्रनन्यो न हीयत इति । एकस्य त्यक्तृत्याज्यत्वासंभवादित्यर्थः । ··· ॥ १६ ॥

पूर्वोक्तदोषपरिजिहीर्षया विशेषं शङ्कते न साक्षादिति । श्लोकस्य पूर्वार्धं परिहारत्वेन योजयति तन्नेति । **[Page 222]** अन्यानन्यपक्षे बहिरेव दोषान्तरमाह न अनन्यस्येत्यादिना । दृष्टान्तासिद्धिं शङ्कते अन्यो नाम नास्तीति । अन्यानन्यशब्दयोर्लोकेऽत्यन्तभिन्नार्थत्वेन प्रसिद्धत्वाल्लोकसिद्धो दृष्टान्तो भविष्यतीत्याह न अनन्यशब्दार्थादिति । लोकसिद्धपदार्थानभ्युपगमे तव स्वपक्षासिद्धिरेवेत्याह न चेदिति । अनन्यशब्दार्थादन्यशब्दार्थोऽन्यो न भवति चेत् तदा अत्यन्ताभेदवादस्स्यात् त्यागासंभवश्चास्मिन् पक्षे स्यादित्याह अतोऽग्रगुणादिरपीति । पुनः पूर्ववादी स्वसमयबलेन शङ्कते अन्यशब्दार्थ इति । यद्यन्यशब्दस्यान्यत्वमात्रमर्थो न भवति तदा अन्यो न भवतीत्युक्तेऽनन्यत्वमपि निषिद्धं स्यादिति प्रत्येकनिषेधो व्यर्थस्स्यात् । तथैव अन्यशब्दोच्चारणेऽनत्वन्यमपि लभ्यत इति समुच्चयाभिधानं व्यर्थं स्यात् । अतस्त्वद्वचनादेवान्यानन्यशब्दयोर्भिन्नार्थत्वं सिद्धमित्याह इदमेवेति । न केवलं त्वद्वचनादेव भिन्नार्थत्वं मयापि भिन्नार्थत्वाभावे बाधकमुक्तमित्याह यदि चेति । तस्माद्यो यतोऽन्यस्स ततो नानन्यो यथान्यपदार्थोऽ(न)न्यपदार्थादिति लौकिकव्याप्तिसिद्धेः भेदाभेद-

पक्षासिद्धिः । प्रकारान्तरेणासिद्धिमाह किं कृत्स्न एवेति । गुणादेरंशाभावात् भावेऽप्यंशयोर्व्यवस्थितत्वादंशपक्षं परित्यज्य कृत्स्नपक्षे दोषमाह कृत्स्नश्चेदिति । विरोधाद्युगपत् मा भूत् क्रमेणास्त्वित्याशङ्क्याह नाप्यन्यदेति । क्रमपक्षेऽप्यन्यरूपस्य भावेऽभावे चान्यस्यानन्यत्वं न घटत इत्युक्तम् । इदानीमनन्यस्यान्यत्वमपि न घटत इत्याह तथा अनन्यत्वेनेति । इतश्चानन्यस्यान्यत्वं न घटत इत्याह यद्यनन्योऽपीति । अभ्युपगम्यान्यानन्यत्वं श्लोकस्योत्तरार्धं व्याचष्टे यदि स्यादित्यादिना । कल्पान्तरं दूषयति न चान्यानन्यस्येति ॥ १७ ॥

**[Page 223]** श्लोकचतुष्टयस्य संक्षेपतस्तात्पर्यमाह इदानीमिति ॥ १८ ॥

गुणत्यागे स्वरूपत्यागप्रसङ्गं वक्तुं गुणस्य भिन्नत्वं तावत्पराकरोति तत्र शुक्ल इति । अभेदपक्षे गुणत्यागे गुणिनस्स्वरूपत्यागो भवेन्न भेदाभेदपक्ष इत्याशङ्क्याह अन्यानन्यत्वेऽपि हीति । भेदप्रयुक्त्या चेद्भवेत् अभेदप्रयुक्त्या न भवेदित्यर्थः । भेदाभ्युपगमेऽप्यन्यथाभवितुं गुणत्यागो न घटत इत्याह नागुणोऽपीति । ... ॥ १९ ॥ २० ॥

**[Page 224]** नन्वविविक्तानि प्रमाणान्येव प्रसिद्धिर्नाम । अतस्तत्सिद्धत्वे कर्मत्यागयोर्वस्तुत्वं भविष्यतीत्याशङ्क्याह प्रसिद्धिमात्राच्चेदिति । इतश्च न प्रसिद्धेः प्रमाणत्वमित्याह प्रसिद्धस्यैव चेति ॥ २१ ॥

एवं तावदन्यथाभावसिद्धये स्वरूपसंबन्धिरूपत्यागो न संभवतीत्युक्तम् । इदानीं किंपुनर्न्यायमाह संबन्धादेश्चेति । ... ॥ २२ ॥

इदानीमन्यरूपत्यागमभ्युपगम्याह अप्यन्यरूपेति ॥ २३ ॥ २४ ॥

**[Page 225]** नष्टस्य पुनर्भावमङ्गीकृत्य अन्यथाभावसंभवोऽभाणि । सोऽपि नास्तीत्याह नष्टस्यापीति ॥ २५ ॥ २६ ॥

प्रकारान्तरेणान्यथाभावस्यावस्तुत्वं दर्शयति किंचेत्यादिना ॥ २७ ॥ २८ ॥

कस्यासावस्ति कस्य नेत्येतद्विवृणोति अपि भेद इति ॥ २९ ॥

… [Page 226] यच्च स्वरूपेण सत एवान्यथाभावश्चेत् सदैव स्यादित्युक्तं तत्राह तच्च हेतुलाभ इति। यच्चानवस्थादिदोषोऽवादि तत्राह न चेति ॥ २० ॥ … ॥ २१ ॥

रुचकस्य तदवस्थस्य वा हेम्नस्स्वस्तिकादिभावो न दृष्टस्तत्र रुचकाद्याकारादर्शनादित्युक्तम्। इदानीं दृष्टत्वमभ्युपगम्याह दृष्टोऽपीति। अन्तर्बहिश्च रुचकादिनिरीक्षणे हेमव्यतिरेकेण रूपान्तरानुपलम्भाद्धेम्नश्चान्यथात्वाभावान्नास्ति रुचकादेरप्यन्यथाभाव इत्यर्थः ॥ २२ ॥

अवस्थावस्थावद्भावेन भेदस्यापि विद्यमानत्वान्न हेममात्रत्वं रुचकादेरित्याह नन्वेकहेम्न इति। अवस्थावत्त्वेऽन्यथाभावोऽपि सिद्ध इत्याह न चावस्थे त इति ॥ २३ ॥

[Page 227] हेम्नोऽवस्थावत्त्वमेव निरूपयितुं न शक्यत इति सिद्धान्तिमतमाशङ्कते नन्वेकं हेमेति। अनुवृत्तव्यावृत्तरूपेण परस्परविरुद्धरूपत्वादाकाशघटादिवदवस्थावस्थावद्भावो न घटत इत्यर्थः। विपक्षे बाधकमाह अन्यथेति। हेम्नोऽवस्थावत्त्वाभ्युपगमेऽवस्थाद्वयाभिन्नत्वाद्धेम्नोऽपि भेदः प्रसज्यत इत्यर्थः। यदि हेम्नो भेदो नेष्यते तत्राह तयोर्वेति। तत्रावस्थावस्थावद्भावो नास्तीत्येतत्तावत्प्रतीतिपराहतमित्याह पूर्ववादी नेति। किंच अन्वितस्य हेम्नो व्यावृत्तं रुचकादि अवस्था न भवतीति कोऽभिप्रायः—किं व्यावृत्तस्यैवावस्था किं वा नास्त्येवेति। तत्राद्यं प्रत्याह यदीति। व्यावृत्तस्यावस्थाशब्दार्थत्वादवस्थावस्थावद्भावो न स्यादित्यर्थः। अनवस्थेति। सावस्थस्य चेदवस्था पूर्वाप्यवस्था सावस्थस्येत्यनवस्था स्यादित्यर्थः। द्वितीयं प्रत्याह न चेति। दृष्टाप्यवस्थापलप्यते चेदवस्थावतोऽप्यपलापप्रसङ्गाच्छून्यवादस्स्यादित्यर्थः ॥ २४ ॥ … ॥ २५ ॥ २६ ॥

[Page 228] इतस्य पूर्वावस्थया सहाभेदो न घटत इत्याह नष्टाभिन्नस्येति। अवस्थातो हेम अभिन्नं हेम्नो वा अवस्था अभिन्नेति विकल्प्य दूषणं द्रष्टव्यम् ॥ २७ ॥

अभेदे दूषणान्तरमाह हेम्नोऽवस्था स्वरूपं चेदिति ॥ ३८ ॥

इदानीं भेदपक्षोऽपि न घटत इत्याह हेम्नोऽन्य इति । उक्तं संक्षिप्योपसंहरति अन्यत्वे अनन्यत्वे चेत्यादिना । यदुक्तमवस्थाभावे तद्वतोऽप्यभावप्रसङ्गाच्छून्यवादस्स्यादिति तत्राह अवस्थाभाव इति । लोके मायायास्तदधिष्ठानत्वदर्शनात्सर्वोऽयमवस्थावस्थावद्विभागो यदधिष्ठानस्तत्सत् एकं भविष्यति सकलविकल्पातीतत्वादित्यर्थः । मृदादिष्वतिदिशति मृदाद्यपीति । यथा हेम्नोऽन्यथाभावः प्रातीतिक एव न वस्तु तर्कासहत्वात् तथा मृदादेरपीत्यर्थः ॥ ३९ ॥

**[Page 229]** प्रकारान्तरेणान्यथाभावस्यावस्तुत्वं द्योतयति स्वतश्चेदित्यादिना ॥ ४० ॥ ४१ ॥

किं यस्यान्यथाभावस्स एवान्यथाभावरूपेण जायते किं वा तदभिन्नोऽन्यथाभावो जायते ततोऽतिरिक्त एव वा । नाद्य इत्याह अपिच यस्येति । द्वितीयं प्रत्याह यद्यनन्य इति । तृतीयेऽपि किमसौ सन्नुतासन् । आद्ये सत्त्वाविशेषात्कारणवन्न जायते । द्वितीयं प्रत्याह कोऽसत्त्व इति । इममेव भागं व्याचष्टे असतश्चेदिति । कारणसामर्थ्यादसदपि जायत इति न वाच्यमित्याह असतश्चेति । ··· ॥ ४२ ॥ ४३ ॥

सहेतुकान्यथाभावस्य दूषणान्तरमाह हेतुयोगादिति । तथाभावोऽन्यथाभावो वेति कोटिद्वयमेव । तत्रान्यथाभावात्पूर्वभाविनौ हेतुयोगविशेषौ तथाभावकोटिनिविष्टावेव स्याताम् । ततः किमित्याशङ्क्याह तत्र स्वत इति । **[Page 230]** आद्यं श्लोकं व्याख्यातुमपेक्षितं पूरयति यदापीत्यादिना ॥ ४४ ॥ ४५ ॥

हेतुयोगविशेषावेव तस्यान्यथाभाव इत्याशङ्क्याह हेतुयोगविशेषौ चेति ॥ ४६ ॥

इतश्चान्यथाभावो निरूपणं न सहत इत्याह किं स्वभावादिति । अशक्तित इत्येतत् शङ्कोत्तरत्वेन व्याचष्टे येन येनेति । च-कारादागन्तुकस्य

पूर्वसिद्धवस्तुस्वभावत्वमपि न घटत इत्यर्थः। ... अभावरूपेण चेदिति। अभावरूपमपि स्वरूपमस्वरूपं वा। आद्ये स्वभावादन्यथाभावोऽशक्य एवेत्यर्थः। द्वितीयमनूद्य दूषयति अभावरूपेणेति। अभावरूपमस्वरूपं चेत्तर्हि तेन रूपेण भवत इति भवच्छब्दो न घटत इत्यर्थः। किंचास्वरूपभूतं यदभावस्वरूपं तत्कल्पनामात्रं ब्रह्मवादिनामिव भावरूपान्तरं वा परेषामिव। आद्यं प्रत्याह स्वभावादिति। ... वस्तुतस्स्वभावादन्यथाभावो नास्तीति कूटस्थत्वं वस्तुनस्सिद्धमित्यर्थः। द्वितीयं प्रत्याह भावरूपान्तरेणेति। ... [Page 231] एकस्स्वभावो निवृत्तोऽन्यः प्रभवतीति निवृत्तिप्रभवलक्षणविरुद्धधर्माक्रान्तत्वाद्भावरूपेऽन्यत्वं सिद्धम्। ... निवृत्तोऽपि स्वभावः किं भावो न वा। यदि भावस्तदा विरुद्धधर्माक्रान्तत्वमसिद्धमेकस्यैव विरोधानुपलम्भादित्याह सोऽपीति। द्वितीयं प्रत्याह अभावश्चेदिति। स च भवति वा न वेति विचारणायां न भवत्येवाभावप्रतियोगिकः अन्यथाभावप्रतियोगिकत्वेन प्रसिद्धत्वादित्यर्थः। निवृत्तिमभ्युपगम्य भावस्य स्वभावादन्यथाभावो नास्तीत्युक्तम्। इदानीं निवृत्तिरपि नास्तीत्याह कथं चेति। एकस्तावद्भावस्तिष्ठतीति निवृत्तिवादिनाप्यभ्युपगतम्। भावान्यत्वे च न प्रमाणं पश्यामः। अतः कस्य निवृत्तिं प्रतिपद्येमहीत्यर्थः। पूर्वोक्तविकल्पद्वयमध्ये प्रथमविकल्पदूषणमुपसंहृत्य द्वितीयविकल्पं दूषयति नाप्यन्यत इत्यादिना। योऽन्यः प्रतियोगी तस्य भावत्वे भवेद्द्वयाभावो लक्षणभेदाभावात्। अभावत्वे कथं द्वयाभाव इत्याशङ्क्याह न चेति। असतो निरात्मकत्वाद्भेदधर्माधारत्वं न संभवतीत्युक्तम्। भवतु वा। तथापि भावशब्दादेव तद्व्यावृत्तेस्सिद्धत्वादन्यथाशब्दो व्यर्थ इत्यर्थः। प्रौढिवादेन विशेषान्तरसंयुक्तं वस्त्वन्तरमभ्युपगम्याह अथान्यदस्तीति। निर्विकारस्यापि वस्त्वन्तरापेक्षमन्यादृशत्वमस्तीति परेष्टः परिणामरूपोऽन्यथाभावो न सिध्यतीत्यर्थः। प्रौढिं परित्यजति न चेति॥ ४७॥

यदुक्तमन्याभावादन्यतोऽन्यथाभावो न संभवतीति तदाक्षिप्य समाधत्ते नन्वित्यादिना। ननु रुचकस्वस्तिकयोरन्यत्वसिद्ध्यधीनं तत्प्रकारयोरन्यत्वं न भवति किंतु स्वगतप्रकारान्यत्वेनेत्याशङ्क्याह न च प्रकारान्यत्वमिति। व्यावर्तको विशेषः प्रकारः स्वस्तिके स्वस्तिकत्वं रुचके रुचकत्वम्। तयोः रुचकत्वस्वस्तिकत्वप्रकारयोरन्यत्वं स्वगतप्रकारान्यत्वेन चेत् तदा स्वगत-प्रकारयोरप्यन्यत्वं किं प्रकारान्यत्वेन आश्रयभेदेन वा। आद्येऽनवस्था। द्वितीयेऽन्योन्याश्रयता। तत्र हेतुमाह तदन्यतासिद्धाविति। ... इतश्च न प्रकारभेदाद्वस्तुभेद इत्याह न च प्रकारयोरपीति। यथा भावाभावयो-रन्यत्वं प्रकारभेदात्तथान्यत्राप्यस्त्वित्याशङ्क्याह प्रकारवत्त्वेऽपीति। भावा-भावयोर्भेदे सिद्धे तत्प्रकारभेदसिद्धिः प्रकारभेदाच्च तयोर्भेद इत्यन्योन्या-श्रयत्वाद्युक्तन्यायेन भावाभावयोरपि भेदो न प्रामाणिक इत्यर्थः। [Page 232] दार्ष्टान्तिकं निगमयति तस्मादिति। अनयोरिव भावा-भावयोरिवेत्यर्थः॥ ४८॥ ...॥ ४९॥ ...॥ ५०॥ ...॥ ५१॥ ५२॥

[Page 233] तत्रेति। विकल्पद्वयमध्येऽन्त्यविकल्पस्य पूर्वार्धेन दूषणं प्रथमविकल्पस्य द्वितीयार्धेन। यच्चोक्तं प्राप्तुस्त्वन्यथाभावो न दोषायेति तत्र दोषमाह यो यद्रूपस्येति॥ ५३॥

अन्यथाभावे सति प्राप्तिर्न घटते चेत्तर्हि परिशेषान्निश्चलस्यैव प्राप्तिरस्त्वित्याशङ्क्याह निश्चलस्यापि चेदिति॥ ५४॥

तस्यैव प्राप्तिप्रसङ्गं परिहरति अथ प्राप्तुरिति। ... प्राप्तुर्विशेषमभ्युप-गम्य बहिरेव दोषान्तरं स्मारयति तत्रेति। इदानीं प्राप्तुर्विशेषोऽपि निरूपयितुं न शक्यत इत्याह प्राप्तुर्विशेषोऽपीति। ... [Page 234] तद्वशान्नियमः कुतः इत्यस्यार्थमाह प्राप्तुर्विशेषेऽपीति॥ ५५॥

... प्रतिबन्धनिवृत्तिमभ्युपगम्याह तदापीति। अनात्मवस्तुप्राप्तिर्मा भूत् आत्मभूतवस्तुप्राप्तिस्तु भविष्यतीत्याशङ्क्याह अभेदे त्वप्राप्तिः मृषोक्तेति।

अन्यस्यान्यभावाप्तिः वस्तुतो न घटत इति यन्मयोक्तं तदेव सिद्धमित्यर्थः ॥ ५६ ॥ ··· ॥ ५७ ॥

प्रतिबन्धनिवृत्तिमभ्युपगम्यान्यात्मताप्राप्तिर्न घटत इत्युक्तम् । इदानीं प्रतिबन्ध एव निरूपयितुं न शक्यते कुतस्तन्निवृत्तिरित्यभिप्रेत्याह प्रतिबन्धोऽपीति । आभ्यां प्राप्यप्राप्तृभ्यां यदि भिन्नः का प्रतिबन्धता अत्यन्तभेदे संबन्धनियमासंभवादित्यर्थः ॥ ५८ ॥

अथाभिन्नः प्रतिबन्धस्तदा किं प्राप्यादभिन्नः प्राप्तुर्वा । पक्षद्वयेऽपि दोषमाह श्लोकेन प्राप्यादभिन्न इत्यादिना । ··· ॥ ५९ ॥

प्राप्याभावात्प्राप्तिर्न स्यादिति यदुक्तं तावन्मात्रमाक्षिप्य समाधत्ते द्वयोरपीति ॥ ६० ॥

**[Page 235]** रूपान्तरमुभाभ्यां प्राप्तं यथा चूर्णहरिद्राभ्यामित्यङ्गीकारमात्रेणोक्तम् । तदपि दुर्निरूपमित्याह न च तत्प्राप्यत इत्यादिना ॥ ६१ ॥ ६२ ॥

पक्षान्तरे सत्यपि कथमन्यथाख्यातेर्मायामात्रत्वोपसंहार इत्याशङ्क्याह अन्यथाख्यापनान्यथाभावयोश्चेति । यदा अर्थस्यान्यथाभावो नास्ति तदा पक्षान्तरमपि निरस्तमेव भवति । प्रपञ्चस्तस्योत्तरत्र भविष्यति ॥ ६३ ॥

विज्ञानकर्मविधायकशास्त्रस्यार्थवत्त्वान्यथानुपपत्त्या अन्यथाभावं साधयति । नन्वित्यादिना ॥ ६४ ॥

**[Page 236]** न केवलमनुपपत्तिसिद्धः श्रुतिस्मृतिसिद्धोऽपीत्याह इतश्चेति ॥ ६५ ॥

तत्रार्थापत्तेस्तावदन्यथाप्युपपत्तिमाह उच्यत इत्यादिना । अविद्यया सिद्धमन्यथाभावं व्याख्यातुं प्रामाणिकत्वखण्डनं स्मारयति न तावदिति । अन्यतः प्रत्यक्षादेरन्यादिपदपदार्थतत्संबन्धानामसिद्धेश्शास्त्रमपि स्वरूपेण न सिध्यतीत्यर्थः । अत एवेति । शास्त्रस्वरूपासिद्धेरेव न शास्त्रज्ञाप्यता तेषामन्यत्वादीनामित्यर्थः । सुखप्राप्तिदुःखपरिहारौ मया संपादनीयाविति

शास्त्रं विनैव भ्रान्त्या गोपालादेरपि सिद्धम् । उपायविशेषं तु न जानाति। तद्बोधनेन शास्त्रस्यार्थवत्त्वादन्यथाप्युपपत्तिरुक्ता । तत्र साध्यसाधनसत्तायामपि तात्पर्यमिति न वाच्यमित्याह न तु साधनस्येति । विचारात्प्रागेवानाद्यविद्यया सिद्धं लोकसिद्धमुच्यते । तत्र च कारकैः क्रिया साध्या क्रियया च फलं साध्यमिति प्रसिद्धमेव । अन्यथा व्युत्पत्तिविरहाद्वेदेनापि साध्यसाधनसंबन्धो न बोध्येत । अतो लोकसिद्धपदोपादानेन इदमनेन साध्यमित्येतावदेव शास्त्रं बोधयति न तु सत्यमेतदित्यपि वाक्यभेदप्रसङ्गादिति भावः ॥ ६६ ॥

ननु निर्विकारस्याविद्यया कथमन्यथाभाव इत्याशङ्क्याह कूटस्थस्यापीति । ··· ॥ ६७ ॥

भ्रान्त्यैवेत्येवकारेणान्यथैवोपपत्तिस्सूचिता । तां विवृणोति यदि पुंस इत्यादिना । [Page 237] स्वनाशः पुंसः फलं मा भूत् कर्मफलं [?] तु भविष्यतीत्याशङ्क्याह न च फलस्यैवेति । फलं हि भोग्यं तदवश्यं कस्यचिद्वक्तव्यमित्यर्थः । स्वनाशः फलं न भवतीत्येतदाक्षिप्य समाधत्ते नन्वित्यादिना । तीव्रवातरोगाद्याक्रान्तस्याग्निप्रवेशाद्युपायेन यन्मरणं तदपि फलिनोऽभावे युक्तं न भवतीति संभावनामात्रेणोक्तम् । इदानीं नास्त्येवात्मनाशो मरणमिति निश्चयमाह न चात्मनाश इति । सुखविशिष्टस्य भोक्तुरुद्भवस्तर्हि फलमस्त्वित्याशङ्क्याह नाप्युद्भव इति । ··· ॥ ६८ ॥

इतश्चात्मनोऽन्यथाभावोऽसंगत इत्याह न च पूर्वस्येति। ··· उक्तश्लोकमेव दूषणान्तरमाह अपिचेत्यादिना । भोगः किं विक्रिया स्वरूपं वा । आद्यं प्रत्याह यदीति । द्वितीयं प्रत्याह स्वरूपमेव चेदिति । साध्यभोगासंभवन्यायं साधनासंभवेऽप्यतिदिशति तथा ज्ञानकर्मणी इत्यादिना। किंच कर्तृत्वमपि कुर्वतोऽकुर्वतो वा न घटत इत्याह कुर्वंश्चेदिति । पूर्वतनमपि कर्तृत्वं कुर्वत एव तदपि तथेति पूर्वासिद्धावुत्तरासिद्धेर्मूलक्षतिरित्यर्थः । ··· ॥ ६९ ॥

उत्तरश्लोकनिरस्यां शङ्कामाह नन्वित्यादिना । कर्त्रा विना क्रियादेरसंभव इत्येवं सति न कर्तृत्वासंभवः पुंसः परिणामिनित्यत्वेन अन्यथाभावेऽपि भावात् यः कर्ता स एव च भोक्तेति नाकृताभ्यागमादिदोषोऽपीत्यर्थः । **[Page 238]** न तावत्स्वरूपाभिप्रायेण यः कर्ता स एव च भोक्तेति वक्तुं शक्यते नभोवन्निरवयवस्यासङ्गस्य सर्वगतस्य क्रियायोगासंभवादित्याह तत्रोच्यत इति । ... न च भेदाभेदाविति । तत्र हेतुमाह अकर्तुरिति । अकर्तुस्सकाशादभिन्नस्य कर्तुस्ततो भेदासंभवादकर्तृस्वरूपवदित्यर्थः । विपक्षे दोषमाह भावेऽपीति । अकर्तुर्भेदा[द ?]भावेऽप्यकर्तैव स्वस्मात्स्वयं भिन्नो नान्य इत्यापद्येतेत्यर्थः । ... उक्तन्यायमन्यत्राप्यतिदिशति तथेति । यो यतोऽभिन्नस्तस्य ततोऽन्यत्वासंभवादित्यर्थः । भेदव्याप्तत्वाच्च भिन्नस्य नाभिन्नत्वमित्याह स्वतश्चेदिति । ... स्वपक्षे लाभमाह तथा चेति । अनाद्यविद्याप्रतिबिम्बितचिद्धातोर्जीवस्य स्वोपाध्यहंकारविकारैः कर्तृत्वादिसंभवान्नैकोऽपि दोष इत्यर्थः ॥ ७० ॥

**[Page 239]** इदानीं वेद्यस्याहंकारादेः कर्तृत्वाद्यन्यथाभावमङ्गीकृत्य आत्मनो निषेधति इतश्चेत्यादिना ॥ ७१ ॥ ७२ ॥

वेद्योऽन्यथाभाव आत्मधर्मो न भवतीत्युक्तम् । तत्र स्वप्रकाशत्वमाशङ्क्याह अथात्मन इत्यादिना । अनित्यत्वधर्मत्वादिरन्यथाभावस्य न सिध्यतीत्येतदनुभवबाधितमित्याशङ्क्याह अनित्यत्वे दृश्यत्वादिति । किं चात्मा नान्यथाभावगुणवान् नित्यत्वात्प्रध्वंसवदित्याह न चानित्यगुणमिति । अन्यथाभावसिद्ध्यर्थमनित्यत्वमात्मन इष्यतामिति न वाच्यमित्याह नित्यस्यात्मेति ॥ ७३ ॥

आत्मनोऽन्यथाभावं निरस्य भावान्तरापत्तिं निराचष्टे भावान्तरात्मतामिति । **[Page 240]** किंवापुनर्न्यायमाह विक्रियाद्वितीयवतोऽपीति ॥ ७४ ॥

... अन्यथेति । आत्मभावस्य सदासिद्धत्वाभावे कर्मादिसाधनमपि

न स्यात्साधकाभावादित्यर्थः । ··· यतो वस्तुतः परिच्छिन्नस्यात्मत्वं न घटते तत एव यद्वैशेषिकाद्य ईश्वरादात्मा अन्य इति कल्पयन्ति तन्निरस्तमित्याह अत एवात्मापीति । ··· आत्मत्वे च कुतोऽन्यतेति—भागमुत्तरत्वेन योजयति तर्हि सर्वस्येति । पूर्वोक्तं विप्रतिषेधं परमुखेन स्फुटयति नन्वन्य एवेत्यादिना पुनर्विप्रतिषेधमाक्षिप्य समाधत्ते नन्वन्य आत्मेत्यादिना । [Page 241] उक्तं संक्षिप्योपसंहरति अत आत्मान्तराभावादित्यादिना ॥ ७५ ॥

ज्ञानकर्मसाध्यं रूपान्तरमात्मनो नास्तीत्युक्तम् । तत्र श्रुतिविरोधं शङ्कते नन्विति । श्रुतिरप्यन्यस्यान्यभावं न ब्रूते । अतो न विरोध इत्याशङ्क्याह न च ब्रह्मण एवेति । अन्यथेति । यदि ज्ञानाद्ब्रह्मभावस्स्यात्तदा पूर्वं ब्रह्मासिद्धिस्स्यादित्यर्थः । यच्चोक्तमात्मनोऽन्यस्यात्मत्वं घटवन्न युज्यत इति तद्ब्रह्मणो ज्ञातृत्वश्रुतिविरुद्धमित्याह न च जडस्येति । जीवब्रह्मभावेन चेतनविभागं भावान्तरापत्तिं चोक्त्वा प्रतिशरीरमात्मभेदं साधयति दृष्टे चेत्यादिना । न केवलं पण्डितमूर्खादिव्यवस्थान्यथानुपपत्त्या जीवभेदः आत्माभेदे आत्मविद्यालाभानुपपत्त्यापीत्याह विदुषश्चाचार्यादिति । किंच स्वाध्यायोऽध्येतव्य इति विध्यनुपपत्त्यापि जीवभेद इत्याह अध्ययनमपीति । नन्वन्यतोऽध्ययनमिति न नियमः हिरण्यगर्भस्य स्वयमाविर्भूतवेदत्वादित्याशङ्क्याह तथा हिरण्यगर्भस्यापीति । सिद्धान्तिनो मतमाशङ्क्य भिन्नाभिन्नं च तत्तत इति— पादमवतारयति नन्वेवं च सत्येकमेवेत्यादिना । [Page 242] उत्तरार्धं योजयति अतोऽभेदाद्ब्रह्मण इत्यादिना । स्वपक्षे सकलव्यवहारोपपत्तिमुक्त्वा पक्षान्तरे तदसंभवमाह अत्यन्ताभेद इति । अत्यन्ताभेदे ज्ञेयज्ञातृत्वाद्यसंभवः अत्यन्तभेदे च ब्रह्मभावमोक्षासंभव इत्यर्थः । ये च मायावाद्यभिमतास्तर्कास्ते तर्काभासा एवेत्याह प्राप्यप्राप्तोश्चेति । उक्तश्लोकमेव सिद्धान्तमाह अत्रोच्यत इत्यादिना । ··· एवं जीवब्रह्मणोर्भिन्नाभिन्नत्वं शास्त्रगम्यं न भवती-

त्युपपाद्य पृथिव्यादिब्रह्मणोरपि भिन्नाभिन्नत्वं न शास्त्रार्थ इत्याह तथा जगद्ब्रह्मणोरित्यादिना। ... [Page 243] किंच यदि पूर्वप्रतिपन्नभेद- माश्रित्य अभेदं बोधयेच्छास्त्रं तदा भिन्नाभिन्नं ब्रह्म भवेत्। न तदस्ति। किंतु नेह नानास्ति किंचनेति सकलभेदनिषेधेनैवाभेदं बोधयतीत्याह न चैकस्मिन्नेवेति। ... अभेदधर्मबोधकत्वेन सम्यग्ज्ञानत्वमाशङ्कते अथ सर्वभावानामिति। एकादिपदाभ्यासादत्यन्ताभेदे तात्पर्यं श्रुतेर्गम्यते। तद्विरोधस्स्यादित्याह तदा अनन्तेष्विति। प्रकारान्तरेणाविरोधमाशङ्क्य परिहरति भेदे सत्यपीत्यादिना। ब्रह्मणस्सर्वाभेदो विद्यते न घटादेरिति विशेषं शङ्कते घटादेरिति। भेदाभेदवादिना एतदक्तुं न शक्यत इत्याह नेति। ... येनाभेदेन घटादेरभिन्नत्वं ततोऽन्येन ब्रह्मणोऽभिन्नत्वम्। अतो न साम्यमिति चेत् तथा सन्तु सर्वे भावाः। ... अमानं स्यात्— तत्त्वतो बोधकत्वाभावात्। दृष्टिक्रियायां वा मानं स्यात् नाम ब्रह्मेतिव- दित्यर्थः। अस्तु दृष्टिक्रियाविधायकमेवेति न वाच्यमित्याह न चेति। सोऽयं देवदत्त इतिवत् कल्पितभेदपरामर्शे नैकस्वरूपनिष्ठतोपलम्भादित्यर्थः। [Page 244] ननु कर्मकाण्डे शब्दान्तरादिभिः प्रमाणैः कर्मभेदस्सिद्धः। कर्म च ब्रह्मकार्यम्। अतस्तेन रूपेण ब्रह्मण एव भिन्नत्वमित्या- शङ्क्याह कर्मणोऽपीति। सिद्धत्वेऽनुवादकत्वादसिद्धत्वेऽशक्यत्वाद्व्युत्पत्ति- विरहादित्यर्थः। लोकेऽपि भेदसिद्धिः प्रामाणिकी न भवतीत्याह न चाक्षजादिनापीति। प्रमात्रादेरप्रामाणिकत्वादपि न तद्भेदः प्रामाणिक इत्याह मेयभेदे तद्वम्येऽपीति। ... इतश्च न भिन्नाभिन्नं ब्रह्मेत्याह यद्यभिन्नमित्यादिना। अनन्तब्रह्मप्रसङ्गं परिहरति सर्वे भेदा इति। ... यच्चोक्तं जीवा ब्रह्मणोऽंशाः प्रतिशरीरं भिन्ना इति तत्राह न च तदंशानामिति। सर्वं खल्विदं ब्रह्मेति श्रुतेस्सर्वस्य ब्रह्मपदवाच्यत्वात् ब्रह्मणश्चैकत्वान्नावान्तरभेदो घटत इत्यर्थः॥ ७६॥

श्लोकमवतारयितुं विकल्पयति अपिचेदमिति। एकत्वचणत्वचिंतत्वा-

ज्जीवब्रह्मणोस्तत्त्वभेदो नास्त्येवेत्यस्मदिष्टमेव स्यादित्याह चिन्मात्रत्वे कुतो भिदेति। [Page 245] द्वितीयविकल्पे दोषमाह ब्रह्मात्मत्वे न हीति। तृतीयविकल्पमुन्मूलयति चिदात्मत्वे जडांशत्वं न स्यादिति। चतुर्थकल्पं बहिरेव पराकरोति तथैकस्याचिद्रूपत्वेऽपीति। न केवलमंशांशिभावासंभवश्चतुर्थकल्पे अभेदोऽपि न घटत इत्याह चिदचिद्रूपत्व इति॥ ७७॥ ७८॥

किंच सप्रपञ्चब्रह्मवादी प्रष्टव्यः— किं जगत् ब्रह्मवेद्यमुतावेद्यम्। आद्यं प्रत्याह न जगद्ब्रह्मणो रूपमिति। द्वितीयं प्रत्याह अवेद्यत्वे तेषामसिद्धिरिति। किंच ब्रह्मापि जीवानां वेद्यमवेद्यं वा। प्रथमं प्रत्याह ब्रह्मणश्च जीववेद्यत्व इति। वेद्यपक्षे दोषान्तरमाह जीवब्रह्मणोर्द्वयोरपीति। [Page 246] नन्ववेद्यब्रह्मपक्षे वा कथं ब्रह्मज्ञानसंभव इत्याशङ्क्याह तस्य ज्ञानमिति। … ॥ ७९॥

स्वपक्षे सर्वज्ञत्वादिसंभवमुक्त्वा सप्रपञ्चवादिनामेव तदसंभवमाह यदि स्यादि सर्वमित्यादिना। सप्रपञ्चब्रह्मवादी प्रष्टव्यः सर्वं चेद्ब्रह्म तत् किं वेद्यमेव उत वेदित्रेव किं वा परस्परभिन्नं उभयमपि ब्रह्म समुच्चितं वा। आद्ये दूषणमाह न वेदित्ववशिष्यत इति। द्वितीये दोषमाह वेदितृत्वे न वेद्यतेति। … एतदेव सर्वकर्तृत्वाभावेऽप्यतिदिशति तथा नास्य सर्वकर्तृत्वमपीति। … इतश्च न सर्वकर्तृत्वमित्याह न चासिद्धस्येति। … ॥ ८०॥

तृतीयविकल्पं दूषयति ब्रह्म चेदिति। [चतुर्थविकल्पं दूषयति?] ब्रह्मैकमिति समुच्चितरूपस्योभयविलक्षणत्वाद्वेद्यवेदितृविलक्षणं ब्रह्म स्यादित्यर्थः॥ ८१॥

अंशभेदेन वेद्यवेदितृभावमाशङ्क्य परिहरति तदेकांशस्येति। [Page 247] अंशभेदमङ्गीकृत्य सर्वज्ञत्वं न सिध्यतीत्युक्तम्। सोऽपि नास्तीत्याह तदंशयोरपीति॥ ८२॥

एवं तावत्सर्वज्ञत्वनिरासं प्रपञ्च्य अधुना सर्वकर्तृत्वनिरासं प्रपञ्चयति ब्रह्मणश्चेदित्यादिना । सप्रपञ्चं ब्रह्म वदन् प्रष्टव्यः— किं प्रपञ्चो ब्रह्मणः कार्यः तेन सह वर्तत इति सप्रपञ्चं किं वा प्रपञ्चोऽपि स्वतन्त्र एव ब्रह्मपदार्थः कार्यं कारणं च समुच्चितं वा ब्रह्मेति । पक्षत्रये श्लोकद्वयेन दूषणमुक्तम् । तत्र समुच्चितपक्षमादाय शङ्कते जगज्जनेः प्रागिति । अंशिसंबन्धं विना अंशत्वादर्शनादंशाभावेऽपि तदंशोऽस्तीत्यसंगतमित्याह नांशभाव इति । तत्र किं जगज्जातिकालेऽंशिसिद्धिः पूर्वमेव वा । पक्षद्वयेऽपि दोषमाह जगज्जनौ चेदित्यादिना । ... परमार्थसर्वकर्तृत्वे दोषान्तरमाह तत्कार्यस्य सत्यत्व इत्यादिना । मायाप्रदेशरूपास्वविद्यासु प्रतिबिम्बाभिप्रायेण जीवभेदस्याविद्याकल्पित इत्युक्तं न तु प्रपञ्चवत्स्वरूपकल्पनाभिप्रायेण षष्ठे निराकरिष्यमाणत्वात् ॥ ८३ ॥ ८४ ॥

**[Page 248]** न केवलमद्वैतश्रुतेरप्रामाण्यं सप्रपञ्चब्रह्मवादे मोक्षव्यवस्थापि न संभवतीत्युक्तम् । तत्र तावन्मोक्षासंभवमाह सप्रपञ्चं यदीति ॥ ८५ ॥

तदात्मप्राप्तिर्मा भूत् संयोगलक्षणा तु भविष्यतीत्याशङ्क्याह पृथक्स्थितस्य त्विति । अंशांशिनोस्संयोगस्य सदासिद्धत्वान्न साध्यत्वमित्यर्थः ॥ ८६ ॥ ... ॥ ८७ ॥ ... ॥ ८८ ॥

किंच अंशत्वं हित्वा जीवो ब्रह्म भवति स्थिते वा अंशत्वे । नोभयथापि संभव इत्याह ब्रह्मांशत्वं परित्यज्येति । अंशत्वे स्थिते ब्रह्मता कुतः । न कुतोऽपि अंशस्य परिच्छिन्नत्वादित्यर्थः ॥ ८९ ॥

निरंशस्य ब्रह्मणो न स्वाभाविकोऽंशः किं त्वौपाधिक इति विशेषमाशङ्क्य दूषयति जीवस्येत्यादिना । औपाधिकस्य प्रतिबिम्बश्यामत्ववन्मिथ्यात्वादविद्ययैव नाशोपपत्तेः कर्मसमुच्चयाङ्गीकारो व्यर्थ इत्यर्थः ॥ ९० ॥ ९१ ॥

यद्यौपाधिकत्वमङ्गीकृत्यापि मिथ्यात्वं नेष्यते तदा वृथैव नैयायिका-

ह्यभिमतजीवभेदत्याग इत्याह औपाधिकोऽपि चेदिति ॥ ९२ ॥ … ॥ ९३ ॥ ९४ ॥ … ॥ ९५ ॥ … ॥ ९६ ॥

**[Page 249]** यद्युक्तदोषभीत्या पूर्वपूर्वमप्युपाध्यन्तरविशिष्टजीवसिद्धि-रिष्यते तत्राह प्राक्सिद्धाविति। यत उपाध्यन्तरविशिष्टस्योपाध्यन्तर-योगेऽनवस्था अतः परस्यैवोपाधियोगो वाच्यः। … स चोपाधियोगः कृत्स्नस्यैव निरंशत्वात् यथा गोत्वस्य कृत्स्नस्यैव खण्डादिष्वभिव्यक्तिः। एवं सति कस्य कुतो भेदः प्रमाणतो ज्ञायेत। न कस्यचित् न कुतोऽपि स्वरूपभेदाभावात्। … ॥ ९७—९९ ॥

पूर्ववादी त्वाधिभेदकृतो नरसुरतिर्यगादिलक्षणभेदोऽपि विद्यत इत्याह आधिभेदे जीवभेद इति चेदिति। यथा मणिकृपाणदर्पणेषु वर्तुलत्व-श्यामत्वादिलक्षणभेदः प्रतिबिम्बानामुपाधिधर्म एव न मुखगतस्तथा जीवेषु सुरत्वादिलक्षणभेद उपाधिधर्म एव न जीवगत इत्याह नेति। हेतुत्वेन श्लोकमवतारयति यत इति। आधिभेदे त्वया प्रामाणिके अङ्गीकृतेऽपि चितो निरंशत्वात्कृत्स्नस्यैवाधिभिर्योगो वक्तव्यः प्रतिबिम्ब-द्वारेणाविरोधे सतीत्यर्थः। कृत्स्नस्यैवैकोपाध्यवच्छेदे द्वितीयोऽवच्छेदो विरुध्यत इति चेत् तर्हि वृथा तवावच्छेदवादिनोऽनेकोपाधिकल्पना। यथा मया अनिर्वाच्याविद्याधीनो जीवभेद इष्यते तथैवास्तु प्रामाणिको-पाधिभेदकल्पनं तु व्यर्थमित्यर्थः॥ १००॥

दृष्टान्तबलेनानेकावच्छेदाविरोधमाशङ्क्य परिहरति एकस्यापीति ॥ १०१ ॥

… यच्चोक्तं श्रुतिरेव चेतनस्य चेतनान्तरभावं ज्ञानकर्मभ्यां श्रावयतीति तदप्येवं सति परिहृतमित्याह औपाधिकस्य भेदस्येति ॥ १०२—१०३ ॥

**[Page 250]** यदुक्तमुपाधिसत्यत्वं तत् निराकरणायानुवदति न्वाधिरित्यादिना ॥ १०४ ॥ १०५ ॥

उपाधिः किं ब्रह्मणो रूपं नो वा। आद्यं प्रत्याह उच्यत

इत्यादिना। अन्यथेति। ब्रह्मणः क्षयाभावे सति उपाधेरपि क्षयो न भवति तद्रूपत्वादित्यर्थः ॥ १०६ ॥

ब्रह्मणः परिणामशक्तिरेव कार्याकारेण विकसिता कार्यमुच्यते। कार्यस्य लयो नाम शक्तिमात्ररूपेणावस्थानम्। ततः कथं ब्रह्मणः क्षय इति चोदिते सिद्धान्त्याह शक्तिशेष इति। प्रलये शक्तिरूपेण स्थितानां यथा सृष्टिकाले पुनरुद्भवस्तथा मुक्तौ लीनस्योपाधेस्सर्गकाले पुनरुद्भवादनिर्मोक्ष इत्यर्थः। तर्हि शक्तेरपि नाशोऽस्त्विति न वाच्यमित्याह अभेदादिति। शक्तेश्शक्तिमत्तादात्म्यात् शक्तिमतो ब्रह्मणो नाशं विना शक्तिर्न नश्यतीत्यर्थः ॥ १०७ ॥

अथोपाधिर्ब्रह्मरूपं न भवति ब्रह्मानाशेऽपि नाशस्स्यात्। तत्राह यद्यपीति। तथापीत्यस्य अनिर्मोक्षः प्रसज्येत इति श्लोके[कभागे ?]न संबन्धः। ... एकोपाधिविनाशे यद्युपाध्यन्तरमपि न भवेत्तदा एकमुक्तौ जगत्क्षयस्स्यादित्यर्थः ॥ १०८ ॥

इतश्चौपाधिकभेदधीर्ब्रह्मणि दुर्निरूपा इत्याह न चेत्यादिना। यत्रौपाधिकदृश्यता तत्र उपाध्युपहितदृश्यता दृष्टा। सा व्यावर्त्यमाना ब्रह्मण औपाधिकभेदं व्यावर्तयतीत्यर्थः। यस्मादौपाधिकभेदः परमार्थो न घटते अत इत्युपसंहारः। **[Page 251]** इदानीमुपाधिभेदस्य मिथ्यात्वमाह आधिभेदोऽपि भेदत्वादिति। ... ॥ १०९-१११ ॥

विपक्षे दोषमाह उपाधिर्ब्रह्मणो रूपमिति। भेदोऽप्युपाध्यन्तरभेद-निबन्धनस्सत्य एवेति न वाच्यमित्याह न चाधिभेदादिति॥ ११२-११४ ॥

**[Page 252]** प्रासङ्गिकविचारमुपसंहृत्य प्रकृतमेव शुक्तौ रूप्यात्मत्वं दृष्टान्तच्छलेन स्मारितमध्यायशेषेण विवृणोतीत्याह तदेव शुक्तेरिति। अध्यायशेषतात्पर्यमुक्त्वा समनन्तरश्लोकस्य तात्पर्यमाह पूर्वं वस्तुन इति ॥ ११५ ॥

शुक्तिपरिणामत्वे रूप्यस्य घटवद्बाधो न स्यादिति जन्म अङ्गीकृत्योक्तम्।

इदानीं हेत्वभावाज्जन्मापि न घटत इत्याह शुक्ते रूप्यात्मना जाताविति। कुम्भकारादिव्यापारादिस्थानीयः कश्चिद्बाह्यो हेतुर्यद्यपि नोपलभ्यते तथाप्यान्तरो हेतुर्ज्ञानाख्योऽस्त्वित्याशङ्क्याह ज्ञेयजन्म न चेति। ... ॥ ११६ ॥

शुक्ते रूप्यात्मना जन्मनि हेत्वन्तरमाशङ्क्य परिहरति शुक्तिकेति ॥ ११७ ॥

... शुक्त्यालम्बनापि काचिदेव भ्रान्तेत्यभ्युपगम्य इदानीं दोषमाह यदीति। अभ्रान्तैश्चेति। अभ्रान्तैरेव दृश्यताम्। तत्र हेतुमाह भ्रान्त्यात्विति। तत्त्वतो शुक्ते रूप्यात्मताप्रतौ भ्रान्तेरुपपत्त्यादित्यर्थः॥ ११८ ॥

**[Page 253]** किंच निमित्तापगममात्रान्नैमित्तिकापगमासंभवाद्दोषोत्थभ्रान्त्यपगमेऽपि रूप्यं तिष्ठेदित्याह रूप्योत्पत्ताविति। अध्यायार्थमुपसंहरति अतो मायैवेति। अन्यथाभूतायां शुक्तौ रूप्यख्यातिश्चेत् तदा तस्या भ्रान्तित्वं हीयेत घटाकारपरिणतायां मृदि घटख्यातिवत्। अतश्शुक्तिरूप्यख्यातेरन्यथाख्यातित्वं वदता मायामयत्वमेवाश्रयणीयमित्यर्थः॥ ११९ ॥

॥ इतीष्टसिद्धिविवरणे द्वितीयोऽध्यायः ॥

---

# अथ तृतीयोऽध्यायः।

[Page 254] द्वितीयाध्यायोपक्रमकृतविकल्पत्रयमध्ये द्वितीयविकल्पं दूषयितुं तृतीयाध्याय आरभ्यते। अर्थान्यथाभावनिरासपूर्वकत्वाद्बुद्ध्यन्यथाभावनिरासस्य हेतुहेतुमल्लक्षणस्संबन्धः। [यान्यथेति।?] तत्र पूर्वार्धेनानुवाद उत्तरार्धेन दोषप्रतिज्ञा। हेतुं स्मारयति न हीति॥ १॥

ज्ञानस्य स्वतो निराकारत्वादर्थोपाधिकमेवान्यथाख्यापनं वाच्यम्। अर्थे चान्यथाभावाभावे तन्न संभवतीत्युक्तम्। तत्र शङ्कते अर्थेति। ... ॥ २॥ ३॥

... अन्यदेशादीति। सामान्याकारेण गृहीतस्य विशेषतश्चागृहीतस्य लोकेऽधिष्ठानत्वं प्रसिद्धम्। देशान्तरादितस्त्वर्थानां सर्वथैवाग्रहान्न तत्रान्यथामतिस्संभाव्यत इत्यर्थः। विपक्षे बाधकमाह सुषुप्तेऽपीति। सर्वथैवाग्रहेऽपि यदि भ्रान्तिस्स्यात्सा सुषुप्तेऽपि निद्रादोषात्स्यादित्यर्थः॥ ४॥

अन्यदेशाद्यग्रहणे हेतुं पृच्छति कुत इति। अयोग्यत्वादित्याह यत इति। कालान्तरीयस्येदानीं रूपादिमत्त्वाभावात् देशान्तरीयस्य च संनिकर्षाभावाज्जागरितभ्रमेऽपि न देशान्तरादिस्थार्थदृष्टिः। स्वप्ने त्वक्षमपि संहृतम्। अतस्सुतरां तत्रार्थदृष्टिर्न संभवतीत्यर्थः॥ ५॥

उत्तरश्लोकभागस्यापेक्षितं पूरयति अक्षाद्यभावेऽपीति। स्वाप्नानामक्षाद्यभावेऽप्यर्थानां दोषाद्दर्शनमिति चेत् सिद्धान्त्याह दोषः कथमिति। वस्तुबोधकत्वे दोषत्वमेव न स्यादित्यर्थः। भ्रमहेतुत्वाद्दोषत्वं चेत् तत्राह दृष्टौ कुतो भ्रम इति। वस्तुदृष्टिर्न भ्रम इत्यर्थः। दोषात् विद्यमानदृष्टिमभ्युपगम्य भ्रमत्वमुक्तम्। सापि नास्तीत्याह भ्रान्तौ नष्टस्येति। शोकादिदोषात् भ्रान्तौ नष्टस्यापि पुत्रादेः ख्यातेर्न विद्यमानख्यातिर्भ्रान्तिरित्यर्थः॥ ६॥

[Page 255] कालान्तरीयसत्त्वं तत्रापि बोध्यमिति पूर्ववाद्याह पूर्वमासीदिति ॥ ७ ॥

अतः किं फलितमित्याशङ्क्याह वेद्यते स इति ॥ ८ ॥

सिद्धान्ती कालान्तरीयस्यापरोक्षभ्रमे भानं न संभवतीत्याह नैतत्सारमिति। यदि निरालम्बनत्वपरिहाराय धीकालीनोऽर्थ इष्यते तत्राह अस्ति चेदर्थः न भ्रान्तिरिति। तथेति। यथा ज्ञानकालीनार्थाभावे भावे च न सत्ख्यातिर्भ्रान्तिस्तथा स्मृतिसंशयादेरपि न सत्ख्यातित्वम्। अन्यथेति। सत्ख्यातित्वे प्रमाणवत् स्मृतित्वादिहानादित्यर्थः ॥ ९ ॥ ··· ॥ १० ॥ ··· ॥ ११ ॥

पूर्वं नासीच्चेदिदानीमेवास्तु वृत्तविषयेत्युक्तम्। तत्र इदानीमभावावृत्तविषयत्वं न संभवतीत्याशङ्क्याह नेदानीमिति। पूर्वतनसत्त्वेन यथा इदानीमविद्यमानोऽपि घटस्त्वया वेद्य इष्यते तथा अद्याविद्यमानापि धीर्वृत्तवेदिका भविष्यति पूर्वतनसत्त्वेनेत्यर्थः ॥ १२ ॥ ··· ॥ १३ ॥

इतश्चावर्तमानग्रहो न घटत इत्याह धीकारकं चेदिति। नष्टमपि पुत्रादि धियः कर्मकारकं चेत्स्यात् तर्हि अद्धाद्यर्थक्रियामपि कस्मान्न करोति विनिगमनकारणाभावादित्यर्थः। भवतु तर्ह्यर्थक्रियाया अपि कारकं ततः किमित्याशङ्क्याह द्वयोरिति। ज्ञानार्थक्रिययोर्नष्टमपि कारकं चेत्स्यात् अनष्टाद्विशेषो न स्यादित्यर्थः। [Page 256] अतीताद्यर्थस्य ज्ञानकारकत्वमपलपत्युक्तदोषपरिहाराय नन्विति। ··· ॥ १४ ॥

उत्तरश्लोकस्यापेक्षितं पूरयति नष्टं चेति। नष्टमपि भाति चेत् अजातं दृश्यतां भविष्यता विशेषेण विशिष्टम्। तेन रूपेण करोत्वर्थक्रियां च। तत्र तव भाविन्यर्थे न चेष्टा स्यादित्यर्थः। ··· प्रकारान्तरेणानुमानादिवैषम्यं भ्रान्तेराह न चानुमानादिष्विति। अनुमानादौ नार्थस्य ज्ञानजनकत्वं शक्यं कल्पयितुं अन्यत एव सिद्धत्वात्। भ्रमे तु कारणान्तरासंभवादर्थव्यापारः कारणम्। तत्रार्थाभावे भ्रमो न स्यादित्यर्थः। ··· चक्षुरादि-

स्थानीयस्तु— अपरोक्षज्ञानहेतुत्वाद्वर्तमानार्थसापेक्ष इत्यर्थः। किं फलितमित्याशङ्क्याह अतोऽक्षजस्येवेति। धीकारकं चेन्नष्टं स्यादित्यादिना उक्ता दोषाः प्रसज्यन्त इत्यर्थः। ··· [Page 257] अन्यथेति। बाधकज्ञानेऽनुवृत्त्यभावे सतीत्यर्थः। ··· ॥ १५ ॥

भूताद्यर्थस्यापि यदि स्यात्स्वज्ञानजनकत्वं तदा स्यादेव दोष इत्युक्तम्। तत्र हेतुत्वेन श्लोकमवतारयति यत इति। भाव्येव प्रामाण्यं स्यात्। अत्र हेतुमाह नर्ते मेयाद्धि तदिति। हि यस्मान्मेयादृते मेयं विना तन्मानं न जायते मेयस्य जनकत्वपक्षे कारणाभावे कार्याभावात्। तथा च कस्य प्रामाण्यं स्यादित्यर्थः। प्रामाण्यसिद्धये यदि मेयमपि जनकमस्ति तदा कस्य भाविता। प्रत्यक्षतैव स्यादित्यर्थः। यदि भवदिति। वर्तमानं रूपं यथा वर्तमानधियो मेयमित्यर्थः॥ १६ ॥

··· यतोऽर्थस्य ज्ञानजनकत्वे प्रत्यक्षत्वं स्यादेव अतोऽनुमानादि अर्थजन्यं न भवतीत्याह अतोऽनुमानादिष्वर्थस्येति। ··· पूर्वं भूताद्यनुमानस्य ज्ञानकालीनार्थाभावेऽपि सालम्बनत्वमभ्युपगम्य भ्रान्तेस्तद्वैलक्षण्यमुक्तम्। इदानीं भूताद्यनुमानस्यापि सालम्बनत्वं दुर्निरूपमित्याह कथं चेत्यादिना। ज्ञानकाले भूतादेरसत्त्वान्नृशृङ्गवत् न ज्ञानं संभवतीत्यर्थः। इतश्च न भूतादिज्ञानं संभवतीत्याह न च ज्ञानमिति। शून्यादिविशेषमाशङ्क्य परिहरति ननु नेत्यादिना। [Page 258] अन्यथेति। नृशृङ्गादिविशेषवत्त्वे सति सन्नेव स्यादिति भूतादित्वहानिरित्यर्थः। ज्ञानज्ञेययोरेकदेशत्वनियमाभाववदेककालत्वनियमोऽपि नास्तीति मन्वानश्शङ्कते अथोच्येतेति। यच्च असत्त्वादज्ञेयत्वमुक्तं तत्राह न चान्यदेति। स्वकाले सतोऽप्यर्थस्यान्यदा यदसत्त्वं तदज्ञेयत्वे हेतुर्न भवति विद्युतः क्षणिकत्वेनाक्षसंयोगक्षणादनन्तरक्षणेऽसत्त्वेऽपि ज्ञेयत्वदर्शनादित्यर्थः। सिद्धान्ती त्ववच्छेदकस्य कालान्तरस्य दुर्निरूपत्वेन तदवच्छिन्नस्य ज्ञेयत्वं दुर्निरूपमित्याह तत्किं कालान्तरमित्यादिना। दृष्टान्तश्च विषम इत्याह देशान्तरेति। भ्रान्तेस्स्वकाली-

नार्थाभावे निरालम्बनत्वं स्यादित्येवमर्थपरतया योजिताः श्लोकाः। ते भूताद्यनुमाननिरासपरतयापि योज्या इत्याह अस्मिंश्चिति। ... सिद्धान्ती विचारासहमेव प्रामाण्यमित्याह इत्यमेवेति। भूतादिज्ञानस्य जडज्ञानान्तर्भूतत्वमेवाह न ह्वीति ॥ १७ ॥

**[Page 259]** यदुच्यते दोषादसतोऽपि दर्शनमिति तदुक्तन्यायेन निरस्तमित्याह दोषाच्चेति। दोषः कथं दृष्टौ कुतो भ्रम इत्येतन्निगमयति दोषोऽपि गुण एवेति ॥ १८ ॥

यच्चावाचि अन्यथाबोधनादेव दोषत्वं चेति तदुद्भाव्य निराकरोति नन्वित्यादिना ॥ १९ ॥

आद्यन्तविकल्पयोर्दूषणमध्यायशेषे भविष्यति। मध्यमविकल्पे तावद्दोषमाह रूप्ये यदि न भ्रान्तिबाधनमिति ॥ २० ॥ ... ॥ २१ ॥

दोषाद्देशान्तरस्थग्रहणमङ्गीकृत्य अधिष्ठानयाथात्म्यग्रहणाभावाद्बाधो न स्यादित्युक्तम्। इदानीं दोषाद्देशान्तरस्थग्रहणमेव न घटत इत्याह अयुक्तभान इति। अव्यापारादित्यस्यार्थः इन्द्रियव्यापारनिरपेक्षत्वादिति। अतिप्रसङ्गपरिहाराय सदृशार्थग्रहे भ्रान्तिर्यदीत्यस्यार्थमाह स्यान्मतमिति। सा तत्र न ग्रहादित्यस्यार्थमाह तदापीति। ... सम्यग्ज्ञानेन गृहीतोऽप्यर्थो यदि भ्रान्तिख्यातेरालम्बनं तदा घटादिरपि स्यादित्याह अन्यथेति। दोषसाम्यं शङ्कते ननु तेऽपीति। अर्धाङ्गीकारेण परिहरति सत्यमिति। अनिर्वाच्याविद्याजं भ्रमालम्बनमस्माकं न त्विदमंशः। तव इदमंश एवालम्बनम्। अतो नावयोस्तुमानदोषत्वमित्यर्थः। इतश्च भ्रान्तिर्नेदमंशालम्बनमित्याह न चाधिष्ठानस्येति। **[Page 260]** स्वरहस्यमाह अगृहीतस्येति। शुक्तीदमंशावच्छिन्नोऽनुभव एव रूप्यभ्रमाधिष्ठानमित्यर्थः ॥ २२ ॥ ... ॥ २३ ॥ ... ॥ २४ ॥

शुक्लत्वादिप्रतीतेर्विशेषप्रतीतित्वमभ्युपगम्य भ्रमाविरोधित्वं शङ्कते शुक्लतादिरिति। बहिरेव दोषमाह सत्यं तथापीति। विशेष एव कृष्णतादि-

व्यावर्तकत्वात् । ... किंच सामान्यविशेषग्रहस्य भ्रमाविरोधित्वेऽतिप्रसङ्ग इत्याह शुक्तिरित्यपीति । ... [Page 261] न च निर्विशेष इति । द्विविधो हि विशेषो वैशेषिकैः कल्पितः । शुक्तित्वादिः सामान्यविशेषः स्वव्यक्तिष्वनुवृत्तप्रत्ययहेतुत्वाद्व्यक्त्यन्तरेभ्यो व्यावृत्तप्रत्ययहेतुत्वाच्च सामान्यं च तत् विशेषश्च स इति । योगिप्रत्यक्षगम्यानां नित्यद्रव्याणामत्यन्तसलक्षणानां व्यावर्तका अन्त्यविशेषाः । तेषां नित्यानुमेयत्वादग्रहे चेद्भ्रमस्तदा स्यादित्यतिप्रसङ्गः । अन्त्यविशेषसद्भावे प्रमाणाभावादुपलब्धियोग्यस्यैव विशेषस्याग्रहाद्भ्रम इति मीमांसकदृष्ट्या चोद्यम् । तत्र विकल्पमुखेन परिहारमाह तस्य योग्यत्वं किमित्यादिना ॥ २५ ॥

न ह्यग्रहो दोषात्त्वयेष्ट इति । प्रागभावस्यानादित्वादित्यर्थः ॥ २६ ॥

... कथं तर्हि प्रकाशस्वभावब्रह्मणोऽप्रकाश इत्याशङ्क्याह मायां विनेति । प्रकाशस्वभावस्य ब्रह्मणो नान्येनाप्रकाशः क्रियते किं त्वप्रकाशभ्रम एवेत्यर्थः ॥ २७ ॥

दोषादग्रहाभिधानस्याभिप्रायं शङ्कते दृशोऽंश इति । ... [Page 262] संयोगादिसंबन्धस्याभावेऽप्येकपुरुषाश्रयत्वं संबन्ध इत्याशङ्क्याह एकाश्रयत्वमिति । न चेति । ग्रहस्यात्माश्रयत्वाद्दोषस्य गोलकाद्याश्रयत्वान्नैकाश्रयत्वमपीत्यर्थः । ... अख्यातिकाल इवेति । सुषुप्तादाविवेत्यर्थः । ग्रहोऽर्थवानिति त्वयोक्तं चेत् तर्हि तथैवास्त्विति न वाच्यमित्याह न चेति ॥ २८ ॥

अग्रहः कोपयोक्ष्यत इत्येतदाक्षिप्य समाधत्ते व्यक्त्योरैक्यधिय इत्यादिना ॥ २९ ॥

जातिव्यञ्जकत्वपक्षे किमेकजातिव्यञ्जकव्यक्त्योरेकधीर्नास्ति अग्रहं विना किं वा भिन्नजातिव्यञ्जकव्यक्त्योरिति विकल्प्य प्रथमं प्रत्याह एकामपेक्ष्येति ॥ ३० ॥

[Page 263] कदाचित्खण्डमुण्डयोस्संनिकृष्टयोरग्रहं विनापि गो-

स्तिष्ठतीत्येकधीर्दृष्टेत्युक्तम्। तस्या जातिविषयत्वमाशङ्क्य परिहरति जातावेवैकेति। गोप्रातिपदिकस्य जातिवाचकत्वाज्जातावेवैकधीश्चेत्तदा गावाविति द्वित्वमतिर्मृषा स्यात् जातेर्द्वित्वाभावात्। विद्यते च गोप्रातिपदिकाद्विवचनोत्पत्तिः। तस्मान्न गोशब्दस्य जातिमात्रे पर्यवसानमित्यर्थः। ··· व्यक्त्योरेकजात्यभेदोऽसिद्ध इत्याशङ्क्याह न च जातिव्यक्त्योर्भेद एवेति॥ २१॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते जात्यात्मनेति। खण्डमुण्डयोरैक्यं जात्यात्मना न साक्षाज्जात्यादेरिव शुक्तिरूप्ययोस्तु साक्षादैक्यं नाग्रहं विना घटत इत्यर्थः। जात्यादेरिव साक्षाद्व्यक्त्योर्नैक्यमित्युक्तम्। तत्र जात्यादेर्वा कथं साक्षादेकत्वमित्याशङ्क्याह न ह्येकस्या इति। ··· यद्यपीति। खण्डमुण्डयोर्जात्यात्मना ऐक्यं वदता आत्यन्तिकमैक्यं जात्यादिवन्नास्तीत्युक्तम्। तदसत् जात्यादेरपि तदभावादित्यर्थः। ··· ॥ २२॥

एवं तावद्यथा गोव्यक्त्योर्भेदे भासमानेऽप्यैक्यधीस्तथा शुक्तिरूप्ययोरप्यग्रहं विनैवाभेदधीर्भविष्यतीत्यग्रहस्यानुपयोग उक्तः। पुनरग्रहस्यानुपयोगे हेत्वन्तरमाह सामान्येतरयोरिति। मीयमाने विलक्षणे रूपे ययोस्तौ मीयमानविरूपौ सामान्यविशेषांशौ। तयोरग्रहं विनापि यथा भ्रमस्तथा शुक्त्यग्रहं विनापि स्याद्भ्रमगोचरवद्द्रव्यत्वाविशेषादित्यर्थः[?]। **[Page 264]** अनुभवावष्टम्भेनाह नन्विति। ··· ॥ २३॥

··· नन्विदं रूप्यमिति रूप्यजातिरेव भाति न भिन्नजातीयव्यक्त्योस्तादात्म्यमित्याशङ्क्याह न च तत्रेति। जातिसाक्षात्कारस्य व्यक्तिपरतन्त्रत्वोपलम्भादित्यर्थः। ··· यावच्चेति। अपुनरुक्तशब्दद्वयप्रयोगाद्भेदो भातीत्युक्तमित्यर्थः॥ २४॥

द्वयोर्जात्योर्व्यावृत्तत्वेन व्यक्त्योर्यथैकधीरग्रहं विना तथा शुक्तिरूप्यव्यक्त्योरपि भविष्यतीत्युक्तम्। तत्र वैषम्यं शङ्कते व्याप्यव्यापकेति। शुक्तित्वं व्याप्यं द्रव्यत्वं व्यापकम्। तन्निबन्धनैव तत्रैक्यबुद्धिः। शुक्तिरूप्ययो-

स्तदभावादग्रहं विना नैक्यधीस्स्यादित्यर्थः । सिद्धान्त्याह शुक्तिकेत्यादि । शुक्तिकारजतव्यक्त्योस्संनिकृष्टयोर्व्याप्यव्यापकसामान्यरूपतां विनैव द्रव्यमित्येकधीः ननु प्रसिद्धा । तद्वत् इदं रूप्यमिति बुद्धिर्भविष्यतीत्यप्रयोजको व्याप्यव्यापकभाव इत्यर्थः । ... ॥ ३५ ॥

**[Page 265]** ... कथं प्रकृतं त्यक्त्वा अन्यभाषणमित्याकाङ्क्षायां प्रकृतं तावदाह नाभाणीति । इदानीं परस्यान्यभाषणमाह भवांस्त्विति । या शुक्तित्वजातिर्यत्र रूप्ये नास्ति तत एव तत्र नो भाति च सा रूप्यव्यक्तिगतत्वेन शुक्तौ रूप्यमिति न भातीति भवान् वक्ति विभिन्नजात्योर्व्यक्त्योरैक्यधीर्नास्तीत्यधुना भवान्न वक्तीति योजना । एतदुक्तं भवति—मया भिन्नजात्योर्व्यक्त्योरैक्यधीरस्तीत्युक्ते त्वया तत्प्रतिषेध एव कर्तव्यो न शुक्तौ रूप्यमिति बुद्ध्यभावो वक्तव्य इति । ननु वादकथायां यावद्वादिनो मूकता न भवति तावन्न पराजय इति प्रमाणान्तरनिराकरणं [?] च कार्यमेवेत्याशङ्क्याह कथं चेति । ... ॥ ३६–३८ ॥

पूर्वं गोव्यक्त्योरैक्यधीर्जातिद्वारं विना न घटत इति यद्दूषणं शङ्कितं तदनूद्य निराकरोति जातिं मुखं विनेति । शुक्तिरूप्यखण्डयोः कदाचिच्छुक्तिरित्येकधीर्भवति कदाचिद्रूप्यमिति च । असावेकबुद्धिर्न तयोर्जात्यात्मना भवति । नाप्यग्रहात्पुञ्जग्रहणादेव । न हि भेदाग्रहे पुञ्जधीर्जायत इति भावः । उदाहरणान्तरमाह सद्व्यक्त्योरिति । सद्व्यक्त्योर्द्रव्यगुणयोरैक्यधीर्विद्यते । न च सत्त्वत्र मुखं द्वारमित्यर्थः ॥ ३९ ॥

... **[Page 266]** न जातिव्यक्तिते तयोरित्येतावच्छ्लोकेऽस्ति । कथमधिकमुक्तमित्याशङ्क्याह जातिव्यक्तिभावशब्देनेति । ... स्वपक्षेऽग्रहस्योपयोगमाह अस्मत्पक्षे त्विति ॥ ४० ॥

जातिद्वारं विना व्यक्त्योरैक्यधीर्नास्तीत्यत्र दूषणान्तरमाह किंचेति । ... नान्यत इत्यस्यार्थमाह जातेरभेद इति । ... द्वितीयार्धं व्याचष्टे अन्यत्वेऽपीत्यादिना ॥ ४१ ॥

**[Page 267]** अग्रहं विनापि भिन्नयोरभेदधीरन्यथाख्यातिश्चे-त्तदा अतिप्रसङ्गः। अतस्तत्परिहारायाग्रहस्योपयोगो वक्तव्य इत्याह मीयमानेति। न मया अतिप्रसङ्गस्तवापाद्यते त्वत्पक्षपर्यालोचनयैवाति-प्रसङ्ग इत्याह बाढमिति। दृष्टत्वादेव व्यवहारो न नास्तीति चेत् तर्हि सर्वत्र भिन्नाभिन्नतां मा चीक्लृपो मा कल्पय तदनुसारिव्यवहारा-भावादित्युक्तम्। तवापि वस्त्वनुसारिव्यवहारो नास्त्येवेत्याशङ्क्याह मम त्विति। ... ॥ ४२ ॥ ४३ ॥

अन्वयव्यतिरेकवत्त्वादग्रहस्य भ्रमोपयोगित्वं शङ्कते रूप्याकृतिरिति। अन्वयव्यतिरेकसिद्धमग्रहस्य भ्रमोपयोगित्वमित्येतत्सत्यम्। किंतु तदस्म-त्पक्षे घटत इत्याह सत्यमिति ॥ ४४ ॥ ४५ ॥ **[Page 268]** ... ॥ ४६ ॥ ... ॥ ४७ ॥

घटाद्यग्रहाद्वैलक्षण्यमाशङ्क्य दूषयति। अग्रहोऽनतिभेदाच्चेत्यादिना ॥ ४८ ॥

पूर्वं संक्षेपतो निरस्तं ग्रहस्य भ्रमहेतुत्वमिदानीं प्रपञ्चयितुमुपक्रमते ग्रहस्य भ्रान्तिहेतुत्व इत्यादिना ॥ ४९ ॥ ... **[Page 269]** ॥ ५० ॥

इतस्य गृहीते नान्यथाख्यातिरित्याह रूप्यात्मा भातीति। तस्य नैवान्यथाख्यानम्—ख्यातत्वादेव। नो खलु यत्ख्याति तदन्यथेति संविदनुसारिणामनुरूपमित्यर्थः। न चेदिदमात्मना भाति रूप्यांशस्तदा सुतरामन्यथाख्यानं न घटते अख्यातत्वादेवेत्यर्थः ॥ ५१ ॥

पुनरनुभवानुसारेणान्यथाख्यातिमाशङ्क्य परिहरति भाति रूप्य-शिरस्कं चेदित्यादिना। **[Page 270]** पूर्वपादेनैवेति। सर्वथा नेद-मनिदमित्यनेनेत्यर्थः। ... तत्र पूर्ववादी स्वाभिमतमैक्यमाशङ्कते तयो-र्मिथो भेदे भात्यपीति। अंश्यभेदात् इदंरूप्यांशयोरैक्यमित्युक्तम्। तत्राभेद एवांशयोर्न घटत इत्याह न तावदिति। ... अवयविवादिना-मेकैकावयवविलक्षणरूपत्वादवयविन इदमिति रूप्यमिति रूप्यमिदमिति

वा धीर्न स्यादित्युक्तम्। यद्येतद्दोषभीत्या विलक्षणरूपोऽंशी नेष्यते तत्राह अतद्रूपोऽंशीति। विलक्षणाकारप्रत्ययो ह्यवयविनि प्रमाणम्। तदभावे अनिर्वाच्यांशसमुदायव्यतिरिक्तो नास्त्येवांशीत्यर्थः। अनेकावयवरूपैरेकरूपवान् किं नाङ्गीक्रियत इत्याशङ्क्याह एकस्येति। ... ॥ ५२ ॥

पुनश्शुक्त्यग्रहस्यानुपयोगं दर्शयितुं परोक्तमनुभाषते रूप्याकृतिरिति। यथा भूभागाग्रहे तत्र घटाभावो ज्ञातुं न शक्यते तथा रूप्याभावधर्मिणी या शुक्तिस्तदग्रहे तत्र रूप्यं नास्तीति ज्ञातुं न शक्यत इत्युक्तम्। तद्वैपरीत्यमाह। ग्रहे तु तदुभयमिति। **[Page 271]** रूप्याकृतेरसत्त्वं भानं चेत्येतदुभयं ग्रहे युज्यते भिन्नयोश्शुक्तिरूप्ययोरभेदादित्युक्तम्। तत्कथमित्याकाङ्क्षायां भेदप्रयुक्तं तावदसत्त्वमाह रूप्याकृतिरित्यादिना। अभेदप्रयुक्तं भानं चाह अभेदाच्च शुक्तेरिति ॥ ५३ ॥

शुक्तौ रूप्याकृतेरसत्त्वं भानं च भ्रमबलात् यद्यपि न सिध्यति तथापि बाधबलात् सेत्स्यतीत्याशङ्क्याह शुक्तौ रूप्याकृतेर्भानमित्यादिना। ... ॥५४॥

इदानीमग्रहस्वभावपर्यालोचनयाप्यनुपयोगं दर्शयितुमुपक्रमते कस्येत्यादिना ॥ ५५ ॥

अथान्यधीरिति द्वितीयविकल्पानुवादः। तत्र दूषणम्— अन्यस्य ग्रहे सति भ्रान्तिस्स्यात् शुक्तिग्रहेऽपि तव अग्रहस्य भ्रमकारणत्वात्तस्य चान्यग्रहरूपत्वादिति। दूषणान्तरमाह अन्याग्रहे न तु भ्रान्तिरिति। **[Page 272]** यद्यन्याग्रहे सति अगृहीतेऽपि क्वचिद्भ्रमो दृष्टस्स्यात्तदा तदभावो मम दोषस्स्यात् न तु दृष्ट इत्याह नन्विति। अदृष्टिशब्देन चाक्षुषज्ञानाभावो विवक्षितः किं वा ज्ञानमात्राभावः। आद्यं प्रत्याह तन्नेति। द्वितीयमनूद्य दूषयति तत्रेन्द्रियान्तरेत्यादिना ॥ ५६ ॥

इदानीमन्याग्रहे शुक्त्यग्रह एव न संभवतीत्याशङ्क्य दूषयति शुक्तिग्रहोऽन्याग्रहणमित्यादिना। ... ॥ ५७ ॥ ५८ ॥

पुनः परोक्तमनूद्य अन्यग्रहे शुक्त्यग्रहो न घटत इत्येतमंशं पराकरोति

शुक्तिग्रहोऽन्याग्रहणमित्यादिना। यदि ग्रहद्वयातिरिक्तस्तत्संबन्ध्यग्रहो नास्ति तदा ग्रहद्वयं नित्यं स्यात् स्वव्यतिरिक्तस्वाभावशून्यत्वादात्मवत्। अतस्तदुभयोश्च ग्रहस्येत्यादग्रहः किमित्युभयोस्तह न स्यात् ग्रहद्वयस्यैवान्योन्यापेक्षया अग्रहत्वादित्यर्थः॥ ५९॥

**[Page 273]** इतश्चान्योन्यग्रह एवान्योन्याग्रह इति पक्षो न घटत इत्याह किंचेति॥ ६०॥

ग्रहातिरिक्तोऽग्रहो नास्तीति कोऽर्थः। किं ग्रहप्रागभावादिर्नास्ति उतानिर्वाच्यः। प्रथमं प्रत्याह अग्रहेऽसतीति। अस्ति चेद्वस्तुनि ग्रहस्तर्हि सदैवास्तीति वाच्यम्। अन्यथा कादाचित्कत्वे सत्यग्रहोऽन्योऽभ्युपेयस्स्यात्। स च त्वया नेष्टो यतोऽतः स ग्रहो नित्यस्स्यात्सर्ववस्तुष्वित्यर्थः। अनेनैवाभिप्रायेण ग्रहसहभावादि मया आपादितमित्याह अतश्शुक्त्यादीति। द्वितीयकल्पं दूषयति अथवेति। निवर्तकत्वाभावेऽपि प्रकाशकत्वेनार्थवत्त्वमाशङ्क्य परिहरति ग्रहोऽर्थप्रकाशार्थ इत्यादिना॥ ६१॥

कश्च शुक्त्यग्रहो नाम ग्रहाभाव उतान्यधीरिति विकल्प्य अन्यधीपक्षनिरासः प्रपञ्चितः। अधुना ग्रहाभावनिरासं प्रपञ्चयितुमुपक्रमते तर्हीत्यादिना। … ॥ ६२॥ **[Page 274]** ॥ ६३॥

… भेदेऽपीति। ग्रहात् प्रागभावादेरन्यवस्तुत्वेऽपि तत्सत्त्वे तस्य ग्रहस्य सत्त्वे तावपि प्रागभावप्रध्वंसाभावौ नैव स्तो न संभवत एव भेदमात्रस्याप्रयोजकत्वादविरोधाधीनत्वात्सहभावस्येत्यर्थः। असहभावे सिद्धे विरोधस्सिध्येदसहभाव एव त्वया निरूपयितुं न शक्यत इत्यभिप्रेत्याह सिद्धान्ती तयोस्तुतोरिति। … ॥ ६४॥ ६५॥

**[Page 275]** पूर्वं विरोधासिद्धिरुक्ता। अधुना तदभ्युपगमेऽप्यसहभावासिद्धिमाह नैकदा चेदिति। … द्वितीये हि सतीति। भेदविरोधयोरुभयाश्रयत्वादाश्रयाभावे चाश्रितासंभवादित्यर्थः॥ ६६॥

इतश्च प्रागभावकाले ग्रहो न भवतीति वक्तुं न शक्यत इत्याह

सति तत्प्रागभावे चेदिति। श्लोकाद्बहिरेव परिहारं तावदाह तन्निवृत्तिरिति। तन्निवृत्तिरपि प्रागभावविरोधिनी नो वा। आद्ये प्रागभावे सति न भवेत् ग्रहवदित्यर्थः। अनादिप्रागभावावरुद्धे काले निवृत्तिर्न भवति चेत् तर्हि निवृत्ते प्रागभावे तन्निवृत्तिरस्त्वित्याशङ्क्याह निवृत्त्यन्तरेति। पूर्वपूर्वनिवृत्त्यसिद्धावुत्तरोत्तरनिवृत्त्यसिद्धेरित्यर्थः। द्वितीयं दूषयति अविरोधिनी चेदिति। ग्रहो न भवेत् विरोधिनः प्रागभावस्य विद्यमानत्वादित्यर्थः। विकल्पद्वयोक्तदोषस्याभावमङ्गीकृत्य तन्निवृत्तिर्ग्रहात्पृथगिति श्लोकभागस्यार्थमाह यदि नामेत्यादिना। प्रागभावनिवृत्तिः प्रागभावविरोधिनी चेत् न भवेदिति दोष उक्तः। तत्राङ्गीकारो विरोधिन्यपि भवेदिति। अविरोधपक्षे निवृत्त्या सह प्रागभावोऽपि भवेदिति दोष उक्तः। तत्राप्यङ्गीकारस्तद्भावे तस्या निवृत्तेर्भावे सोऽपि प्रागभावो यदि न भवेदिति। तदापि तन्निवृत्तिर्ग्रहात्पृथक् पूर्वभाविनी वाच्येति तस्या एवासौ प्रागभावस्स्यात् निवृत्तेर्भावे तस्याभावान्निवृत्तेरभावे च भावादित्यर्थः। ग्रहस्यापि किं न भवतीत्याशङ्क्याह न तु ग्रहस्येति। निवृत्त्यनन्तरक्षणे जन्माभ्युपगमादित्यर्थः। तर्हि निवृत्तिरेव प्रागभावो भवत्वित्याशङ्क्याह अन्योऽपि प्रागभावो वाच्य इति। सत्यां निवृत्तौ ग्रहभावासंभवात् निवृत्तेर्निवृत्तावन्योऽपि प्रागभावो वाच्य इत्यनवस्था स्यादित्यर्थः। यद्यनवस्थापरिहाराय प्रागभाव एव ग्रहस्य नेष्यते तत्राह यदीति॥ ६७॥ ··· ॥ ६८॥

··· **[Page 276]** इदानीं विभुत्वमाक्षेपपूर्वकं प्रपञ्चयति ननु कूटस्थेऽपीत्यादिना। घटादौ शुक्तिग्रहो नास्तीत्यनेन त्वया न ग्रहो निषिध्यते भावान्तराभाववादित्वात् किं त्वन्यदस्तीत्युच्यते। अतः परिच्छेदे मानाभावाद्विभुत्वं सिद्धमित्यर्थः॥ ६९॥

एवं तावद्ग्रहस्य कूटस्थत्वं विभुत्वं च प्रपञ्च्य इदानीं वस्तुनोऽद्वितीयत्वं प्रसञ्जितं प्रपञ्चयति शुक्तिग्रहे चेत्यादिना। ··· ॥ ७०॥

**[Page 277]** शुक्त्यद्वैतमेवाक्षिप्य समाधत्ते ननु शुक्तिग्रहवदित्यादिना। एकस्य कर्तृत्वकर्मत्वविरोधं मत्वा आह नन्विति। सिद्धान्त्याह अनया गिरेति। ··· ॥ ७१ ॥

ग्रहाभावस्य भावत्वे साधारण्येन दूषणमुक्त्वा अधुना भावविशेषविकल्पेन दूषणमाह इतश्चेत्यादिना। पक्षचतुष्टये तावत्साधारणं दूषणमाह सर्वथेति। तेषां ग्राह्यादीनां ग्रहादन्योन्यं वा अन्यत्वासिद्धेर्भावभेदे मानाभावान्नान्यो ग्रहाभावः प्रमातुं शक्यत इत्यर्थः। कथं भावभेदे प्रमाणाभाव इति चेत् विस्मृत्य पृच्छसि। शृणु—ग्रहे तावद्भेदे प्रमाणाभावं ब्रूमः। किं स्वत एव ग्रहभेदः किं वा अर्थभेदादुत ज्ञातृभेदात्। न तावदाद्य इत्याह नाभिन्न इति। एकाकारस्फुरणं हि वस्तुन एकत्वे प्रमाणं भिन्नाकारस्फुरणं च भेदे। ग्रहस्वरूपे च वैलक्षण्यास्फुरणान्न भिन्नत्वं संभवति। अन्यथा स्वरूपादपि भेदप्रसङ्गात्। अतः प्रामाणिकत्वाभावे यस्स्फुरति भेदः सोऽनिर्वाच्याज्ञानमहिम्नैवेत्यर्थः। द्वितीयं प्रत्याह द्वयोरपीति। तृतीयं दूषयति तस्मान्नापीति। तस्मादिति ग्रहस्वरूपभेदे प्रमाणाभावादित्यर्थः। एतदेवाह विवरणे एकस्य ग्रहे सतीति। एकस्य पुंसश्शुक्तिग्रहे सति यद्यतद्ग्र[न्यस्याग्र ?]हस्स्यात्तदा ज्ञातृभेदाद्ग्रहभेदस्स्यात्। तव च ग्रहप्रतिषेधानभ्युपगमान्न ग्रहान्यत्वं सिध्यतीत्यर्थः। **[Page 278]** अथ भिन्नव्यवहारसाधनत्वात्प्रतिपुरुषं ग्रहभेदस्तत्राह असति चाग्रह इति। ज्ञानक्रियायां स्वतन्त्रो ज्ञाता भवति। नित्यत्वे तु ज्ञानस्य तन्न स्यात्। अतश्च ज्ञातृत्वसिद्ध्यन्यथानुपपत्त्या ग्रहभेदो वाच्य इत्याह ग्रहस्य ध्रौव्य इति। अनिर्वाच्याज्ञाननिर्मितभेदेनाप्यस्माकं ज्ञातृज्ञानभेदव्यवहारस्संभवति युष्माकमेवायं दोषोऽस्त्वनिर्वाच्याज्ञानानिष्टेरित्यर्थः ॥ ७२ ॥ ७३ ॥

ग्रहभेदे मानाभावमुक्त्वा ग्राह्यादिभेदे मानाभावमाह किंचेति। एकग्रहाव्यभिचारतस्सर्वस्य तत्स्वभावत्वनिश्चयसंभवादित्यर्थः। अग्न्यौष्ण्यवत्सहोपलब्धेरित्युक्तं बौद्धानुसारेण। इदानीं ततो विशेषमाह औष्ण्यस्य

लिति। दूरतरेऽग्नौ दृष्टेऽप्यौष्ण्यस्याग्रहात्कथंचिल्लिङ्गदगतिरपि तत्र स्यान्न लिङ्ग तथा स्फुरणाव्यभिचारनियमादित्यर्थः। उपसंहरति अतो नान्यो ग्रह इति। ग्रहपदं श्लोकस्थं ग्राह्यादीनामुपलक्षणार्थम् ॥ ७४ ॥

एवं तावत्साधारण्येन ग्राह्यादेर्ग्रहाभावत्वं प्रतिषिध्य इदानीं प्रत्येकं दूषणान्तरमाह न च ग्राह्य इति। तद्भावे तस्य ग्रहाभावस्य भावे ग्रहो न चेत्तव सहभावविरोधात् तर्हि ग्राह्यो ग्रहाभावो न वक्तव्यस्तयोस्सह-भावादित्यर्थः। विपक्षे दोषमाह न रूप्ये सतीति। ग्राह्यस्य ग्रहा-भावत्वपक्षे रूप्ये सति शुक्तौ वा सत्यां तद्ग्रहौ न स्यातां तयोर्वा ग्रहयोस्सतोः ते शुक्तिरूप्ये न स्यातामिति सहभावासंभवे ग्राह्यग्राहकभाव एव न स्यादित्यर्थः। एतदेव विवरणे दर्शितं अन्यथा तयोरसिद्धेरिति। असति रूप्ये मिथ्याभूते शुक्तौ च परमार्थरूपायामसत्यामालम्बनाभावेन तद्ग्रहौ न संभवतः। तद्ग्रहयोश्च ··· इति केचित्। ग्राह्यस्य ग्रहाभावत्वा-संभवे दर्शितन्यायमन्यत्राप्यतिदिशति ग्रहीतरीति। ग्रहीत्रादेरपि ग्रह-सहभावित्वाद्ग्रहाभावत्वं न संभवतीत्यर्थः ॥ ७५ ॥

प्रकारान्तरेण भेदस्याप्रामाणिकत्वाभिधानेन ग्रहादन्यवस्तुत्वं तद-भावस्य निषेधति ग्रहो न भवतीत्यादिना। **[Page 279]** अन्योन्या-भावधीः किमसिद्धे भेदे अन्यत्वं साधयति उत सिद्धे। प्रथमेऽसंभवो भेद-साधनस्येत्याह तत्रासिद्ध इत्यादिना। द्वितीयं प्रत्याह न च सिद्ध इति। नान्या गौर्भेदिका तयोरिति श्लोकपदविरुद्धं विवरणमित्याशङ्क्याह गोशब्देनेति। अन्या भेदप्रमा नास्तीत्युक्तम्। तत्र शङ्कते नन्विष्ट इति। परिहरति न तस्या अपीति। पूर्वभेदप्रमाया अपि धर्मिप्रतियोगिभेदे सिद्धेऽसिद्धे च भेदसाधकत्वं न भवति वैयर्थ्यादशक्यत्वाच्चेत्यर्थः ॥ ७६ ॥

उक्तन्यायमन्यत्राप्यतिदिशति एवं सर्वेष्विति। प्रमाणान्तरेण भेदे सिद्धेऽसिद्धे च नान्योन्याभावः प्रमाणतस्सिध्यतीत्येक एव भावस्स्यात् न तु भावान्तरं यस्य त्वया ग्रहाभावत्वं वर्ण्येतेत्यर्थः ॥ ७७ ॥ ··· ॥ ७८ ॥

ग्रहादन्यो ग्रहाभावो नैव वा ग्रह एव वा इति त्रिधा विकल्पितम्। तत्राद्यं विस्तरेण निरस्य परिशिष्टपक्षद्वयं निराचष्टे नाममात्रभिदैवेति। अभावो नाम वस्त्वेव नास्तीत्यपक्षेऽपि एवं नाम-मात्रभेद एव स्यात्। अपर्यायत्वेन प्रसिद्धयोर्ग्रहाग्रहशब्दयोः पर्यायत्वं प्रसज्यत इति भावः ॥ ७९ ॥

प्रकारान्तरेणाग्रहमाशङ्क्य दूषयति आत्मनोऽपरिणामश्चेदित्यादिना ॥ ८० ॥ ८१ ॥

**[Page 280]** एवं तावदग्रहस्य अन्यथाख्यातिवादिनां दुर्निरूप-त्वादनुपयोगमभिधाय सदृशग्रहस्यानुपयोगं दर्शयति सदृशार्थग्रह इत्या-दिना ॥ ८२ ॥

सदृशार्थग्रहः क्वोपकारी कथ्यतां त्वयेत्युक्ते परस्य मौनमालक्ष्य स्वयमेव सिद्धान्ती विकल्प्याह रूप्यबोधेऽन्यथात्वे वेति ॥ ८३ ॥

यत्र अन्यदर्शनादन्यदर्शनं तत्र संबन्धग्रहणाधीनमिति व्याप्तिसंबन्धो वाच्य इत्युक्तम्। तत्र नेयं व्याप्तिरिति शङ्कते सदृशग्रहणे व्याप्तिग्रहं विनापीति। परिहारत्वेन श्लोकं योजयति नेति ॥ ८४ ॥

**[Page 281]** अन्वयव्यतिरेकाभ्यां हि कार्यकारणभावावधारणम्। सादृश्ये तदभावान्न कारणत्वमित्युक्तम्। तदुपपादयति शङ्खः पीत इति। उलूकानां भानौ तमोऽध्यासो विद्यते। न च किमपि सादृश्यमस्ति। नभोऽसितं खं कृष्णमिति सार्वजनीनो भ्रमः। आकाशकार्ष्ण्ययोर्निर-वयवत्वान्न गुणावयवसाम्यं नाम सादृश्यमस्ति। द्वौ चन्द्रावित्यत्रापि न द्वित्वस्य चन्द्रसादृश्यमस्ति। तथा अकारे स्वरितत्वधीस्सदृशदर्शनात्कुतः। न कुतोऽपीत्यर्थः। अथ तत्राप्यगृह्यमाणभेदत्वं नाम एकवस्तुसादृश्यमस्ति तत्राह सर्वत्र किंचित्सादृश्यमिति। खण्डो गौश्शुक्लो घट इत्यादेरपि भ्रमत्वप्रसङ्गः। सादृश्यदोषस्यागृह्यमाणभेदत्वस्य विद्यमानत्वादित्यर्थः। यत्र सादृश्यं नास्ति तत्र मा भूत् सादृश्यजो भ्रमः शुक्तिरूप्यादौ भविष्यतीत्या-

शङ्काह अत्रासादृश्यजत्वेति। दोषान्तरेणापि भ्रमे संभवति न सादृश्यस्य कारणत्वं कल्पयितुं शक्यं वह्निपैङ्गल्यवद्वहिरङ्गत्वादित्यर्थः। अस्तु तर्हि वस्तुमात्रग्रहो भ्रमहेतुरित्याशङ्काह वस्तुमात्रग्रहाच्चेदिति ॥ ८५ ॥ ८६ ॥

किंच सदृशग्रहस्य वस्तुमात्रग्रहस्य च भ्रमहेतुत्वं किमतीतस्य वर्तमानस्य वा। नाद्य इत्याह मूढे निमीलिताक्षे चेति। द्वितीयमनुवदति भ्रमग्रहौ सकृच्चेदिति। तर्हि किमेकविषयौ भिन्नविषयौ वा। नाद्य इत्याह नैकचेति। विवरणे त्वधिकमुक्तं न सव्येतरेति। अन्यत्र चेद्ग्रह इति द्वितीय विकल्पानुवादः। तत्र दूषणमाह ग्रहात्किं स्याद्भ्रमस्यैवमिति। [Page 282] ग्रहांशोऽपि भ्रमेऽस्ति चेदित्यस्यार्थमाह अथोक्तदोषभीत्येति। किं नान्योऽंशो ग्रह इत्यस्यार्थमाह भ्रमस्य ग्रहत्वं किं न स्यादेकज्ञानांशत्वाविशेषादित्यर्थः। ··· कथं तर्हि लोके भ्रमग्रहविभाग इत्याशङ्काह अत्रासंयुक्तग्रहस्त्विति। यथा बलीवर्दस्य गोत्वेऽपि गौरियं बलीवर्दोऽसाविति भेदव्यवहारोऽवान्तरभेदात् तथा ग्रहस्य भ्रमत्वेऽपि दोषोत्थत्वाद्भ्रमत्वमित्यर्थः ॥ ८७ ॥ ८८ ॥

किंच भ्रमज्ञानमिति भ्रमगतज्ञानत्वप्रसिद्ध्यन्यथानुपपत्त्यापि ग्रहांशस्त्वैरेष्टव्य इत्याह भ्रमांशं चेति। अधिष्ठानसामान्यांशग्रहतादात्म्यात् भ्रमे ग्रहत्वव्यवहारो न तु ग्रहांशकत्वादिति मन्वानस्सिद्धान्ती ग्रहस्यांशत्वं निषेधति अत्रोच्यत इति। स्वशब्देन भ्रमो भण्यते। स्वस्यार्थस्स्वार्थः। स योग्यो यस्यास्तस्य तत्स्वार्थयोग्याक्षम्। तद्योगाज्जातो ग्रहांशो यस्य स तथोक्तः। एवंभूतग्रहांशकश्चेद्भ्रमः सोऽक्षाभावात्स्वप्ने न भवेदित्यर्थः। अविशेषे ग्रहमात्रे भ्रमहेतौ सति अग्नौ दृष्टे कदाचिद्रसभ्रमस्स्यादित्यर्थः ॥ ८९ ॥

सर्वाक्षोपरमस्स्वप्नेऽप्यसिद्ध इत्याशङ्क्य दूषयति स्वप्नेऽपीत्यादिना। [Page 283] अवर्तमाने परोक्षग्रहहेतुत्वं मनसोऽभ्युपगम्यापरोक्षग्रहहेतुत्वं निरस्तम्। इदानीं केवलस्य परोक्षग्रहहेतुत्वमपि जागरे न दृष्टमित्याह न च परोक्षग्रहोऽपीति। जागरितादैलक्षण्यमाह इहादृष्टोऽपीति। तथापि ग्रहांशत्वं भ्रमस्य न सिध्यतीत्याह सोऽपीति ॥ ९० ॥

मनोमात्रयोग्यस्य सुखादेर्ग्रहे स्वप्नेऽपि भ्रमो भवति । अतो न केवलभ्रमत्वं स्वप्नस्येत्याशङ्क्याह मनोमात्रेणेति । श्रोत्रात्पयस्तिक्तमित्यादि-रसभ्रमो नेष्यते चेत्तर्हि मनसो योग्यं न भवति यत् रूपादि तद्भ्रम-स्स्वप्ने मनसा न वक्तव्यस्स्यात् श्रोत्राद्रसभ्रमस्यापि प्रसङ्गादित्यर्थः । पूर्वं मनसा सुखादिग्रहमङ्गीकृत्य सुखे दुःखभ्रमो दुःखे सुखभ्रमो वा स्यान्न नीलपीतादिभ्रम इत्युक्तम् । इदानीं मनसा सुखादिग्रहोऽपि नास्ति साक्षिवेद्यत्वाभ्युपगमादित्याह मनोमात्रेण स्वप्ने कस्यचिदिति ॥ ९१ ॥

बाधानुपपत्तिप्रसङ्गादपि नावर्तमानार्थग्रहस्स्वप्ने घटत इत्याह स्वप्नेऽपीति । अधिष्ठानयाथात्म्यज्ञानं बाधकं अन्योन्याभावज्ञानं वा । आद्ये अनेकाधिष्ठानग्राहकमेकमनेकं वा ज्ञानं दुस्संपादमित्युक्तम् । द्वितीय-मपि न संभवतीत्याह नाप्येकदेति ॥ ९२ ॥

निद्रादोषोत्थमेव बाधकज्ञानमपीत्याशङ्क्य दूषयति स्याच्चेदिति । ⋯ [Page 284] अवान्तरप्रमेयमुपसंहरति अतो निद्रादोषस्येति । दोषा-भावे ज्ञानकारणमेवास्ति दोषभावे च न सम्यग्ज्ञानमित्यर्थः । पूर्वप्रकृत-मुपसंहरति तथान्येति । देशान्तरादिगे रूप्ये चेद्भ्रान्तिः तदा दोषे सत्यसति च बाधो न स्यादिति प्रकृतम् । तत् सिद्धं दोषस्यावर्तमान-ग्राहकत्वाभावादित्यर्थः ॥ ९३ ॥ ⋯ ॥ ९४ ॥

⋯ रूप्ये चेदिति । अधिष्ठानज्ञानस्य बाधकत्वस्योपपादितत्वात् तद्रूप्यं न शुक्तिरिति बाधकस्स्यात् न तथानुभव इत्यर्थः ॥ ९५ ॥

एवं तावद्विकल्पत्रयमध्ये मध्यविकल्पं बहुवक्तव्यत्वेन निरस्य आद्यमनूद्य निराचष्टे तर्ह्यस्त्वित्यादिना । शुक्तौ रूप्यधीर्भ्रान्तिस्थले न संभाव्यते रूप्यस्य अतिविप्रकर्षेणाक्षसंनिकर्षाद्ययोगाद्दृष्ट्यसंभवादित्यर्थः । ननु सदृश-दर्शनोत्थापितसंस्काराद्व्यवहितस्यापि स्फुरणं संभाव्यते तत्राह दृष्टेऽपीति । यद्देशकालावच्छिन्नं रूप्यमनुभूतं तस्य तथैव स्मृत्या अवगतत्वात् न

भ्रान्तिगोचरत्वं संभवति संप्रतिपन्नस्मर्यमाणवदित्यर्थः । अथ दोषसह-कारिवशाद्यथावन्न स्मर्यते तत्राह अयथादर्शनादित्यादिना । प्रथमं दूषयति रूप्यांशाग्रहण इति । ... ॥ ९६—९८ ॥

**[Page 285]** यद्यपि रूप्यांश एव स्मर्यते तथापि दोषवशात्तत्रैव परिपूर्णरूप्यबुद्धिर्भवतीत्याशङ्क्याह रूप्यांशे रूप्यबुद्धिश्चेदिति । एकस्यांश-स्याग्रहे परिपूर्णबुद्धिः कथम् । न कथंचित् निरालम्बनत्वप्रसङ्गाद्बुद्ध्यंश-स्येत्यर्थः । इतश्च नांशे रूप्यबुद्धिरित्याह अंशे चेद्रूप्यधीरिति ॥ ९९ ॥

द्वितीयविकल्पमनूद्य दूषयति अयथादर्शनमिति । स्वातन्त्र्येण ग्रहीतु-मशक्यत्वादित्यर्थः ॥ १०० ॥

पूर्ववादी रूप्यस्यावच्छेदकदेशादिग्रहं विनापि रूप्यबुद्धिं संभावयति रूप्यस्य देशापेक्षत्वादिति । सिद्धान्त्याह नैवमिति । ... ॥ १०१ ॥

इतश्च न शुक्तौ रूप्यधीस्संभवतीत्याह रूप्यं हीति । ... ॥ १०२ ॥

यद्यपि रूप्यस्यायथादर्शनाद्भ्रमो न संभवति तथापि शुक्तेरयथा-दर्शनादस्त्वित्याशङ्क्याह नायथादर्शनादिति । शुक्तेस्सकाशाद्विवेकेन रूप्यस्य दृष्टत्वादुक्तप्रकारेणायथादर्शनस्य निरस्तत्वादित्यर्थः । अस्तु रूप्यस्य विवेकः किमित्येतावता भ्रमो न स्यात् तत्राह अविवेके हीति ॥ १०३ ॥

ननु रूप्यात्मकाशाद्यावच्छुक्तेर्विवेको न गृह्यते कथं तावद्रूप्यस्य विवेक-स्सिध्यति । ततोऽसिद्धो हेतुरित्याशङ्क्याह शुक्ते रूप्याद्विवेके चेदिति । ... ॥ १०४ ॥

इदानीं तृतीयः कल्पो निरस्यत इत्याह रूप्ये शुक्तौ चेति । तयो-रुभयोर्ग्रहे सति तद्विरोधादेव नोभयोरन्यथाख्यातिस्संभवति नाप्यतद्ग्रहे सुषुप्तादावदर्शनादित्यर्थः । अथ स्वरूपद्वयग्रहेऽपि विवेकग्रहाभावाद्भ्रम-स्स्यात् तत्राह अविवेकग्रहात्स्याच्चेदिति ॥ १०५ ॥

कृत्स्नवस्तुदर्शनस्य विवेकपदार्थत्वादंशग्रहेऽविवेको घटत इत्याशङ्क्याह अविवेकोऽंशबोधाच्चेदिति । ... ॥ १०६—१०७ ॥

[Page 286] ... तर्हि कान्ताकरादिगतलौकिकजातिव्यक्त्यात्मकरूप्याकारा बुद्धिरंशद्वयालम्बनास्त्वित्याशङ्क्याह न चान्यरूप्यधीरिति । ...
॥ १०८ ॥

पूर्वमंशग्रहे सत्यपि विवेकमङ्गीकृत्य रूप्यबुद्ध्यसंभव उक्तः । इदानीमंशयोरप्यविवेको न संभवतीत्याह शुक्तिरूप्यांशबोधेऽपीति ॥ १०९ ॥ ...
॥ ११० ॥ ... ॥ १११ ॥

अवान्तरप्रमेयमुपसंहरति तस्मादिति ॥ ११२ ॥ [Page 287]
॥ ११३ ॥

विरोधमेव विवृणोति रूप्यबुद्ध्यापि चेदित्यादिना । अन्यथाख्यापनवादी प्रष्टव्यः— किं रूप्यबुद्ध्या शुक्तिर्ज्ञायते किं वा रूप्यमेव न वा किंचित् । आद्ये सा शुक्तिरपि रूप्यमेव स्यात् रूप्यबुद्धिवेद्यत्वात्संप्रतिपन्नरूप्यवदित्यर्थः । विपक्षे बाधकमाह न चेदिति । न चेत्सा शुक्तौ रजतं तदा घटवत् रूप्यबुद्धिवेद्यत्वं न स्यादित्यर्थः ॥ ११४ ॥

द्वितीयं प्रत्याह रूप्यं चेदिति । तृतीयं पराकरोति न तया भाति चेदिति । त्रिधाप्यन्यथाख्यापनं विरुद्धमेवेति भावः ॥ ११५ ॥ ...
॥ ११६ ॥

॥ इतीष्टसिद्धिविवरणे तृतीयोऽध्यायः ॥

---

# अथ चतुर्थोऽध्यायः ।

[Page 288] तृतीयविकल्पनिरासाय चतुर्थैकदेशमारभते अथान्यथा भवेदिति । ... ॥ १ ॥

प्रकारान्तरेणान्यथात्वमाशङ्क्य परिहरति रूप्यधीजन्मेति । बडबाया-मश्वायाम् । ... ॥ २ ॥

शुक्तिजा रूप्यधीः कथमित्युक्तम् । तदाक्षिप्य समाधत्ते रूप्या-कृतित्वादित्यादिना ॥ ३—५ ॥

[Page 289] सत्यविवेके रूप्ये रूप्यधीर्न स्यादित्युक्तम् । तद्दर्श-यितुमविवेकं विभजते कोऽविवेक इति ॥ ६ ॥

प्रथमं प्रत्याह अग्रहे न विवेकस्स्यादिति । शुक्त्यादिग्रहणानुदये सति अस्वप्रकाशत्वान्न स्वरूपावभास एव स्यात् कुतश्शुक्तौ रूप्यबुद्ध्यवसर इत्यर्थः । द्वितीयं प्रत्याह विपरीतग्रहोऽस्थित इति । पूर्वमेव निरस्त इत्यर्थः । तृतीयं प्रत्याख्याति कृते नान्यतरज्ञानमिति । यथा दधि-गुडाभ्यां कृतायां शिखरिण्यां न दधीति गुड इति वा धीः तथा शुक्ति-रूप्याभ्यां कृते वस्त्वन्तरेऽन्यतरज्ञानं न स्यात् । अतो भ्रान्तिर्न घटत इत्यर्थः । अविवेके चेद्भ्रान्तिर्न स्यात् तर्ह्यस्तु द्वयोस्स्वरूपग्रहे । तत्राह तथा ग्रह इति । स्वरूपग्रहविरोधान्न रूप्यधीयः शुक्त्यालम्बनत्वं घटत इत्यर्थः ॥ ७ ॥

... [Page 290] इतश्च रूप्यधियः शुक्त्यालम्बना वक्तुं न शक्यत इत्याह कथं चेयमिति । अनया धिया शुक्तिस्त्वेत्वया नाज्ञायि न ज्ञाता तदा कथं शुक्त्यालम्बनेयं धीस्त्वया अज्ञायि । का अनुपपत्तिरित्यत आह न हीति । ... ॥ ८ ॥

साक्षाच्छुक्त्यालम्बनत्वाभावेऽपि दोषबलाद्रूप्यगापि बुद्धिश्शुक्तिमेव भातीति मतमाशङ्क्याह तत्स्थापीत्यादिना ॥ ९ ॥ १० ॥

स्वभासकत्वाभावान्न स्वान्यथाभानसाधकत्वं संभवतीत्युक्तम्। तद्दिश-णोति भास्यत्वेनेति ॥ ११ ॥

द्वितीयविकल्पं दूषयति रूप्यधीर्नान्यबुद्ध्यापीति ॥ १२ ॥

**[Page 291]** शुक्तेः रूप्यबुद्धेश्चैकया धिया ग्रहो मा भूत्। किमित्येतावता शुक्तिमेव न भातीत्याशङ्क्याह शुक्त्यग्रह इति। रूप्य-बुद्ध्यग्रहेऽप्येवमिति। ··· ॥ १३ ॥

प्रौढवादेन ग्रहणमभ्युपगम्याह ग्रहणेऽपीति। शुक्तिश्च रूप्यधीश्च शुक्तिरूप्यधियौ तयोरिति विग्रहः। ··· द्वितीयाध्यायोपक्रमे सत्ख्याति-पक्षो मायया विना न सिध्यतीति प्रतिज्ञातम्। तत्रान्यथाख्यातेरसिद्धिं प्रपञ्च्य अतिदेशेन इतरयोरसिद्धिं प्रपञ्चयति अख्यात्यात्मख्यातिपक्षौ चेति। यथार्थख्यातित्वे भ्रमव्यवहारायोगादवश्यमन्यथाख्यानमेष्टव्यम्। तच्च मायां विना न संभवतीत्यर्थः। न केवलमस्माभिर्बलादन्यथाख्यान-मापाद्यते तैरपीष्टमिति तेषां मतमाह तथाहीत्यादिना। चिरंतना-ख्यातिमतपर्यालोचनया अन्यथाख्यानमापाद्य आधुनिकाख्यातिमते दोषा-न्तरमतिदिशति यदा त्वविवेकग्रह एवेति। ··· ॥ १४ ॥

**[Page 292]** ··· उभयविषयं ज्ञानान्तरमङ्गीकृत्य तेन विवेको ग्रहीतुं न शक्यते धर्मिप्रतियोगिविभागासिद्धेरित्युक्तम्। इदानीं तदपि नास्तीत्याह न च तद्विषयमिति। नोभयविषयमेकं ग्रहणं संभवति स्मर्यमाणस्य ग्रहणकर्मत्वविरोधात् नाप्येकं स्मरणं गृह्यमाणस्य स्मरण-कर्मत्वविरोधादित्यर्थः। ··· एवं तावदशक्तिं व्याख्याय अनवस्थां व्याचष्टे ज्ञानविषयविवेकार्थेति। अनवस्थापरिहारमाशङ्कते स्मृतिग्रहकर्मत्वे इति। यदि ज्ञानान्तरगृहीतस्य ग्रहणाय ज्ञानान्तरापेक्षा तदा ज्ञानान्तरस्यापि तदपेक्षा तुल्येति स्यादनवस्था। न तु तथा। किंतु

प्रथमज्ञानेन वस्तुमात्रं सिद्धं ज्ञानान्तरेण तद्गतकर्मत्वे विविच्येते इत्यर्थः। भवेदनवस्थापरिहारो यदीयं कल्पना अनुभवानुसारिणी स्यादित्याह न एतदनुरूपेति। नेदं रूप्यं शुक्तिकेयमित्यादि ज्ञानं बाधकं प्रसिद्धं न त्विदं ग्रहणकर्म तत् स्मरणकर्मेत्यनुभूयत इत्यर्थः। सिद्धविवेकयोरिति किमिति विशेष्यते तत्राह शुक्त्याद्यविवेक इति। इतश्च न कर्मत्वविवेको बाध इत्याह न चार्थयोरिति। … **[Page 293]** उक्तं प्रमेयं संक्षिप्याह किं बहुनेति। इतश्चाविवेको भ्रमो विवेको बाध इत्ययुक्तमेवेत्याह ग्रहणस्मरणयोरिति। … ॥ १५ ॥

पूर्वं स्मृतेर्बाह्यार्थविषयत्वमङ्गीकृत्य स्मर्यमाणविवेको न भ्रम इत्युक्तम्। इदानीं स्मृतेर्बाह्यार्थविषयत्वमेव नास्तीत्याह इतश्चेति। पौर्णमास्यां चन्द्रं दृष्टवतः कृष्णपक्षे चन्द्रग्रहो न्यूनार्थो भवति शुक्लपक्षे चाधिकार्थो भवति पौर्णमास्यन्तरे तुल्यार्थो भवति। तथापि ग्रह एव सः … पुनरप्रामाण्यं स्मृतेराशङ्कते गृहीतमिति। … ॥ १६ ॥

**[Page 294]** इतश्च स्मृतिर्बाह्यालम्बनेत्याह नष्टस्मृतिरिति॥ १७॥

नष्टोऽप्यर्थस्तावत्स्मृतौ भाति ततो बाह्यालम्बनत्वाभावे कथं स्मृतेस्सार्थकत्वमित्याशङ्क्याह बुद्ध्याकार इति। यथा मुद्रया लाञ्छिता प्रतिमुद्रा तत्सदृशी भवति तथा पूर्वानुभूतार्थसदृशो बुद्धेरवस्थाविशेषस्संस्कारनिमित्तो भवतीत्यर्थः। … ॥ १८ ॥

उत्तरश्लोकानां तात्पर्यमाह आत्मख्यातिपक्षे चेति। … भ्रमाभावे तद्बाधिका सम्यग्धीरपि न स्यात्। एवं सति सर्वं जगदन्धमूकं संभवेत् सम्यग्ज्ञानान्मौढ्यनिवृत्त्यभावादित्यर्थः। किंच भ्रमनिवर्तकसम्यग्ज्ञानाभावे सति सम्यग्ज्ञानपूर्वकमाचार्यस्य शास्त्रप्रणयनं तदुपदेशाच्छिष्यभ्रमनिवृत्तिरित्येतत्सर्वं निर्मूलं स्यात्। अतो बहुदोषत्वान्नात्मख्यातिर्भ्रम एष्टव्य इत्यर्थः॥ १९—२१ ॥

## ॥ इतीष्टसिद्धिविवरणे चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः।

[Page 295] एवं तावत्सद्वादात्मलयोऽपि मायां विना न सिध्यन्तीत्युपपाद्य इदानीं सिद्धान्तश्लोकोपक्रमे योऽन्यथाख्यातिपक्षे विशेष उद्भावितस्तस्य दुर्निरूपत्वं दर्शयितुमुपक्रमते कथं शुक्तेरभाव इत्यादिना। भावान्तराभाववादी स्वयूथ्यं दूषयति भावान्तरधर्मश्चेदित्यादिना। ... यथा भाति तथा नास्तित्वं मा भूत् किमित्येतावता भ्रमत्वं न स्यादित्याशङ्क्याह तथा नास्ति चेदिति। यथा भाति तथा नास्ति चेत्तदैव भ्रमस्स्यात् न तु प्रकारान्तरेण स्वरूपख्यातेर्लोके भ्रमत्वाभावादित्यर्थः। ... धर्माभाववादी स्वानुभवं व्याचष्टे ननु नासतीति। ... तत्रापसिद्धान्तं प्रसञ्जयति तर्हीति। यतो धर्माभावपक्षोऽपसिद्धान्तस्स्यादत इत्युपसंहारः। पूर्वोक्तमनूद्य दोषमाह तत्रोच्यत इति॥ १—२॥

[Page 296] भावान्तराभावशब्दयोः पर्यायत्वं स्यात्। भावभावान्तरशब्दयोस्तु कथमित्युक्ते भावे भेदासंभवादित्याह शृण्विति। ... ॥ ३॥

अन्योन्याभावं विना भेदसिद्धिर्नास्तीति वदतोऽन्योन्याश्रयत्वमापद्यत इत्याह नान्योन्याभावसिद्धिश्चेति। ... भेदस्य वस्तुस्वभावतया अन्योन्याभावनिरपेक्षस्यैव सिद्धेरन्योन्याश्रयत्वदोषो नास्ति प्रागुक्तस्य हेतुरप्रयोजक इत्याह ननु भिन्नयोरिति। भिन्नयोरिति षष्ठीप्रयोगाद्भिन्नौ भावावन्योन्याभावौ न भवत इत्युक्तम्। धर्मपक्षे च त्वयैव दोष उक्त इत्याह तद्धर्मश्चेदिति। पूर्वं निरपेक्षभेदग्रहमङ्गीकृत्यान्योन्याभावो निरस्तः। इदानीं सोऽपि न संभवतीत्याह न चेति। प्रतियोगिभेदग्रहं विना न धर्मिभेदग्रहस्संभवति एकस्मिन्नपि धर्मिणि भेदग्रहप्रसङ्गात्। अतः किं य एव धर्मिभेदग्रहस्स एव प्रतियोगिभेदग्रहः किं वा प्रतियोग्य-

न्तरभेदग्रहाधीनः प्रतियोगिभेदग्रहः । प्रथमे तस्मिन्नेव सिद्धे स सिध्यतीत्यात्माश्रयत्वं चरमे चानवस्थेत्यर्थः ॥ ४ ॥ ··· [Page 297] ॥ ५ ॥ ··· ॥ ६ ॥

इदानीं भावान्तरमभ्युपगम्य तस्य स्वाभावत्वं किं प्रतियोगिनिरपेक्षं तत्सापेक्षं वेति विकल्प्य आद्यं दूषयति भावान्तरमभावस्त्वित्थत इति । ··· ॥ ७ ॥

निरस्तविकल्पद्वयमध्ये प्रथमविकल्पमाश्रित्य विशेषं शङ्कते व्यज्यत इति । ··· सिद्धान्त्याह भ्रमा नेन्द्रियजा धिय इति । रूप्यमिदं सर्पोऽयमित्यादिभावधियो भ्रमा न स्युः । ··· [Page 298] पूर्वं चोद्यावकाशमभ्युपगम्य उत्तरमुक्तम् । इदानीं सोऽपि नास्तीत्याह इदमेवावोचमिति । प्रतियोगित्वेनापेक्ष्यमाणशुक्तिप्रतीतिं विना या रूप्यप्रतीतिर्भवति सा भ्रान्तिर्न स्यात् अभावप्रतीतित्वाभावादिति इदमेव पूर्वश्लोकेऽप्युक्तवानस्मि न तु शुक्त्यपेक्षया रूप्यमभावस्स्यादित्युक्तवानस्मि । यदि शुक्त्यपेक्षया रूप्यमभावस्स्यादिति मयोक्तं भवेत् तदा तत्प्रतिषेधेन चोद्यावकाशस्स्यादित्यर्थः ॥ ८ ॥

पक्षान्तरमाशङ्क्य तन्निरासाय श्लोकं योजयति स्वाभावात्मना ख्यातिरित्यादिना ॥ ··· ॥ ९ ॥

किंच भावान्तरत्वं जन्यं व्यङ्ग्यं वेति विकल्प्य दोषान्तरमाह श्लोकद्वयेन भावान्तरत्वमित्यादिना । उक्तश्लोकमेव तावत्पक्षद्वयेऽपि साधारणं दोषमाह न तावदिति । यां शुक्तिमपेक्ष्य रूप्यस्य भावान्तरत्वं स्यात् तस्याः किं स्वतस्सिद्धं भावान्तरत्वमन्यापेक्षं वा । नाद्यस्तदा तद्बुद्धिप्रसङ्गात् । अन्यदपि किं वस्त्वन्तरं रूप्यं वा । वस्त्वन्तरं चेत् तस्यापि भावान्तरत्वं वस्त्वन्तरसिद्ध्यपेक्षमित्यनवस्था । रूप्यं चेत् अन्योन्याश्रयत्वं रूप्यस्य भावान्तरत्वे सिद्धे तदपेक्षया तत् शुक्तेस्सिध्यति तत्सिद्धौ च तदपेक्षया रूप्यस्य सिध्यतीत्यर्थः । शुक्तेर्भावान्तरत्वं मा भूत् भावमात्रेण

प्रतियोगित्वमस्त्वित्याशङ्क्याह न चेति । भावान्तरं न भवतीत्यभावान्तरं भावमात्रं तदपेक्ष्य रूप्यस्य भावान्तरत्वं जन्यं व्यङ्ग्यं वा न भवति स्वरूपापेक्षयापि रूप्यस्य भावान्तरत्वप्रसङ्गादित्यर्थः । श्लोकयोजनया प्रत्येकं दोषमाह यदि जन्यमित्यादिना । ··· ॥ १० ॥ ११ ॥

**[Page 299]** पक्षान्तरदोषमुपसंहृत्य परिशेषतस्स्वमतमाह नात इति ॥ १२ ॥

इतश्च भावान्तरात्मख्यातिर्न भ्रम इत्याह भावान्तरत्वमिति । दोषादसतस्सद्बुद्धिगम्यत्वेऽपि न रूप्यधीर्भ्रमस्स्यात् किंतु असति सद्बुद्धिरित्याह तथापीति । भावान्तरत्वं रूप्याद्भिन्नमसदित्यङ्गीकारमात्रेणोक्तम् । तदपि न घटत इत्याह कथं चेति ॥ १३ ॥

द्वितीयविकल्पे दोषमाह अभेदे नान्यथाख्यातिरिति । भावान्तरधर्मस्य भावादभेदे सति भावमात्रत्वप्रसङ्गान्न क्वापि भावान्तरधीरस्तीत्यन्यथाख्यातिर्न स्यात् । भावमात्रख्यातिश्चेदन्यथाख्यातिः तदा अतिप्रसङ्ग इत्यर्थः । किंच अस्मिन् पक्षे प्रतियोग्यपेक्षापि न स्यादित्याह न चापेक्षयेति । प्रतियोग्यनपेक्षत्वे हेत्वन्तरमाह अक्षैरेव चेति । उक्तनीत्या भावान्तरमेवाभावो भाव एव वा अभाव इति अन्यथाख्यातिप्रत्याख्यानप्रसङ्गेन निरस्तश्चेत्तर्हि नास्त्येवाभाव इत्याशङ्क्याह न चाभावो नामेति ॥ १४ ॥

**[Page 300]** तृतीयाध्यायगतेनाग्रहविचारेण पौनरुक्त्यं परिहरति उक्तोऽयमर्थ इति । अन्यथाख्यातिवादिनं प्रति अग्रहस्यानिर्वाच्यत्वसिद्ध्यर्थमुक्तोऽयमर्थः । इह त्वभावापह्नववादिनं प्रति व्यवहाराङ्गभूताभावसमर्थनार्थमुच्यते । अतो वादिभेदादपौनरुक्त्यम् । नो खलु लोके देवदत्तं प्रति गामानयेत्युक्तवतो यज्ञदत्तं प्रति कदाचित्तदभिधानं पुनरुक्तं प्रतियन्ति । किं चात्र तावत्सप्तशत्यां नोत्तरग्रन्थपौनरुक्त्यम् । तस्य सकलप्रकरणसंग्राहकाद्यश्लोकविवरणत्वात् । सिद्धान्तश्लोकविवरणेन चोत्तरग्रन्थपौनरुक्त्यं

स्वयमेवाचार्यः पर्यहार्षीत् । उत्तरग्रन्थेष्वेव यत्पौनरुक्त्यं भाति तद्वादिभेदेन तत्त्वे च परमगम्भीरे शिष्याणामनुसंधानसिद्ध्यर्थत्वेन प्रसिद्धदूषणमनूद्याप्रसिद्धदोषविधानार्थत्वेन च परिहर्तव्यमिति नेष्टसिद्धौ क्वापि पौनरुक्त्यम् ॥ १५ ॥

··· किंच अपह्नवोऽपि न सिध्यतीत्याह भावान्तराद्न्योऽभावो नास्तीति ॥ १६ ॥

पूर्ववादी स्ववाण्या अर्थवत्त्वं शङ्कते भावान्तरमभावश्चेदिति । यद्यपि सालम्बनत्वं सिध्यति तथापि अभावापह्नवायोगान्निष्प्रयोजनत्वमानर्थक्यं यन्मयोक्तं तत्स्थितम् । एतद्व्याचष्टे तथापि भावान्तरमिति । यदि सार्थकत्वसिद्ध्यर्थं नञो भावान्तरार्थकत्वं हित्वा अपह्नवार्थकत्वमिष्यते तत्राह अपह्नवे चेति । भावान्तरं न भवतीत्यभावान्तरं नाम योऽभावः तस्याभ्युपगमः प्रसज्येतेत्यर्थः । तथाप्युक्तं स्थितं मयेत्यस्यार्थान्तरमाह अथवेति । भावान्तरस्यास्तिव्यवहारगोचरस्य तद्विरुद्धनास्तिव्यवहारगोचरत्वासंभवादित्यर्थः । **[Page 301]** अन्यव्यावृत्तिविशिष्टस्य अभावव्यवहारयोग्यत्वं शङ्कते अन्यापोहेति। तदुक्तमन्यापोहवादिभिर्बौद्धैः— अन्यव्यावृत्तिविशिष्टा सैव बुद्धिरेव अभावः प्रतीयते व्यवह्रियत इति । अपोहोऽपि भावोऽभावो वेति विकल्प्य आद्यं प्रत्याह सोऽपोहोऽपीति। भावमात्रस्याभावव्यवहारानर्हत्वादभावव्यवहारलोप इति मयोक्तं स्थितमित्यर्थः । द्वितीयं प्रत्याह अभावश्चेदिति । ··· ॥ १७ ॥

मायात्मत्वमसहमानस्य अभावप्रमाणवादिनः प्रासङ्गिकं चोद्यमुद्भाव्य परिहरति नन्विष्टश्चेदित्यादिना । अभावप्रसिद्ध्या अभावेऽङ्गीकृतेऽपि वस्तुसिद्धेः प्रागमिते न तस्य प्रमितिसंभव इत्यध्याहारः । वस्तुसिद्धेः प्रागमितिरेव कुतस्सिद्धेत्याशङ्क्याह न ह्यसिद्ध इति । ··· यतस्सापेक्षत्वादभावस्य तत्प्रमायाः प्राथम्यं नोपपद्यतेऽतोऽभावप्रमायास्तदिच्छायाश्च उदयात्प्रागेव भावधीर्भवेत् । भवतु ततः किमित्याशङ्क्याह अतस्तयेति । ··· न चेति।

कालान्तरे वेत्यस्य व्याख्यानं प्रागूर्ध्वं वेति। सन्मात्रग्रहणरूपेण जाते निर्विकल्पकप्रत्यक्षे देशाद्यवच्छेदास्फुरणान्न वस्तुनो रूपभेदसिद्धिरित्यर्थः। ... यतोऽवच्छिन्नप्रमितिर्न संभवत्यतो धर्मिप्रतियोग्यवच्छिन्नाभावस्य विषयस्यासंभवान्न काप्यभावधीः प्रमेत्यर्थः॥ १८॥

**[Page 302]** एवं तावदभावस्याप्रामाणिकत्वं नाम मायामयत्वमुक्त्वा पुनर्मायात्मकमपि अभावमनिच्छतः प्राभाकरस्य दोषान्तरमाह मेयाभावेति। जिघृक्षिते ग्रहीतुमिष्टे संनिहितग्रहणकारणकेऽर्थे मायाः प्रमाणस्याभूतेरनुदयादभावव्यवहारो भवत्यभावं विनैवेति चेत् तत्र दूषणं सदासद्व्यवहारस्स्यादिति। घटादिग्रहणकाले नियमेन घटाद्यभावव्यवहारस्स्यात् अपेक्षणीयाभावज्ञानस्य पृथगभावादित्यर्थः। असद्व्यवहार इति पदच्छेदेन व्याख्याय सद्व्यवहारोऽपि सदा स्यादित्यपि व्याचष्टे भावव्यवहारोऽपीति। यदि विज्ञानमात्र[वाद ?]परिहाराय भावव्यवहारस्यार्थ इष्यते तत्राह सार्थस्येदिति। अभावव्यवहारस्यानुकूलालम्बनो व्यवहारत्वाद्भावव्यवहारवदित्यर्थः। इतस्याभावः प्रमेय एष्टव्य इत्याह न चेति। ... जिघृक्षाप्यग्रहेऽफलेति भागं शङ्कापूर्वकं व्याचष्टे नन्वित्यादिना। ... इतस्याग्रहे जिघृक्षा व्यर्थेत्याह न च तस्या इति। विशेषवत्त्वे भावत्वप्रसङ्गादित्यर्थः। ... अग्रहस्योपाधिसंबन्धिनः ख्यात्यभावादित्युक्तम्। तद्विवृणोति न हीति। सत्यमग्रहो न भाति किंतु ग्रहानुदये सति अग्रहव्यवहार इत्याशङ्क्याह स चेन्न भातीति। अनुदयशब्दवाच्यो ग्रहाभावो न भाति चेत् तदा अग्रहेऽभावव्यवहार इति त्वया कथं विज्ञातमित्युक्तम्। तर्ह्यस्तु ग्रहाभावभानमित्याशङ्क्याह ग्रहाभावस्येदिति। ग्रहस्य स्वप्रकाशस्यासंभाव्यमानोऽप्यभावश्चेद्भाति तर्हि सुतरां ग्राह्याभावो भाति ग्रहाभावस्यैव ग्राह्याभावभानकारणत्वादित्यर्थः। प्रकारान्तरेण श्लोकमवतारयति अथवेति। ... **[Page 303]** तार्किकाभिमतमभावज्ञानकारणं निरस्य भाट्टादिमतमनूद्य निराचष्टे अर्थं मुक्त्वेत्यादिना। ...

किंच अज्ञातस्याग्रहस्याहवत्कारणत्वं ज्ञातस्य वा लिङ्गवत् । नाद्य इत्याह अन्नादिवदिति । ··· द्वितीयं शङ्कते तर्हीति । ननु ज्ञातस्य हेतुत्वमविनाभावादिबलेन दृष्टम् । अग्रहस्य तु केन बलेन हेतुत्वमित्याशङ्क्याह नान्तरीयकत्वेनेति । अनुपपत्तिबलेनेत्यर्थः । एतदेव विवृणोति नान्तरेणेति । ··· प्रत्यक्षेणार्थभेदसिद्धौ किमित्यग्रहादभावधीर्न स्यादित्याशङ्क्याह नार्थविशेषश्चेति । भावमात्रग्राहकस्य व्यावृत्तिग्रहणे व्यापाराभावादित्यर्थः । ··· ॥ १९ ॥ ··· ॥ २० ॥

··· [Page 304] मानस्य चेति । अप्रमेयं मानं जडमजडं वा । आद्ये जगदान्ध्यं द्वितीये चाद्वैतापात इत्यर्थः । किंचाप्रमेयो मानाभावस्स्वयंप्रभोऽस्वयंप्रभो वा । आद्यं प्रत्याह तस्य चेति । व्यतिरेकाभावादिति । अग्रहाभावेऽभावधीर्न भवतीत्यवगन्तुं न शक्यते । अग्रहस्यावेद्यत्वे तदवच्छिन्नाभावस्यापि प्रमातुमशक्यत्वादित्यर्थः । ··· जिघृक्षादेः कारणत्वमाश्रित्याग्रहस्य कारणत्वं निरस्तम् । तदपि नास्तीत्याह यदीति । भावाभावधियोर्विरुद्धकार्ययोरेककारणकत्वासंभवात् अर्थस्य चानुमेयादेः कारणत्वकल्पकाभावादित्यर्थः । द्वितीयकल्पमभ्युपगम्य दोषमाह यदि नामेति । कदाचिदप्यवगममन्तरेण कार्यकारणभाव एवावगन्तुं न शक्यते चेत् अस्तु तर्ह्यवगतिरित्याशङ्क्याह न चेति ॥ २१ ॥

मानस्य साक्षिसिद्धस्याभावोऽपि साक्षिसिद्ध इति स्वाभिप्रायेणोक्तम् । इदानीं भाट्टाभिप्रायमाशङ्क्याह फलभावेनेत्यादिना ॥ २२ ॥

मायाः प्रमाणस्याजनेरनुदयान्न मेयाभावसिद्धिरित्युक्तमाक्षिप्य समाधत्ते मानं क्रियेत्यादिना । ··· [Page 305] भूतले घटाभावप्रमाणानुदयात् [?] घटाभाव इष्टः । तथा साधकाभावः किं न स्यादित्याशङ्क्याह अर्थाभावोऽपीति । इतश्च न फलाभावान्मानाभावसिद्धिरित्याह माना-

भावज्ञानानुदयादेव चेदिति । सदा न धीरिति श्लोकभागं विवृणोति यदा हीति । ... ॥ २३ ॥

पूर्वं फलाभावं बुद्धा मानाभावं वेद्मीति न ब्रूषे त्वमित्युक्तम् । इदानीं तदभिधानेऽपि नाभिमतसिद्धिरित्याह फलाभावे मित इति ॥ २४ ॥

स फलाभावः किंप्रमाणक इत्युक्तम् । तदसंगतमित्याशङ्कते भावो यस्येति । यत् यत्प्रयुक्तव्यवहारयोग्यं तत् तत्प्रमेयं प्रसिद्धम् । संविदश्च भावाभावौ संवित्स्वरूपप्रयुक्तव्यवहारयोग्याविति संवित्स्वरूपमेव तयोर्मानमित्यर्थः ॥ २५ ॥

... **[Page 306]** सदैव भावमाक्षिपति सोऽभावोऽपीति । अभावादिति पदच्छेदेनोत्तरार्धं पुनर्योजयति तथापीत्यादिना । इतश्च येनैव भावसिद्धिस्तेनैवाभावसिद्धिर्न घटत इत्याह यदि चेति । भावादन्यो नास्त्यभाव इति कस्मात् । तस्मादन्यो नास्ति भाव इति कुतो न भवति भावाभावमानयोरभेदाविशेषादित्याशङ्क्याह भावाभावयोरभेदेऽपीति । भावतन्त्रत्वादभावस्येत्यर्थः । यतस्सर्वस्य भावत्वमापद्यत अत इत्युपसंहारः ॥ २६ ॥ ... ॥ २७ ॥ ... ॥ २८ ॥

**[Page 307]** कथं त्रिधाप्यसिद्धिरित्याकाङ्क्षायां पक्षद्वयासंभवं तावदाह फलाभावे स्वतस्सिद्ध इति । तदेति । अभावकाले फलस्याभावात् । अविद्यमानस्य साधकत्वासंभवादित्यर्थः । न चेति । स्थितात्फलात्स्वाभावसिद्धिरित्ययुक्तमित्यर्थः ॥ २९ ॥

तृतीयपक्षासंभवमाह नान्यो वेत्त्यपीति ॥ ३० ॥

यया प्रमया पुमान् फलं वेत्ति सा प्रमा वाच्येत्युक्तम् । तत्र केवलात्मस्वरूपवेद्यत्वमाशङ्क्य दूषयति वेत्ति तच्चेदिति । ... वेद्येनापि दीपेन मेयदर्शनं यथा स्यात्तथास्त्वित्याशङ्क्याह दीपेनेवेति । दीपस्याप्यन्धकारव्यावृत्तिमात्रकरत्वमेव न तु जडस्य क्वाप्यापरोक्ष्यव्यवहारप्रवर्तकत्वं दृष्टमित्यर्थः ॥ ३१ ॥

[Page 308] फलस्य वेद्यत्वे दोषान्तरमाह किंचेति ॥ ३२ ॥

एवं तावत्फलस्यावेद्यत्वात्तदभावोऽपि न वेद्य इत्युपपाद्य अभावासंभवे हेत्वन्तरमाह प्रध्वंसेति । भावान्तरमभावश्चेत्यारभ्योक्तन्यायैरेवेत्यर्थः । नन्वात्मैव भावान्तराभाववादिपक्षे फलाभावयोस्स्वरूपं फलस्य गुणी च भविष्यति । अतः कथमभावस्वरूपोक्तिरशक्येत्याशङ्क्याह न हीति । यद्दृश्यमनित्यं च तद्द्रष्टुस्स्वरूपादि न भवति यथा घटादीति व्याप्तिदर्शनादित्यर्थः । … ॥ ३३ ॥

इतश्चात्मादिगुणः संविन्न भवतीत्याह गुणगुण्येकेति । तौ गुणगुणिनौ ग्राह्यौ यया एकया धिया सा तद्ग्राह्यैकधीः तत्संभवे सतीत्यर्थः । [Page 309] अनात्मगुणत्वेऽर्थप्रकाशस्याश्रिते लोकायतमतापातोऽपीत्याह घटगुणश्चेदिति । जडगुणत्वे दोषान्तरमाह घटगुणश्चेत्संविदिति । संवेदनस्याजडत्वाद्रूपादिवैलक्षण्यमस्तीत्याशङ्क्याह न चेति ॥ ३४ ॥

जडगुणत्वदोषपरिहाराय विक्रियात्वमाशङ्क्य दूषयति संविद्धियेति ॥ ३५ ॥

एवं तावत्संविदो गुणत्वविक्रियात्वानिरूपणादभावासंभवाच्च नित्यत्वमुपपाद्य इदानीं स्वतः परतश्च नाशासंभवादपि कूटस्थैव संविदित्युपपादयितुमुपक्रमते नोत्पन्नाया इत्यादिना । लब्धात्मकस्य घटादेस्सहेतुकविनाशदर्शनात्संविदोऽपि लब्धात्मिकाया निर्हेतुनाशो न घटेत तर्ह्यलब्धात्मिकाया एव नाशोऽस्त्वित्याशङ्क्याह न चालब्धात्मिकेति । … किंच क्षणिकवादिना निर्हेतुकं नाशं वदता नाशस्वभावत्वमिष्टं स्यात् । तदा च नाशव्याप्तत्वात् जन्म न स्यादित्याह नाशस्वभावस्य चेति । नाशसिद्ध्यनुपपत्त्यैव जन्म वक्तव्यमित्याह अजातस्येति । तर्हि यत् त्वया जन्म कल्प्यते तत् असतस्सतो वा । नोभयथापीत्याह असत इति । असतो नाशो न संभवतीति वदता सतो नाश इष्टः । स न घटत इत्याह कथं चेति । सद्रूपत्याग एव नाशश्चेत् सोऽपि न सता शक्यस्स्व-

रूपविरोधादित्यर्थः। तर्ह्यसता त्यज्यत इत्याशङ्क्याह अत्यागे नासत्वमिति। सद्रूपत्यागादसत्त्वमसता च सद्रूपत्यागः क्रियत इत्यन्योन्याश्रय इत्यर्थः। इतश्च सद्रूपत्यागस्तता कर्तुं न शक्यत इत्याह न चेति। [Page 310] एवं तावत्सदसतोर्जन्मनाशानिरूपणान्न क्षणिकं वस्त्वित्युक्तम्। हेत्वन्तरं क्षणिकत्वासंभवे पुनराह जन्मनाशयोरिति। हेतुरपि किं बाह्यव्यापारः किं वा आन्तरधीः संविदन्तरं वा। नाद्य इत्याह न च घटवदिति।

… द्वितीयविकल्पं दूषयति नापीति ॥ ३६ ॥

तृतीयं प्रत्याह नाजातेति ॥ ३७ ॥

उत्तरकार्योदयात्पूर्वकार्यध्वंसः प्रसिद्ध इत्याह संविदं जनयन्त्यन्यामिति ॥ ३८ ॥ … ॥ ३९ ॥

संविदां चेदेका प्रकृतिस्स्यात् तदा सहस्थितिविरोधिता अस्तीत्युत्तरोत्पादे पूर्वध्वंसस्स्यात्। सा च नास्तीत्युक्तम्। कथं नास्तीत्याकाङ्क्षायां विकल्पयति सर्ववस्तुषु वेति। ज्ञं प्रति संविज्जनकतया व्यवस्थिता प्रकृतिरेका। सा चाप्रमेयगा प्रमेयगा वेति पदच्छेदः॥ ४० ॥

आद्यमनूद्य दूषयति सर्ववस्तुष्विति। … ॥ ४१ ॥ … ॥ ४२ ॥

[Page 311] आद्यं विकल्पं सप्रपञ्चं निरस्य द्वितीयं निराचष्टे प्रत्यर्थमेकेति। यावद्गुणको यावच्छक्तिको यावदंशको वार्थः तं प्रति चेदेका संवित्प्रकृतिस्तदा घटदृष्ट्या तच्छक्तिः [?] प्रत्यक्षा स्यात् कृत्स्नघटव्यापकप्रकृतेः फलीभूतत्वादित्यर्थः। तृतीयं प्रत्याख्याति प्रत्येकमानमिति। एकस्य मानस्य यावानर्थो गोचरः तं प्रति एका संवित्प्रकृतिश्चेत्तर्हि रूपदृष्ट्या रसेक्षणं स्यात् इन्द्रियपञ्चकजनितज्ञानस्य प्रत्यक्षत्वादित्यर्थः॥ ४२ ॥

चतुर्थं निराचष्टे प्रत्येकेन्द्रियेति। एकैकस्येन्द्रियस्य यावान्गोचरस्तदवभासकसंवित्प्रकृतिरेका चेत् तदा सर्वरूपदर्शनं युगपत्स्यात् सर्वस्यापि रूपस्य चाक्षुषत्वात्सर्वरूपावभासकसंवित्प्रकृतेः फलीभूतत्वादित्यर्थः। पञ्चमविकल्पमुन्मूलयति प्रत्येकेति। एकस्या बुद्धिवृत्तेर्योऽर्थस्तं प्रत्येका चेत्संवि-

त्प्रकृतिः तदा जातायास्संविदो ध्वंसो न स्यात् । उत्तरसंविदुत्पत्त्या हि पूर्वध्वंसस्त्वयेष्यते न चैकधीवृत्तिविषये संविद्द्वयं दृश्यत इत्यर्थः ॥ ४४ ॥

पञ्चचतुष्टये साधारणं दोषमाह पूर्वेष्विति । एकस्य पुंसः यस्मिन्नर्थे संविद्वर्तते तत्र नान्यस्य पुंसः स्यात् युगपदेकस्याः प्रकृतेरनेकपरिणाम-विरोधादित्यर्थः । पञ्चमः कल्पः कस्मादुपेक्षित इत्याशङ्क्य विशेषमाह सहैकस्येति । ... ॥ ४५ ॥

षष्ठं कल्पं विघटयति प्रतिज्ञमिति । सर्ववस्तुषु सैका चेदित्यादिनोक्तं स्मरेत्यर्थः । साधारणं दोषान्तरमाह सर्वथेति ॥ ४६ ॥ ... ॥ ४७ ॥

अत्रैव दूषणान्तरमाह न पुंसामिति । ... बहिरेवात्र दोषान्तरमाह न तावदित्यादिना । ... ॥ ४८ ॥

**[Page 312]** संविद आत्मगतत्वे बाह्यार्थापरोक्ष्यं न स्यादित्युक्तम् । एतदेव श्लोकद्वयेन विवृणोति सैव चेदित्यादिना । संवित्स्वजनकं प्रकाशयतीति वक्तुं न शक्यते चक्षुरादेरपि प्रकाशप्रसङ्गात् । ... यद्युक्त-दोषभयात्संविदेवार्थप्रकाशस्योपादानमिष्यते तत्राह संविदुपादानश्चेदिति । ... ॥ ४९-५० ॥

**[Page 313]** पूर्वमर्थव्यापकत्वमभ्युपगम्यात्माश्रयसंविदो बाह्यापरोक्ष्यं न स्यादित्युक्तम् । तदपि नास्तीत्याह साप्नोत्यर्थमिति । ... अन्यथेति । अस्वप्रकाशत्वे सति असंवित्त्वादित्यर्थः । रूपादिवैलक्षण्यमाशङ्क्य परिहरति न सा मानमेयेत्यादिना । ... आत्मवेद्यमपि बुद्धिसुखादि आत्माश्रयं दृष्टमिति व्यभिचारमाशङ्क्याह तद्वेद्यान्तरेति । तेनात्मना वेद्यान्तरं यत् बुद्धिसुखादि तस्याप्यात्माश्रयत्वाभावाविशेषान्न व्यभिचार इत्यर्थः । ... प्रौढवादेनाह आत्मविकारत्वेऽपीति । क्रियायास्स्वाश्रयं हित्वा अन्यत्र गमनायोगादित्यर्थः । तव वा कथं जडसिद्धिस्स्यादित्याशङ्क्याह मम त्विति । मिथ्याचित्संसर्गाज्जडस्य व्यवहारविषयत्वं संभवतीत्यर्थः । तथापि

चित एकत्वात्कथं वेदितृवेदनव्यवहार इत्याशङ्क्याह अन्यत्वेति । ··· किंच चिदतिरिक्तस्य कल्पितत्वे कारणासंभवेन चितो जन्माद्यपि निरस्तं भवतीत्याह अतस्संविद इति ॥ ५१ ॥

**[Page 314]** यतः कूटस्थाद्वितीयैव चित् अत इत्युपसंहारः । प्रमातृगतं विषयापरोक्ष्यमिति प्रभाकरप्रभृतयः प्रमेयगतमिति भाट्टाः प्रमाणगतमिति सौगता इत्याह विचित्रेति । स्वतन्त्रा जन्मादिभावविकारवर्जिता स्वरूपेणावेद्या परिमाणादिमेयधर्मरहिता चेत्यर्थः ॥ ५२ ॥ ··· ॥ ५३ ॥

अवान्तरप्रमेयमुपसंहृत्य प्रकृतमुपसंहरति फलस्य सदसत्त्वाभ्यामिति । ··· इदानीं मानभावसिद्धिमङ्गीकृत्याभाव[वा ?]सिद्धौ दोषमाह सिद्धेऽपीत्यादिना । अनुपलम्भो ह्यभावमाननिदानं तदसिद्धौ न क्वाप्यभावस्तत्त्वतस्सिध्यतीत्यर्थः ॥ ५४ ॥

**[Page 315]** अर्थसंवित्त्याख्यं फलं साधनपुरस्सरं फलत्वादोदनवदिति धीभावानुमानं फलाभावेन तदभावानुमानं च न संभवति हेत्वसिद्धेरित्युक्तम् । इदानीं ज्ञातव्यवहारो विशेषणसिद्धिपुरस्सरो विशिष्टव्यवहारत्वाद्दण्डीतिव्यवहारवदिति [ज्ञातार्थभावेन ?] ज्ञानानुमानं ज्ञातार्थाभावेन च ज्ञानाभावानुमानमित्येतन्निराचष्टे ज्ञातेऽनुमेति । ज्ञानसिद्धौ ज्ञातार्थसिद्धिस्तत्सिद्धौ च ज्ञानानुमेति परस्पराश्रयादसिद्धो हेतुरित्यर्थः । परिशेषादर्थमात्रं लिङ्गमस्तु इत्याशङ्क्याह न चार्थमात्रमिति । यत्रार्थस्तत्र ज्ञानमिति नास्ति व्याप्तिः ज्ञानाभावेऽप्यर्थसद्भावाभ्युपगमादित्यर्थः । ··· ॥ ५५ ॥

किंच प्रामाणिकधर्मिप्रतियोग्यवच्छिन्नोऽभावः प्रामाणिक इष्यते । ज्ञानाभावधर्मिप्रतियोगिनोश्च प्रमातृप्रमाणयोरप्रमाणसिद्धत्वान्न ज्ञानाभावसिद्धिरित्याह मातृमाने चेति । प्रमाणं न स्वाश्रयं स्वात्मानं च व्याप्नोति परतन्त्रत्वात्क्रियावत् । विपक्षे च क्रियापि व्याप्नुयात् कर्तृप्रमात्रोराश्रयत्वसाम्यात् क्रियामानयोश्च पारतन्त्र्यसाम्यादित्यर्थः । वैषम्यमाशङ्कते

दोषं स्फुटीकर्तुं नन्विति । शङ्कितं वैषम्यमङ्गीकृत्य सिद्धान्ती स्वाभिमतं साम्यमाह उच्यत इति । अन्यो व्यापारः क्रियतेऽन्यस्य च स्वयं विषयो भवतीत्याशङ्क्याह व्यापारभेदेऽपीति । व्यापारवतः कर्तुरभेदाद्व्यापारान्तरकर्मत्वेऽपि कर्तृकर्मत्वविरोधस्तदवस्थ इत्यर्थः । तर्हि कर्त्रन्तरव्यापारकर्मता अस्त्वित्याशङ्क्याह नापीति । एकस्येत्कर्ता कर्त्रन्तरव्यापारगोचरः तर्हि कर्तृत्वाविशेषादन्योऽपि तथैव कर्त्रन्तरगोचरो वाच्यः । करणपूर्वकत्वनियमाच्च व्यापारस्य करणान्तरमपि वाच्यमिति बहुकल्पना स्यादित्यर्थः । यथा कर्तृतद्व्यापारयोर्न स्वपरव्यापारकर्मता तथा मातृमानयोरपि न स्वपरमानकर्मता स्यादित्याह मातृमानयोरपीति । यच्च सिद्धत्वासिद्धत्ववैलक्षण्यं शङ्कितं तदपि नास्तीत्याह यथेति । [Page 316] अथ मानात्प्राक् मितत्वरूपाभावेऽपि स्वरूपेण सिद्धं वस्तु कार्यं तु न केनापि रूपेण सिद्धमित्याशङ्क्याह रूपान्तरसिद्धिस्त्विति । पुनर्वैलक्षण्यं शङ्कते नन्वसिद्ध इति । अन्यथेति । मित एव चेद्विषयमाता तदा मातुरपि स्वयं मितस्य स्वमातृत्वमन्येन वा । आद्ये स्वसिद्धौ स्वसिद्धिरित्यात्माश्रयः अन्ये मात्रन्तरस्यापि मात्रन्तरमितस्यैव मातृत्वमित्यनवस्थेत्यर्थः । अर्धाङ्गीकारेण परिहरति सत्यमिति । प्रामाणिकत्वं नास्तीत्येतत्सत्यम् । तथाप्यवश्यं भानं मातृमानयोर्वाच्यम् । अन्यथा विषयसिद्ध्यनन्तरं कदाचिन्मयेदं विज्ञातं न वेति संदेहयोग्यतापातादित्यर्थः । अभाने दोषान्तरमाह अन्यथेति । ··· ॥ ५६ ॥

प्रकृतं महाप्रमेयमुपसंहरति भावान्तरस्येति ॥ ५७ ॥

इदानीं दिगम्बरपादपातिनां सर्वत्र भिन्नाभिन्नत्वमिच्छतां मतं प्रत्याख्याति भिन्नाभिन्नमिति ॥ ५८ ॥

[Page 317] ननु भेदधीबाधिता यत्राभेदधीः तत्रान्यथाख्यातिः न सर्वत्रेत्याशङ्क्याह शुक्तेरभिन्नमिति । शोभत इति विरुद्धलक्षणा । भेदाभेदयोरुभयोरपि प्रामाणिकत्वान्न शोभत इत्यर्थः ॥ ५९ ॥ ··· ॥ ६० ॥

उक्तदोषपरिजिहीर्षया शङ्कते येनात्मनेति ॥ ६१ ॥

··· भवतु रूपभेदेन भिन्नाभिन्नं वस्तु । ततः किमित्यत आह भिन्नरूप इति । ··· सिद्धान्तमुपक्रमते तत्र भण्यत इति ॥ ६२ ॥

रूपभेदेन भिन्नाभिन्नत्वस्य दुर्निरूपत्वादन्ततोऽपि गत्वा स्वत एव वस्तु भिन्नाभिन्नं वाच्यम् । तदा प्रागुक्तदोषस्तदवस्थ इति श्लोकद्वयार्थः ॥ ६३ ॥ ६४ ॥

[Page 318] प्रकारान्तरेण भ्रममाशङ्क्य परिहरति भिन्नाभिन्ने मृषेति । ··· ॥ ६५ ॥ ··· ॥ ६६ ॥

[Page 319] अत्यन्ताभेदवादित्वाभावान्न ममायं दोष इत्याशङ्क्याह नन्वभेदे सत्यपीति । ··· अन्यथेति । अत्यन्तभिन्नतया स्वातन्त्र्येणा- प्रतीतेरित्यर्थः । अकृत्स्नधीसंभवे हेत्वन्तरमाह भेदरूपं चेति । भेदस्य दुर्निरूपत्वप्रयुक्त्या दूषयति तर्हीत्यादिना । तर्हि त्वत्पक्षे नाणुमात्रमपि ज्ञातुं शक्यमिति संबन्धः । भेदस्य दुर्निरूपत्वेऽप्यभेदस्य ज्ञातुं शक्यत्वात् किमित्यणुमात्रमपि न ज्ञेयमित्याशङ्क्याह भिन्नाभिन्नरूपयोश्चेति । अनुभवसिद्धमाशङ्क्य परिहरति ननु भातीत्यादिना ॥ ६७ ॥ ··· [Page 320] ॥ ६८ ॥

इदानीं बाधकज्ञानस्वभावपर्यालोचनयापि बाधासंभवमाह न बाध- शशुक्तिधीरित्यादिना । तां शुक्तिं बोधयित्वैव निषेधो वाच्यो न पूर्वं नापि सह धर्मिज्ञानस्य निषेधप्रत्ययकारणत्वादित्यर्थः । तर्हि शुक्ति- मवबोध्यैव रूप्यनिषेधोऽस्त्वित्याशङ्क्याह न चैकस्या इति ॥ ६९ ॥ [Page 321] ॥ ७० ॥

शुक्तिबोधं विना तत्र रूप्यनिषेधो न घटत इत्युक्तम् । तत्र व्यभि- चारमाशङ्कते ननु रज्जुग्रहेऽपीति । तत्रापि धर्मिग्रहं विना न निषेध इति न व्यभिचार इत्याह सत्यं वस्त्वन्तरेति । ··· ॥ ७१ ॥ ··· ॥ ७२ ॥ ७३ ॥

[Page 322] एकविधिरेवान्यनिषेध इति बौद्धमतानुसारेण बाधमाशङ्क्याह विधिरेव निषेधश्चेदिति ॥ ७४ ॥

प्रतिबन्दिन्यायमाशङ्क्य परिहरति ननु तेऽपीत्यादिना ॥ ७५ ॥

[Page 323] ॥ ७६ ॥

॥ इतीष्टसिद्धिविवरणे पञ्चमोऽध्यायः ॥

---

# अथ षष्ठोऽध्यायः ।

[Page 324] एवं तावन्मतान्तराणामनिर्वाच्याविद्यां विना दुःस्थितसिद्धिकत्वात्तद्विरोधं परिहृत्य अधुना स्वयूथ्यविप्रतिपत्तिपरिहाराय चोद्यमुद्भावयति अविद्याश्रय इत्यादिना ॥ १ ॥

जीवानां ब्रह्मातिरेके अद्वैतहानिरनतिरेके ब्रह्मण एवाविद्येत्याशङ्क्याह कल्पितास्तेऽप्यविद्ययेति। ... नान्योन्याश्रयतादिश्चेति। हि यस्मात्स दोषो वस्तुनि विचारसहे स्यात् नाविद्यायामघटमानस्वभावायामित्यर्थः ॥ २ ॥

स्वपक्षे व्यवस्थालाभमाह तेषां भेदाच्चेति । आत्मन एकत्वादेव न द्वौ ज्ञाज्ञौ गुरुशिष्यौ संभवत इत्यर्थः ॥ ३ ॥

सिद्धान्ती चिन्मात्रतन्त्राविद्या सकलव्यवस्थाहेतुरिति वक्तुं स्वयूथ्यं प्रत्याख्याति अत्रोच्यत इति । जडस्योक्तहेतुभिर्जडस्याविद्याश्रयत्वनिरासात्कल्पितस्य जीवस्यापि रज्जुसर्पवज्जडत्वान्नाविद्या दृष्टेत्यर्थः । कल्पितोऽप्यजड इति न वाच्यमित्याह नाजडमिति । सत्ताप्रतीत्योरन्यनिरपेक्षत्वेन सिद्धेरित्यर्थः । चिदचिद्रूपो जीव इत्यपि न वाच्यमित्याह नात एव जडाजडे इति । कल्प्येते अजडस्याकल्प्यत्वादित्यर्थः ॥ ४ ॥

कल्पितस्याविद्यानाश्रयत्वे हेत्वन्तरमाह इतश्चेति । ... माभूदज्ञातं ब्रह्म तदा वा को दोष इत्याशङ्क्याह तदा ब्रह्मास्मीति। [Page 325] अज्ञस्य ज्ञातृत्वमज्ञातस्य च प्रमाणेन ज्ञेयत्वं प्रसिद्धम् । ब्रह्मणस्तदभावादन्यस्य चावस्तुत्वान्न ब्रह्मविद्या नाम स्यादित्युक्तम् । मा भूद्विद्यापि ततः किमित्याशङ्क्याह अतोऽभावान्न सा मुक्त्यर्थेति। इतश्च तव ब्रह्मज्ञानान्मोक्षो न घटत इत्याह ब्रह्माज्ञानाभावाच्चेति। मा भूज्ज्ञानान्मुक्तिः कर्मणा तु भविष्यतीत्याशङ्क्याह न चान्यतोऽपीति। आश्रयाभावा-

दविद्याया असंभव उक्तः । तत्र शङ्कते ब्रह्मण एवेति । संज्ञान्तरेण त्वया मत्पक्ष एवाश्रित इत्याह तर्हीति । स्वयूथ्य आह तदेवेति । किं कल्पितो भेद उपलक्षणं विशेषणं वा । आद्यं प्रत्याह तर्हि तस्यैवेति । ... द्वितीयविकल्पमुद्भाव्य निराचष्टे ब्रह्मणः कल्पितान्यत्वस्यैवेत्यादिना । पूर्वोक्तं पराभिप्रायमुद्भाव्य पराकरोति नायं दोष इत्यादिना । स्वयूथ्य आह न मुक्तानां सा भातीति । ... प्रतीत्यभावाच्चेन्मुक्तानामविद्या नेष्यते तर्हि त्वत्कल्पनापि न सिध्यति तथाविधप्रतीत्यभावादित्याह तर्हीति । अनवस्थादिन्यायविरोधाच्चेत्यर्थः । परोक्तमनुभाषते यच्चोक्तमिति । ... [Page 326] नन्वविद्या विपरीतप्रत्ययः । तदभावस्साध्यते । निरग्रहत्वं च तत्र हेतुरित्याशङ्क्याह निरग्रहत्वं चेदिति । ब्रह्म नाविद्याश्रयो निरग्रहत्वान्मुक्तवदित्यत्रान्यतरासिद्धिरुक्ता । परमतानुसारेण अप्रयोजकत्वमाह अग्रहाभावेऽपीति । भ्रमतत्संस्कारयोरेव हेतुफलभाव इति स्वयूथ्यस्य स्वपक्षः तस्य हानिस्स्यादग्रहकार्ये सतीत्यर्थः । इतश्च स्वपक्षहानिरित्याह अनाद्यग्रहस्येति । अथ कल्पितोऽपि जीवोऽनादिः तदाश्रय एवाग्रह इत्याशङ्क्याह न च सादीति । अथ जीवकल्पको भ्रमोऽप्यनादिस्तत्राह सर्वे चेति । ननु भ्रमव्यक्तीनां सादित्वेऽपि तत्प्रवाहस्यानादित्वाज्जीवस्याप्यनादित्वं तत्कल्पितस्य भवतीत्याशङ्क्याह तत्प्रवाहोऽपीति ॥ ५ ॥

ब्रह्म अज्ञानस्य विषयः कल्पितो जीव आश्रय इत्यत्र दोषान्तरमाह इतश्चेति । तत्र वा कथमविद्या सिद्ध्यतीत्याशङ्क्याह न वेद्मीति त्विति । स्वदृक् स्वप्रकाशः ॥ ६ ॥

[Page 327] स्वप्रकाशस्याज्ञातता विरुद्धा कथं घटत इत्याशङ्क्याह स्वदृचोऽज्ञाततेति । ... स्वदृक्त्वेनापीति । कल्पितजीवातिरिक्तं ब्रह्म । तत् स्वतःस्फुरदप्यज्ञानविषय इति नास्माकमनुभवोऽस्तीत्यर्थः ॥ ७ ॥

इतश्च नाज्ञानस्याश्रयविषयभेद इत्याह स्वदृक् च भातीति । ...

अतोऽविद्या भवेद्यस्येति । अविद्या नाश्रयविषयभेदापेक्षा आवरणत्वात्तमोवदित्यर्थः ॥ ८ ॥

अज्ञानस्याश्रयविषयभेदाभावे किं फलितमित्याशङ्क्याह तत्रापरस्येति ॥ ९ ॥ ··· ॥ १० ॥

अज्ञाननाशे यद्यज्ञनाशस्स्यात् तदा भवेदयं दोषः न तथास्तीत्याह उच्यत इत्यादिना । इतश्च विद्यया नाज्ञनाश इत्याह अज्ञनाश इति । मा भूज्जीवन्मुक्तः शास्त्रीयज्ञानवान् भविष्यतीत्याशङ्क्याह न चाजीवन्मुक्तोऽपीति । धीर्वृथैव वेति भागमन्यथा व्याचष्टे धीफलाभावादिति ॥ ११ ॥ ··· ॥ [Page 328] १२ ॥ ··· ॥ १३ ॥

धीजन्मन्यज्ञनाशे ज्ञस्य जन्म स्यादित्युक्तम् । तदा वा को दोष इत्याशङ्क्याह ज्ञाने ज्ञान इति ॥ १४ ॥

··· [Page 329] इतश्च चित एवाज्ञत्वमित्याह कल्पितस्य चेदित्यादिना । ननु कार्यस्य भिन्नत्वे सति कार्यतन्त्रं कारणमिति दोषस्स्यात् । अविद्याकल्पितं तु अविद्यामात्रमेवेत्याशङ्क्याह अविद्यायाश्चेद्विद्येति । अविद्यया आत्मनो बन्धप्रसिद्धिर्हीयेतेत्यर्थः । किं चाविद्याया बद्धत्वे न कदाचिन्मोक्षः स्यादित्याह न च तस्या इति । बन्धमभ्युपगम्य विरुद्धस्वभावत्वान्मोक्षासंभव उक्तः । सुखदुःखोपलब्धिः बन्धशब्दार्थोऽपि न घटत इत्याह न च बन्धोऽपीति ॥ १५ ॥

इतश्च कल्पितस्याविद्येति पक्षो न घटत इत्याह तत्कल्पितस्येति । अजडस्य ब्रह्मणो विद्यया जडाविद्या निवर्तत इति न वाच्यमित्याह न चान्याविद्यामिति । ··· नाज्ञबाधे हि विद्या स्यादिति भागं व्याचष्टे अज्ञबाधे चेति । अज्ञोऽविद्यां विना न चेत्यस्यार्थमाह अतोऽज्ञाबाधेनैवेत्यादिना । उक्तदोषपरिजिहीर्षया मतान्तरमाशङ्कते नन्विति । कल्पितो भेदः किमुपलक्षणं विशेषणं वेति ब्रह्मणि जीवेष्विति [?] विकल्प्य दूषयति अकल्पितस्य चेदित्यादिना । [Page 330] अनादित्वान्नानवस्थेत्याशङ्क्याह

तदापीति। ... किंच भेदस्य सप्रतियोगिकत्वात् कुतस्तकाशात् कल्पित-भेदस्य भेदकल्पनान्तरमिति विकल्पयति कुतस्येति। आद्यं द्विधा विकल्प्य दूषयति यदि परादिति। ... द्वितीयमनूद्य दूषयति तर्हीति। अस्य जीवस्य स्वरूपात् या भेदकल्पना सा परस्यैव स्वरूपात् स्यात्। तत्र हेतु-माह परस्याकल्पितभेदत्व इति। तृतीयं दूषयति अतो जीवस्येति। तथैवेति। परमात्मन एव स्यात् परजीवयोरकल्पितभेदत्वादभेदेऽष्टेस्येत्यर्थः। पक्षत्रयेऽपि साधारणं दोषमाह कल्पितभेदस्य चेदित्यादिना। अन्यथेति। ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेरर्थवत्त्वाय यदि सर्वभेदनिवृत्तिरिष्यते तर्हि सर्वापि भेदकल्पना अविद्या वा चिन्मात्रस्याभ्युपेयेत्यर्थः। उक्तदोष-मन्यत्राप्यतिदिशति अविद्याकल्पितस्येति। न कदाचित्सर्वात्मना अविद्या-निवृत्तिस्स्यादित्यर्थः ॥ १६ ॥ ... ॥ १७ ॥

**[Page 331]** जागरणे मम जायमाना विद्या कथं स्वप्नविद्या स्यादित्याशङ्क्याह अविद्यावस्था स्वप्न इति। स्वप्नो विपरीतप्रत्ययः। तत्त्वाग्रहणं निद्रा। ताभ्यां युतौ। विश्वतैजसावित्यर्थः। आवसथाः अवस्थाः। गौडपादे[दीये ?] श्रुतौ च प्रयोगदर्शनात् अविद्यावस्था स्वप्नः। तत्तुल्या सैव वा विद्या स्यादिति संबन्धः। एवं चानियोग इति सूत्रावष्टम्भेन द्विधा पदं छिन्नमिति मन्तव्यम् ॥ १८ ॥

यच्च स्वयूथ्यैनैकमुक्तौ सर्वमुक्तिदूषणं प्रसञ्जितं तत्राह सर्वाज्ञहेतु-रित्यादिना। अनेकाभावादिति। एकजीवाविद्याकल्पितानेकजीवा-भावादित्यर्थः। या सर्वजीवकल्पनाहेतुरेकाविद्या तस्याः क्षयस्सर्वपुंसां ब्रह्मज्ञानैर्भवति। अतो न युगपत्सर्वमुक्तिरित्याह सर्वबुद्धिभिरिति। तर्ह्येकस्य ज्ञानेन अविद्याया अणुमात्रस्याप्यक्षयात् ज्ञानवैयर्थ्यं तव अनिर्मोक्षश्च प्रसज्यत इत्याह एकामुक्ताविति। द्वितीयमनूद्य दूषयति तर्ह्यस्तु प्रत्येक-मिति। **[Page 332]** कल्पकाभावे बहुकल्पना दोषस्स्यात् न तु विद्यमाने कल्पक इत्याह नन्विति। सिद्धान्ती पृच्छति किं तत्कल्पकमिति। कल्पकं

व्यवस्थादर्शनमनूद्य विकल्प्य दूषयति मुक्तामुक्तेत्यादिना । एकयापीति । चित्तन्त्वाविद्यया सर्वव्यवस्थासिद्धेर्न कल्पिताश्रयाविद्याभेदः कल्प्यः । यदि कल्प्यस्तत्राह अन्यथा एकस्यापीति । नायमनिष्टप्रसङ्ग इत्याह अथैकस्यापीति । सिद्धान्त्याह ताभिरेवेति । अनुभवावष्टम्भेन स्वयूथ्य आह एक इवेति । किं प्रमाणतो भान्ति कल्पिता वेति विकल्प्य दूषयति न तावदित्यादिना । ··· [Page 333] न चेदिति । पूर्वत्तयादुत्तरत्तयो न चेत् तर्हि इतः पूर्वमनादौ संसारेऽमुक्तिरुक्ता स्यादित्यर्थः । प्रकारान्तरेणानवस्थापरिहारमाशङ्क्य दूषयति आद्यस्येत्यादिना ॥ १९ ॥

कल्पिताश्रयाविद्यान्तरनिरासे हेत्वन्तरमाह किंचेति । न तावत्त्वच्छब्देन पुरोवर्तिस्वयूथ्यग्रहणं परिच्छिन्नाश्रयाविद्यानङ्गीकारात् । किंतु वदनादिव्यापारेण तन्निमित्तं चिन्मात्रमुपलक्ष्यते । तदविद्ययैव सर्वो व्यवहारो न तु कल्पिताश्रयाविद्याभिरिति रहस्यम् । किंच यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति भूमलक्षणब्रह्मप्राप्त्यन्यथानुपपत्त्यापि [सर्वं ?] स्वमोहजमेव ते भातीति त्वया अभ्युपेयमित्याह न चान्यमोहमिति । अन्यथाप्युपपत्तिं शङ्कते मोहिन इति । मोहिनोऽन्यमोहादि भातीति वक्तुं न शक्यमित्याह न स्वप्न इति । ··· ॥२०॥

[Page 334] गुरुरपि मोहीत्याशङ्क्याह न चाविद्यावान् गुरुरिति । विदुष एव गुरुत्वप्रसिद्धेरित्यर्थः । विद्या तदीया कृत्स्नमोहनुन्न भवतीत्याशङ्क्याह न चेति । ··· विद्वद्देहस्थित्यनुपपत्त्या गुरोरप्यविद्यागन्धो वाच्य इत्याशङ्क्याह विद्वद्देहेति । पुरोवादी गुरोर्मोहित्वं शङ्कते शाब्दज्ञानीति । साक्षात्कृतिमानमोहीत्येतत्तावन्न संभवतीत्याह साक्षात्कृतिरपीति । अन्यथेति । साक्षात्कृतेर्मोहनिवर्तकत्वे शाब्द्यपि मोहं नुदेत् ब्रह्मविद्यात्वात्साक्षात्कृतिवत् । तदा अन्या साक्षात्कृतिर्व्यर्थेत्यर्थः । किंपुनर्न्यायमाह शाब्दी चेदिति । साक्षात्कृतिर्नाम आत्मस्वरूपस्फुरणमेवेत्याशङ्क्याह सा चेदात्मस्वरूपमिति । ··· शाब्दज्ञानस्य मोहनिवर्तकत्वे किं मानमित्या-

शङ्क्याह न चेदिति । शाब्दविद्या मोहनुन्न भवति चेत् तदा सा व्यर्था स्यात् । अतस्सार्थत्वसिद्ध्यनुपपत्त्या मोहनिवर्तकत्वमित्यर्थः । अन्यथा-प्युपपत्तिं शङ्कते न व्यर्थेत्यादिना । शाब्दी भ्रमनुन्न भवति चेत् कस्तर्हि भ्रमनिवर्तक इत्याशङ्क्याह स च भ्रमं नुदेदिति । विद्याभ्यास एव भ्रमविरोधित्वात्तन्निवर्तक इत्यर्थः । ननु शाब्दविद्याया अग्रहनिवर्तकत्व-मिष्टं चेत् तर्हि भ्रमनिवर्तकत्वं सिद्धमेव भ्रमस्याग्रहमूलत्वादित्याशङ्क्याह भ्रमो नाग्रहादिति । अभावत्वान्नृशृङ्गवदग्रहो न भ्रमकारणं चेत् कुतस्तर्हि भ्रम इत्याह किंत्विति । यच्चोक्तं साक्षात्कारोऽन्यो नास्तीति तत्राह तयोश्चेति । अदृष्टतत्त्वोऽपि गुरुर्भवतीति वक्तुं न शक्यत इत्याह तन्नेति । यच्चावाचि अग्रहस्याभावत्वात्कारणत्वं न घटत इति तत्राह अग्रहस्येति । अभावस्य प्राङ्निरस्तत्वात् अन्वयव्यतिरेकाभ्यां [अ ?]कारणत्वस्य साधितत्वा-दित्यर्थः । यदप्यगादि संस्काराद्भ्रम इति तत्राह न च कार्यं कारणमिति । यदभाणि विद्याभ्यासोऽविद्यानिवर्तक इति तत्राह विद्यैवेति । नान्या अभ्यासक्रियेत्यर्थः । नन्वनित्यत्वादिदोषभावनया शरीरादौ नित्यत्वादि-वासना निवर्तते । अतः कथमुच्यतेऽभ्यासादविद्यानिवृत्तिर्नास्तीति । तत्राह विद्यापनोद्येति । ··· [Page 335] भवतु विद्यापनोद्यैवाविद्या तथापि विद्या अभ्यासरूपैवेत्याशङ्क्याह सा चेति । ··· विद्याभ्यासस्यानु-ष्ठेयत्वमङ्गीकृत्य विद्यात्वं निरस्तम् । इदानीं प्रमाणाभावादनुष्ठेयत्वमपि नास्तीत्याह न च विद्याभ्यास इति । ननु विद्याभ्यासे सति विद्याफलं प्राप्यते तदभावे न प्राप्यत इत्यन्वयव्यतिरेकावेव मानमित्याशङ्क्याह न चेति । ज्ञानोदयमात्रप्रयुक्तं ज्ञेयसाक्षात्कारलक्षणं फलं नाभ्यासाधीनं घटादिज्ञानस्याभ्यासं विनापि फलवत्त्वदर्शनात् । अतो व्यतिरेकोऽसिद्ध इत्यर्थः । निदिध्यासितव्य इत्यादिश्रुतिर्विद्याभ्यासं विदधातीत्याशङ्क्याह तिद्यार्थमन्यदिति । विद्योदये कर्तृत्वादिभ्रमनिवृत्तौ विद्याधिकारप्रति-पत्त्यभावान्नाभ्यासविधानं किंतु विद्योदयसिद्ध्यर्थं श्रवणादिसाधनं

साभ्यासं विधीयत इत्यर्थः। ... तद्दर्शनाद्यनिर्वाच्याग्रह सकलभ्रमादि-कारणत्वमेव कथं सिद्धमित्याशङ्क्याह सर्वस्य चेति। जन्मादि-कारणमन्यन्न संभवतीति कुत इत्याशङ्क्याह अन्यस्यानात्मन इति। नन्वग्रहस्य संसारभ्रमकारणत्वे तस्य विद्योदयेन सकृत् निवृत्तेर्जीवन्मुक्तिर्न स्यादित्याशङ्क्याह जीवन्मुक्तेश्चेति। इदानीं स्वयूथ्यमत एव जीवन्मुक्तिर्न घटत इत्याह तव चेति। ततश्चेति। संस्कारादपूर्वभ्रमानिष्टेर्विद्वान् मोह-दुःखादिमन्तं शिष्यं न पश्येदित्यर्थः। अन्यथेति। संस्कारादपूर्वभ्रमोत्पादे सति अमुक्तिप्रसङ्गादित्यर्थः। ... प्रकृतमुपसंहरति अतो नामोहीति। अयुक्तमिति पदच्छेदः॥ २१॥

**[Page 336]** एवं तावदमोहिनोऽन्यमोहादि न भातीत्यस्य दोषं प्रपञ्च्य मोहिनो भातीत्यस्य प्रपञ्चयति कथं च सन्नपीत्यादिना। तव विद्यमानोऽपि मोहः कथमन्यमोहादिभाने हेतुः। किं स्वरूपसंपादनेन बोधमात्रकरणेन वा। आद्यं दूषयति तस्य कल्पकश्चेदित्यादिना। अन्य-मोहेन कल्प्यत्वादन्यमोहजत्वमप्यस्त्वित्याशङ्क्याह क्लृप्तत्वाच्चेति। त्वन्मोहेन यत्कल्पितं तस्य कल्पितत्वादेव नान्यमोहेन कल्प्यत्वं संभवति। इतरथा पुनःपुनः कल्प्यत्वं स्यादित्यर्थः। किंच यत् त्वन्मोहकल्पितं मोहान्तरं तत् नान्यकल्पकं स्वातन्त्र्येण रज्जुसर्पवत्। अतस्सर्वस्य त्वन्मोहकल्पितत्वान्न मोहिनस्तवान्यमोहादि भातीत्यर्थः। द्वितीयं दूषयति न च त्वन्मोह इति। प्रमाणं हि प्रमेयसाधकं प्रसिद्धम्। मोहस्य प्रमाणत्वाभावाद्बोधकत्वं न संभवतीत्यर्थः। प्रमाणबाध्यत्वप्रसङ्गादन्यमोहादेः प्रमेयत्वमपि न संभवती-त्याह अमेयश्चोक्त इति। प्रमाणग्राह्यत्वाभावेऽपि मोहग्राह्यत्वमन्यमोहादे-रस्त्वित्याशङ्क्याह स मोहो मोहमेयश्चेदिति। दीपस्य दीपान्तरविषयत्व-वन्मोहस्य मोहान्तरविषयत्वमपि न संभवतीत्याह न समत्वादिति। ... मन्मोहकार्यस्य मत्संबन्धित्वं मोहकार्यत्वमात्रेण न भवति किंतु मन्मोह-कार्यत्वेनेत्याशङ्क्याह अत एवेति। यदन्यमोहकार्यं मन्यसे तदपि त्वन्मोह-

कार्यं मोहकार्यत्वात्संप्रतिपन्नत्वन्मोहकार्यवदित्यर्थः । इतश्च सर्वं मोहकार्यमित्याह न चान्यमोहजमिति । इतश्च कार्येण वस्तुतः कारणानुमानं न घटत इत्याह न च कारणेऽभातीति । यथा हृदि अनवभासमानायां तदात्मकघटादिज्ञानं न घटते तथा उपादानकारणेऽनवभासमाने तत्कार्यं न भाति । अतः कारणसिद्धौ कार्यनिश्चयस्ततः कारणसिद्धिरिति परस्पराश्रयान्न तत्त्वतः कार्येण कारणानुमानं सिध्यतीत्यर्थः । ...
॥ २२ ॥

**[Page 337]** त्वच्छब्देन चैतन्यमात्रमुपलक्ष्य सर्वत्र तस्यैव मूढत्वमवादि । कल्पिताश्रयश्च मोहभेदोऽपावादि । पूर्ववादी तु तद्बुद्ध्वैव मुख्यमेव त्वच्छब्दार्थमादाय चोदयति यत् मोहकल्पितमिति । एकमोहकल्पितमेवान्यमोहकल्पितमित्यत्र दृष्टान्तो नास्तीत्याशङ्क्याह बहुमोहेति । सिद्धान्ती तु पराभिप्रायेणैव त्वच्छब्दार्थमादाय विकल्प्य श्लोकमवतारयति तत्किं त्वन्मोहकल्पितमित्यादिना । ... यदुक्तं मायाद्विचन्द्रादिदर्शिनां संवादादेकस्याप्यनेकमोहजत्वमिति तत्राह संवादस्त्विति । मायाविना सीताहरणे रावणवधे वा प्रदर्शिते यथैको ब्रूते मम शोको हर्षो वा जातस्तथा परोऽपीति । अयं संवादः यथा शोकादेः प्रातिस्विकत्वेऽपि [?] सादृश्यनिबन्धनस्तथा स्वमोहकार्यद्विचन्द्रादि यद्यप्यन्यदन्यदेव तथापि सादृश्यात्संवाद इत्यर्थः । ... यतो द्विचन्द्रादौ कारणसद्भावात्कार्यान्तरसद्भावो न तु नष्टस्यावस्थानमत इत्युपसंहारः । ... ॥ २३ ॥

... **[Page 338]** एकमोहकल्पितस्यैवान्यमोहकल्प्यत्वं वदता सर्वोऽनात्मा सर्वसाधारण इत्युक्तं स्यात् । तदा च साङ्ख्यादिपक्षे वक्ष्यमाणाः अनियमादिदोषास्त्वत्पक्षेऽपि स्युरित्याह सर्वस्यानात्मन इति ॥ २४ ॥

उक्तदोषपरिजिहीर्षया विशेषमाशङ्कते नैकमोहजमेवेति । उक्तश्लोकमेव पूर्वोक्तं तावद्दोषं स्मारयति तन्नेति । श्लोकयोजनया दोषान्तरमाह अपिचेति । **[Page 339]** पूर्वं मोहभेदमङ्गीकृत्य सर्वमोहजत्वमेकैकस्य

खण्डितम् । इदानीं मोहभेदोऽपि निरूपयितुं न शक्यत इत्याह मोहोऽप्यन्यमोहकल्प्यश्चेदिति । ... लदुक्तदृष्टान्तो बहूनां द्रव्यैः क्रीतमित्यादिः तेन दार्ष्टान्तिकस्य वैलक्षण्यं सिद्धम् । बहुद्रव्यसंभवात्तत्क्रीतमेकं घटते । प्रकृते तु मोहभेदासिद्धेर्न सर्वमोहजमेकमस्तीत्यर्थः ॥ २५ ॥

स्वयूथ्यमते दर्शितामव्यवस्थां निगमयति एकस्येति । अनये निर्युक्तिके पक्षे आश्रयितुमिष्टेऽपीत्यर्थः ॥ २६ ॥

अत उपसंहरतीति । स्वयूथ्यं निरस्य स्वमतमुपसंहरतीत्यर्थः । ... ॥ २७ ॥

॥ इतीष्टसिद्धिविवरणे षष्ठोऽध्यायः ॥

---

# अथ सप्तमोऽध्यायः।

[Page 340] एवं तावत्स्वयूथ्योद्भावितबन्धमोक्षव्यवस्थानुपपत्तिविरोधं परिहृत्य इदानीं काणादाद्युद्भावितव्यवस्थानुपपत्तिविरोधं परिहर्तुं चोद्यमुद्भावयति अथेदानीमित्यादिना ॥ १ ॥

विद्याविद्यावतोरेकत्वादिलक्षणगुर्वभावेऽपि श्रुत्यादेरेवात्मज्ञानं भविष्यतीत्याशङ्क्याह नर्ते विद्या गुरुमिति। तद्विद्यादित्सयेति। तस्मै शिष्याय विद्यादानेच्छया प्रवृत्तिर्न स्यात्। यदि स्यात् तदा सर्वं गुरुशिष्यादिभेदजातं सत्यमेव स्यात् ॥ २ ॥

कथमित्याकाङ्क्षायां सम्यग्ज्ञानादूर्ध्वमपि भावादित्याह विद्वानेवेति। विपक्षे दोषमाह न चेत्पश्यतीति। मूढं कं शिष्यात् उपदिशेदित्यर्थः। जीवाभासं प्रति उपदिशतीत्याशङ्क्याह न चेति ॥ ३ ॥

[Page 341] उपेक्षणीयत्वं दृष्टान्तेन स्पष्टयति तथाहीति। ... ॥ ४ ॥ ... ॥ ५ ॥ ... ॥ ६ ॥ ... ॥ ७ ॥

उत्तरश्लोकस्यापेक्षितं पूरयति आत्मन एकत्वादिति। मुक्तेरदृष्टा चेत्तदापीति भागं व्याचष्टे गुरोर्मुक्तिमित्यादिना ॥ ८ ॥

एवं गुरुशिष्यव्यवस्थानुपपत्तिमुक्त्वा बन्धमोक्षव्यवस्थानुपपत्तिमाह किंचेति ॥ ९ ॥ १० ॥

[Page 342] ऐकात्म्यवादं निरस्य द्वैतवादी स्वपक्षमुपसंहरति अतः पुंभेद इति ॥ ११ ॥

सिद्धान्तमुपक्रमते उच्यत इति। ... ॥ १२ ॥

कथं द्वैतिनां तर्कतो व्यवस्थानुपपत्तिरित्याकाङ्क्षायामाह यद्येककल्प इति। एकैकस्मिन् कल्पे यद्येकैक आत्मा न मुक्तः तदा भविष्यतीत्यत्र

का आशा । अथ मुक्तस्तदा अद्य जगन्न स्यात् । अनन्तैः कल्पैरनन्तानां मुक्तत्वात् कल्पानामियत्ताकरणे संसारस्य सादित्वप्रसङ्गादित्यर्थः ॥ १३ ॥ ··· ॥ १४ ॥

पुरुषा अनन्ता अज्ञातसंख्याकत्वात् कल्पवदित्याशङ्क्याह न तेषामिति । ··· येषां संख्या अस्मदादिभिः परिच्छेत्तुं न पार्यते तेषामन्येन शक्यत इत्यत्र दृष्टान्तमाह गणितज्ञवदिति । यदि विद्यमानां संख्यामीश्वरो न विद्यात् तदा भवेत्तत्सर्वज्ञताहानिः । [संख्यैव ?] नास्तीत्याशङ्क्याह न चासंख्यत्वमिति । ··· ॥ १५ ॥

प्रकारान्तरेणाद्वैतवादस्य न्याय्यत्वमाह किंचेति । पत्युरीश्वरस्य गुणानां साङ्ख्याभिमतानां च जन्म प्रसज्यते प्रामाणिकभेदवत्त्वाल्लोकवत् । ततश्च क्षयप्रसङ्ग इत्यर्थः । **[Page 343]** उक्तश्लोकमेवानन्त्यनिरासे हेत्वन्तरमाह भेदे न वस्तुत इति । ··· ॥ १६ ॥ ··· ॥ १७ ॥

अवसरप्राप्तं लोकायतिकमतमुद्भावयति अत्राहुरित्यादिना । देहघटादेरेव प्रत्यक्षेण दृष्टत्वात् सत्यत्वमुक्त्वा देहस्यात्मत्वे प्रमाणमाह देह एवाहमिति । यथा अग्निव्याप्तत्वेनायो दहतीति व्यपदेशस्तथा आत्मव्याप्तत्वेन देहे अहंधीरित्याशङ्क्याह ततोऽन्यस्येति । ··· किंच भवदभिमत आत्मा देहाद्भिन्नोऽभिन्नो वा । नोभयथापि सिध्यतीत्याह तस्य च भेद इत्यादिना । ··· अद्वैतवादिनाप्यतिप्रसङ्गपरिहारायैकात्म्यस्य ज्ञेयत्वं वाच्यमित्याह अद्वैतिनोऽपीति । ··· यच्चोच्यतेऽद्वैतवादिना देहादिर्माया जडत्वाद्रज्जुसर्पवदिति तत्र सत्त्वग्राहकप्रत्यक्षविरोधं बाधानुपलम्भविरोधं चाह देहादेरेव चेति । ··· **[Page 344]** उक्तमर्थजातं संक्षिप्योपसंहरति तस्मादित्यादिना । किंच कर्ममीमांसापर्यालोचनया च न देहादतिरिक्तात्मसिद्धिरित्याह स च कार्यार्थ इति । शब्दस्य वृद्धव्यवहारात्कार्ये व्युत्पत्तिरिष्टेति यद्यपि कार्यपरो वेदस्तथापि तस्य कृत्युद्देश्यत्वलक्षणकार्यस्याश्रय आत्मा अपेक्षित इत्याशङ्क्याह स चेत्कार्य इति ।

वेदश्चेत्कार्ये त्रैवर्णिकानां मानं किं देहव्यतिरिक्तेनात्मना । देहस्यैव कार्याश्रयतासंभवादित्यर्थः । फललाभायातिरिक्त आत्माप्यपेक्ष्य इत्यपि न वाच्यमित्याह फलं चेति । ... अकृताभ्यागमकृतप्रणाशप्रसङ्गादपि न देहातिरिक्तस्यात्मनः फलमित्याह न ह्यकर्तुः फलमिति । अग्निहोत्रादिकर्मफलं व्यतिरिक्तात्मभोग्यं नास्ति आत्मा वा वेदवेद्यो न विद्यत इत्यस्मिन्नर्थे बृहस्पतिवाक्यमाह तदुक्तमिति ॥ १८ ॥

सिद्धान्तमुपक्रमते अत्रोच्यत इति । वपुरादि न— देहादिवस्त्वेव न विद्यते । कस्य त्वयात्मत्वं प्रतिपाद्यते कुतो वा आत्मनो भेदाभेदविकल्पः क्रियत इति भावः । तस्या मायाया आश्रयश्चासौ अदृश्यश्चासावजन्मा चासावनादिश्चासावनन्तश्चासावात्मा च । तस्याभ्युपेयत्वात् आत्मा नास्तीति मा वोचत यूयमित्यर्थः । यच्चोक्तं भेदस्य रज्जुवद्बाधात्सत्त्वमिति तत्राह न चेति । देहादिप्रतिभासानिवृत्तेरनुमा बाधिका न भवति सविलासाविद्यानिवृत्तिर्हि बाध इत्याशङ्क्याह न च भानानिवृत्तेरिति । परोक्षबाधे प्रतिपन्नस्वभावानुपमर्दन अवस्तुत्वबोधनमेव बाध इत्यर्थः । यच्चोक्तं प्रत्यक्षमेवैकं प्रमाणमिति तन्निरासाय चोद्यमुद्भावयति अनुमानादेरमानत्वादिति । परमुखेनैव मानान्तरे प्रसञ्जिते परः प्रत्याह न मे तत् मानमिति । ... [Page 345] मानमूलं पौरुषेयं वाक्यं मानम् । तव चानुमानं मानमित्यत्र प्रमाणाभावाद्भ्रममूलं तत् वाक्यमित्याह त्वद्भ्रान्तिमूलमिति । सिद्धान्त्याह एवं चेदिति । ... पूर्वं स्ववाक्यस्य भ्रान्तिमूलत्वमङ्गीकृत्योक्तम् । इदानीं मद्वाक्यार्थावगममन्तरेण तत्र मानासंभवे भ्रान्तिमूलत्वं वा वक्तुं न शक्यमित्याह कथं चेत्यादिना । [Page 346] मदीयगिरा चेन्मद्वाक्यार्थं वेत्सि तर्हि सोऽर्थस्त्वत्यः सा च मद्गीस्ते मानमित्युक्तम् । तत्र कर्ममीमांसानुसारेण लोकायतश्शङ्कते पुंगिरैवमिति । ... अथ लिङ्गतया लौकिकश्शब्दो बोधक इति न व्युत्पत्त्यपेक्षेत्याशङ्क्याह अन्यथेति । शब्दस्य व्युत्पत्त्यभावे लिङ्गत्वे च सति विवक्षादेरबोधकत्वाल्लोके

शाब्दव्यवहारोच्छेद एव प्रसज्येत । ··· यच्चोक्तं कर्ममीमांसकानां कार्यपरस्सर्वो वेद इति तत्राह तत्र हीति । अपौरुषेयत्वेन अनपेक्षश्शब्दः कार्ये मानं मीमांसकानाम् । तत् सिद्धेऽप्यविशिष्टमित्यर्थः । किंच— यद्यप्यन्यैर्वादिभिश्शब्दाद्विवक्षादि ज्ञातुं शक्यते तथापि लोकायतिकेन न शक्यत इत्याह कथं चेति । मानमूलात् [?] शब्दाद्वक्तृविवक्षादि कथं त्वया ज्ञातम् । कथं वा वाक्यार्थे मानासंभवे सति भ्रान्तिमूलत्वम् । न कथंचित् परविवक्षादेरप्रत्यक्षत्वेन संबन्धग्रहणायोगादित्यर्थः । अथ स्वस्य विवक्षादिपूर्वकश्शब्दप्रयोगः प्रत्यक्ष इति स्वात्मनि व्याप्तिग्रहणं भविष्यतीत्याशङ्क्याह न हीति । रूपादिहीनत्वमसिद्धमित्याशङ्क्याह न च रूपाद्य इति । मानसत्वमाशङ्क्याह न च चक्षुरादेरन्यदिति । पुनश्चक्षुरादिवेद्यत्वमाशङ्क्य दूषयति सर्वस्येत्यादिना । यतस्स्वविवक्षावत् परविवक्षादेरपि चाक्षुषत्वापाताद्वाक्यं ते व्यर्थं स्यात् ततो वाक्यप्रयोगमभ्युपगच्छता स्वविवक्षाद्यपि नाक्षवेद्यं वाच्यमित्यर्थः । ··· **[Page 347]** पुनः परपक्षमनूद्य निरस्यति यदुक्तमित्यादिना । **[Page 348]** किंचादर्शनादभावो ज्ञायते क्रियते वेति विकल्प्याह अदर्शनमभावस्य बोधकं चेदिति । सत्त्वे चादर्शनाभावतत्संबन्धानां किमनिष्टं स्यादित्याशङ्क्याह अतस्तत्सत्त्वेऽपीति । यथा देहे विद्यमानेऽप्यसत्त्वमात्मनो न स्यात्तदद्दर्शनादिसत्त्वेऽपि न स्यात् [?] । एकभावेऽन्याभावस्यानियतत्वादित्यर्थः । अदर्शनस्यानिर्वाच्यतां स्फुटीकर्तुं चोद्यमुद्भावयति अदर्शनमित्यादिना । कथं चेत्यादिना साक्षिसिद्धत्वमाह । या च स्वपक्षे पूर्वं मुक्तिः प्रतिज्ञाता तां स्फुटीकर्तुमुपक्रमते तस्य ज्ञानादित्यादिना । ··· ॥ १९ ॥

इतश्चासंबद्धोऽयं पक्ष इत्याह सुखदुःखे इति । **[Page 349]** न तरामन्यथेति । क्लेशक्रिया स्वभावो न भवति चेत् नतरां शास्त्रस्यार्थवत्त्वमप्राप्तप्रतिषेधात् नाकाशं भक्षयेदितिवदित्यर्थः । निष्प्रयोजनत्वाच्छास्त्रकरणं न घटत इत्युक्तम् । इदानीं स्वभावपक्षमाशङ्क्य प्रतिषेधति मम स्वभाव

इत्यादिना । यत आगमापायी स्वभावो न भवति अतस्स्वभाववादे किंचिदप्यागन्तुकं न स्यादित्याह अतस्ते शास्त्रक्रिया स्वभावश्चेदित्यादिना । ... अतो नात्मसंबन्धादिति । आत्मातिरिक्तवस्तुसिद्धिर्नात्मसंबन्धात् कूटस्थत्वेनान्यसंसर्गानर्हत्वात् । नापि स्वतस्सिद्धत्वेन अन्यत्वायोगप्रसङ्गा-ज्जडस्वभावस्य सिद्ध्यसंभावाच्चेत्यर्थः ॥ २० ॥

**[Page 350]** वृत्तानुवादपूर्वकं संबन्धमाह बह्वप्यपीत्यादिना । विक्रियात्वाद्गुणत्वाच्च असाधारण्ये शङ्किते असिद्ध्या परिहरति तन्नेति । अनन्तरमपि स्वभाववादे कूटस्थत्वस्य निरूपितत्वादित्यर्थः । ज्ञेयत्वाच्च रूपादिवन्नात्मसमवेततेत्याह आत्मसमवेतत्वे चेति । ... ॥ २१ ॥

**[Page 351]** निमित्तासाधारण्येन नैमित्तिकासाधारण्यमाशङ्क्य परिहरति कर्मादिहेतुरित्यादिना । देहान्तरचेष्टानुपलम्भेऽपि एकस्मिन्नेव देहे सर्वपुंसां प्रयत्नसंभवान्न मत्प्रयत्नजमेवेत्याह न एकस्मिन्नेव देह इति । किंच देहादिनिरपेक्षात्प्रयत्नात्किं कर्मादि स्यादुत सापेक्षादिति विकल्प्य दोषमाह देहाद्यनपेक्षादिति । इदानीं प्रयत्नस्यासाधारण्य-मङ्गीकृत्याह एकप्रयत्नोपेतादपीति ॥ २२ ॥

अन्योन्याश्रयत्वमनवस्था चेति दोषद्वयमगादि । तदाक्षिप्य समाधत्ते ननु यदित्यादिना । **[Page 352]** ननु व्रीह्यादौ हेतुफलभावादेव स्वत्वमपि दृष्टम् । तथा अत्रापि स्यादित्याशङ्क्याह व्रीह्यादावपीति । अन्यत इति । क्रियादिनेत्यर्थः । ... ॥ २३ ॥

व्यवस्थादृष्टिविरोधं शङ्कते ननु व्यवस्थितमिति । व्यवस्थाया अनेक-पदार्थधर्मत्वात् भेदाप्रमितौ न प्रामाणिकव्यवस्थादृष्टिरित्याह अस्त्येतदिति । तद्धेतौ तस्य सुखादेर्हेतौ देहादिलक्षणे साधने तथा तस्य देहादेर्हेतौ कर्मादिलक्षणे । अस्त्येतदित्यस्यार्थमाह स्यादेतदेवमिति । स्वात्मनः प्रत्यक्षत्वेऽपि परस्याप्रत्यक्षत्वात् प्रत्यक्षाप्रत्यक्षयुगलधर्मस्य वायुवनस्पति-संयोगस्येव अप्रत्यक्षत्वान्न पुंभेदः प्रत्यक्ष इत्याह न तु स दृश्यत इति ।

आत्मा अभिन्न इत्येतत्तावदनुमातुं न शक्यते स्वात्मनोऽपि भेदप्रसङ्गात्। अत आत्मान्तराद्भिन्न इत्यनुमातव्यम्। तदशक्यमप्रसिद्धविशेषणत्वादित्यभिप्रेत्याह नापि लिङ्गगम्य इति ॥ २४ ॥ २५ ॥

**[Page 353]** अनुपपद्यमानदर्शनासंभवात् [?] अर्थापत्तेरनुदय इत्याह व्यवस्थानुपपत्त्यापि नेति। यतः प्रत्यक्षादिभिर्भेदो न सिद्धोऽत एव न प्रमाणान्तरसिद्धोऽपीत्याह अत एव न श्रुत्यापीति ॥ २६ ॥ … ॥ २७ ॥ … ॥ २८ ॥

व्यावहारिकभेदावलम्बना व्यवस्था तत्त्वाभिप्रायेणाभेदो मयोच्यते। अतो नाभेदोक्त्या अव्यवस्था मयाङ्गीकृतेति साम्यमाह अत्रोत्तरमित्यादिना। **[Page 354]** पूर्वं साम्यमुक्त्वा स्वपक्षेऽधुना विशेषमाह अथवेति। बद्धो ऽहं मुक्तोऽहमित्यहंकारगतव्यवस्थादर्शनान्नात्मैक्यं तेन विरुध्यत इत्येकदेशिमतेन परिहारमुक्त्वा आत्मस्वरूपगतैव बन्धमोक्षव्यवस्थेति स्वरहस्यमाह अथवा मयैव सा दृष्टेति। … ॥ २९ ॥

**[Page 355]** उत्तरश्लोकत्रयस्य तात्पर्यमाह पुंभेदपक्ष इति। तेषां पुंसां लक्षणशास्त्रं च तज्ज्ञ आचार्यश्च ताभ्यां ह्यात्मज्ञानं वाच्यम्। पुंभेदपक्षे तदसंभवान्न मुक्तता स्यादित्यर्थः। ममैवायं विधिरित्यसाधारणस्वरूपज्ञानपूर्वकमनुष्ठाने प्रवर्तितव्यम्। तच्चाशक्यं अनन्तत्वात्सकलपुरुषव्यावृत्तस्वरूपापरिज्ञानादित्याह नापीति ॥ ३० ॥

गुरुद्वारकं तावदात्मज्ञानं न संभवति गुरोरसर्वज्ञत्वेन सर्वपुंव्यावृत्तशिष्यस्वरूपाज्ञानादित्युक्तम्। इदानीं सर्वज्ञेनेश्वरेण योगिना वा प्रणीताच्छास्त्रादपि न संभवतीत्याह सर्वज्ञोऽपीति। सर्वज्ञश्चेत्पुंसामियत्तां परिच्छिनत्ति तदानन्त्यं व्याहन्येत। तदपरिच्छेदे तु पृथक्पृथग्लक्षणशास्त्रकारी न स्यादित्यर्थः। किंच पुंभेदे श्रोतापि न स्यात् आत्मलक्षणशास्त्रमेवेदमित्यसर्वज्ञस्य निर्धारणाभावादित्याह श्रोता कुत इति। ननु यन्नामाङ्कितं यच्छास्त्रं तच्छ्रवणे तस्य प्रवृत्तिर्भविष्यतीत्याशङ्क्याह पुंसां नामभेदेऽमित इति। न तौ श्रोतृवक्तारौ स्यातामित्यर्थः। नामभेद-

ज्ञानं वा कस्मान्न संभवतीत्याशङ्क्याह नामभेदश्चेति । वेदाच्छिष्यस्वरूपं ज्ञात्वा गुरुरुपदिशतीत्यपि वक्तुं न शक्यते नाम्नां नामिनां च स्वरूपाज्ञाने तयोस्संबन्धाज्ञाने च नामभेदाज्ञानादित्याह वेदेऽपीति ॥ २१ ॥

उक्तमर्थं निगमयति स्वात्मज्ञोऽपीति ॥ २२ ॥

यद्युक्तनीत्या लक्षणभेदो नेष्यते तत्राह वैलक्षण्यं न चेदिति । नो चेदिति । एकलक्षणत्वेऽप्यभेदो नेष्यते चेत् तर्हि अभिदा कुतस्स्यात् । न कुतोऽपि । तत्र हेतुमाह एकस्यापि भिदाप्राप्तेरिति । मा भूदेकः कश्चिदपि किं नश्छिन्नमित्याशङ्क्याह एकाभावे भिदा कुत इति ॥ २३ ॥

[Page 356] भेदाभेदवादे तर्ह्यात्यन्तिकवैलक्षण्याभावाद्गुरुशिष्यव्यवस्था भविष्यतीत्याशङ्क्य अयं पक्ष एव तावन्न घटत इत्याह अस्ति नास्तीति ॥ २४ ॥

यथैकस्मिन् भूभागे घटोऽस्ति नास्ति चेति विरुद्धं तथा गुरुशिष्ययोर्वैलक्षण्यमस्ति नास्ति चेति विरोधादयं पक्षो न संगच्छत इत्युक्तम् । तत्र विरोधपरिहाराय नास्तिशब्दस्य भावविषयत्वं शङ्कते वैलक्षण्येतर इति । अस्तिनास्तिशब्दाभ्यां वैलक्षण्यस्य भावाभावोक्तावपि तथा— नान्यपुंवित् पुमान् स्यात् वैलक्षण्यांशसद्भावादित्यर्थः ॥ २५ ॥

पुनरवैलक्षण्यांशप्रयुक्त्या शिष्यवेदनमाशङ्क्य परिहरति अवैलक्षण्यतोऽन्यं चेदिति । सार्धश्लोकं विकल्पपुरस्सरं व्याचष्टे अवैलक्षण्यमेवेष्टमित्यादिना । अन्यथेति । अभेदे सत्यपि शिष्यश्चेद्गुरुं न वेत्ति गुरुरपि शिष्यं न विद्यात् अभेदाविशेषादित्यर्थः ॥ २६-२७ ॥

शङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति शिष्यस्य धीहेतुरिति । तदभेदेऽपीति । तस्माद्गुरोस्सकाशादभेदेऽपि चेद्धीहेतुश्शिष्यस्य न स्यात् तर्हि स धीहेतुस्सुतरां न गुरोस्स्यात् स्वात्मनि वृत्तिविरोधादित्यर्थः ॥ २८ ॥

[Page 357] गुर्वाश्रयधीहेतोश्शिष्यस्यासंभवे विशेषमाशङ्क्य परिहरति स्वात्मन इति । स्वात्मनो गुरोरभिन्नत्वं शिष्याद्भिन्नाभिन्नत्वमित्ययं

विशेषो नोपपद्यत इत्युक्तम्। एतद्विवृणोति शिष्यादभिन्नादिति। अभिन्नाच्छिष्याद्भिन्नश्चेद्गुरुस्स्यात् स्वस्मादभिन्नाद्भिन्नः किं न स्यात् अविशेषात्। अतश्शिष्यादिव स्वस्मादपि भिन्नाभिन्नत्वमविशिष्टमित्यर्थः। अथ स्वस्मादभिन्नान्न भिन्नः तर्हि अभिन्नशिष्यतः किमिति भिन्न इति स्वात्मन इव शिष्यादप्यभिन्नत्वमेवेत्यर्थः। गुरोः धीहेतुश्शिष्यस्य न भवतीति कोऽर्थः— किं शिष्याश्रयो न भवति किं वा शिष्यविषया धीहेतुर्न भवति। प्रथमे तावदुक्त एव परिहारः शिष्याश्रयो न भवति चेद्गुर्वाश्रयोऽपि न स्यादविशेषादिति। द्वितीयं प्रत्याह गुरोरभिन्नस्येति। गुरौ ज्ञातेऽपीति। गुरुणा स्वात्मनि ज्ञातेऽपि नान्यश्शिष्यो ज्ञेयस्स्यादित्युपदेशो न स्यादित्यर्थः॥ ३९॥ ४०॥

स्वतोऽभिन्नान्न किं तथेत्युक्तम्। तत्र शङ्कते भेदः कथमिति। स्वस्माद्भेदे स्वरूपाभावप्रसङ्गादसौ न घटत इत्याह स्वत इति। सिद्धान्ती प्रतिबन्दिन्यायेनाह कोऽन्य इति। अन्यतोऽपि चेच्छिष्यादभेदस्स्यात् तदा अन्यो न स्यादित्यर्थः। एतदुक्तं भवति— यथा विरुद्धमपि भिन्नादभिन्नत्वं त्वयेष्यते तथा स्वस्माद्भिन्नत्वमपि स्यात्। अतः गुरुशिष्ययोर्भिन्नाभिन्नत्वमविशिष्टमिति॥ ४१॥

इतश्च गुरोस्स्वस्माद्भेदो नास्तीति वक्तुं न शक्यत इत्याह किंचेति। गुरोरभिन्नश्शिष्यस्तत एव यदि भिन्नस्स्यात् तदा गुरुरेव गुरोर्भिन्न इत्युक्तं स्यात्। एतदुत्तरार्धेन विवृणोति। गुर्वभिन्नाच्छिष्याद्गुरोर्भेदे सति गुरोस्सकाशाद्गुरोर्भिदा नास्तीति गीर्मृषेत्यर्थः॥ ४२॥

अथ गुर्वभिन्नोऽपि शिष्यो गुरोरात्मा न भवतीति विशेषमाशङ्क्याह नात्मा गुरोरिति। अभिन्नोऽपि शिष्यो गुरोरात्मा न भवति चेत् गुरुरेव तदा गुरोरात्मा न भवतीत्युक्तं स्यात्। एवं च सति भेद एव स्वतो गुरोरिष्टस्स्यादित्यर्थः॥ ४३॥

... अभेदप्रयुक्तदोषान्तरमाह दृष्टेति। भेदाभेदपक्षेऽपि विद्वान् गुरुरविद्वान् शिष्य इति व्यवस्थानुपपत्तिं श्लोकोक्तां स्फुटयति अतो भेदाभेदपक्ष इत्यादिना॥ ४४॥ ४५॥

---

**[Page 358]** कथमिति। गुरुशिष्यव्यवस्थानुपपत्तौ उक्तन्यायेन सर्वत्र मोक्षादिष्वव्यवस्थाप्राप्तिरित्याशङ्क्याह तस्मात्पुंबन्धेति ॥ ४६ ॥

पुरुषभेददूषणेन साङ्ख्यपक्षो यद्यपि दूषितो भवति तथापि दोषान्तर-मुच्यत इत्याह प्रधानवादीति। उक्तश्लोकमेव तावत्प्रथमाध्यायोक्तं दोषं स्मारयति जडस्येति। अन्यथेति। स्वातन्त्र्ये सत्ताप्रतीत्योर्निरपेक्षत्वलक्षणे सति दृग्रूपत्वं सत्त्वादिगुणराहित्यमात्मत्वं चात्मवदेव स्यादिति जडत्वहानिः प्रसज्यत इत्यर्थः। स्वातन्त्र्ये सति अनिष्टान्तरं चाह कार्यकारणतेति। ननु प्रलये यस्मिन् जगत्प्रलीयते तत् प्रधानं मायादिशब्दाभिधेयं त्वया-पीष्यते कथं खण्ड्यत इत्याशङ्क्याह किं बहुनेति। सेश्वरसाङ्ख्याभिप्रायेणाह अस्वातन्त्र्येऽपि तथेति। असिद्धिरेव प्रमाणाभावात्। सत्यं चानुभवमात्रा-दसिद्धेरित्यर्थः [?]। यद्यपि युक्तिसिद्धं न भवति तथापि श्रौतं भविष्यती-त्याशङ्क्याह नापि श्रुतिमदिति। वदन्ति सन्ति वचांस्युन्मूलयन्ति यत इति योजना। **[Page 359]** उक्तमुपसंहृत्य श्लोकं योजयति अतः प्रधानं नामेत्यादिना। एकं प्रधानमविद्यया बध्यते विद्यया विमुच्यते तर्हि एकमुक्तौ जगन्मुक्तिरित्यादिदोषाणामैकात्म्यपक्ष उक्तानां साङ्ख्यवादे-ऽवकाशलाभादैकात्म्यवादे नाव्यवस्था किंतु साङ्ख्यवाद एव स्यादित्यर्थः। अथ प्रधानमेवैकं तदात्मकान्यन्तःकरणादीनि भिन्नानीति व्यवस्था तत्राह कथंचिदिति। भेदाभेदपक्षोक्तदोषो धीहेतुसाङ्कर्यादिः। तस्य प्राप्तेरव्यव-स्थेत्यर्थः। प्रसङ्गादन्यत्राप्यतिदिशति एतेनेति। ··· साङ्ख्यपक्षादिशेषं शङ्कते ब्रह्मण इति। साङ्ख्यपक्षाद्वैलक्षण्यमङ्गीकृत्य षष्ठाध्यायोक्तदोषो-ऽतिदिष्टः। औपाधिकानां स्फटिकलौहित्यवन्मिथ्यात्वादिदानीं वैलक्षण्य-मपि नास्तीत्याह कथं चेति। परमार्थत आकाशाद्यात्मकस्य ब्रह्मणः कथं चेतनता। न कथंचित्। अतः प्रधानान्न विशेष इत्यर्थः। प्रासङ्गिकं हित्वा प्रकृतमनुसरति प्रधानस्यैव चेदिति। सार्थकत्वमाशङ्क्य परिहरति न व्यर्था इति ॥ ४७ ॥

इदानीं प्रधानस्य पुरुषशेषत्वमपि निरूपयितुं न शक्यत इत्याह किंचेति । मुक्तितोऽमुक्तितश्चेति पदच्छेदः ॥ ४८ ॥

[Page 360] अन्यतोऽस्त्वर्थित्वमित्यत्र दोषमाह नातोऽन्यतोऽपीति ॥ ४९ ॥

पुमानर्थी न वेति विकल्पितम् । तत्राद्यं निरस्यान्त्यं निराचष्टे अनर्थी चेत् तत्राहेत्यादिना । ... ॥ ५० ॥

उक्तदोषभीत्या विशेषमाशङ्क्य परिहरति प्रतिज्ञमित्यादिना । [Page 361] प्रतिबन्दिन्यायेनोक्त्वा विशेषमाह कथं चेत्यादिना । चित्तस्य जनिमत्त्वमुपचार इत्याशङ्क्य परिहरति चित्तं चेत्यादिना । अभिव्यक्तेस्सादित्वादभिव्यक्तेन संबन्धोऽनादिर्न घटते चेत्तर्हि अनभिव्यक्तेन संबन्धोऽनादिरस्त्वित्याशङ्क्याह न चानभिव्यक्तेनेति । अनभिव्यक्तस्य चित्तपदवाच्यतैव नास्तीति भावः । अनभिव्यक्तचित्तसंबन्धस्य अनादित्वं प्रौढवादेनाङ्गीकृत्याह अनादित्वेऽपीति ॥ ५१ ॥

नियमस्यानादित्वकल्पना अन्धपरम्परैवेत्याह अपिचेति ॥ ५२ ॥

इतश्च साङ्ख्यस्य व्यवस्था न सिध्यतीत्याह बद्धाबद्धाविति । [Page 362] बन्धमोक्षार्थप्रवृत्त्योरविशेषप्रसङ्गमेव विवृणोति बन्धमोक्षयोस्त्वित्यादिना ॥ ५३ ॥

इदानीं प्रधानप्रवृत्तिरपि न घटत इत्याह बन्धमोक्षेति । बन्धोऽयं मोक्षोऽयमिति विभागानभिज्ञं प्रधानं तदर्थं कथं चेष्टते । न कथंचिदित्यर्थः । व्यर्था च सेत्याह नासत्सतोरिति ॥ ५४ ॥

अभिव्यक्त्यर्थत्वात्प्रवृत्तेस्सार्थकत्वमाशङ्क्याह तया चेदिति । अथ सदा न बन्धमोक्षौ तदभिव्यक्तेरनभिव्यक्त्यभिव्यक्तिसद्भावादित्याशङ्क्याह नाभिव्यक्तीतराभ्यां चेति ॥ ५५ ॥

कथमित्याकाङ्क्षायां तत्र वक्तव्यं किं बन्धव्यक्त्यव्यक्ती एव मोक्षाव्यक्तिव्यक्ती किं वा अन्ये । प्रथमं प्रत्याह बन्धव्यक्तीतरे इति । तदा सुषुप्तादौ

मुक्तता स्यात् । चकारात्सम्यग्ज्ञानानर्थक्यम् । तत्र हेतुः बन्धाव्यक्ते-र्भ्रमाव्यक्तेरिति ॥ ५६ ॥

द्वितीयमनूद्य दूषयति बन्धव्यक्तीतराभ्यां चेदिति । मुक्तिं व्यनक्तीति मुक्तिव्यङ् साधनविशेषो न बन्धनिवर्तकः विरोधाभावादित्यर्थः ॥ ५७ ॥

विपक्षे दोषमाह मुक्तिद इति । ... ॥ ५८ ॥

नियमे प्रमाणमाशङ्कते अन्यथेति । ... ॥ ५९ ॥

पूर्वं व्यक्तव्यक्ती स्वीकृत्य दोषो दर्शितः । इदानीं ते अपि निरूपयितुं न शक्येते इत्याह व्यक्तीतरे चेदिति ॥ ६० ॥

**[Page 363]** किंच साङ्ख्यमतपर्यालोचनयापि वस्तु कूटस्थमद्वैतं प्राप्नोति । न तत्रातात्त्विकव्यवस्थासंभव इत्याह न चासत इत्यादिना ॥ ६१ ॥ ... ॥ ६२ ॥

॥ इतीष्टसिद्धिविवरणे सप्तमोऽध्यायः ॥

---

# अथाष्टमोऽध्यायः।



[Page 364] एवं तावदविद्याधीनव्यवस्थाश्रयणेन अद्वैते व्यवस्थानुपपत्तिं परिहृत्य अधुना अविद्यानिवृत्त्या द्वैतमाशङ्क्य परिहरति अत्रा-मायावादिन इत्यादिना। ... तर्हि मिथ्याकार्यमज्ञानोपादानमिति व्याप्तेः नाशस्योपादानमज्ञानं वाच्यमित्याह किं तदेवेति ॥ १ ॥

सिद्धान्तश्लोकोक्तं पञ्चमप्रकारपक्षमादाय परिहरति उच्यत इत्यादिना। यादृगज्ञानस्य भावः परमार्थतस्सर्वथानिर्वाच्यस्तादृगभावोऽपि तत्त्वतो निरूपणासह इति नाद्वैतव्याघात इत्यर्थः। ... उक्तश्लोकमेव तावद्दोषमुपक्रमते पृच्छामस्त्वामित्यादिना। आत्मनाशवदिति वैधर्म्यदृष्टान्तः। ... [Page 365] यदात्मातिरिक्तं सत् तत्किं जडमजडं वा। आद्यं प्रत्याह जडस्येति। जडत्वादेव न स्वतस्सिद्धिर्नाप्यन्यतः प्रमाणात् संसर्गानिरूपणात्। अजडस्य साक्षिणोऽपि वेद्यतया न सिध्यति। तस्य स्वाध्यस्तसाधकत्वेन सत्साधकत्वाभावादित्यर्थः। द्वितीयं प्रत्याह अजडस्य चेति। किंच सद्वस्त्वन्तरं जायते चेदात्मनस्तत्काशादज्ञानाद्वेति विकल्प्य तद्दूषयति कुतश्चेत्यादिना। किंच जायमानस्वभावपर्यालोचनायामपि न वस्त्वन्तर-जन्मेत्याह न च सत इत्यादिना। परिशेषादज्ञानमेव तन्नाश इत्यपि न वाच्यमित्याह नापि तदेवाज्ञानमिति। अज्ञानान्तरमप्यात्मसंबन्ध्य-नात्मसंबन्धि वा। आद्यं प्रत्याह तदपीति। समानाश्रयविषययोर्ज्ञाना-ज्ञानयोर्विरोधादित्यर्थः। द्वितीयं प्रत्याह न चेति। अनात्मसंबन्धि अज्ञानं प्रागेव निरस्तमित्यर्थः। एवं द्वैतिषु निरस्तेषु एकदेशी परिशेषादात्मै-वाज्ञानहानिरित्याह यद्यात्मन इति। सिद्धान्ती तु अद्वैताविरोधिनी

अविद्यानिवृत्तिरेकदेशिना यथा यथेष्यते तथा तथा मयापीष्यत इति मत्वा अनुजानाति अस्त्वेवमपीति । [Page 366] अन्याभावेन अद्वैतहानिरित्युक्तम् । तत्रैकदेशिनं पृच्छति किं तदद्वैतमिति । अन्यथेति । आत्मातिरिक्तद्वैतरहितत्वं नाम यदि वस्तु किंचित्स्यात्तदा न कदाचिद्बन्धस्याद्विरोधिसद्भावादित्यर्थः । एकदेशी स्वाभिमतमद्वैतपदार्थमाह ज्ञानदग्धेति । सिद्धान्त्याह तद्दाहोऽप्यात्मैव चेदिति । उक्तो दोषः—सदा स्यादिति । आत्मातिरिक्तश्चेत्तर्ह्येकदेशिनोऽप्यद्वैतविरोधस्तुल्य इत्यर्थः । एकदेशी स्वाभिप्रायं विवृणोति उक्तदोषप्रसङ्गादिति । ··· पुनरेकदेश्यन्तरचोद्यमुद्भावयति नन्वात्मवदित्यादिना । सादित्वानादित्वनिरूपणेन किमज्ञानदाह एव नास्तीति विवक्षितं वस्त्वन्तरजन्मत्वं वा । आद्यं प्रत्याह मैवं चूचुद इति । द्वितीयं प्रत्याह सर्वं चेति । वस्त्वन्तरत्वं जायमानस्य नोपपद्यते शुक्तिरूप्यवदज्ञानजस्यावस्तुत्वादित्यर्थः । अत एवेति । यतो जनिमत एवाज्ञानजत्वमत एवाज्ञानजस्तद्दाहो न भवति जनिमत्त्वाभावादित्यर्थः । कुतस्तर्हि तद्दाह इत्याशङ्क्याह श्रुतिजा चेति । अभ्यासजा आत्मधीरज्ञाननिवर्तिकेति न वाच्यमित्याह इति मया च साधितमिति । उक्तमुपसंहरति अतोऽज्ञानदाह इति । [Page 367] परोक्तमनूद्य अंशेनानुजानाति यत्तूक्तमित्यादिना । प्रमाणाभावाच्च नाज्ञानदाहः कस्यचिज्जन्मेत्याह न चास्य दाह इति । इदानीं प्रमाणस्वभावपर्यालोचनयाप्यज्ञानदाहः कस्यचिज्जन्म न भवतीत्याह न चाज्ञाननुद इत्यादिना । सती संवित् मानजन्या प्रसिद्धा । अतः कथं सत् मानजन्यं न भवतीति तत्राह संविदश्चेति । पूर्वक्लृप्तमंशाभ्यनुज्ञानमपि त्यजति कथं चेति । ध्वंसस्याधिकजन्मरूपत्वे सत्येव हेतुमत्त्वं स्यात् न पूर्वरूपप्रच्युतिमात्रत्वे सतीत्येतत्कथम् । निर्युक्तिकमेवेदमित्यर्थः । पूर्ववादी युक्तिं शङ्कते अभावे हेतुकृत्याभावादिति । प्रतिबन्दिग्रहेण परिहरति तर्हीति । मृदादिषु कुलालादिव्यापारे सति घटादिकार्यं जायते न त्वसति । तत्र हेतुकृत्यमित्याह अथान्यत्रैवेति । तर्हि घटादावेव

मुसलादिप्रवृत्तावुपमर्दोऽपि स्यात्। अतो हेतुमत्त्वं भावाभावयोरविशिष्टमिति भावः। भवति प्रयोगानुपपत्तिमाशङ्क्य परिहरति सोऽभाव इत्यादिना। पुनः पूर्ववादी युक्त्यन्तरं शङ्कते भावस्येति। पूर्वकालीनस्य भावस्योत्तरकालीनेनाभावेनासद्रूपेण न विरोधस्संभवतीति अभावे जातेऽपि भावस्स्यात्। तस्माद्भावध्वंसव्यवहारसिद्ध्यन्यथानुपपत्त्या विरोधिभावान्तरजन्मैव ध्वंस इत्यर्थः। भावाभावयोर्न विरोध इत्येतत्प्रथमं निराचष्टे प्रागसतोऽपीति। यद्भावान्तरस्य विरोधित्वमुक्तं तदिदानीं निराचष्टे भावेन चेदित्यादिना। ... [Page 368] तस्यापीति। प्रध्वंसस्य चेज्जन्मेष्यते तर्हि जायमानत्वात्तस्यान्यो ध्वंसो वक्तव्यस्तस्यापि जायमानत्वादन्य इति न कुत्रापि विश्रमस्स्यादित्यर्थः। जन्माभावेऽपि कथं हेतुमत्त्वं कादाचित्कत्वं चेत्याशङ्क्याह जन्म विनापीति। ननूक्तप्रकारेण घटादिध्वंसस्य जनिमत्त्वासंभवादज्ञानध्वंसोऽपि जनिमद्वस्तु मा भूत्। तथाप्यन्यजन्मसहभावस्याद्भंसत्वात्। यो ध्वंसस्स तथा यथा घटादिध्वंसः कपालादिसहभावीत्याशङ्क्याह न च जन्मध्वंसावन्यावपीति। ... पूर्वोक्तमुपसंहरति अतस्मादीनामिति। तर्हीति। यद्यज्ञानदाहस्यानुमानतो वस्त्वन्तरजन्मत्वं खण्ड्यते तर्हि तस्य निश्चितं स्वरूपं तन्मानं च ब्रूहि। अन्यथा संदिग्धविशेष्यः पक्षाभास आश्रयासिद्धश्च हेतुस्स्यादित्यर्थः। सिद्धान्त्यभिमतमुद्भाव्य निराचष्टे आत्मा चेत् स इत्यादिना। [Page 369] पराभिप्रायेणैव तावदुत्तरमाह उच्यत इति। प्रसिद्धिमात्रेणाप्रयत्नसंभवे प्रमाणान्वेषणं च विफलमित्याह न चेति। प्रमाणसिद्धत्वं न संभाव्यते चेत्याह नापीति। अज्ञाननिवृत्तेः प्रामाणिकत्वे तत्रान्याज्ञाननिवृत्तिर्वक्तव्या। तस्या अपि प्रामाणिकत्वेऽन्येत्यनवस्थायामज्ञाननिवृत्तिर्मे जातेति व्यवहारासिद्धिः (मूलक्षतिः) अज्ञाननिवृत्तिविषयाज्ञाननिवृत्त्यप्रकाशे तदसंभवादित्यर्थः। ननु ज्ञातोऽर्थः किमज्ञातादन्योऽनन्यो वा। आद्ये ज्ञानोदयेऽप्यज्ञातोऽर्थस्तदवस्थस्स्यात् अन्त्ये ज्ञानात्पूर्वमपि ज्ञातस्स्यादित्याशङ्क्याह न च ज्ञात इति।

य एवार्थोऽज्ञानसंबन्धादज्ञातस्स एव ज्ञानोपलक्षितो ज्ञात उच्यते । ··· एवं तावत्पराभिप्रायेण परिहारमुक्त्वा अधुना अज्ञाननिवृत्तेरनिर्वाच्यत्वं स्वरहस्यं स्फुटीकर्तुं ज्ञातत्वं वस्तुस्वरूपं व्यतिरिक्तं वेति निरूपणं न सहत इत्याह न च ज्ञातत्वाज्ञातत्व इत्यादिना । ज्ञातत्वस्यानिर्वचनीयत्वप्रतिपादनं प्रासङ्गिकं द्रष्टव्यम् । एकैकस्य वस्तुस्वरूपत्वं न संभवतीत्युक्त्वा उभयत्र साधारणं दूषणमाह न चासिद्धं वस्त्विति । ··· आत्मनो ज्ञप्तिस्वभावत्वात् ज्ञातत्वं स्वरूपमेव । अतः कथं व्यभिचारित्वमित्याशङ्क्याह ज्ञप्तिस्वरूपस्यापीति । उक्तन्यायेन चेति । मानवैफल्यादिन्यायेन ज्ञातत्वं न वस्तुस्वरूपमित्यर्थः । ··· ज्ञाताज्ञातरूपेणैव वस्तु मानमेयं स्यादित्युक्तम् । तदा वा को दोष इत्याकाङ्क्षायामज्ञातरूपेण मेयत्वे दोषमाह न चेति । अज्ञातस्य मेयत्वे मेयविशेषणतया अज्ञानस्यापि मेयत्वमापादितम् । तच्च न संभवति । तत्र हेतुः अज्ञानान्तराभावादिति । अज्ञानान्तराङ्गीकारे दोषमाह तद्भाव इति । इतश्चाज्ञातरूपेण मेयत्वं न घटत इत्याह अज्ञानाहाने चेति । एवं तावदज्ञातरूपेण मेयत्वं न संभवतीति प्रपञ्च्य इदानीं ज्ञातरूपेणापि मेयत्वं न संभवतीत्याह न चेति । मिते वस्तुनि मानान्तराहितातिशयाभावादित्यर्थः । मितत्वान्तरकल्पने दोषमाह अन्यथेति । दोषान्तरमाह तस्येति । ··· **[Pages 370-371]** एवं तावत् ज्ञातत्वाज्ञातत्वयोर्वस्तुस्वरूपत्वेन अन्यत्वेन चानिर्वचनीयत्वमुक्त्वा स्वप्रक्रियया ज्ञातत्वादिपदार्थं कथयति तत्राज्ञात इत्यादिना । **[Page 372]** ननु मानोत्थज्ञाततायाः अनित्यत्वादविद्यानिवृत्तेरनित्यत्वं स्यात् । अतः पुनरविद्योदयोऽपि स्यादित्याशङ्क्याह अविद्या चानादित्वादिति । पुनरज्ञानोदयानुपलम्भादेव ज्ञाततायास्तदातनत्वं तावत्सिद्धम् । तत्र मानोपरक्तरूपेणानित्यत्वेऽपि स्वरूपेण ज्ञातताया नित्यत्वान्नाविद्यानिवृत्तेरनित्यत्वप्रसङ्गो मिथ्यात्वाच्च निवृत्तेर्नित्यत्वाद्यनिरूपणं भूषणमेवेति द्रष्टव्यम् । हेत्वभावात्पुनरनुदय उक्तः । इदानीमविद्याया जनिधर्मत्वासंभवादपि

पुनरनुदय इत्याह अजनिमत्त्वाच्चास्या इति। जनिराहित्यं कुतस्सिद्ध-मित्यत आह न चेति। किंपुनर्न्यायमाह न च तामिति। अकार्य-त्वावष्टम्भेन पुनरुदयं निरस्य शङ्कान्तरमपि तेनैव हेतुना निराचष्टे अकार्यत्वादेवेति। ... प्रकृतमुपसंहरति अतोऽज्ञाननिवृत्तिरिति। अनुभवस्यात्मस्वभावत्वात् सदा अज्ञाननिवृत्तिः प्रमाणवैयर्थ्यं चेत्याशङ्क्याह स यद्यपीति। एवं तावदुक्तश्लोकमेवार्थमुपवर्ण्य श्लोकार्धं योजयति तच्चैषेत्या-दिना। प्रौढिवादेनाज्ञाननाशस्यासत्यत्वमाश्रित्य पूर्वचोदिता प्रपञ्चसत्यता पर्यहारि। इदानीं प्रौढिं त्यजति न चासत्यस्येति। [Page 373] असत्यस्य सत्यो नाशो न घटते चेत् तर्ह्यज्ञानमपि सत्यमस्त्वित्याशङ्क्याह न च सत्यं नश्येदिति। एवं तावन्न जडोऽविद्यातत्कार्ययोरन्यतर-स्तन्नाशो नाप्यजडस्सत्य आत्मा। परिशेषादनिर्वाच्यस्तन्नाश इति स्थितम्। इदानीं प्रकारान्तरं दर्शयिष्यन् चोद्यमुद्भावयति नन्विति। ज्ञप्तेर्नित्यत्वात् रूप्यादिसहभावाद्रूप्यादिनाशत्वं नोपपद्यत इत्याशङ्क्याह नित्यापि सेति। ... शङ्कितमनुजानाति सिद्धान्ती अस्त्वेवमिति। यच्चाविद्यानिवृत्ते-रनित्यत्वं शङ्कितं तदप्यस्मिन् पक्षे नास्तीत्याह न च घटादेरिवेति। चित्प्रतिबिम्बं ह्यस्माकं फलमिष्टम्। तस्य च बिम्बात्मना नित्यत्वादविद्या-निवृत्तेर्नित्यत्वं न विरुध्यत इत्यर्थः। [Page 374] जन्मादिमत्त्वेन भासमानं फलं कथमात्मैवेत्याशङ्क्याह तच्च ज्ञानस्यैवेति। अधिकविवक्षया निरस्तमप्युद्भाव्य निराचष्टे तर्हीत्यादिना। तदधिकमाह न चेति। मानमप्यात्मनस्स्वरूपं धर्मो वेति तदुदये स्यादिकारित्वमित्याशङ्क्याह तस्य चेति। पुनराक्षिपति नन्विति। ... [Page 375] उदितं यच्छ्रौतं ज्ञानं तस्य भावे कथमद्वैतस्वरूपावस्थानमित्याशङ्क्याह वाय्वारूढ इवेति। अविद्यातत्कार्यनाशसद्भावे कथमेकत्वमित्याशङ्क्याह भावाभावेति। लौकिकभावाभावविलक्षणरूपोऽज्ञाननाश आत्मातिरिक्तो न वस्तुभूत

इत्येकत्वं संभवतीत्यर्थः। ब्रह्मज्ञानस्यापि नाशे अद्वैतस्वरूपावस्थानं घटत इत्यत्राप्तवाक्यमाह तदुक्तमिति। तदुक्तं वार्तिककारैरिति संबन्धः। … ॥ २ ॥

[Page 376] ननु कारणस्याज्ञानस्य नाशो यदि मिथ्या तर्हि तत्कार्यं संसारदुःखं नापगच्छेदित्याशङ्क्याह तन्मिथ्येति। तस्याज्ञानस्य मिथ्योष्टौ मिथ्यादाहे सतीत्यर्थः। ननु शुक्तिरूप्यादेर्मिथ्यात्वमविद्याकार्यत्वाधीनं दृष्टम्। तथा नाशस्यापि मिथ्यात्वं चेत् तर्ह्यविद्याकार्यत्वं वाच्यमित्याशङ्क्याह नाविद्यान्तर इति। यन्मिथ्या तदविद्याकार्यमिति न व्याप्तिः यतो नाविद्यान्तरादविद्या मिथ्येत्यर्थः। ततः किमित्यत आह मिथ्यानाशोऽपीति। अविद्याया भावो यथा अविद्यान्तरं विनैव मिथ्या तद्वत् नाशोऽपि मिथ्या भविष्यतीत्यर्थः ॥ ३ ॥

ननु वस्त्रादेस्तत एव लोके दाहदर्शनात् अनिर्वाच्यस्याज्ञानस्य दाहे दृष्टान्तो नास्तीत्याशङ्क्याह अनिर्वाच्योऽपीति। … ॥ ४ ॥ … ॥ ५ ॥

पूर्ववादी दृष्टान्तवैषम्यं शङ्कते अनिर्वाच्य इति। … उत्तरकालेऽपि स्रजि सर्पभ्रमदर्शनात् विद्यत एव तत्कारणभूतो मोह इत्याह नेति ॥ ६ ॥ … ॥ ७ ॥

वेदान्त्येकदेशिनो मतमाशङ्क्य दूषयति ऐकात्म्येति ॥ ८ ॥

अङ्गीकृत्यात्माज्ञानजत्वमविद्यासद्भावादेव सर्पदाहस्यानिर्वाच्यत्वं मयोक्तं सिद्धमित्युक्तम्। इदानीं तदपि न घटत इत्याह यद्यात्ममोहज इति। ब्रह्मज्ञानादेव सर्पादिदाहस्यान्न रज्ज्वादिबुद्ध्येत्यर्थः। … ॥ ९ ॥

[Page 377] दृष्टान्ताभावं विवृणोति भ्रान्तिस्सर्वेति। सर्वाप्यनात्मधीरात्ममोहोत्या भ्रान्तिरिति तव स्थितिः। ततस्सम्यग्ज्ञानादज्ञानदाहस्येदानीमदृष्टत्वान्न निदर्शनसिद्धिरित्यर्थः ॥ १० ॥

पक्षान्तरमाशङ्क्य निराचष्टे आत्मैवेति। पूर्वश्चेति। सदा अज्ञाननिवृत्तिपक्षे संसारो न स्यात्। उत्तरश्च त्विति। सदा आत्माभावे संसारी न स्यात्। ततश्च शास्त्रानारम्भप्रसङ्ग इत्यर्थः ॥ ११ ॥

यच्चाविद्याया विचारासहत्वमवोचः तदप्यसदित्याह नाविद्यायामिति ।
... ॥ १२ ॥

यद्यपि तत्त्वपर्यालोचनया नास्ति दृष्टान्तः तथापि लौकिको भविष्यतीति परिहरति नैष दोष इत्यादिना । यथावस्तु विद्या प्रसिद्धा । अन्यथेति । अयथावस्तु अविद्येत्यर्थः ॥ १३ ॥

निवर्त्यनिवर्तकभावोऽपि [तयोः ?] प्रसिद्ध इत्याह विद्ययेति । लोकत एवाविद्यादिस्वरूपं सिद्धं चेत् तर्हि विचारः किमर्थं इत्याशङ्क्याह तत्त्वं त्विति ॥ १४ ॥

सदसदिति । विचारे क्रियमाणे तेषु पक्षेषु अन्त्यं पञ्चममनिर्वाच्यमज्ञानं तच्चात्मनीति प्रतिष्ठापितवानस्मीत्यर्थः । नयाढ्यत्वात् न्यायोपेतत्वादित्यर्थः ॥ १५ ॥

अनिर्वाच्यस्याज्ञानस्य निवृत्तिरप्यनिर्वाच्यैवेति अध्यस्तप्राधान्येनोक्त्वा अधिष्ठानप्राधान्येनाह आत्मैवेति । निरविद्योऽहमिति तादात्म्यप्रत्यया-दित्यर्थः । अज्ञानहानेरभावरूपत्वादात्मनोऽप्यभावरूपत्वप्रसङ्ग इति न वाच्यमित्याह तदापीति । निवृत्तितादात्म्येऽप्यात्मैव सद्रूपः शिष्यते न त्वभावतां गच्छति रूप्यतादात्म्येऽपि शुक्तेश्शुक्तित्वहान्यदर्शनादिति भावः । किंच मोहस्य आत्मसत्तयैवात्मवत्त्वात् अधिष्ठानं विना अन्यत्र सत्ता-भावात् तदभावोऽपि तदात्मक एव ॥ १६ ॥

यच्चोक्तं सदा अज्ञानहानिस्स्यादिति तत्राह मोहाभावोऽपीति । भावान्तराभाववाद्यनुसारेण दृष्टान्तमाह घटभावेति । यद्यपि घटस्य भावाभावौ मृदेव तथापि तव तौ यथा सदा न भवतस्तथा ममापीत्यर्थः ॥ १७ ॥ ... ॥ १८ ॥

यच्चोक्तं तर्हि निवृत्तिनिश्चयो न स्यादिति तत्राह निवृत्तिरिति । प्रवृत्तिनिवृत्त्योर्वास्तवत्वाभावे बन्धमोक्षौ न स्यातामित्युक्तम् । तत्राह कल्पिताविति ॥ १९ ॥

स्वपक्षमुपसंहरति तस्मादिति ॥ २० ॥

[Page 378] द्वैतं पुंभेदस्य सप्तमाध्यायोक्तदोषतस्त्वया नेष्यते चेत् तर्हि कथं तव व्यवस्थालाभ इत्याशङ्क्याह तत्रेति। अवस्तुतोऽपरमार्थतः। क्वचिदपि व्यवस्था मया नेष्यत इति न। किंतु सर्वथापीष्यते मायाभूमौ दृष्टत्वादित्यर्थः ॥ २१ ॥

विशेषतश्चाविद्यासाधने कारणमाह प्रत्यक्षादीति ॥ २२ ॥ २३ ॥ २४ ॥

उक्तमर्थजातं संक्षिप्याह अस्ति मुक्तिरित्यादिना ॥ २५–२८ ॥

॥ इतीष्टसिद्धिविवरणे अष्टमोऽध्यायः ॥

॥ समाप्तं चेदमिष्टसिद्धिविवरणम् ॥

---

# NOTES.

*Page. Stanza.*

1 1 इष्टसिद्ध्यर्थं विवृणोमि—This shows that originally the name इष्टसिद्धि was applied only to the verse portion of the work; but the prose part, which is the author's own commentary on it, has also come to be designated by it. This is clear, for instance, from the following statement of Jñānottama at the beginning of his commentary, which explains the verse as well as the prose portion: ज्ञानोत्तमस्सकलदर्शनपारदृश्वा व्याख्यामिमां वितनुते स्फुटमिष्टसिद्धेः.—चेत्यानां च न चिद्धर्मत्वम्—चेत्य=दृश्य. Cf. *Saṁkṣepa-śārīraka*, i. 37-8. This statement is cited in NM (com.), p. 30. —संयोगाभ्युपगमाच्च—'अणूनां सांशत्वं सर्वदिक्संबन्धाद्दर्शितम्। इदानीमवयवायत्तसंयोगाभ्युपगमादपि सांशतेत्याह संयोगाभ्युपगमाच्चेति।' (G′).

2 — द्वितीयस्संयोगः—contact with a second object at the same time.—कल्पितश्चेदित्यादि—If the संयोग between two *aṇus* be *kalpita*, the असमवायिकारण of the effect that is to result therefrom will be *kalpita*; and that would strike at the root of Nyāya-Vaiśeṣika cosmology.—तदुक्तमित्यादि—'जन्माभावभेदाभावयोरविनाभावासंभवनिरासाय पारमर्षं सूत्रमुदाहरति तदुक्तं यावद्विकारं तु विभागो लोकवदिति।' (G′). —भेद and इतरेतराभाव—To judge from the references to these in the text and in the com. (see e.g. pp. 5, 10, 23, 107–110, 395), the conception of भेद is positive and that of इतरेतराभाव, negative. It also seems that the former is identifiable with वस्तुतः परिच्छेद and the latter, with देशतः परिच्छेद. भेद again may be looked upon as वस्तुस्वरूप or as वस्तुधर्म (p. 3). In connection with this distinction, the following

Page. Stanza.

*ślokas* may be cited from Bhāskara's com. on VS. (p. 99)—

स्वरूपमेव वस्तूनां परस्परविलक्षणम् ।
नानात्वं तत्सुसंवेद्यं भेद इत्यभिधीयते ॥
घटरूपं पटे नास्ति पटरूपं घटे न हि ।
इति देशान्तराभाव अन्योन्याभाव उच्यते ॥

See also *Khaṇḍana-khaṇḍa-khādya* (p. 1141 Chowkhamba Edn.). Not all the systems recognise this distinction, e.g. the Nyāya-Vaiśeṣika. Compare *Nyāya-mañjarī* (p. 312) 'प्रतीतिभेदाद्भेदोऽस्ति देशभेदस्तु नेष्यते'.—त्वं चावोचः— implying belief in the separate existence of चेत्य.—अचोच्यत इत्यादि— Now begins the refutation of भेद between चित् and चेत्य. Incidentally, the notion of भेद itself is rejected. See p. 3 and com., p. 385.— अन्यथा विभागादित्यादि— This is said in reference to Bādarāyaṇa's *sūtra* quoted above as an authority.—सत्यं प्रसिद्धिरित्यादि—The statement is cited by Vedānta Deśika in his *Śata-dūṣaṇī*, p. 191.

3 — अन्यथा प्रतियोगिन इत्यादि— If घटस्वरूप for being known needs पटज्ञान (say), then पटस्वरूप also for being known requires the ज्ञान of a प्रतियोगिन् which may be कुड्य (say) or घट itself. In the former case, there is अनवस्था; in the latter, अन्योन्याश्रय.—किं सर्वत्रैवेत्यादि—The first alternative implies that भेद is कल्पित; the second that it is real but identifiable with the object in question.—न चेन्नातिदेश इत्यादि— See the pūrva-pakṣin's statement on the previous page: 'अतस्तयोर्भेदः प्रसिद्धतरो लोके। इतरेतराभावश्च.'

4 — भेदाभावत्वहानिः—Because both भेद and अभाव presuppose प्रतियोगिज्ञान. दृशो दृश्यरूपं (com.)—Read दृश्यं रूपं.

5 — तयोर्भावस्य चेति— The com. refers to this reading as alternative to तयोर्भविस्य वा, explaining the

